# NYĀYA-DARŚANAM

# न्यायदर्शनम्

भाष्य-वार्त्तिक-तात्पर्यटीका-वृत्तिसहितम्

**Vol. II**

With Vātsyāyana's Bhāṣya, Uddyotakara's Vārttika
Vācaspati Miśra's Tātparyaṭīkā & Viśvanātha's Vṛtti.

चतुर्थ-पञ्चमाध्यायात्मक-

## द्वितीयखण्डम्

(CHAPTER IV)

Critically Edited with Notes

BY

AMARENDRAMOHAN TARKATIRTHA

AND

HEMANTAKUMAR TARKATIRTHA

(CHAPTER V)

BY

HEMANTAKUMAR TARKATIRTHA

अ० ४ आ० २ सू० १० पर्यन्तम्

पण्डितवर-

श्रीअमरेन्द्रमोहन-तर्कतीर्थेन

ततः परं

श्रीहेमन्तकुमार-काव्य-व्याकरण-तर्कतीर्थेन

सम्पादितम् ।

METROPOLITAN PRINTING AND
PUBLISHING HOUSE, LIMITED
CALCUTTA
1944

*Price Rs. 6/-*

# न्यायदर्शन-

## प्रकरण-सूची

# विषयानुक्रमणी

## प्रथमेऽध्याये

### प्रथमाह्निके

विषयाः पत्राङ्काः



विषयाः पत्राङ्काः

## द्वितीयाह्निके



---

## द्वितीयेऽध्याये

### प्रथमाह्निके

## द्वितीयाह्निके

# तृतीयेऽध्याये

## प्रथमाह्निके



## द्वितीयाह्निके

---

# चतुर्थाध्याये

## प्रथमाह्निके

## द्वितीयाह्निके

## पञ्चमाध्याये

## प्रथमाह्निके

## द्वितीयाह्निके

## PUBLISHERS' NOTE

We have the pleasure of coming out with Part II of Aksapada Gautama's Nayadarshan containing a critical study of Nayasutra Chapters IV-V with Bhashya, Vattika, Tatparaya, Yatika, Vritti, Notes, Introduction, Miscellaneous indices.

We have published this Part II with the above Notes and commentaries on the Text, but we have found that the Tikadars do not understand the pure Sanskrit language and as such, their notes and commentaries are bound to be incorrect and misleading. In our opinion it is better to present the reading public with the bare text than to mislead them with in-accurate notes or commentaries thereon by our present day commentators. We hope that the reading public will appreciate the step that we propose to take in future.

On going through our Part I containing Chapters I-III, we find that on page 344 a small portion of the text has been inadvertently omitted. The same has been appended to this Part II, as an Errata at the end.

Calcutta,
August—1944.

PUBLISHERS.

## प्रथमखण्डे

## वृत्तौ ३४४ पृष्ठान्तिमपंक्त्यनन्तरमयमंशो योजनीयः

अत्र च 'वाद' इति लक्ष्यनिर्देशः। 'पक्षप्रतिपक्षौ विप्रतिपत्तिकोटी। तयोः परिग्रहस्तत्साधनोद्देश्यकोक्तिप्रत्युक्तिरूपवचनसन्दर्भः। एतावन्मात्रं च कथान्तरसाधारणमत आह—'प्रमाणे'त्यादि। प्रमाणतर्काभ्यां तद्रूपेण ज्ञाताभ्याम् साधनोपालम्भौ यत्र स तथा। उभयत्रापि प्रमाणादिसद्भावे कोटिद्वयस्यापि सिद्धिः स्यादतस्तद्रूपेण ज्ञाताभ्यामिति। ज्ञानमनाहार्यं विवक्षितम्। उपालम्भो दूषणम्। जल्पादौ तु प्रमाणाभासत्वादिना ज्ञाताभ्यामपि साधनोपालम्भौ भवत इति तद्वारणम्। इत्थं च प्रमाणाभासत्वप्रकारकज्ञानविषयकरणकसाधनोपालम्भयोग्यान्यत्वे सतीत्यर्थः। तेन तादृशजल्पविशेषे नातिव्याप्तिः। तत्र च निग्रहस्थानविशेषनियमार्थं सिद्धान्तेत्यादिविशेषणद्वयम्।

अन्ये तु—तदपि लक्षणघटकमेव, तदर्थश्च तावन्मात्रनिग्रहस्थानयोग्यत्वम्, तावदतिरिक्तनिग्रहस्थानोपन्यासायोग्यत्वं वा; निग्रहस्थानं प्रतिज्ञाहान्यादिकमेकं धृत्वा तदुपन्यासायोग्यत्वमिति निष्कर्षः; तेनोक्तजल्पविशेषवारणमित्याहुः।

'सिद्धान्ताविरुद्ध' इत्यनेनापसिद्धान्तोद्भावनम्। 'पञ्चावयवोपपन्न' इत्यनेन न्यूनाधिकोद्भावनमवयवाभासस्य दृष्टान्तासिद्ध्यादेश्चोद्भावनम्। प्रमाणेत्यनेन च प्रमाणाभासत्वेन हेत्वाभासानां तर्काभासस्य चोपन्यासो नियम्यते। तथा चात्र हेत्वाभासन्यूनाधिकापसिद्धान्तरूपनिग्रहस्थानचतुष्टयोद्भावनमिति वदन्ति।

वस्तुतस्तु वादस्य वीतरागकथात्वेन तत्त्वनिर्णयस्योद्देश्यतया पुरुषदोषस्याविज्ञातार्थादेरिव न्यूनाधिकयोरपि नोद्भावनमुचितम्। अतएव पञ्चावयवावश्यकत्वं भाष्यकारो नानुमेने। हेत्वाभासाद्युद्भावनेनापि च तदैव कथाविच्छेदो यदि हेत्वन्तरेणापि साधयितुं न शक्यते, इतरथा तु तद्धेतोरेव दुष्टत्वम्। इत्थं च 'पञ्चावयवोपपन्न' इति प्रायिकत्वाभिप्रायेणेति तत्त्वम्।

वादाधिकारिणस्तु—तत्वबुभुत्सवः प्रकृतोक्तिका अविप्रलम्भका यथाकालस्फूर्तिका *अनपेक्षका युक्तिसिद्धप्रत्येतारः। अनुविधेयस्थेयःसभ्यपुरुषवती जनता सभा। अनुविधेयो राजादिः। स्थेयान् मध्यस्थः। सा च वादे नावश्यकी, वीतरागकथात्वादिति ॥१॥

* 'अनाक्षेपका' इति पाठान्तरम्।

# न्यायदर्शनम्

—:०:—

## तृतीयोऽध्यायः

### प्रथमाह्निकम्

—:०:—

### न्यायभाष्यम्

परीक्षितानि प्रमाणानि, प्रमेयमिदानीं परीक्ष्यते। तच्चाऽऽत्मादीत्यात्मा विविच्यते, किं देहेन्द्रिय-मनो-बुद्धि-(१)वेदनासङ्घातमात्रमात्मा आहोस्वित् तद्व्यतिरिक्त इति।

### न्यायवार्त्तिकम्

आनन्तर्यात् प्रमेयपरीक्षा। यद्विषयोऽहङ्कारः संसारं प्रतनोति यद्विषयं च तत्त्वज्ञानं संसारनिवृत्तिहेतुर्भवति तदानन्तर्यात् परीक्ष्यते। तच्चाऽऽत्मादीत्यात्मा विचार्यते।

### न्यायवार्त्तिकतात्पर्यटीका

अत्र भाष्ये परीक्षितानि प्रमाणानि प्रमेयमिदानीं परीक्ष्यत इति वृत्तानुकीर्तनं प्रमेयपरीक्षां वर्तिष्यमाणां प्रति वृत्तायाः प्रमाणपरीक्षाया हेतुभावं दर्शयितुम्। प्रमाणेन हि प्रमेयं परीक्ष्यते नान्येन। न च तदपरीक्षितं प्रमेयपरीक्षायै प्रभवति। तस्मात् प्रमाणपरीक्षा हेतुः हेतुमती प्रमेयपरीक्षेति। द्वादशविधं प्रमेयम्, तत् कस्मात् प्रथमत आत्मैव परीक्ष्यते न प्रमेयान्तरमित्यत आह—तच्चाऽऽत्मादीत्यात्मा (क)विचार्यत इति। आत्मैव हि प्रमेयेषु प्रथममुद्दिष्टो लक्षितश्चेति तदनुरोधादात्मैव प्रथमं परीक्ष्यते न प्रमेयान्तराणीति। अत्र च यद्यपि स्वरूपेणात्मन्येव परीक्षां प्रतिजानीते तथाऽपि लक्षणपरीक्षाद्वारेण लक्ष्यपरीक्षणाल्लक्षणपरीक्षैव द्रष्टव्या। यथा चेयमात्मलक्षणपरीक्षा तथोपरिष्टाद्दर्शयिष्यते।

तदेतद्वार्तिककारो व्याचष्टे—आनन्तर्यादिति। किं पुनः प्रयोजनं प्रमेयपरीक्षायाः? न हि निष्प्रयोजनं परीक्षन्ते प्रेक्षावन्त इत्यत आह—यद्विषयोऽहंकार इति। अहंकार इत्यात्मादिविषयं मिथ्याज्ञानं निर्दिशति। शरीराद्यभेदेनाऽऽत्मदर्शनं खलु संसारं प्रवर्तयतीत्युक्तं द्वितीयसूत्रे। अनेन प्रमेयपरीक्षायाः प्रयोजनवत्त्वं दर्शितम्।

अत्र भाष्यकारेण (ख)विचारपूर्वरूपः संशयो दर्शितः। किं देहेन्द्रियमनोबुद्धिसंघातमात्र-

---

(१) '-वेदना'पदं वि-टि-पुस्तकयोर्नास्ति।

(क) भाष्ये 'विविच्यते' इति बहुपुस्तकानुसारितया गृहीतम्। (ख) पुंस्त्वमत्र प्रयत्नेनोपपादनीयम्।

### न्यायभाष्यम्

कुतः(१) संशयः ? व्यपदेशस्योभयथा सिद्धेः । क्रियाकरणयोः कर्त्रा सम्बन्धस्याभिधानं

### न्यायवार्त्तिकम्

किं पुनरस्य विचार्यम् ? किं शरीरेन्द्रियमनोबुद्धिव्यतिरिक्त आहो नेति । न, धर्म्यप्रसिद्धेः—व्यतिरेकाव्यतिरेकावात्मधर्मौ, सति धर्मिणि धर्मो भवतीति धर्मी चात्राप्रसिद्धः, न चाप्रसिद्धे धर्मिणि धर्मयोर्विचारो युक्तः, तस्माद्धर्म्यैव तावत्प्रतिपाद्यतामिति । न, (२)इच्छादिसूत्रादात्मप्रसिद्धेः(२*) इच्छादिसूत्र आत्मसद्भावः प्रतिपादितः ; प्रतिपादितत्वादनन्तरो विचारो युक्त इति । (क)अविप्रतिपत्तेश्च—न कश्चिद्वादी आत्मसद्भावे विप्रतिपद्यते, किन्तु विशेषे विप्रतिपद्यते ; शरीरमात्रमात्मा, बुद्ध्यादय आत्मा, सङ्घात आत्मा, व्यतिरिक्त आत्मेति । इयं च धर्मविशेषविप्रतिपत्तिरप्रतिपन्नात्मसत्त्वानां न युक्तेति युक्तो धर्मविचारः । असत्त्वप्रतिपादकप्रमाणासम्भवाच्च—न चाऽऽत्मासत्त्वप्रतिपादकं प्रमाणमस्तीत्यतश्च सद्भावे न विप्रतिपद्यत इति ।

### न्यायवार्त्तिकतात्पर्यटीका

मात्मेति । संशयकारणं चोक्तं व्यपदेशस्येति । यद्यपि वृक्षप्रासादयोरवयविसमुदाययोरन्ययोरेवावयवेन समुदायिना च व्यपदेशस्तथाऽप्यवयव्यभावं समुदायं च समुदाय्यनतिरिक्तं मन्वानस्य परस्योदाहरणं द्रष्टव्यम् ।

तदेतद्वार्तिककार आक्षेप्तुं पृच्छति—किं पुनरस्येति । उत्तरम्—किं शरीरेति । आक्षिपति—नेति । समानधर्मणो धर्मिणो दर्शनात् संशयो न पुनरदर्शनादित्यर्थः । समाधत्ते—नेच्छादिसूत्रेति । इच्छादयो हि कार्यत्वाल्लिङ्गमात्मन इति दर्शितम् । तान्येव तु लिङ्गानि (३)दर्शयन्त्येषितारं (ख)परीक्षन्ते । किं देहेन्द्रियव्यतिरिक्त एषितैभ्यः सिध्यति आहोस्विदभिन्न इति युक्तो विचारः ।

अपि चायमात्मशब्दाभिधेयो धर्मी सर्वतन्त्रसिद्धः केवलमस्य शरीरेण सह भेदाभेदे वादिनां विवाद इत्याह—अविप्रतिपत्तेश्चेति । ननु चाऽऽत्मासत्त्वे परैः प्रमाणान्यजातत्वादीन्युपन्यस्तानि, तत्र कथं न तत्सत्त्वे विप्रतिपत्तिरत आह—असत्त्वप्रतिपादकप्रमाणाभावाच्चेति । वाद्येवासौ न भवति यो धर्मिणि विप्रतिपद्यते । न हि धर्मिणि विप्रतिपद्यमानस्यास्ति किंचित् प्रमाणं सर्वस्य तस्याऽऽश्रयासिद्धेरप्रमाणत्वात् । अभावस्य च भावाधीननिरूपणस्य (४)अत्यन्तासद्भावानिरूपणेनानिरूपणात्(४*) । तस्माद्धर्म्यभाववादी न लौकिको न परीक्षक इत्युन्मत्तवदुपेक्षणीय इति भावः ।

---

(१) अतः परं 'ते' इति ल-पुस्तके अधिकम् । (२) अयमंशः क-पु० नास्ति । (३) 'दर्शयन्तेषितारं' इति व-पुस्तक-पाठः, 'दर्शयत्येषितारं' इति क-ख-पु०पाठः । (४) 'अत्यन्तासद्भावानिरूपणात्' ख ।

(क) क-ख-वार्तिक-पुस्तकयोः 'च'कारशून्यः पाठः । (ख) 'परीक्ष्यन्ते' इति सम्यक् सम्भाव्यते ।

## न्यायवार्त्तिकम्

न, नास्त्यजातत्वादित्येके—नास्त्यात्मा अजातत्वात् शशविषाणवदिति। तत्र नास्त्यात्मेति पदे तावद् व्याहन्येते, नास्तिशब्दसमानाधिकरणोऽयमात्मशब्दो नात्मनोऽसत्त्वं प्रतिपादयति। किं कारणम्? आत्मेति सत्त्वमभिधीयते, नास्तीति तस्य प्रतिषेधः; यच्च यत्र प्रतिषिध्यते तत्तस्मादन्यत्रास्ति, यथा नास्तिना समानाधिकरणो घटशब्दो न घटाभावं प्रतिपादयितुं शक्नोति, अपि तु देशकालविशेषे प्रतिषेधति। नास्ति घट इति देशविशेषे वा प्रतिषेधो गेहे नास्तीति, कालविशेषे वा प्रतिषेध इदानीं नास्तीति(क)प्राङ् नास्ति ऊर्ध्वं नास्तीति।

## न्यायवार्त्तिकतात्पर्यटीका

धर्म्यसिद्धिवादिनां प्रमाणमुपन्यस्यति—न नास्तीति। निराकरोति—नास्त्यात्मेति। यत्पुनरपरे समादधुः—

अनादिवासनोद्भूतविकल्पपरिनिष्ठितः।
शब्दार्थस्त्रिविधो धर्मो भावाभावोभयाश्रयः॥

भावाश्रयो यथा नीलमिति अभावाश्रयो यथा शशविषाणमिति उभयाश्रयो यथाऽमूर्तमिति। अमूर्त्तं हि भवति विज्ञानं भवति च शशविषाणम्।

तस्मिन् बाह्यानुपादाने साध्येऽस्यानुपलम्भनम्।
तथा हेतुर्न तस्यैवाभावः शब्दप्रयोगतः॥ इति।

सोऽयमात्मविकल्पो बाह्योपादानो न भवतीति। यथा नीलविकल्पो बाह्यनीलोपादानः नैवमात्मविकल्पो बाह्योपादान इत्यर्थः।

तत्रैवं भवान् प्रष्टव्यो जायते किमात्मविकल्पस्य बाह्योपादानत्वमात्रं प्रतिषिध्यते किं बाह्यात्मोपादानत्वम्। पूर्वस्मिन् सिद्धसाधनम्, मा भूदात्मविकल्पो बाह्यनीलाद्युपादानः किं नः छिन्नम्। उत्तरस्मिंस्तु कल्पे क्वायं बाह्यात्मा सिद्धः यदुपादानत्वं विकल्पस्य प्रतिषिध्यते। सिद्धश्चेत् क्वापि नास्त्यात्यन्ताय प्रतिषेधः। असिद्धश्चेत् कथमप्रतीतस्य निषेधः। प्रतीतो विकल्पे बाह्यो निषिध्यते चैत्र इव गेहे चत्वरतले निषिध्यत इति चेत् एवमपि यत्र प्रतीतस्तत्र न निषिध्यते, यथा भवद्भिरेवोक्तं 'न तस्यैवाभावः शब्दप्रयोगत' इति। बाह्यश्चात्मा विकल्पेन नोपदर्शित इति प्रसक्त्यभावान्न शक्यो निषेद्धुम्। अप्रदर्शितोऽप्यध्यवसित इति प्रसक्त एवेति चेत् ननु विकल्पस्य कोऽयमध्यवसायो नाम? ग्रहणादतिरिक्तः ग्राह्यस्य स्वाकारस्य वा अलीकस्य वा बाह्याध्यारोप इति चेत्, न, बाह्याऽविषया विकल्पा बाह्यमारोपयन्तीति चित्रम्। न हि आरोपविषयारोप्ये अजानन् आरोपयितुमर्हतीत्यसकृदावेदितम्। अपि च अलीकं प्रतीयमानं यथा न निषेद्धुं शक्यं प्रतीयमानत्वादेवमस्य बाह्यत्वमपि। मिथ्यात्वात्प्रतिषिध्यत इति चेत्, तत्किमलोकमपि सत्यं यत्तदुल्लङ्घ्य बाह्यत्वं प्रतिषेद्धुमध्यवसितोऽसि?

(क) 'इति'-शब्दोऽयं लिपिप्रमादागतः सम्भाव्यते।

## न्यायवार्त्तिकम्

सर्वश्चायं प्रतिषेधो नानभ्युपगतघटसत्त्वस्य युक्तः। तथा नास्त्यात्मेति किमयं देशविशेषे प्रतिषिध्यते अथ कालविशेष इति। यदि तावद्देशविशेषे (क)प्रतिषेधः स आत्मनि न युक्तः अदेशत्वादात्मनः। न च(१) देशविशेषप्रतिषेधादात्मा प्रतिषिद्धो भवति। अथायं भवतामभिप्रायः शरीरमात्मा न भवतीति, कस्य वा शरीरमात्मा यं प्रति प्रतिषेधः। शरीरे नास्त्यात्मेत्येवं(२) प्रतिषेध इति चेत्? कस्य वा शरीरे आत्मा यं प्रति प्रतिषेधः। क तर्ह्ययमात्मा? न क्वचिदात्मा। किमयं नास्त्येव? न नास्ति, विशेषप्रतिषेधात्। केयं वाचोयुक्तिः न च शरीरे, न चान्यत्र, न च

## न्यायवार्त्तिकतात्पर्यटीका

बाह्यभेदग्रहस्तदध्यवसायो न प्रसञ्जक इति न निषेधगोचरः। न च ज्ञानाकार आत्मा परमार्थसन् बाह्यत्वेनाऽऽरोप्यमाणः प्रतिषिध्यत इति सांप्रतम्, विज्ञानमये हि सर्वथा बाह्यस्याग्रहे तत्समारोपासंभवात्। अत्यन्तासतश्च बाह्यस्य विज्ञानानात्मनो ग्रहे तथाविधेनासता विज्ञानानात्मना विज्ञानग्राह्येण किमपराद्धं येन तद्ग्राह्यो न स्यादिति विज्ञाननयो दत्तजलाञ्जलिः प्रसज्येत। न चायमात्मा पूर्वापरकालावस्थायी क्षणिकविकल्पाकारो भवितुमर्हति येन तदाकारो बाह्यत्वेन प्रतिषिध्यते। तस्मादन्यत्र दृष्टमन्यत्र समारोप्य प्रतिषिध्यत इति युक्तम्। स च समारोपः क्वचित् स्वकारणप्रभवः क्वचित् प्रतिषिध्यते यथेन्द्रियादिदोषादुत्पन्नरजतज्ञानस्य शुक्तिकायां नेदं रजतमिति। क्वचित् पुनराहार्यो यथा नेह चैत्र इति। तस्मादात्मनो देशकालान्तरे वस्तुनि विकल्पनम्, विज्ञाने चासंभवादत्यन्तासतो न समारोपः, तदभावादात्मन्येव नास्ति; अस्ति चेत् कथमत्यन्ताय निषेधः। तस्मादात्मा नास्तीति पदयोर्व्याघातः। यद्यप्यात्मा नास्तीति पदानि तथाऽपि नास्तीत्यस्यैकपद्यं विवक्षित्वा पदे इति द्विवचनोपपत्तिः। पद्यते गम्यतेऽनेनार्थ इति विवक्षित्वा पदसमुदायोऽपि पदमुच्यते।

यद्यपि घटादीनां देशान्तरादौ निषेधस्तथाऽपि आत्मनोऽत्यन्ताय भविष्यति। न हि प्रतिषेधान्तरधर्ममवश्यं प्रतिषेधान्तरमनुबध्नातीत्यत आह—सर्वश्चायमिति। उपपादितमेतदधस्ताद्यथा नानारोपितप्रतिषेधो यथा चाननुभूतमशक्यमारोपयितुमिति। न क्वचिदात्मन्यन्याधारत्वमुक्तं स्वातन्त्र्यादात्मनः, सामान्यादयस्तु पिण्डादिपरतन्त्रनिरूपणाः पिण्डाद्याधारा इति पृच्छति—किमयमिति। यन्न क्वचिदस्ति तदत्यन्तमसद् यथा शशविषाणं तथा चायं तस्मादत्यन्तमसन्निति भावः। उत्तरम्—न नास्तीति। न तावत् न क्वचिदस्तीति वाक्यमात्मानं स्वरूपेण निषेधति देशरूपविशेषप्रतिषेधात्। शङ्किता आह—केयं वाचोयुक्तिरिति।

(१) 'देशविशेषे प्रतिषेधा॰' इति क-ख-पु॰-धृतपाठान्तरम्।

(क) 'देशविशेषे प्रतिषिद्धः' इति क-ख-वार्त्तिकपाठः, तत्र धृतं पाठान्तरं तु गृहीतम्।

## न्यायवार्त्तिकम्

नास्ति ? (१)एषा वाचोयुक्तिः यद् यथाभूतं तत्तथा निर्दिश्यते, न चायमात्मा क्वचिदपीति तस्मात्तथैव निर्देशः। न च कालविशेषप्रतिषेधोऽपि युक्तः आत्मनि त्रैकाल्यस्यानभिव्यक्तेः—न ह्यात्मनि त्रैकाल्यमभिव्यज्यते नित्यत्वात्। नित्य आत्मेत्येतदुपरिष्टात् 'पूर्वाभ्यस्त'सूत्रे प्रतिपादयिष्यामः। तस्मान्न कालविशेषप्रतिषेधोऽपि। (२)आत्मप्रतिषेधं च कुर्वाणेनाऽऽत्मशब्दस्य विषयो वक्तव्यः। न ह्येकं पदं निरर्थकं पश्यामः। अथापि शरीरादिविषयमात्मशब्दं प्रतिपद्येथाः एवमप्यनिवृत्तो व्याघातः। कथमिति ? नास्त्यात्मेति वाक्यस्य तदानीमयमर्थो भवति शरीरादयो न सन्तीति।

अथ यं भवन्त आत्मानं कल्पयन्ति स नास्तीति ? न वयमात्मानं कल्पयामः। कल्पना हि नामातथाभूतस्य तथाभाविभिः सामान्यात् तद्धर्मारोपेण तत्प्रत्ययविषयत्वम्। न चाऽऽत्मानमेवम्भूतं प्रतिपद्यामहे। यं भवन्त आत्मानं कल्पयन्तीति च ब्रुवाणो भवान् प्रष्टव्यो जायते कथं वयमात्मानं कल्पयाम इति। किं सत्त्वेनाथासत्त्वेन (क) वा। यदि सत्त्वेन, किमसतः सता साधर्म्यं येन कल्पनाविषय आत्मा। आत्मसामान्यं चानात्मनो ब्रुवता आत्माऽभ्युपगतो भवतीति, न ह्यसतः (३)सता सामान्यमस्तीति। अथ शरीरादिविषयमहङ्कारमात्मनि कल्प-

## न्यायवार्त्तिकतात्पर्यटीका

उत्तरवाद्याह—एषा वाचोयुक्तिरिति। 'एषा' वक्ष्यमाणार्था। तदर्थमाह—यद्द यथाभूतमिति। न हि पदार्थानां सत्ता (ख) देशवत्त्वेन व्याप्ता येन देशवत्त्वं निवर्त्तमानं तां निवर्त्तयेदिति भावः। न च कालविशेषप्रतिषेधोऽपीति। कालान्तरप्रतियोगी एकैकः कालः कालविशेषः, तत्प्रतिषेधोऽप्यात्मन्ययुक्तः। न हि यथा घटादिष्ववच्छेदार्थः कालः तथा नित्य आत्मनि। प्रध्वंसाभाववान् घटः खल्वासीत् न तथा आत्मा, प्रागभाववान् घटो भविष्यति न तथा आत्मा। अतीतप्रागभावोऽनागतप्रध्वंसः घटो वर्तमानः, न च तथा आत्मा। तस्मान्नास्यावच्छेदार्थेन त्रैकाल्यमुपावर्तते। अतीतानागतव्यपवृक्तवर्तमानक्रियाव्यङ्ग्यः कालोऽस्ति सदा नित्यानां यतः अस्त्यात्मा विद्यते व्योमेति। तस्मादवच्छेदकत्रैकाल्याप्राप्तेः न त्रैकाल्यप्रतिषेधः, अतीतानागतव्यपवृक्तक्रियाव्यङ्ग्यस्य च वर्तमानस्याशक्यनिषेधत्वाद्द नाऽऽत्मनि कालप्रतिषेध इति स्थितम्। आत्मप्रतिषेधं चेति। आत्मेति हि पदं लोकसिद्धम्, पद्यते ह्यनेन कश्चिदर्थः; येन न कश्चिदर्थः पद्यते तदपार्थकं भवितुमर्हति।

किमसतः सता साधर्म्यमिति। नहि भवतां सिद्धान्ते सर्वोपाख्यारहितमसत्प्रमेयमपीति भावः। अथ शरीरादेरात्मत्वं कल्पितं निषिध्यते शरीरादयो नाऽऽत्मन इति तत्राऽऽह—आत्मसामान्यं चेति। अथ शरीरादीति। अहङ्कारस्तावत्परमार्थतः शरीरादिविषयः

(१) क-ख-वार्त्तिकयोः 'एषैषा' इति पाठः। (२) क-ख-वार्त्तिक-पुस्तकयोः 'आत्मप्रतिषेधं' इति पाठः।
(३) 'सता साधर्म्यमस्तीति' क-ख-पुस्तकयोः धृतं पाठान्तरम्।
(क) अत्र 'वा'कारार्थश्चिन्त्यः। (ख) क-ख तात्पर्य-पुस्तकयोः 'देशबलेन' इति मुद्रितम्।

## न्यायवार्त्तिकम्

यित्वा विपर्यस्यति, एवं शरीरादिव्यतिरिक्ताहङ्कारविषयसत्त्वाभ्युपगमादनिवृत्तो व्याघातः। अथ मन्यसे एकपदस्य नावश्यमर्थेन भवितव्यमिति यथा शून्यं तम इति, तन्न व्याघातानिवृत्तेः। शून्यशब्दस्य तावदयमर्थः यस्य रक्षिता द्रव्यस्य न विद्यते तद् द्रव्यं श्वभ्यो हितत्वाच्छून्यमित्युच्यते। तमःशब्दस्याप्यनुपलब्धिलक्षणप्राप्तानि द्रव्यगुणकर्माणि विषयः, यत्र यत्रासन्निधिस्तेजसस्तत्र तत्र द्रव्यादि तमःशब्देनोच्यते। तमःशब्दश्चानर्थक इति ब्रुवाणः स्वसिद्धान्तं बाधते 'चतुर्णामुपादेयरूपत्वात्तमसः' इति। तस्मान्नानर्थकं पदमिति।

नास्त्यात्मेति चैवं ब्रुवाणः सिद्धान्तं बाधते। कथमिति? रूपं भदन्त नाहं (१)वेदना संस्कारो विज्ञानं भदन्त नाहमिति एवमेतन्भिक्षो रूपं न त्वं वेदना संस्कारो विज्ञानं वा न त्वमिति। त एते स्कन्धा रूपादयोऽहंविषयत्वेन प्रतिषिद्धाः(२)। विशेषप्रतिषेधश्चायं न सामान्यप्रतिषेधः, आत्मानं चानभ्युपगच्छता सामान्यमेव प्रतिषेद्धव्यम्, नाहं नैव त्वमसीति। अथैकशः प्रतिषेधेन समुदायविषयोऽहङ्कार इति, तथाऽपि रूपादिस्कन्धपञ्चकव्यतिरेकेण समुदायो वक्तव्योऽहङ्कारविषयः, तद्व्यतिरिक्तं च समुदायमहङ्कारविषयमभ्युप(३)गच्छता संज्ञा भिद्यते आत्मा समुदाय इति। अथाव्यतिरिक्तम्, एकप्रत्ययो न प्राप्नोत्यहमिति। न हि बहुषु (४) एकशब्दं पश्यामः। न च रूपादिस्कन्धा एकशः समुदिता वा आत्मा इत्यहङ्कारप्रत्ययोऽत-स्मिंस्तदिति प्राप्तः। भवतु मिथ्याप्रत्ययः किन्नो बाध्यत इति? कथं न बाध्यते यदा सम्यक्-प्रत्ययानुकारिणो मिथ्याप्रत्यया भवन्ति। न चाऽऽत्मानमनभ्युपगच्छता तथागतदर्शनमर्थवत्तायां व्यवस्थापयितुं शक्यम्। न चेदं वचनं नास्ति सर्वाभिसमयसूत्रेऽभिधानात्। तस्मात्

## न्यायवार्त्तिकतात्पर्यटीका

स्थूलोऽहं गौरोऽहमिति प्रत्ययात्। तमिमम् आत्मनि कल्पयित्वा विपर्यस्यति तदनुरूपं व्यपदिशति व्यवहरति च। सोऽयं विपर्ययः प्रतिषिध्यते नास्त्यात्मेति। निराकरोति—एवं शरीरादीति। न ह्यहंकारसमारोपविषयसत्त्वमनभ्युपगच्छतः समारोप उपपद्यते। तस्मात् तत् प्रतिषेधतो व्याघात इत्यर्थः। चतुर्णामुपादानरूपत्वात् तमस इति। रूपरसगन्धस्पर्शाश्चत्वारो घटादिरूपेण परिणतास्तेषामुपादानरूपं (क)तम इति उपादीयत इत्युपादानम्। उपादेयरूपत्वादिति क्वचित् पाठः, स तु सुगमः। सोऽयं वात्सीपुत्राणां वैभाषिकाणां सिद्धान्तः, तेन विरोध इत्यर्थः। सुगममन्यत्।

---

(१) 'वेदना संज्ञा संस्कारो' इति क-ख-पुस्तकधृतपाठान्तरम्। (२) 'प्रसिद्धाः' इति क-ख-पु० धृतपाठान्तरम्। (३) '-गच्छतः' इति क-ख-पुस्तकधृतपाठान्तरम्। (४) 'एकप्रत्ययं' इति क-ख-पुस्तक-धृतपाठान्तरम्।

(क) 'तम' इति क-ख-तात्पर्यपाठः प्रामादिकः।

## न्यायवार्त्तिकम्

नास्त्यात्मेति ब्रुवाणः सिद्धान्तं बाधत इति। तथा "भारं वो भिक्षवो देशयिष्यामि भारहारं च, भारः पञ्चस्कन्धा भारहारश्च पुद्गल इति। यश्चाऽऽत्मा नास्तीति स मिथ्यादृष्टिको भवतीति" सूत्रम्।

योऽप्ययं हेतुरजातत्वादिति अयमपि राश्यन्तरव्यवच्छेदहेतुत्वाद्विरुद्धः। जातमजातमिति च वस्तुधर्मावेतौ। किं पुनर्जातं किं चाजातमिति? यस्य कारणवतः सत्ता तज्जातम्। यस्याकारणवतः सत्ता तदजातम्। किं कारणम्? नञो जन्मप्रतिषेधविषयत्वात्—अयं खलु नञ् प्रवर्त्तमानो जन्मनः प्रतिषेधं करोति नास्य जन्म विद्यत इति। तदिदमजातमित्यात्मनः प्रतिषेधो न भवति यथाऽनुदकः कमण्डलुरिति। अथायं भावप्रतिषेध एवाजातमिति, तथाऽपि प्रतिज्ञाहेत्वोरेकत्वम्। अजातमिति चायं धर्मः, न च धर्मः स्वतन्त्रो युक्तोऽन्यत्र समवायात्, यत्तन्त्रोऽयं धर्मः स आत्मेति विरुद्धः। अथ धर्मोऽस्ति न धर्मीति, तथाऽप्यनिवृत्तो व्याघातः स्वतन्त्रस्य धर्मस्यादर्शनात्। कश्चायमर्थोऽजातत्वादिति? यदि चायमर्थो नास्य जन्मेति (क)ततोऽसिद्धं जन्मवानात्मा। किं पुनरात्मनो जन्म? निकायविशिष्टाभिः शरीरेन्द्रियबुद्धिवेदनाभिरपूर्वाभिरभिसम्बन्धः। अथाजातत्वमकारणकत्वम्, तथा न (१)कश्चिद् बाध्यते। विरुद्धश्च हेतुः अकारणकस्य नित्यत्वादसत्त्वं साधयतो नित्यतामापाद्यत इति विरुद्धो हेतुः। प्रतिज्ञाहेत्वोश्च विरोधः—प्रतिज्ञाया विषयो नास्त्यात्मेति, हेतोर्विषय आत्यन्तिकः सत्ताऽसम्बन्धः, तावेतौ प्रतिज्ञाहेतू असत्सद्विषयत्वाद्विरुद्धौ। एतेन निर्हेतुकत्वाजन्महेत्वनुपादानादकार्यत्वादकारणत्वादित्येवमादयस्तुल्यदोषा इति प्रत्युक्ताः।

यदपीदमुच्यते शशविषाणवदिति, अयमप्यसिद्धो दृष्टान्तः। कथमिति? शशविषाणशब्दस्य सम्बन्धविषयत्वात् सम्बन्धप्रतिषेधो न विषाणप्रतिषेधः। शशविषाणसम्बन्ध उदाहरणं भविष्यतीति? सोऽपि न युक्तः कदाचिद्विषाणेन शशस्य सम्बन्धोपपत्तेः। लोकविरोध इति चेत्—अथ मन्यसे यदि शशे विषाणमस्ति ननु लोको विरुध्यत इति? न विरुध्यते, कार्यकारणभावप्रतिषेधद्वारेण लौकिकप्रवृत्तेः—लोकस्तावत् कार्यं कारणं वा शशस्य विषाणं

## न्यायवार्त्तिकतात्पर्यटीका

अथायं भावप्रतिषेध इति, न जन्ममात्रप्रतिषेधोऽपि तु आत्मनो भावः सत्ता प्रतिषिध्यत इत्यर्थः। स्वतन्त्रस्य धर्मस्य समवायादन्यस्य अदर्शनादिति। निकायो देवमनुष्यतिर्यगादीनामनौत्तराधर्येणावस्थितः संघातः तद्विशिष्टाभिरित्यर्थः।

---

(१) 'किञ्चिद्' इति क-ख-वार्त्तिकधृतपाठान्तरम्।

(क) तत इत्यादि। अत्र यथार्थः पाठ ऊहनीयः।

## न्यायवार्त्तिकम्

नास्तीत्येवं प्रतिषेधति। यथा गोर्विषाणस्य च कार्यकारणभावो न चैवं शशस्य विषाणस्य च कार्यकारणभावः। न च कार्यकारणभावप्रतिषेधादसत्त्वम्। न हि यद् यस्य न कार्यं न कारणं तन्नास्ति यथा देवदत्तस्य घट इति। इदं च शशविषाणं नास्तीति ब्रुवाणः प्रष्टव्यः किमयं सामान्यप्रतिषेधोऽथ विशेषप्रतिषेध इति। यदि सामान्यप्रतिषेधः, तन्न युक्तमशक्यत्वात्—शशस्य विषाणं नास्ति इति गवादिविषाणान्यपि शशस्य न सन्तीति प्राप्तम्। एतच्चाशक्यम्। न हि तानि न सन्ति। अथ विशेषप्रतिषेधः—किञ्चिद्विषाणं शशस्य प्रतिषिध्यते यस्य शशो न कार्यम् (१)यच्च शशस्य न कारणमिति? सोऽयं कार्यकारणसम्बन्ध एव प्रतिषिध्यते। कार्यकारणसम्बन्धश्चान्यत्र दृष्ट इह प्रतिषिध्यते इति नात्यन्तासत्त्वप्रतिपादने दृष्टान्तो भवति। एतेन खपुष्पाद्यसत्त्वं व्याख्यातं वेदितव्यम्।

नास्त्यात्माऽनुपलब्धेरिति चेत्? अत्रापि प्रतिज्ञादिदोषो दृष्टान्तदोषश्च पूर्ववत्। यदनुपलब्धेरिति तदप्ययुक्तम्। अनुपलब्धिरसिद्धा प्रत्यक्षादिप्रमाणविषयत्वादात्मनः—प्रत्यक्षेण तावदात्मा उपलभ्यते। कथम्? लिङ्गलिङ्गिसम्बन्धस्मृत्यनपेक्षं विषयस्वभावभेदानुविधाय्यहमिति विज्ञानं रूपादिज्ञानवत् प्रत्यक्षम्। यच्चापि भवान् मुक्तसंशयं प्रत्यक्षं प्रतिपद्यते तस्य कुतः प्रत्यक्षत्वमित्यवश्यं भवता विज्ञानमेव लिङ्गादिसम्बन्धनिरपेक्षं स्वात्मसंवेद्यं प्रतिपत्तव्यम्। अथ मन्यसे अस्त्ययमहंप्रत्ययो न पुनरस्याऽऽत्मा विषयः, हन्त तर्हि निर्दिश्यतां विषयः। रूपादि-

## न्यायवार्त्तिकतात्पर्यटीका

कार्यं कारणं वेति। यदि विषाणमवयवस्तदा कारणं यदि तु केशनखादितुल्यत्वेनानारम्भकत्वान्नावयवस्तदा कार्यम्, तस्मात् तत् प्रभवतीति। उक्तमप्यर्थं पुनर्विकल्पयन् पर्यनुयोगार्थमाह—इदं(क) शशविषाणं नास्तीति ब्रुवाण इति। सामान्यप्रतिषेधः विषाणसंबन्धमात्रप्रतिषेध इति। विशेषप्रतिषेधः कार्यकारणभावलक्षणसंबन्धप्रतिषेध इति।

विषयस्वभावभेदानुविधायीति। अहमिति विज्ञानं मानसं विषयस्य आत्मनो यः स्वभावभेदः कर्तृत्वभोक्तृत्वलक्षणः जानेऽहं भुञ्ज इत्यादिस्तदनुविधायि। एतदुक्तं भवति—न केवलमात्मस्वरूपमात्मज्ञानस्य विषयस्तथा सति परसमवेतक्रियाफलशालित्वाभावेनाऽऽत्मनः कर्मत्वाभावेनाकर्मतया तद्व्याप्यज्ञानस्यापि निवृत्तिप्रसङ्गात्। यदा तु धर्मवदात्मविषयं ज्ञानं भवति तदा धर्माणां परसमवेतक्रिया(२)फलशालितया तद्व्याप्तस्य (ख)ज्ञानस्यापि निवृत्तिरिति(२*)।

(१) 'तच्च' इति क-ख-वार्त्तिकपाठः तच्च धृतपाठान्तरं तु गृहीतम्। (२) '-फलभागितया कर्मत्वात् कर्माभावेन जानातेर्निवृत्तिरिति' इति व-पु० पाठः।

(क) वार्त्तिकगतः 'च'कारो न गृहीतः। (ख) 'ज्ञानस्यानिवृत्ति'रिति 'ज्ञानस्यापि निवृत्तिः' इति वा पाठः सम्भाव्यते।

## न्यायवार्त्तिकम्

विषय इति चेत्—अथ मन्यसे रूपादय एवाहङ्कारस्य विषयः ; तथाचोक्तम्—अहङ्कारालम्बनोत्पत्तिनिमित्तत्वादात्मेत्युच्यते इति ; तन्न, असत्त्वात् प्रतिषेधाच्च—प्रतिषिद्धोऽहङ्कारो रूपादिषु 'रूपं नाहम् एवमेतद् भिक्षो रूपं न त्वम्' इति। तस्माद् रूपादयस्तावदहङ्कारस्य विषया न भवन्ति। न चायमहङ्कारो रूपादिषु कदाचिदपि दृष्टः। न हि भवति कदाचित् अहं रूपमहं वेदनादय इति। ननु भवत्यहं गौरोऽहं कृष्ण इति ; न भवतीति ब्रूमः। कथम् ? न ह्येतस्य द्रष्टुः यदेतन्मम रूपं गौरम् एतदहमिति प्रत्ययो भवति, केवलं मतुब्लोपं कृत्वा अहं गौर इति षष्ठ्यर्थं निर्दिशति। एवमेतन्न तत्त्वत इति कुत इति चेत्—अथ मन्यसे मतुब्लोपादयं(क) षष्ठ्यर्थव्यपदेशो न तत्त्वत (१)इति को हेतुरिति ? ममप्रत्ययसमानाधिकरणस्य निर्देशात्—यस्मिन्नर्थे ममप्रत्ययोऽस्य भवति तत्रैवायमहङ्कारोऽपीति ममप्रत्ययसामानाधिकरण्याद् गम्यते मतुब्लोप इति। ममप्रत्ययसमानाधिकरणश्चायमहंप्रत्ययोऽन्यत्वे दृष्टः उपकारकत्वात्—उपकारके वस्तुनि ममप्रत्ययसमानाधिकरणोऽहंप्रत्ययो दृष्टः योऽयं सोऽहमिति। उक्तं चात्र रूपादिस्कन्धेष्वहंप्रत्ययोऽतस्मिंस्तदिति प्रत्यय इति। तदेवमहंप्रत्ययविषयत्वादात्मा तावत् प्रत्यक्षः, अनुमानेनापि यथा आत्मोपलभ्यते तथोक्तमिच्छादिसूत्रे इति। आगमोऽप्यस्त्येव। तान्येतानि प्रमाणानि त्रीण्येकविषयतया प्रतिसन्धीयमानान्यात्मानं प्रतिपादयन्ति। न च प्रमाणान्तरं विप्रतिपत्तिहेतुरस्ति। तस्मादनुपलब्धेरित्यसिद्धो हेतुः।

सन्दिग्धश्चानुपलब्धेस्त्रिकारणत्वात्—अनुपलब्धिकारणानि त्रीणि उपलब्धा उपलम्भनम् उपलभ्यमिति। तत्रेयमनुपलब्धिर्भवन्ती कस्याभावादिति सन्दिह्यते। यदि ब्रूषे उपलभ्यस्याभावा-

## न्यायवार्त्तिकतात्पर्यटीका

जानातिश्चाऽऽत्मधर्मकर्मा आत्मानमपि गोचरयतीति सूक्तं विषयस्वभावभेदानुविधायीति। अहङ्कारालम्बनेति। आलम्ब्यते अनेनेत्यालम्बनं ज्ञानम् अहङ्कारेण च विषयिणा विषयमुपलक्षयति। देशयति—ननु भवत्यहं गौर इति। परिहरति—न भवतीति ब्रूम इति। न व्यपदेशमात्रं देहाद्यव्यतिरिक्तात्मसद्भावसाधनमस्माभिरुक्तं येनानैकान्तिकं भवेत्, अपि त्वनुभवः ; स च न शरीरादिष्विदमो विषयेष्वस्ति, अपि त्वसंभिन्नेदंविषयोऽहंप्रत्ययः शरीराद्यतिरिक्तविषय एवास्ति स चाऽऽत्मा, शरीरादयस्तु मतुब्लोपादभेदोपचाराद्वाऽहमा विषयीक्रियन्ते। ममाऽऽत्मेति तु व्यपदेशमात्रं न पुनः शरीरादिष्विव ममकारस्तत्र मुख्यो भेदेनाप्रतिभासनात्। राहोः शिर इतिवत्तु ममकार आत्मनि द्रष्टव्यः। अत एवाऽऽह—ममप्रत्ययेति, न पुनर्ममकारमात्रम् ; तस्मात् सर्वं रमणीयम्। विरुद्धा प्रतिपत्तिर्विप्रतिपत्तिर्बाधितेति यावत्।

(१) 'इति इह' इति क-ख-वार्त्तिकधृतपाठान्तरम्।
(क) क-ख-वार्त्तिकपुस्तकयोः 'षष्ठ्यार्थव्यपदेशः' इति मुद्रितम्।

## न्यायवार्त्तिकम्

दिति, नन्वयं प्रतिज्ञार्थ एव। न च प्रतिज्ञा प्रतिज्ञां साधयतीत्यनुपलब्धिरहेतुः। या चेयमनुपलब्धिरात्मासत्त्वप्रतिपादनायोपादीयते तस्याः क आश्रयः? यद्यात्मानं प्रतिपद्यसे, व्याहतं भवति आश्रयश्च नास्ति चेति। अथानाश्रयः, कः साधनार्थः? न ह्यनाश्रयो धर्मः साध्यं साधयितुं शक्नोति। अथानुपलब्धिरपि नास्ति, कः साधनार्थोऽनुपलब्धेरिति? न ह्यसाधनं भवितुमर्हतीति। अथ कल्पितस्यानुपलब्धिर्धर्म इति, कथं कल्पितस्येति वाच्यम्—किं सत्त्वेन अथासत्त्वेन। यदि सत्त्वेन, नानुपलब्धिस्तस्य धर्मः। न हि स्थाणोः पुरुषत्वेन कल्पितस्य स्थाणुधर्माः प्रत्यवभासन्ते। अथासत्त्वेन कल्पितस्यानुपलब्धिर्धर्मः, सिध्यत्यनुपलब्धिर्धर्मो वृथा तु कल्पना। किं कारणम्? कल्पनाया अतथाभावात्—कल्पना हि नामातथाभावः, असत्त्वेन चाऽऽत्मा कल्पित इत्यसत्त्वेन नास्ति, असत्त्वेन चेन्नास्ति वृथा कल्पना। किमर्थं चायमात्मा असत्त्वेन कल्प्यते? यदि हेत्वर्थम् उपपन्नो हेतुर्यदर्थमुपात्तः स पुनरर्थो न सिध्यति, न हि यः पुरुषे स्थाणुधर्मानध्यारोप्य हेतुत्वेनापदिशेत् तस्यासौ स्थाणुः स्यादिति। तदेवमप्यनुपलब्धिरप्यहेतुः।

रूपादिस्कन्धवाचकशब्दविषयव्यतिरिक्तविषय आत्मशब्दः रूपादिशब्देभ्योऽन्यत्वे सत्येक-

## न्यायवार्त्तिकतात्पर्यटीका

कः साधनार्थ इति कः साधनशब्दस्यार्थः। अथानुपलब्धिरपि नास्तीति। भावरूपो धर्मोऽसति विरुध्यते नासद्रूपः उभयोः समानशीलत्वादित्यर्थः। निराकरोति—कः साधनार्थोऽनुपलब्धेरिति। असत्यास्तुच्छाया अनुपलब्धेः कः साधनत्वरूपोऽर्थ इत्यर्थः। शङ्कते—अथ कल्पितस्येति। नानुपलब्धिस्तुच्छा किं तु तत्त्वान्तरं सत्; सा तु कल्पिताश्रयतया नाऽऽश्रयासिद्धेत्यर्थः। एतद्विकल्प्य निराकरोति—कथं कल्पितस्येति। न हि तात्त्विक्यनुपलब्धिः परमार्थसदाश्रया कल्पितसत्त्वस्य धर्मिणो धर्मो भवितुमर्हतीत्यर्थः। द्वितीयं कल्पमाशङ्कते—अथासत्त्वेनेति। निराकरोति—सिध्यत्यनुपलब्धिरिति। असत्त्वेन कल्पितस्य पारमार्थिकं सत्त्वमनुमन्तव्यम् असत्यसत्त्वकल्पनाया अयोगात्। तथा च भावाश्रयाऽनुपलब्धिस्तात्त्विकी सिध्यत्येव। यदर्थं त्वसौ तदेव पारमार्थिकम् असत्त्वमात्मनो न सिध्यति असत्त्वस्य काल्पनिकत्वाभ्युपगमाद्भवद्भिरित्यर्थः। अपि चायमसत्त्वेन सन्तमात्मानं कल्पयित्वाऽत्यन्तासत्त्वमनुपलब्धेरस्य साधयितुमध्यवसितः। (क)तच्चास्य सधर्मेण अनुपलब्ध्या न सिध्यति। न जातु स्थाणुधर्मेण कल्पितेन पुरुषे स्थाणुत्वं पारमार्थिकं शक्यं साधयितुमित्याह—किमर्थं चायमात्मेति।

रूपादिशब्देभ्योऽन्यत्वे सतीति। यदि हि पदत्वादित्युच्येत रूपादिशब्दैरनैकान्तिकं भवितुमर्हति।

(क) 'तच्चान्यसद्धर्मेण' इति व-पुस्तके अस्फुटः पाठः। 'तच्चास्य असद्धर्मेण' इति तत्र यथार्थः पाठो

## न्यायवार्त्तिकम्

शब्दत्वाद् (१)घटशब्दवदिति। एतेनाहंप्रत्ययो व्याख्यातः। असिद्धो दृष्टान्त इति चेत्? अत्रोक्तम्—यथा गुणव्यतिरिक्तो गुणीति। तमःशब्दादिभिरनैकान्तिक इति चेत्—अथ मन्यसे यथा रूपादिशब्देभ्योऽन्यत्वे सत्येकपदत्वे च तमःशब्दस्यार्थान्तराविषयत्वम् एवमात्मशब्दस्यापीति, तन्न, विरोधात्—तमःशब्दो निर्विषय इति ब्रुवाणः सिद्धान्तं बाधते उपादायरूपत्वात्तमस इति। न चैतदस्माभिरभ्युपगम्यते तमःशब्दो निर्विषय इति। तमःशब्दस्य सविषयत्वे सूत्रव्याघातः(क) द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तम इति? न सूत्रार्थापरिज्ञानात्—निराकृततेजःसम्बन्धीनि द्रव्यगुणकर्माणि तमःशब्देनाभिधीयन्ते तस्मान्न सूत्रव्याघातः।

अपरे तु जीवच्छरीरं निरात्मकत्वेन पक्षयित्वा सत्त्वादित्येवमादिकं हेतुं ब्रुवते; तन्न, विकल्पानुपपत्तेः। निरात्मकमिति कोऽर्थः। यदि तावदात्मनोऽनुपकारकमिति, न दृष्टान्तोऽस्ति। न हि किञ्चिदात्मनोऽनुपकारकमस्ति। अथाऽऽत्मप्रतिषेधः, (ख) आत्मा शरीरं न भवति। कस्याऽऽत्मा शरीरम्? उत्तरपदविषयत्वाच्च निसः किं सात्मकमिति वाच्यम्। न ह्यसत्युत्तरपदे

## न्यायवार्त्तिकतात्पर्यटीका

स्यादत उक्तम्—रूपादिशब्देभ्योऽन्यत्वे सतीति। (२)यद्येकपदत्वादित्युच्येत रूपादिशब्दैरनैकान्तिकं स्यादत उक्तं रूपादिशब्देभ्योऽन्यत्वे सतीति(२*)। (ग)तथाऽपि रूपविज्ञानवेदनासंज्ञासंस्कारा इत्ययं शब्दो रूपादिवाचको यः शब्दो रूपं वेदना संज्ञा विज्ञानमित्यादिस्ततो(३)ऽन्योऽसमस्तादन्यः समस्त इति तेनानैकान्तिकत्वमत उक्तमेकेति। तेन रूपादिवाचकपदव्यतिरिक्तं यदेकपदं तद् रूपादिव्यतिरिक्तस्य वाचकम्, यथा घटादिपदम्; तथा चाऽऽत्मपदं तस्मात्तदपि तथेति। एतेनेति, आत्मशब्दसाध्यत्वेनैव असंभिन्नेदंप्रत्ययः अहंप्रत्ययो व्याख्यातः। शङ्कते—असिद्ध इति, घट इति रूपादय एवैकोदकाहरणावच्छिन्ना उच्यन्ते, न तु रूपाद्यतिरिक्तो घटो नाम कश्चिदस्तीत्यर्थः। निराकरोति—अत्रोक्तमिति। (घ)उपादायरूपत्वात्तमस इति, यथा दाय इति देयमुच्यते एवमुपादायेत्यनेनोपादेयमिति। सविषयत्वं सद्विषयत्वं सिद्धान्तिनोक्तमिति मन्वानश्चोदयति—तमःशब्दस्य सविषयत्व इति। यद्यप्यभावविषयत्वेऽपि न निर्विषयत्वं तथाऽपि देशकाभिमानमनुविदधानः परिहरति—न सूत्रार्थेति।

---

(१) 'घटादिवदि'ति क-ख-वार्त्तिकधृतपाठान्तरम्। (२) अयमंशः व-पु० नास्ति। (३) 'अन्य' इति व-पु० नास्ति।

(क) वैशेषिकदर्शनम् ( सू१९, आ२, अ५, काशी, 'चन्द्रप्रभा प्रेस'संस्करणम् ) क-ख-वार्त्तिकयोः '—वैधर्म्यान्नाभावस्तमः' इति मुद्रितम्। (ख) आत्मप्रतिषेध इत्यस्य अन्योन्याभावाभिप्रायतां स्फुटयितुमाह—आत्मेति। भवति इत्यतः परम् इति पदं योजनीयम्। (ग) 'तथापि रूपादिवाचको यः शब्दो रूपं वेदना संज्ञा विज्ञानमित्यादिः ततोऽन्यः असमस्तादन्यः रूप-विज्ञान-वेदना-संज्ञा-संस्काराः इत्ययं शब्दः समस्त इति तेनानैकान्तिकत्वमत उक्तम् एकेति' इति पाठोऽत्र सुकल्पः, लिपिप्रमाद एव तु पदानां स्थानविपर्यये बीजमिति सम्भाव्यते। (घ) क-ख-तात्पर्यपुस्तकयोः 'उपादेयरूपत्वात्' इति मुद्रितम्।

## न्यायवार्त्तिकम्

निसः प्रयोगं पश्यामः यथा निर्मशकमिति। अथ शरीरे आत्मा प्रतिषिध्यते, सिद्धं साधयति। कस्य वा शरीरे आत्मा विद्यते। अथ शरीरमात्मसम्बन्धि न भवतीति, पुनर्दृष्टान्तो नास्तीति। सर्वे चैते विशेषप्रतिषेधाः, विशेषप्रतिषेधाच्च सामान्यमभ्युपगम्यते। एवं च सति यत् प्रतिषेद्धव्यं तदनुज्ञातं भवति। अथाऽऽत्मशब्दोऽनित्यविषयो वर्णात्मकत्वात्, तथाऽपि नित्यशब्देनानैकान्तिकम्। शरीरादीनामात्मशब्दत्वात् सिद्धसाधनम्। अथ शरीरादिव्यतिरिक्तविषय आत्मशब्दोऽनित्यविषयः, तथाऽपि शरीरादिव्यतिरिक्तविषयाभ्युपगमे विरोधः। तदेवं यथा यथा आत्मासत्त्वं (१)विचार्यते तथा तथा न्यायं न सहत इति।

परार्थाश्चक्षुरादयः सङ्घातत्वात् शयनासनादिवदिति। सङ्घातान्तरार्था इति चेत्—अथ मन्यसे सत्यं सङ्घाताः परार्था भवन्ति, ते तु सङ्घातान्तरार्थाः यथा शयनादय इति? न, सङ्घातस्याभ्युपगमे विरोधात्। न हि रूपादिस्कन्धव्यतिरिक्तं सङ्घातं भवन्तः प्रतिपद्यन्ते। न चासति सङ्घातान्तरे सङ्घातानां सङ्घातान्तरार्थता भवति। अथ प्रतिपद्यते, व्याहतं भवति। अनिष्टप्रसङ्ग इति चेत्—अथ मन्यसे न मया सङ्घातान्तरं प्रतिपद्यते अपि त्वस्मिन् हेतौ सतीदमनिष्टं भवति परार्थस्य सङ्घातान्तराविनाभावित्वात्, यावत्परार्थं भवति तत्सर्वं सङ्घातान्तरार्थं दृष्टमिति? न विरोधात् अनभ्युपगमाच्च—न हि कश्चिद्व्यतिरिक्तात्मवादिनः सङ्घातः सङ्घातस्य (क)परार्थं करोति, तदुभयपक्षे संप्रतिपन्ने नानिष्टापादनं दृष्टमिति। विरोधाच्च—यदि विवक्षितार्थ-

## न्यायवार्त्तिकतात्पर्यटीका

पुनर्दृष्टान्तो नास्तीति। पूर्वमात्मानुपकारकत्वे साध्ये दृष्टान्ताभाव उक्तः पुनरिहोच्यत इत्यर्थः। देशयति—अथाऽऽत्मशब्द इति। यो यो वर्णात्मकः स सर्वोऽनित्यविषयो यथा घटादिशब्दः; तथा चानित्यत्वे सति तद् विज्ञानमेव स्यात् नाऽऽत्मेति फलत आत्मप्रतिषेध इत्यर्थः। एतदपि दूषयति—तथाऽपीति। नित्यशब्दस्तावन्नित्यमाचष्टे अन्यथा न तत्प्रतिषेध इत्यर्थः। शङ्कते—अथेति। सिद्धसाधननिवृत्त्यर्थं शरीरादिव्यतिरिक्तविषय इति। निराकरोति—तथाऽपीति। रूपादिस्कन्धपञ्चकातिरिक्तं नास्तीति भवतां राद्धान्तस्तदतिरिक्ताभ्युपगमेन विरुध्यत इत्यर्थः।

यदि विवक्षितार्थव्यतिरेकेणेति। वादिनो हि (२)शरीरेन्द्रिय-बुद्धिवेदनासंघातस्य पारार्थ्यं विवक्षितम्, परार्थाश्चक्षुरादय इति ब्रुवतो न संघातपरार्थत्वं तच्चह पक्षधर्मताबलात् सिध्यदस्याभिप्रायेण व्याप्यते न तु साक्षाद्विवक्षितम्, तद्वदिहाभिप्रायव्याप्त

(१) 'प्रतिज्ञायते' इति क-ख-वार्त्तिकपुस्तकपाठान्तरम्। (२) 'शरीरेन्द्रियमनोबुद्धि-' इति ख-पुस्तकपाठः।

(क) 'परस्यार्थं करोति' इति क-ख-वार्त्तिकपुस्तकशोधितपाठः।

## न्यायभाष्यम्

व्यपदेशः। स द्विविधः, अवयवेन समुदायस्य—मूलैर्वृक्षस्तिष्ठति, स्तम्भैः प्रासादो ध्रियत इति। अन्येनान्यस्य व्यपदेशः—परशुना वृश्चति, प्रदीपेन पश्यति। अस्ति चायं व्यपदेशः चक्षुषा पश्यति मनसा विजानाति बुद्ध्या विचारयति शरीरेण सुखदुःखमनुभवतीति। तत्र नावधार्यते किमवयवेन समुदायस्य देहादिसङ्घातस्य, अथान्येनान्यस्य तद्व्यतिरिक्तस्य वेति॥

## न्यायवार्त्तिकम्

व्यतिरेकेणानुमानस्याविवक्षितमपि विषयः, नन्वेतस्यां कल्पनायां सर्वमनुमानं व्याहन्येत। कथमिति? यदिष्टमनुमानत्वेन तदपि नानुमानं प्राप्नोति। यथा शब्दानित्यत्वे कृतकत्वम्। किं कारणम्? यथेदं कृतकत्वमनित्यत्वेनाविनाभूतमनित्यत्वं साधयति एवं दुःखशून्यानात्मकत्वमपि साधयति दुःखशून्यानात्मकत्ववदश्रोत्रग्राह्यत्वमपि साधयिष्यति। ततश्च न श्रोत्रग्राह्यः शब्दः कृतकत्वाद् घटवदिति। अथानुमानेन बाध्यते अयं प्रतिज्ञार्थ इत्यतो न हेतुः, नन्वयमपि सङ्घातान्तरार्थश्चक्षुरादय इत्यागमेनानुमानेन च बाध्यते। यच्चापि भवान् सङ्घातान्तरं प्रतिपद्यते तत्राप्यनिवृत्तं सङ्घातत्वमिति तेनापि (क)सङ्घातान्तरार्थं भवितव्यमिति; एवं चानवस्था। न चैनां शक्तः कश्चित् प्रतिपादयितुमिति यत एषा निवर्त्तते तदसंहतम्। अथासंहतं नैवास्ति? असंहतानभ्युपगमे सङ्घातानुपपत्तेर्व्याघातः—न हि कदाचिदसंहतप्रतिषेधे सङ्घातः सिध्यति। अथानुमानं नैवास्तीति परः प्रतिपद्यते? स कथं न प्रतिपद्यत इति प्रष्टव्यः। यद्यनुमानबाधितत्वादनुमानं नास्ति, अतिन्यायः—अनुमानेन च बाध्यते अनुमानं च नास्तीति। अतीन्द्रियार्थाधिगतिश्च कथं—यद्यनुमानं नास्ति कथमतीन्द्रियार्थो गम्यते? आगमादतीन्द्रियार्थाधिगतिर्भविष्यतीति न युक्तम् आगमव्यतिरिक्तविषयत्वात्। कस्मादनुमानस्याऽऽगमव्यतिरिक्तो विषयः? यथा स्तनयित्नुशब्दस्य हेतौ, न हि तत्र प्रत्यक्षं नाऽऽगम इति।

तदेवमात्माऽस्तीति समधिगतम्। तस्मिन् व्यपदेशस्योभयथा सिद्धेः संशयः। कः पुनरयं व्यपदेशः? क्रियाकरणयोः कर्त्रा सम्बन्धाभिधानं व्यपदेशः—दर्शनं क्रिया करणं चक्षुः, करणस्य क्रियायाः कर्त्रा सम्बन्धः चक्षुषा पश्यतीति। स चायं व्यपदेशो द्वेधा भवति अवयवेन

## न्यायवार्त्तिकतात्पर्यटीका

विवक्षितमारोप्य (१)यद्यनन्वयविरोधौ दृश्येते ततः सर्वानुमानोच्छेदः। एतच्चेश्वरसिद्धौ निपुणतरमुपपादयिष्यते। अथानुमानेन बाध्यत इति। संघातत्वानुमानमेवाभिप्रेतविपरीतसंघातपरार्थत्वपक्षो व्यवस्थालक्षणानिष्टप्रसङ्गरूपतर्कसहायमस्य बाधकं प्राणादिमत्त्वानुमानं वेति।

(१) 'यद्यन्वयविरोधौ' इति ख०।

(क) 'सङ्घातान्तरार्थेन' इति भवितुमर्हति।

## न्यायभाष्यम्

अन्येनायमन्यस्य व्यपदेशः। कस्मात् ?

**दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥१॥**

दर्शनेन कश्चिदर्थो गृहीतः स्पर्शनेनापि सोऽर्थो गृह्यते—यमहमद्राक्षं चक्षुषा तं स्पर्शनेनापि स्पृशामीति, यं चास्प्राक्षं स्पर्शनेन तं चक्षुषा पश्यामीति। एकविषयौ

## न्यायवार्त्तिकम्

समुदायस्य, यथा मूलैर्वृक्षस्तिष्ठतीत्यत्र समुदायशब्देनावयवी वृक्षोऽभिधीयते इति। एकदेशेन चैकदेशान्तराणाम्—यद्भिन्नजातीयैरारभ्यते तत्र ह्येकदेशदर्शनादेकदेशान्तराणि प्रतिपद्यन्ते, तत्रापि च व्यपदेशः स्तम्भैः प्रासादो ध्रियत इति। अन्येन चान्यस्य व्यपदेशः परशुना वृश्चतीति, परशुः करणं वृश्चतिः क्रिया, ताभ्यां कर्त्तुरभिसम्बन्धः परशुना वृश्चतीति। अस्ति चायमिहापि व्यपदेशः चक्षुषा पश्यतीति। किमन्येनान्यस्य व्यपदेशः, अथवा अवयवेनाप्यवयविनः अथैकदेशेनैकदेशान्तराणामिति ? क्रियाकरणकर्मणां वा कर्त्रा सम्बन्धो व्यपदेशः, चक्षुषा वृक्षं पश्यतीति, क्रियाकरणकर्मणां कर्त्रा सम्बन्धः, अस्ति चायमिहापि व्यपदेशः शरीरेण सुखदुःखमनुभवति। तत्र न ज्ञायते किं तत्त्वमिति।

अन्येनायमन्यस्य व्यपदेश इति तत्त्वम्। कथम् ?

दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्। दृश्यतेऽनेनेति दर्शनं चक्षुः, स्पृशत्यनेनाऽत्मा स्प्रष्टव्यमर्थमिति स्पर्शनं त्वगिन्द्रियमुच्यते। दर्शनेन दृष्टमर्थं स्पर्शनेन प्रत्यभिजानाति—यमद्राक्षं तं स्पृशामि यमस्प्राक्षं तं पश्यामीति एकविषयावेतौ प्रत्ययौ प्रतिसन्धीयेते। प्रतिसन्धानं च नाम स्मृत्या सहैकविषयत्वम्। दर्शनस्पर्शनप्रत्यययोर्घटादिविषयत्वादसम्बन्ध इति चेत्—अथ मन्यसे यावेतौ दर्शनस्पर्शनप्रत्ययौ तौ घटादिविषयौ न व्यतिरेकमात्मनो व्यधिकरणत्वाद्‌ गमयत इति ! न सूत्रार्थापरिज्ञानात्—दर्शनस्पर्शनप्रत्ययावेककर्तृकाविति सूत्रार्थः। यदि चानुपक्तं गुणव्यतिरेकमप्येकविषयत्वेन साधयति न कश्चिद्दोषः। गुणव्यतिरेकोऽसिद्ध इति चेत् ? उक्तमेतद्‌ यथा गुणव्यतिरिक्तो गुणीति। कार्यकारणभावात् प्रतिसन्धानमिति चेत् ? उक्तोत्तरमेतदिच्छादिसूत्र इति। अकार्यकारणभूतानां च (१)प्रतिसन्धानेऽनेकान्तः।

## न्यायवार्त्तिकतात्पर्यटीका

एकदेशेन च एकदेशान्तराणामिति ब्रुवतो वार्तिककारस्य गृहप्रासादादयो नावयविनो विजातीयानामनारम्भकत्वादित्यभिमतम्।

दर्श—णात् ( सू० १ )॥ अकार्यकारणभूतानां चेति। यथा हि कालाक्षीं गामीक्षितवतः

(१) 'प्रतिसन्धानेनानैकान्तः'—क-ख-धृतपाठान्तरम्।

## न्यायभाष्यम्

चेमौ प्रत्ययावेककर्तृकौ प्रतिसन्धीयेते, न च सङ्घातकर्तृकौ, नेन्द्रियेणैककर्तृकौ। तद्

## न्यायवार्त्तिकम्

भावस्य भवित्रपेक्षत्वाद्वेति सूत्रार्थः—दृष्टिर्दर्शनं स्पृष्टिः स्पर्शनमिति भावरूपावेतौ प्रत्ययौ भवितारं प्रतिपादयतः। न हि भावमनाधारं पश्यामः। उत्पत्तिवत् कर्माधारो भविष्यतीति न युक्तम्, कर्मण्यसति दर्शनात्—असत्यपि कर्मणि स्मृतेर्भावो भवतीति। न च विनष्टं कर्म भावस्याऽऽधारो युक्तः। ततो यदाधारो भावः स आत्मा। दर्शनस्पर्शनग्रहणयो रूपादिविषयत्वान्न घटादिविषयत्वम्? न, रूपस्पर्शानुपलब्धौ तद्विशिष्टप्रत्ययदर्शनात्—यदाऽयमनुपलभ्यमानरूपादिकं वस्तूपलभते तदाऽस्य तद्विशिष्टः प्रत्यय उपजायते यथा नीलाद्युपरिस्थितस्फटिके प्रत्ययो रूपाद्यनुपलब्धौ भवति, रात्रौ च बलाकायां शुक्लादिरूपाग्रहणात् पक्षिप्रत्ययः। तस्माद्रूपस्पर्शव्यतिरिक्ते घटप्रत्ययः। प्रतिसन्धानाच्च व्यतिरिक्तनिमित्तत्वम्—न हि नानाविषयौ प्रत्ययौ प्रतिसन्धीयेते, अस्ति च प्रतिसन्धानं यमद्राक्षं तं स्पृशामीति यमस्प्राक्षं तं पश्यामीति, तस्मादेकविषयत्वम्। सङ्घातकर्तृकौ दर्शनस्पर्शनविषयौ प्रत्ययौ भविष्यत इति न युक्तं सङ्घातस्य नानात्वाबाधनात्—सङ्घातः संहन्यमानतन्त्रो भवतीति संहन्यमानं चानेकम्। अनेकं च प्रतिसन्धानप्रत्ययकारणं न युक्तम्, नानाकर्तृकाणां नानाविषयाणां च प्रत्ययानामप्रतिसन्धानात्। एकेन्द्रियप्रत्ययाविति चेत्—अथ मन्यसे यदेवेन्द्रियं दर्शनप्रत्ययस्य कारणं

## न्यायवार्त्तिकतात्पर्यटीका

स्वस्तिमत्यां गवि भवति प्रतिसंधानं न चैतयोरस्ति कार्यकारणभाव इत्यर्थः(क)। भाष्यम्—

## वृत्तिः

तरुप्रभृतितुल्यता भवति यत्कृपामन्तरा
यदीयकरुणाकणात् तरति मोहजालं नरः।
विधाय हृदयाम्बुजे रुचिरवाक्प्रचाराय तां
नमामि परदेवतां सततमेव वाणीमहम्॥ १॥

अथावसरतः प्रमेयेषु परीक्षणीयेषु प्रथमोद्दिष्टमात्मादिप्रमेयषट्कं तृतीये परीक्षणीयम्, तेनाऽऽत्मादिषट्कपरीक्षैवाध्यायार्थः। तत्राऽऽत्मादिचतुष्कपरीक्षा प्रथमाह्निकार्थः, तत्र च नव प्रकरणानि, तत्राऽऽदाविन्द्रियभेदप्रकरणम्। तत्रेन्द्रियं ज्ञानवन्न वेति संशये करणत्वेन सिद्धानामिन्द्रियाणां चैतन्यमस्तु लाघवात्, तथा चाऽऽत्मशब्दस्य नानार्थत्वादिन्द्रियाणामभौतिकत्वाद्वा न साङ्कर्यमितीन्द्रियचैतन्यवादिनः। तन्निराकरणाय सूत्रम्—(दर्शनेति)

---

(क) अतःपरं क-ख-तात्पर्यपुस्तकयोः 'स्वं चैतन्यं त्वात्मनः स्वातन्त्र्येण सत्यव्यवस्थानाच् चक्षुरादिवदिति। (क) अतःपरं ... यस्त्वचेतनो हेतुः, प्रमाणसंशयविपर्ययस्मृतिषु योऽनुस्यूत एक उपलभ्यते स चेतनः स्वातन्त्र्येण सत्यव्यवस्थानात्।

## न्यायभाष्यम्

योऽसौ चक्षुषा त्वगिन्द्रियेण चैकार्थस्य (१)ग्रहीता भिन्ननिमित्तावनन्यकर्तृकौ प्रत्ययौ समानविषयौ प्रतिसन्दधाति सोऽर्थान्तरभूत आत्मा। कथं पुनर्नेन्द्रियेणैककर्तृकौ? इन्द्रियं खलु (२)स्वस्वविषयग्रहणमनन्यकर्तृकं प्रतिसन्धातुमर्हति नेन्द्रियान्तरस्य विषयान्तरग्रहणमिति। कथं न सङ्घातकर्तृकौ? एकः खल्वयं भिन्ननिमित्तौ स्वात्मकर्तृकौ प्रत्ययौ प्रतिसंहितौ वेदयते न सङ्घातः। कस्मात्? अनिवृत्तं हि सङ्घाते प्रत्येकं विषयान्तरग्रहणस्याप्रतिसन्धानमिन्द्रियान्तरेणेवेति ॥ १ ॥

### न विषयव्यवस्थानात् ॥ २ ॥

न देहादिसङ्घातादन्यश्चेतनः। कस्मात्? विषयव्यवस्थानात्। व्यवस्थितविषयाणीन्द्रियाणि, चक्षुष्यसति रूपं न गृह्यते सति च गृह्यते। यच्च यस्मिन्नसति न

## न्यायवार्त्तिकम्

तदेव स्पर्शनप्रत्ययस्यापीति? तन्नाविषयत्वात्—चक्षुः खलु स्वविषयं प्रतिसन्धातुमर्हतीति यमद्राक्षं स एवायमर्थ इति, न पुनः स्पर्शमिन्द्रियान्तरविषयत्वादिति। इन्द्रियान्तरवैयर्थ्यं वा एकैकमेवेन्द्रियमनेकविषयग्रहणं प्रतिसन्धत्ते इन्द्रियान्तरोत्पादो व्यर्थः ॥ १ ॥

न विषयव्यवस्थानात्। चेतनानीन्द्रियाणि विषयव्यवस्थानात्—विषयव्यवस्थानादित्यस्यायमर्थः करणविषयनियमादिति—सति चक्षुषि रूपग्रहणं भवत्यसति न भवति। यच्च

## न्यायवार्त्तिकतात्पर्यटीका

भिन्ननिमित्ताविति, भिन्नमिन्द्रियं निमित्तं ययोः। अनन्यकर्तृकौ आत्मैककर्तृकौ समानविषयौ द्रव्यमेकं विषय इत्यर्थः ॥ १ ॥

पूर्वपक्षसूत्रम्—

न वि—नात् (सू० २) ॥ यद्भावाभावानुविधायिनौ ज्ञानभावाभावौ तच्चेतनम्। इन्द्रिय-

## वृत्तिः

एकस्यैव दर्शनस्पर्शनाभ्यामर्थस्य ग्रहणात्। दर्शनस्पर्शने ज्ञानविशेषौ। तृतीया च प्रकारे। तेन चाक्षुषस्पार्शनोभयवत्त्वेनैकस्य धर्मिणः प्रतिसन्धानादित्यर्थः। तथा च योऽहं घटमद्राक्षं सोऽहं स्पृशामीत्यनुभवादात्मेन्द्रियव्यतिरिक्त एक इति ॥ १ ॥

---

नासौ स्वातन्त्र्ये सत्यवस्थितो यथा चक्षुरादिरिति व्यतिरेकी हेतुः। यद्यव्यवस्थानादित्येतावन्मात्रमुच्येत ततो मनसाऽनैकान्तिकं स्यादत उक्तम्—स्वातन्त्र्ये सतीति। अथवा ज्ञातमव्यवस्थानेन स्वातन्त्र्यमेव केवलमस्य चैतन्यसाधनमित्याह—नाचेतन आत्मेति। आत्मेति प्रमाणसंशयविपर्ययस्मृतिष्वनुस्यूतमनुभूतम् उपलक्षयति। निराकृतमप्यर्थं प्रकारान्तरेण पुनरुपन्यस्य निराकरोति—पृथिव्यादिनित्यत्वसाधन इति' इति मुद्रितम्। तृतीयसूत्रीयवार्त्तिकव्याख्यानरूपतया च अंशोऽयं तत्रैव निवेशितः।

(१) 'संग्रहीता' इति ज०। (२) 'स्वं स्वं विषय-' इति ज०।

## न्यायभाष्यम्

भवति सति भवति तस्य तदिति विज्ञायते। तस्माद् रूपग्रहणं चक्षुषः, चक्षू रूपं पश्यति। एवं (१)घ्राणादिष्वपीति। तानीन्द्रियाणीमानि स्वस्वविषयग्रहणाच्चेतनानि इन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावात्। एवं सति किमन्येन चेतनेन ?

सन्दिग्धत्वादहेतुः—योऽयमिन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावः, स (२) किं चेतनत्वात् आहोस्विच्चेतनोपकरणानां ग्रहणनिमित्तत्वादिति सन्दिह्यते। चेतनोपकरणत्वेऽपीन्द्रियाणां ग्रहणनिमित्तत्वाद् भवितुमर्हति ॥ २ ॥

यच्चोक्तं विषयव्यवस्थानादिति—

## न्यायवार्त्तिकम्

यस्मिन् सति भवति असति न भवति तस्य तत्। सति च चक्षुषि रूपग्रहणं भवति तस्माद् रूपग्रहणं चक्षुषः। एवं शेषेष्वपि।

एवं सति किमन्येन चेतनेनेति चेत् ? न, सन्दिग्धत्वादहेतुः—किमयमिन्द्रियाणां विषयनियमः चेतनत्वात् आहो चेतनोपकरणत्वादिति सन्दिह्यते। चेतनोपकरणत्वेऽपि सतीन्द्रियाणामेतद्भवितुमर्हति यथा प्रदीपस्य सद्भावे रूपग्रहणं भवत्यसति न भवति, न च रूपग्रहणं प्रदीपस्य। विपर्ययप्रसाधकश्चायं हेतुर्विषयव्यवस्थानादिति ॥ २ ॥

विपर्ययसाधकत्वज्ञापनार्थं च—

## न्यायवार्त्तिकतात्पर्यटीका

भावाभावानुविधायिनौ ताविति तदेव चेतनमिति भावः।

सिद्धान्तभाष्यम्—संदिग्धत्वादहेतुः। अनन्यथासिद्धावन्वयव्यतिरेकौ कारणत्वमात्रे प्रमाणं, न तु कर्ता न चेतनश्चेतनं करणमित्यत्रेत्यर्थः ॥ २ ॥

विषयव्यवस्थानं च विरुद्धमिन्द्रियादीनामचैतन्यस्य साधनादित्याह—यच्चोक्तमिति।

## वृत्तिः

अत्र शङ्कते—( न विषयव्यवस्थानात् )

चक्षुस्त्वगादीनां रूपस्पर्शादिनियतविषयत्वात् चक्षुरादेश्चाक्षुषादिसमवायित्वम्, इत्थं चाभेदप्रत्ययो भ्रान्त इति भावः ॥ २ ॥

---

(१) 'घ्राणं जिघ्रति' इति ज-पुस्तकधृतं पाठान्तरम्।

(२) 'किमयम्' इति ख-भा०।

## न्यायभाष्यम्

### (१) तद्व्यवस्थानादेवाऽऽत्मसद्भावादप्रतिषेधः ॥३॥

यदि खल्वेकमिन्द्रियमव्यवस्थितविषयं सर्वज्ञं सर्वविषयग्राहि चेतनं स्यात् कस्ततोऽन्यं चेतनमनुमातुं शक्नुयात्? यस्मात्तु व्यवस्थितविषयाणीन्द्रियाणि तस्मात् तेभ्योऽन्यश्चेतनः सर्वज्ञः सर्वविषयग्राही(२) विषयव्यवस्थितिमतीतोऽनुमीयते। तत्रेदम् (३)अभिज्ञानमप्रत्याख्येयं चेतनवृत्तमुदाह्रियते। रूपदर्शी खल्वयं रसं गन्धं वा पूर्वगृहीतमनुमिनोति। (४)गन्धप्रतिसंवेदी च रूपरसावनुमिनोति। एवं विषयशेषेऽपि वाच्यम्। रूपं दृष्ट्वा गन्धं जिघ्रति, घ्रात्वा च गन्धं रूपं पश्यति। तदेवमनियतपर्यायं

## न्यायवार्त्तिकम्

तद्व्यवस्थानादेवाऽऽत्मसद्भावादप्रतिषेधः इति सूत्रम्। यस्मादेवैतानीन्द्रियाणि व्यवस्थितविषयाण्यत एवाव्यवस्थितविषयेणान्येन भवितव्यम्। यदि हि किञ्चिदिन्द्रियमनेकार्थग्राह्य-

## न्यायवार्त्तिकतात्पर्यटीका

तद्व्य—धः (सू० ३) ॥ "सर्वज्ञ" इत्यस्य विवरणं "सर्वविषयग्राही" सर्वेषामिन्द्रियाणां च ये विषयास्तद्ग्राही, इन्द्रियान्तराणि प्रमाणान्तराणि च पुनर्व्यवस्थितविषयाणि तेनार्वागपि सर्वज्ञ इति सिद्धम्। तत्रेदमभिज्ञानमिति। असाधारणं चिह्नमभिज्ञानमुच्यते, तच्चाप्रत्याख्येयमनुभवसिद्धत्वात्। चेतनवृत्तमभिज्ञानमप्रत्याख्येयमुदाह्रियत इति योजना। अनियत-

## वृत्तिः

समाधत्ते—( तद्व्यवस्थानादेवाऽऽत्मसद्भावादप्रतिषेधः )।

उक्तप्रतिषेधो न युक्तः उक्तविषयव्यवस्थानादेवाऽऽत्मसद्भावादतिरिक्तात्मकल्पनादित्यर्थः। अयं भावः—तत्तदिन्द्रियाणां तत्तद्विषयप्रत्यक्षं प्रति समवायित्वं वाच्यम्, नतु प्रत्यक्षत्वावच्छिन्नं प्रति, अनुमित्यादिजनकत्वे तु विनिगमकाभावः। तेन जन्यज्ञानत्वावच्छिन्नजनकतावच्छेदकमात्मत्वम्, चक्षुरादेरनित्यत्वादात्मनश्च नित्यताया वक्ष्यमाणत्वात् चक्षुरादिविनाशेऽपि स्मरणात्, चक्षुरहमित्याद्यप्रतीतेश्च नेन्द्रियात्मवादो युज्यत इति ॥ ३ ॥

समाप्तमिन्द्रियभेदप्रकरणम् ॥ १ ॥

(१) तदव्यवस्थाना-' इति वि०। (२) 'विषयव्यवस्थितितो' इति फ-ज-वि-टि०। (३) 'प्रत्यभिज्ञानम्' इति ग०। (४) 'प्रतिवेदी' इति ग०।

## न्यायभाष्यम्

सर्वविषयग्रहणमेकचेतनाधिकरणमनन्यकर्तृकं प्रतिसन्धत्ते, प्रत्यक्षानुमानागमसंशयान् प्रत्ययांश्च नानाविषयान् स्वात्मकर्तृकान् (१)प्रतिसन्धाय वेदयते, (२)सर्वविषयं च शास्त्रं प्रतिपद्यते, अर्थमविषयभूतं श्रोत्रस्य क्रमभाविनो वर्णान् श्रुत्वा पदवाक्यभावेन(३) प्रतिसन्धाय शब्दार्थव्यवस्थां च बुध्यमानोऽनेकविषयमर्थजातमग्रहणीयमेकैकेनेन्द्रियेण गृह्णाति। सेयं सर्वज्ञस्य (४) ज्ञेयाव्यवस्थाऽनुपदं न शक्या परिक्रमितुम्। आकृतिमात्रं तूदाहृतम्। तत्र यदुक्तमिन्द्रियचैतन्ये सति किमन्येन चेतनेन तदयुक्तं भवति ॥ ३ ॥

## न्यायवार्त्तिकम्

व्यवस्थितविषयं स्यादिति कस्ततोऽन्यं चेतनमनुमातुं शक्नुयात्। चैतन्यं तु आत्मनः स्वातन्त्र्ये सत्यव्यवस्थानाच्चक्षुरादिवदिति, नाचेतन आत्मा अस्वातन्त्र्यप्रसङ्गाच्चक्षुरादिवदिति। अन्वयाभावादयुक्तमिति चेत्—अथ मन्यसे आत्मनश्चैतन्यसाधनस्याव्यवस्थानस्य नान्वयोऽस्ति, न चान्वयमन्तरेण हेतुः सिध्यतीति? न, विपर्ययसम्बन्धस्याव्यभिचारात्—नायमन्वयी हेतुरपि तु व्यतिरेकी हेतुः, तत्र च व्यतिरेकसम्बन्धाव्यभिचारः सामर्थ्यम्; यच्चाचेतनं

## न्यायवार्त्तिकतात्पर्यटीका

पर्यायम् अनियतक्रममित्यर्थः। (क) अनेकविषयमर्थजातमिति। अनेकपदार्थो विषयो यस्यार्थजातस्य तत्तथोक्तम्। क्वचित्पाठोऽनेकविषयमर्थजातमिति स सुगम एव। आकृतिमात्रं त्विति सामान्यमात्रमित्यर्थः।

(ख) एवं चैतन्यं त्वात्मनः स्वातन्त्र्ये सत्यव्यवस्थानाच् चक्षुरादिवदिति (ग)हेतुः, प्रमाणसंशयविपर्ययस्मृतिषु योऽनुस्यूत एक उपलभ्यते स चेतनः स्वातन्त्र्ये सत्यव्यवस्थानात्। यद्यस्त्वचेतनो नासौ स्वातन्त्र्ये(घ) सत्यव्यवस्थितो यथा चक्षुरादिरिति व्यतिरेकी हेतुः। यद्यव्यवस्थानादित्येतावन्मात्रमुच्येत ततो मनसाऽनैकान्तिकं स्यादत उक्तम्—स्वातन्त्र्ये सतीति। अथ वा कृतमव्यवस्थानेन स्वातन्त्र्यमेव केवलमस्तु चैतन्यसाधनमित्याह—नाचेतन आत्मेति। निराकृतमप्यर्थं प्रकारान्तरेण आत्मेति प्रमाणसंशयविपर्ययस्मृतिष्वनुस्यूतमनुभूतम् उपलक्षयति।

---

(१) 'प्रतिसन्दधाति प्रतिसन्धाय' इति ख-ग-भा०। (२) 'सर्वार्थविषयम्' इति फ-ज०। (३) 'पदवाक्यभाव' इति ज०। (४) 'ज्ञेयाऽव्यवस्था' इति फ०।

(क) 'अनेकपदार्थविषयमर्थजातम्' इति पाठोऽत्र सम्भाव्यते, तथैव विग्रहवाक्यप्रदर्शनात्। एवं च 'क्वचित् पाठोऽनेकविषयम्' इत्युत्तरभाष्ये तथा पाठान्तरमिह टीकाकृतोपलब्धमिति स्पष्टम्। यथाश्रुतन्तु ग्रन्थविरुद्धमिति चिन्त्यम्। (ख) इतः प्रभृति 'पृथिव्यादिनित्यत्वसाधन इति' इत्यन्तो ग्रन्थः क-ख-तात्पर्यपुस्तकयोः 'न चैतयोरस्ति कार्यकारणभाव इत्यर्थः' (पृ० ७११) इत्यतः परं मुद्रितः; तच्चायुक्तमिति इह गृहीतम्। एवं वार्त्तिकेऽनुपलब्धं 'ख'' इति पदमपि प्रमादादागतमिति प्रतिभाति। (ग) 'हेतुः' इति पदमत्र प्रमादादागतं सम्भाव्यते। (घ) 'सत्यवस्थितः' इति क-ख-तात्पर्यमुद्रणं प्रामादिकम्।

### न्यायभाष्यम्

इतश्च देहादिव्यतिरिक्त आत्मा, न देहादिसङ्घातमात्रम्—

## शरीरदाहे पातकाभावात् ॥४॥

शरीरग्रहणेन शरीरेन्द्रिय-बुद्धि-वेदनासङ्घातः प्राणिभूतो गृह्यते। प्राणिभूतं शरीरं दहतः प्राणिहिंसाकृतपापं पातकमित्युच्यते; तस्याभावः, तत्फलेन कर्तुरसम्बन्धात् अकर्तुश्च सम्बन्धात्। शरीरेन्द्रिय-बुद्धि-वेदनाप्रबन्धे खल्वन्यः सङ्घात उत्पद्यते अन्यो

### न्यायवार्त्तिकम्

तत्सर्वं व्यवस्थितविषयं इष्टमिति। पृथिव्यादिनित्यत्वसाधने गन्धवत्त्वादिप्रसङ्ग इति चेत्—अथ मन्यसे यदि व्यतिरेकी हेतुर्भवत्यन्वयमन्तरेण अथ पृथिव्यादिनित्यत्वे साध्ये गन्धवत्त्वं कस्मान्न हेतुः? न हेतुरुभयव्यावृत्तेः—यस्माद्गन्धवत्त्वं नित्याच्चानित्याच्च व्यावर्त्तते, न पुनरव्यवस्थानमेवम्, तस्मादव्यवस्थानं हेतुर्न गन्धवत्त्वमिति ॥ ३ ॥

इतश्च शरीरादिव्यतिरिक्त आत्मा न शरीरादिसङ्घातमात्रम्—

शरीरदाहे पातकाभावात्। शरीरग्रहणेन शरीरेन्द्रियबुद्धिवेदनासङ्घातः प्राणिभूतो गृह्यते। शरीरं प्राणिभूतं दहतः प्राणिहिंसाकृतं पापं पातकमित्युच्यते; तस्याभावः अकर्त्तुः फलेन सम्बन्धः कर्त्तुश्चानभिसम्बन्ध इति। कस्मात्? अनभ्युपगतार्थान्तरात्मनोऽन्यः शरीरेन्द्रियबुद्धिवेदनासङ्घातः कर्त्ता अन्यश्च तत्फलसम्भोक्तेति। तदेवम् (क)अकृतकृताभ्यागमनाशदोषप्रसङ्गः अनिष्टश्च। तस्मात् कर्त्ता भोक्ता च यः स आत्मेति।

### न्यायवार्त्तिकतात्पर्यटीका

पुनरुपन्यस्य निराकरोति—पृथिव्यादिनित्यत्वसाधन इति। तदेतच्चेतनवृत्तं देहादिभ्यो व्यावर्त्तमानं तदतिरिक्तं चेतनं साधयतीति स्थितम् ॥ ३ ॥

नेच्छाद्याधारत्वं देहादीनामिति सूत्रान्तरमवतारयति भाष्यकारः—इतश्च देहादिव्यतिरिक्त आत्मा न देहादिसंघातमात्रमिति।

शरीर—वात् (सू० ४)॥ प्राणातिपाते पातकाभावप्रसङ्गादिति। अयं यद्यपि भूतचैतनिकानां नानिष्टप्रसङ्गस्तथाऽपि शाक्यान् प्रति द्रष्टव्यः, ते हि प्राणातिपातकृतं पातकमिच्छन्ति। एवं च न बुद्धिरात्मेति वक्तव्ये देहादिग्रहणं विचित्राभिसंधित्वात् पुंसाम्। यदि कश्चिद्भूतचैतनिकः प्राणातिपातकृतं (ख)पातकं नेच्छेत् तं प्रति दूषणं भवत्वेवमर्थमिति मन्तव्यम्।

वार्त्तिकम्—अकृतकृताभ्यागमनाशदोष इति। येनाकृतं कर्म प्राणातिपातः तस्य पातकाभ्यागमो येन च कृतं तस्य नाश इत्यर्थः। (ग)शास्त्रचोदितं फलमनुष्ठातरि इत्ययमुत्सर्गो यत्र

(क) क-ख-वार्त्तिकयोः 'अकृतकृताभ्यागमविनाश' इति मुद्रितम्। (ख) 'पातकं नेच्छेत्' इत्यत्र 'पातकमिच्छेत्' इति समीचीनतया प्रतिभाति। (ग) 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात् स्वयं प्रयोगे स्यात्' इति जैमिनिसूत्रम् (सू० १८, पाद० ७, अ० ३)।

### न्यायभाष्यम्

निरुध्यते, उत्पादनिरोधसन्ततिभूतः प्रबन्धो नान्यत्वं बाधते देहादिसङ्घातस्यान्यत्वाधिष्ठानत्वात्। अन्यत्वाधिष्ठानो ह्यसौ प्रख्यायत इति। एवं (१)च सति यो देहादिसङ्घातः प्राणिभूतो हिंसां करोति नासौ हिंसाफलेन सम्बध्यते, यश्च सम्बध्यते न तेन हिंसा कृता। तदेवं सत्त्वभेदे कृतहानमकृताभ्यागमः प्रसज्यते। सति च सत्त्वोत्पादे सत्त्वनिरोधे चाकर्मनिमित्तः सत्त्वसर्गः प्राप्नोति, तत्र मुक्त्यर्थो ब्रह्मचर्यवासो न स्यात्। तद् यदि देहादिसङ्घातमात्रं सत्त्वं स्यात् शरीरदाहे पातकं न भवेत्, अनिष्टं चैतत्। तस्माद् देहादिसङ्घातव्यतिरिक्त आत्मा नित्य इति ॥ ४॥

### न्यायवार्त्तिकम्

ननु इदं सूत्रं यस्याऽऽत्मा नास्ति तस्यायं दोष इति दोषप्रतिपादनार्थं न साधनार्थमिति। हेतुफलभावात् स्मृतिवत्कर्तृभोक्तृव्यवहारः—यथा हेतुफलभावेन व्यवस्थितायां सन्ततौ यस्यामेव भावनोपजायते तस्यामेव सन्ततौ स्मृतिर्भवतीति एवं यत्कायचित्तसन्तानप्रभवं कर्म तत्कायचित्तसन्तानप्रभवं फलमिति नास्त्यकृताभ्यागम-कृतनाशप्रसङ्गः। स कथं स्यादिति? यद्यन्यस्यां सन्ततौ कृतं कर्म अन्यस्यां सन्ततौ फलं दद्यात्, यदि च भवानेवमर्थं प्रतिपादयितुं शक्नोति य एव करोति स एव भुङ्क्ते इति। उभयञ्च नास्ति। तस्मादकृताभ्यागमादिरदोषः? नोक्तोत्तरत्वात्—न सन्तानो नानात्वं बाधते इत्युक्तोत्तरमेतत्। यत् पुनरेतत् एकस्मिन्नदर्शनादिति; अत्राप्युक्तम्—एकनिमित्तानां प्रत्ययानां प्रतिसन्धानादिति। शाल्यादिबीजवदिति चेत्—अथ मन्यसे यथा शालिबीजादङ्कुर उपजायते शालिबीजावमर्दोत्तरकालं नालकाण्डादिभावेन भूतानुग्रहवशाच्छालिबीजं प्रादुर्भवति, न च तत्रैकं निमित्तं किञ्चिदनुबद्धमस्ति, अथ च नियमः शालि-

### न्यायवार्त्तिकतात्पर्यटीका

पुनः शास्त्रमन्यस्य फलमाह यथा श्राद्धे वैश्वानरीयेष्ट्यादौ तत्र भवतु पुत्रकृतस्य श्राद्धस्य पितृगामि फलं पितृकृताया वा जातेष्टेः पुत्रगामि फलमिति। भावना स्मृतिहेतुः संस्कारः। यत्कायेति। येन कायेनोपलक्षितः कश्चिच्चित्तसन्तानः स कायान्तरवर्त्त्यपि फलं भुङ्क्त इत्यर्थः। एकनिमित्तानां प्रत्ययानां प्रतिसंधानादिति। उक्तमेतद् यथा नर्तकीभ्रूलताभङ्गे एकस्मिन् बहूनां

### वृत्तिः

ननु गौरोऽहं जानामीत्यादिप्रतीतेरस्तु शरीरमात्मेत्याशङ्क्य दूषयति—( शरीरदाहे पातकाभावात् )।

पातकाभावात् पातकादेरभावप्रसङ्गात्। तथा चोत्तरकालिकं दुःखादिकं न स्यादिति। यद्वा दाहो नाशः, तथा च शरीरनाशे कृते कर्तरि शरीरे विनष्टे पातकं न स्यादित्यर्थः।

(१) 'च'कारो फ-ग-ज- पु० नास्ति।

## न्यायवार्त्तिकम्

बीजपूर्वादङ्कुराच्छालिबीजम्, एवं हेतुफलभावेन व्यवस्थितायां सन्ततावान्तरे चेतसि परिणामविशेषप्रासात् कर्मणः फलमिति ; तन्न, बीजावयवानुवृत्तेः शालिबीजवदित्यसिद्धो दृष्टान्तः—तत्रापि ये बीजावयवास्ते पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यन्ते व्यूहान्तरापत्तौ च पृथिवीधातुरब्धातुना संगृहीत आन्तरेण तेजसा पच्यमानो रसद्रव्यं निर्वर्त्तयति, स रसः पूर्वावयवसहितोऽङ्कुरादिभावमापद्यते तस्माद्बीजावयवानुवृत्तेरसिद्धमिदमुच्यते यथा शालिबीजाद्विनष्टादङ्कुर उत्पद्यते अथ च प्रतिसन्धानमिति । परमाण्ववस्थत्वाद्बीजावयवानां यथोक्तदोषापत्तिरिति चेत्—अथ मन्यसे (१)यस्यापि बीजावयवाः पूर्वव्यूहं परित्यजन्ति व्यूहान्तरं चाऽऽपद्यन्ते तस्यापि परमाण्ववस्थत्वाद्बीजस्य परमाणुमात्रं शिष्यत इति । (२) न च परमाणुष्वपरजातिभेदो विद्यते ।(२*) न च यवबीजशालिबीजपरमाणूनां कश्चिद्विशेषः । यथाऽनुपजातविशेषाः परमाणवः कार्यकारणभावनियमात् तत्पूर्वकतया शाल्यङ्कुरमभिनिर्वर्त्तयन्ति तथा ममापि कार्यकारणभावान्नियम इति ? नानभ्युपगमात्—परमाण्ववस्थानि बीजानि भवन्तीत्येतन्न प्रतिपद्यामहे सर्वावस्थोपलब्धेः । यस्माच्छाल्यादिबीजमुच्छूनावस्थामादिं कृत्वा यावदुपान्त्यं शालिबीजकार्यं तावन्न कदाचित् परमाण्ववस्थं भवति ; यदि तु स्यात् कदाचिन्नोपलभ्येत । यदि तर्हि आ परमाणोर्विभागो नास्ति कल्पादावुत्पत्तिर्न स्यात् परमाण्ववस्थत्वाज्जगतः, परमाण्ववस्थे च जगति न शाल्यादिजातिव्यक्तिरस्तीति पुनरुत्पादे जातिव्यक्तिहेतवः परमाणव एवेत्यभ्युपगन्तव्यं यथा च कल्पादावेवं परमाण्ववस्थे बीजेऽपीति ; नानेनैवोक्तोत्तरत्वात्—अनेनैव सर्वावस्थोपलब्धेरित्युक्तोत्तरमेतत् । सर्गादौ शालिजातिव्यक्तिहेतुरदृष्टविशेषः—येनादृष्टेन प्राणिनामुपभोगाय शाल्यादयो निर्वर्त्यन्ते तमदृष्टविशेषमपेक्षमाण ईश्वरस्तांस्तान् परमाणून् तथा तथा सङ्घातयति यथा यथा शाल्यादि-

## न्यायवार्त्तिकतात्पर्यटीका

प्रतिसंधानमिति । सर्वावस्थोपलब्धेरिति । सर्वावस्थासु बीजावयवानामुपलब्धेः परमाण्ववस्थत्वे त्वनुपलम्भः स्यात् । तस्मान्न बीजावयवाः पच्यमानाः अङ्कुरोत्पत्तौ परमाण्ववस्था भवन्ति अपि त्ववयविन एव पच्यन्त इत्यर्थः । परमाण्ववस्था बीजावयवा न बीजत्वादिजातिविशेषवन्तमारब्धुमर्हन्तीत्युक्तं सिद्धान्तिनेति मत्वा (३)देशयति—यदि तर्हीति । परिहरति —नानेनैवोक्तोत्तरत्वादिति । प्रतिसंधानाय बीजत्वजातीयानवयवान् (क)लक्षितुमस्माभिर्बीजावयवानां परमाण्वन्तो विभागो निषिद्धः, कल्पादौ त्वारम्भे परमाणूनां न प्रतिसंधानमस्ति । न हि पूर्वसर्गे ये बीजमारेभिरे सांप्रतमपि त एवाऽऽरभन्ते नान्य इति प्रतिसन्धाननियमः अपि

(१) 'अथापि' इति क-ख-वार्त्तिकपाठः । तत्र धृतं पाठान्तरं तु गृहीतम् । (२) अयमंशः क-वार्त्तिके नास्ति । (३) 'दर्शयति' इति ख० ।

(क) 'लक्षयितुम्' इति युक्तम् ।

## न्यायवार्त्तिकम्

जातिव्यक्तिरिति। एतेन घटादिपाको व्याख्यातः। नापरमाण्वन्तो (१)विनाशः सर्वावस्थोपलब्धेरिति। आ मध्यात् पाकानुपपत्तिरिति चेत्—अथ मन्यसे यदि कार्यकारणद्रव्ये पच्येते आ मध्यात् पाको न प्राप्नोति पाचकेन तेजसा अप्राप्तत्वात्। नाप्रतिबन्धात्—भवेदप्येष दोषो यदि तेजोऽनुप्रवेशमवयवी प्रतिबध्नाति, स तु न प्रतिबध्नाति, अप्रतिबद्धं तेजोऽनुप्रविशति इति। न प्रतिबध्नातीति न हेतुरस्तीति? न नास्ति परिस्रवादिमतो घटस्योपलब्धेः—यस्मात् परिस्रवादिमतो घटस्य द्रवत्वप्रतिबन्धो न दृष्टः, अप्रतिबन्धेन द्रवत्वं परिस्रुतिं करोति तच्च प्रत्यक्षत उपलभ्यते। यदि चायमवयवानुप्रवेशो द्रव्यस्य विनाशकः स्यात्, न परिस्रवादिमान् घट उपलभ्येत, परिस्रवमाणत्वाद्भाजनगतानामपामवस्थानं न स्यात्। विनाशे च कार्यद्रव्याणां व्यवहिताव्यवहितयोस्तुल्यकालोपलब्धिप्रसङ्गः—यदि चानुप्रविश्य द्रव्यं द्रव्यान्तरं व्यतिभिनत्ति तेन चाक्षुषस्य रश्मेरनुप्रवेशात् स्फटिकादि विनष्टमिति व्यवहिते चाव्यवहिते च तुल्योपलब्धिः प्राप्नोति। तस्माच्छालिबीजमदृष्टान्तः।

यस्य च पूर्वस्कन्धनिरोधसमकालानि स्कन्धान्तराणि प्रादुर्भवन्ति तस्य तेषां स्कन्धान्तराणां न कर्मनिमित्तः सर्गः प्राप्नोति। अकर्मनिमित्तेन सत्त्वसर्गेण शुभाशुभप्राप्त्यर्था क्रिया न प्राप्नोति। सुखी स्यामिति तत्क्रियेति चेत्—अथ मन्यसे स्वयं कर्माणि करोति कथमहं सुखी स्यां दुःखी न स्यामिति? तन्न, अननुभूतत्वात्—येन सुखमनुभूतं सुखसाधनसम्बन्धानुस्मृतिश्च

## न्यायवार्त्तिकतात्पर्यटीका

त्वन्येभ्योऽपि भवन्तीति भावः। पैलुकण्ठः शङ्कते—आ मध्यात् पाकानुपपत्तिरिति चेत्। परिहरति—नाप्रतिबन्धादिति, सान्तराण्येवावयविद्रव्याणीत्यर्थः। अथायमवयवानुप्रवेशो द्रव्यस्य विनाशकः कस्मान्न भवतीत्यत आह—यदि चायमवयवानुप्रवेश इति। भाजनगतानामपां भाजनविनाशे अवस्थानम् एव न स्यात्। सान्तरत्वे तु तावत्य एवापो भाजने स्यन्दन्ते यावन्तीभिर्बहिः शीतस्पर्शोपलब्धिर्भवति, मात्रया च तत्र कालपरिपाकवशादनवस्थानमपि; विनाशे तु सहसाऽनवस्थानमपां भाजनगतानां भवेदित्यर्थः। व्यवहिते द्रव्ये स्फटिकभाजने न तुल्योपलब्धिरिति।

शङ्कते—सुखी स्यामिति तत्क्रियेति चेत्। यद्यपि विशरारवः स्कन्धास्तथाऽप्यनाद्यविद्यावासनावशोऽयमेकमहंकारास्पद(२)सत्त्वमित्यभिमन्यमानः सुखी भवेयं दुःखी मा भूवमिति तृष्णक् प्रवर्त्तत इत्यर्थः। निराकरोति—तन्नाननुभूतत्वादिति। यथा च क्षणिकानां

(१) 'त्रिभागः'—इति क-ख-वार्त्तिकधृत-पाठान्तरम्। (२) '-सत्वं(त्त्वं) ? नित्यम्' इति क-तात्पर्यधृतपाठान्तरम्।

# तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥ ५ ॥

## न्यायभाष्यम्

यस्यापि नित्येनाऽऽत्मना सात्मकं शरीरं दह्यते तस्यापि शरीरदाहे पातकं

## न्यायवार्त्तिकम्

यस्य स तत्साधनमुपादत्ते, यस्य पुनः प्रतिक्षणं प्रध्वंसिनः संस्कारास्तस्य सुखसाधनसम्बन्धानुस्मृतेरभावात् सुखी स्यामिति क्रियानुपपत्तिः। मोक्षार्थश्च प्रयासो नोपपद्यते अयत्नसिद्धत्वात्—जातमात्र एवायं मुच्यत इति मुक्त्यर्थं ब्रह्मचर्यवासो व्यर्थः। परिपृच्छा च न प्राप्नोति—तथागतेन भिक्षवः परिपृच्छ्यन्ते 'कच्चिद् यूयं मया विनीता इति ? ते चाऽऽहुर्विनीताः स्म इति'। अतीतानागतवर्त्तमानानां चानुपकार्यत्वात्—ये तावदनागताः संस्कार्याः ते तावदसत्त्वान्नोपक्रियन्ते, येऽप्यतीतास्तेऽप्येवम्, ये तु वर्त्तमानास्तेषु संस्काराधानमशक्यं वर्त्तमानलक्षणस्यानुपकार्यत्वात्। न हि तस्यावस्थानकालोऽस्ति यस्मिन्नुपक्रिया स्यात्। संस्कार्यसंस्कारकयोः सहोत्पादाद् युक्तमिदमिति चेत्, न ; संस्कार्यसंस्कारकयोः सहोत्पादे नियमानुपपत्तिरिति—इदं संस्कारकमिदं संस्कार्यमिति नियमो नोपपद्यते। अथ संस्कारकमपेक्षमाणं संस्कार्यं विलक्षणकार्यं करोति विलक्षणकार्योत्पादश्च संस्कार इत्युच्यते ? न, संस्कार्यानभिधानात्—इदं संस्कारकमिदं संस्कार्यमित्येतत् कथम् ? न हि यो यस्य विशेषं नाधत्ते स तत्संस्कारकः तत्संस्कार्यमिति च शक्यं व्यपदेष्टुम्। अथाप्युपदेशेन संस्काराणामनागतानामनुत्पत्तिः क्रियते ? न, अनागतानामनुत्पत्तेः सत्त्वात्। याऽसावनागतानामनुत्पत्तिः संस्काराणां नासौ कदाचिन्नास्तीति किं तस्याः क्रियते। तस्मान्मुक्त्यर्थो ब्रह्मचर्यवास इत्यनुपपन्नम्। तदेवमनभ्युपगतार्थान्तरात्मनो दोष इति ॥ ४ ॥

तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात्। यस्याऽऽत्मा नित्यः तस्यापि हिंसाफले न प्राप्नुतः

## न्यायवार्त्तिकतात्पर्यटीका

विज्ञानानां परस्परवार्त्तानभिज्ञतया न प्रतिसंधानक्षमत्वं तथोपपादितमस्माभिरात्मलक्षणावसर इति। न अनागतानामनुत्पत्तेः सत्त्वादिति। न च ब्रह्मचर्यादिपरिपाकसहितेन ज्ञानक्षणेनासमर्थो ज्ञानक्षणो जन्यते स च न ज्ञानान्तरं प्रसूत इत्यनागतानुत्पत्तिरसमर्थस्य च क्षणस्य स्वभावतो विनाश इति युक्तम् असमर्थक्षणोत्पादस्यैव सहकारिसापेक्षत्वानपेक्षत्वानुपपत्तेः। यथा चैतत्तथा क्षणभङ्गभङ्गावसरे उपपादयिष्यते ॥ ४ ॥

तद्—त् (सू० ५)॥ वैनाशिको नैयायिकपक्षवत् सांख्यपक्षेऽपि हिंसातत्फलानुपपत्तिमापा-

## वृत्तिः

यद्यपि भूतचैतन्यवादिना पातकादिकं नोपेयते, तथाऽपि तस्य प्रसाध्याङ्गकत्वादेकदेशिनः पूर्वपक्षित्वाद्वा न दोष इति भावः ॥ ४ ॥

## न्यायभाष्यम्

न भवेद्वधः। कस्मात्? नित्यत्वादात्मनः; न जातु कश्चिन्नित्यं हिंसितुमर्हति। अथ हिंस्यते, नित्यत्वमस्य न भवति। सेयमेकस्मिन् पक्षे हिंसा निष्फला अन्यस्मिंस्त्वनुपपन्नेति ॥ ५ ॥

## न्यायवार्त्तिकम्

हिंसा तावन्न प्राप्नोति नित्यत्वात्, फलमपि नाऽऽत्मनो युक्तम् अनुपकार्यत्वात्। अस्य चार्थस्य ज्ञापिकां कारिकामुदाहरन्ति—

वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोर्भयम्।
चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्फलः ॥

तदेवमेकस्मिन् मते हिंसा विफला अपरस्मिंस्तु पक्षेऽनुपपन्ना निष्फला चेति। इयं च हिंसा सांख्यपक्षे सम्भवति बुद्धेः परिणामित्वात्—कार्यकारणभावः परिणामित्वादुच्छिद्यते स एव च तत्फलानि भुङ्क्ते तत्फलस्य तत्र व्यक्तेः। न, पूर्वावस्थाऽपरित्यागात्—यथैवाऽऽत्मा पूर्वावस्थां न जहातीति तत्र फलं नेष्यते तथा बुद्धिरपि पूर्वावस्थां न जहाति नित्यत्वादिति। अथ मन्यसे पूर्वावस्थां जहातीति, नित्यत्वं विरुध्यते—पूर्वावस्थापरित्यागेन बुद्धिनित्यत्वं विरुध्यते। अथाऽवस्था भिद्यत इति मन्यसे तथाऽप्यनिवृत्तो व्याघातः अवस्थाभ्योऽवस्थावतोऽनन्यत्वात्—न ह्यवस्थाभ्योऽवस्थावानन्य इति अवस्थाभेदेऽवस्थावान् भिद्यत इति। य एव बौद्धस्य प्रतिक्षणं ध्वंसिषु संस्कारेषु दोषः स एव प्रतिक्षणपरिणामिष्वपीति। ऋजुवक्रतावदिति चेत्—अथ मन्यसे ऋजुवक्रतादिभेदे यथाऽङ्गुलिद्रव्यं न भिद्यते न चाङ्गुलीतोऽन्यं ते, तथाऽवस्थाभेदे बुद्धेरभेद इति? न, अन्यत्वात्—अन्ये ऋजुवक्रते। युक्तं च (१) यदन्यभेदे अन्याभेद इति, न पुनरवस्थाभ्योऽन्यावस्थावतोऽन्यत्वम्, तस्मादसमो दृष्टान्तः। किं पुनर्वक्रत्वम् ऋजुत्वं वा? गुणः—आकुञ्चनजं वक्रत्वं प्रसारणजम् ऋजुत्वं गुणाश्च गुणिनोऽर्थान्तरमिति प्रतिपादितमेतत्।

## न्यायवार्त्तिकतात्पर्यटीका

दयितुं हिंसां तत्फलसम्भवं पूर्वपक्षयति—(क) इयं तु हिंसेति। व्यक्तेरिति, सदेव कार्यं कारणेन व्यज्यते न त्वसत् क्रियत इत्यर्थः। परिहरति—नेति। त्रिविधोऽप्ययं धर्म-लक्षणावस्थापरिणामो नित्याद् धर्मिणो न भिद्यते इति परिणामानित्यत्वं धर्मिनित्यत्वेन विरुध्यते। अविरोधाय वा धर्मिणोऽनित्यत्वाभ्युपगमे वैनाशिकपक्षोक्तदोषप्रसङ्ग इत्यर्थः। गुण इति। ऋजुत्ववक्रत्वे खलु गुणौ प्रचयसंयोगविभागविशेषौ सत्येव द्रव्यारम्भकसंयोगे उदयव्ययवन्तावनुभूयेते इति।

(१) 'यदन्यभेदेनान्याभेद'—इति क-वार्तिकधृतपाठान्तरम्।
(क) 'इयं च' इति वार्त्तिके।

## न्यायवार्त्तिकम्

बुद्धेरप्येवमिति चेत्—अथ मन्यसे बुद्धेरपि ये ते अवस्थे भिद्येते तयोर्भेदे बुद्धिर्न भिद्यत इति(१) तन्न सिद्धान्तविरोधात्—न भवतां पक्षे धर्मधर्मिणोर्भेद इति। भेदं चाभ्युपगच्छता सिद्धान्तस्त्यक्तो भवति। तस्माद् यथा आत्मनित्यत्वे सुखदुःखानुपभोगो दोष इति न तत्र सुखदुःखे कल्प्येते इति तथा बुद्धिनित्यत्वात् बुद्धावपि न कल्पनीये समानं नित्यत्वमिति। अथाऽऽत्मनो नित्यस्य पुण्यपापाभ्यां किं क्रियते ? सुखदुःखे। ताभ्यां किं क्रियते ? प्रत्ययः—ये सुखदुःखे आत्मनि, तद्विषयः प्रत्यय आत्मनि भवतीत्येतावत् क्रियते, स च प्रत्ययो भोगः। यत् पुनरेतद् वर्षातपाभ्यां किम् व्योम्न इति, यदेव चर्मणो वर्षातपाभ्यां क्रियते तद् व्योम्नः। अथ चर्मणः किम् ? सम्बन्धः—यथा चर्म वर्षातपाभ्यां सम्बध्यते तथा व्योमापि। वर्षातपसम्बन्धात् चर्मवदनित्यं व्योमेति चेत्—अथ मन्यसे यथा चर्म वर्षातपाभ्यां सम्बन्धाद्विक्रियते तथा व्योम वर्षातपसम्बन्धाद्विकरिष्यत (२) इति ? नानेकान्तात्—वर्षातपसम्बन्धी परमाणुरथ च नित्य इत्यनेकान्त इति। चर्मणश्चानित्यत्वं किं वर्षातपसम्बन्धादथ कारणविभागादथाऽऽश्रयविनाशादिति ? वयं तु ब्रूमः कारणवतः तद्विभागाद् युक्तो विनाशः, न पुनराकाशस्य कारणमस्तीत्युभयाभाव इति। तद्वतां चावस्थानान्न सम्बन्धो नाशहेतुः—यदि चायं सम्बन्धो

## न्यायवार्त्तिकतात्पर्यटीका

तदेतद् नैयायिकपक्षदूषणं सांख्यपक्षेऽप्यापाद्य नैयायिकं पृच्छति—अथाऽऽत्मनो नित्यस्येति। नैयायिक आह—सुखदुःखे इति। नित्यादात्मनो व्यतिरिक्ताभ्यां पुण्यपापाभ्यामात्मधर्माभ्यामनित्याभ्यामात्मधर्मावेव सुखदुःखे जन्येते इत्यर्थः। एतदुक्तं भवति। नित्यस्यानित्यधर्माधानमेवोपकारो न तु नित्यस्वरूपकरणं येन तदनित्यं स्यात्। धर्मश्च धर्मिणो भिन्नो न तु धर्मिस्वभावः। यथा च भेदाविशेषे सत्यपि वह्निधूमयोरेव कार्यकारणभावो न वह्निक्रमेलकयोर्वस्तुस्वभावनियमात् एवं भेदाविशेषेऽपि आत्मनः पुण्यपापयोरेव धर्मधर्मिभावो नाऽऽत्माकाशयोः पुण्याकाशयोर्वेति लेशमात्रमत्रोक्तं विस्तरस्तु क्षणभङ्गभङ्गे भविष्यतीति। नानेकान्तादिति वाद्यभिमतपरमाणनित्यत्वग्राहिप्रमाणदार्ढ्येनानैकान्तिकत्वमुक्तं न तु बौद्धराद्धान्ते नित्यः परमाणुरिति। अत एवापरितोषेणान्यथासिद्धिमाह—चर्मणश्चानित्यत्वमिति। तद्वतां च

## वृत्तिः

तवापि तुल्यो दोष इत्याशङ्कते—( तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात्। ) 'तदभावः' पातकाभावः, सात्मकशरीरस्य प्रदाहेऽपि प्रसक्तः तन्नित्यत्वात् तस्य आत्मनो नित्यत्वात्।

(१) अतः परमादर्शपुस्तकयोः ( अन्यावस्थातो बुद्धिः ? ) इति त्रुटखलितः पाठो वर्तते।
(२) 'इति चेत् ? न' इति क-ख०।

## न्यायवार्त्तिकम्

नाशहेतुरभविष्यत् न तद्गतामवस्थानमभविष्यत्, अवतिष्ठन्ते तु भावाः यावन्न विनाशकारण-सन्निपात इति।

अथ मन्यसे वर्षातपाभ्यां चर्मणः सङ्कोचविकाशौ भवतो न त्वाकाशस्येति, तन्न ; विकल्पानुपपत्तेः। सङ्कोचविकाशौ चर्मण इति कोऽर्थः ? किं तावदल्पत्वमहत्त्वे उत संयोगविभागाविति ? तन्न तावत् सङ्कोचविकाशावल्पत्वमहत्त्वे ; यावद्द्रव्यभावित्वात् परिमाणस्य ; यावद्द्रव्यं हि परिमाणं तद्द्रव्ये सति न निवर्तते इति। अथ चर्मणः सङ्कोचविकाशौ संयोगविभागाविति ? तदपि न युक्तमेकत्वात्—न ह्येकस्य संयोगविभागौ सम्भवत इति। कथं तर्हि इदमुच्यते चर्मणः सङ्कोचश्चर्मणो विकाश इति ? चर्मकारणानामविनश्यत्कार्याणामवयवानामातपसम्बन्धात्परस्परेण याः प्राप्तयः आरब्धकार्याणां द्रव्यान्तरानारम्भिकास्ता इतरेतरोपश्लेषेणावयवेषु वर्तमानास्तदेकार्थसमवायिनि चर्मण्युपचर्यन्ते ; तदपेक्षं चेदमुच्यते चर्मणः सङ्कोचो न पुनश्चर्म सङ्कुचतीति। एतेन तदवयवानामेवोदकसम्बन्धापेक्षाणामविनश्यत्कार्याणां परस्परतो विभागो विकाश इति। विक्रियायां च (१) दृष्टान्ताभावः—तदेव वस्त्वविनश्यद्विक्रियामापद्यत इति न दृष्टान्तोऽस्ति। विक्रिया तु पदार्थान्तरोत्पादः यथा पूर्वरूपादिनिवृत्तौ रूपान्तरोत्पादे विकृतो घट इति। यद्येवम्भूतो विकारः, आत्मन्यपि चकास्ति तत्रापि सुखनिवृत्तौ दुःखप्रादुर्भाव इति सुखप्रत्ययनिवृत्तौ दुःखप्रत्यय इति, तस्मान्नित्यस्याऽऽत्मनः सुखदुःखोपभोग इति सिद्धम् ॥ ५ ॥

## न्यायवार्त्तिकतात्पर्यटीका

उपलादीनाम् अवस्थानादिति। नासति विनाशप्रत्यये विनाशोऽस्ति किञ्चित्प्रमाणम्। उपलादिषु चावयवविभागविनाशाभ्यां प्राग् न विनाशोऽनुभूयते क्षणभङ्गभङ्गश्च निषेत्स्यत इति भावः।

आरब्धकार्याणां द्रव्यान्तरानारम्भिका इति अवयव्यारम्भकात्संयोगाद्भेद उक्तः। विक्रियायां च दृष्टान्ताभाव इति, धर्मोत्पादमन्तरेणाविनश्यतो धर्मिस्वरूपस्य विक्रियायामित्यर्थः। शङ्कते—यद्येवमिति। 'यद्येवंभूतो विकारः' यादृशो घटादीनां श्यामतानिवृत्तौ लोहितोत्पादे विकारः तादृशो नाऽऽत्मन इति यदि शङ्कस इत्यर्थः। निराकरोति—आत्मन्यपीति। न बाह्येन्द्रियग्राह्य एव विकारोऽपि तु धर्मान्तरोत्पादमात्रम्, तच्चात्मन्यप्यस्तीति ॥ ५ ॥

## वृत्तिः

नित्यत्वेन निर्विकारत्वम्, तेन जन्यधर्मानाश्रयत्वमभिमतम् इति केचित्।

तन्नित्यत्वात् शरीरनाशे शरीरविशिष्टात्मनाशस्य नियतत्वादित्यपि कश्चित्।

किञ्च सात्मकशरीरनाशेऽपि हन्तुः स्यात् पातकाभावः तस्यात्मनो नित्यत्वेन तन्नाशकत्वाभावात् ॥ ५ ॥

(१) 'दृष्टान्ताभावात्' इति क-ख-वार्त्तिक-पाठः

# न कार्याश्रयकर्त्तृवधात् ॥ ६ ॥

## न्यायभाष्यम्

न ब्रूमो नित्यस्य सत्त्वस्य वधो हिंसा, अपि त्वनुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्त्तृणामिन्द्रियाणामुपघातः पीडा वैकल्यलक्षणः प्रबन्धोच्छेदो वा प्रमापणलक्षणो वा वधो हिंसेति। कार्यं तु सुखदुःखसंवेदनं

## न्यायवार्त्तिकम्

नित्यत्वादात्मनो हिंसादोषोऽपरिहार्यः ? न अन्यथा तदुपपत्तेः—आत्मनित्यत्वेऽप्यन्यथा हिंसा भवति। अस्यार्थस्य ज्ञापनाय—

न कार्याश्रयकर्तृवधात् इति सूत्रम्। न ब्रूमो नित्यस्य सत्त्वस्य वधो हिंसेति, अपि तु अनुच्छित्तिधर्मकस्य सत्त्वस्य यच्छरीरं यानि च सुखसंवित्तिसाधनानि इन्द्रियाण्यसाधारणानि तेषां पीडा वैकल्यं वा प्रमापणं वा हिंसेति। कुत एतत् प्रतिपत्तव्यम्? हिंसायाः फलोपभोगस्य च उभयपक्षसम्प्रतिपन्नत्वात्—हिंसाफलोपभोगश्चोभयपक्षसम्प्रतिपन्नः। सेयं हिंसा एकस्मिन् पक्षे सम्भवति। यस्य तावत् प्रतिक्षणध्वंसिनः संस्कारास्तस्य किं हिंस्यते निर्हेतुकत्वाद्विनाशस्य कस्य व्यापारोऽस्ति। अथ विलक्षणोत्पत्तिनिमित्तत्वेन व्यवतिष्ठमानः परो हिनस्तीत्युच्यते ? ननूपचारो भवति, न भवतः प्रधानमस्ति येन शरीरोत्पादक उपचर्यते। न समानत्वात्—भवतामपि पक्षे न प्रधानं हिंस्यत इति ? सत्यम्, ममापि कार्याश्रयकर्तृवधो हिंसेति तुल्यम्। अयं तु विशेषो यत एकस्मिन् पक्षे य एवायमात्मा

## न्यायवार्त्तिकतात्पर्यटीका

न का—त् ( सू० ६ ) ॥ वैकल्यं वा प्रमापणं वेति, यथा शरीरमुपघ्नन् हिनस्त्येवं चक्षुराद्युत्पाटयन् हिनस्त्येवेति। पृच्छति—कुत एतदिति। स्वरूपतो हिंसासम्भवे भाक्ती हिंसा न युक्तेति वैनाशिकस्याभिसन्धिः। उत्तरम्—हिंसाफलोपभोगस्येति। वैनाशिकस्यापि विशरारूणां भावानां न स्वरूपहिंसा कारणजन्येति विलक्षणोत्पादो हिंसेति वक्तव्यं तत्र कारणव्यापारसम्भवात्, तथा च तत्रापि हिंसा भाक्तीति भाक्तत्वस्योभयत्राप्यविशेषाद् यस्मिन् पक्षे

## वृत्तिः

परिहरति—( न कार्याश्रयकर्त्तृवधात् )

कार्याश्रयस्य चेष्टाश्रयस्य कर्त्तुः कृत्यवच्छेदकस्य शरीरस्यैव नाशः, न त्वात्मन इति न पातकाभावः। यद्वा न हन्तुः पातकाभावः कार्याश्रयकर्त्तृवधात् शरीरस्य नाशात्

## न्यायभाष्यम्

तस्याऽऽयतनमधिष्ठानमाश्रयः शरीरम्, कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्त्तृणामिन्द्रियाणां वधो हिंसा, न नित्यस्याऽऽत्मनः। तत्र यदुक्तम्—'तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वा'दित्येतदयुक्तम्। यस्य सत्त्वोच्छेदो हिंसा तस्य कृतहानमकृताभ्यागमश्चेति दोषः। एतावच्चैतत् स्यात्—सत्त्वोच्छेदो वा हिंसा, अनुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयकर्तृवधो वा; न कल्पान्तरमस्ति। सत्त्वोच्छेदश्च प्रतिषिद्धः, तत्र किमन्यत् ? शेषं यथाभूतमिति।

अथ वा कार्याश्रयकर्तृवधादिति, कार्याश्रयो देहेन्द्रियबुद्धिसङ्घातः, नित्यस्याऽऽत्मनस्तत्रं सुखदुःखप्रतिसंवेदनम्, तस्याधिष्ठानमाश्रयः तदायतनं तद् भवति न ततोऽन्यदिति स एव कर्त्ता। तन्निमित्ता हि सुखदुःखसंवेदनस्य निर्वृत्तिः न तमन्तरेणेति। तस्य वध उपघातः पीडा प्रमापणं वा हिंसा न नित्यत्वेनाऽऽत्मोच्छेदः। तत्र यदुक्तम्—'तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात्' एतन्नेति ॥ ६ ॥

## न्यायवार्त्तिकम्

शरीरादिसाधनः कर्म करोति स एव तत्फलमुपभुङ्क्ते इति अकृताभ्यागमदोषो नास्ति। भवतामकृताभ्यागमः कृतप्रणाशश्चेति परिशेषादात्मनित्यत्वे हिंसेति व्यवस्थितम्।

तत्र कार्याश्रयशब्देन शरीरमुच्यते तन्निमित्तत्वादुपभोगस्येति, कर्त्तृणीन्द्रियाणि तत्साधनत्वात्। अथवा समानाधिकरणसमासाच्छरीरमेव कार्याश्रयकर्तृशब्दाभ्यामुच्यत इति कर्त्ता भोक्ता चाऽऽत्मा। किं पुनरिदं कर्तृत्वं भोक्तृत्वं वा किमिति ? ज्ञानचिकीर्षाप्रयत्नानां

## न्यायवार्त्तिकतात्पर्यटीका

कृतहानमकृताभ्यागमदोषो नास्ति स पक्षोऽभ्युपेतव्यः। स च नित्यात्मपक्षः। तस्मात्पारिशेष्यात् तत्सिद्धिरिति।

## वृत्तिः

ब्राह्मणत्वादेः शरीरवृत्तित्वात् तन्नाशादेव पापोत्पत्तिरिति भावः। वस्तुतस्तु (१)अपूर्वशरीरावच्छिन्नप्राणसंयोगात्मकोत्पत्तिवत् शरीरावच्छिन्नप्राणसंयोगध्वंसविशेषात्मक-

(१) 'पूर्वशरीर' इति भ०।

## न्यायभाष्यम्

इतश्च देहादिव्यतिरिक्त आत्मा—

### सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ॥ ७ ॥

(१)पूर्वपरयोर्विज्ञानयोरेकविषये प्रतिसन्धिज्ञानं प्रत्यभिज्ञानम्—तमेवैतर्हि पश्यामि यमज्ञासिषं स एवायमर्थ इति सव्येन चक्षुषा दृष्टस्येतरेणापि चक्षुषा प्रत्यभिज्ञानाद्

## न्यायवार्त्तिकम्

समवायः कर्तृत्वम्, सुखदुःखसंवित्समवायो भोक्तृत्वम्, एतत्तु न शरीरे, निमित्तत्वात् कर्तृ शरीरमुच्यते ॥ ६ ॥

इतश्च देहादिव्यतिरिक्त आत्मा—

सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्। सव्येन चक्षुषा दृष्टमितरेण प्रत्यभिजानातीति (क) सूत्रम्। तच्च प्रतिसन्धानं प्रत्यभिज्ञानम्, स्मृतिपूर्वकत्वात् प्रत्यभिज्ञानस्य। प्रतिसन्धानाच्चैककर्तृत्वं प्रत्ययानां सिध्यतीति।

## न्यायवार्त्तिकतात्पर्यटीका

ज्ञानचिकीर्षाप्रयत्नानां समवायः कर्तृत्वमिति, उपायतद्व्यापाराणामनभिज्ञो हि चिकीर्षन्नपि न कर्ता, एवमभिज्ञोऽप्यचिकीर्षन्; तथा चिकीर्षन्नप्यलसतया अप्रयतमानो न कर्तेति। सुखदुःखसंवित्समवाय इति, स्वसुखदुःखेति द्रष्टव्यम्। अस्ति हि परकीयसुखदुःखसाक्षात्कारो योगिनां न चैते भोगिनः ॥ ६ ॥

इतश्च देहादिव्यतिरिक्त आत्मा कुतः ?

सव्य—त् (सू, ७)॥ तत्र मानसमनुव्यवसायलक्षणं प्रत्यभिज्ञानं भाष्यकारो दर्शयति—तमेवैतर्हीति। व्यवसायं बाह्येन्द्रियजं प्रत्यभिज्ञानमाह—स एवायमर्थ इति। अस्यैव चानुव्यवसायः पूर्वः।

## वृत्तिः

मरणमप्यात्मनः सम्भवति, अन्यथा शरीराविनाशिनो बन्धनमुखनिरोधादेर्हिंसात्वं न स्यात्। पातकानभ्युपगन्तृचार्वाकादिमते शरीरभेदसाधनं तु वक्ष्यमाणयुक्तिभिरिति ध्येयम् ॥ ६ ॥

समाप्तं देहभेदप्रकरणम् ॥ २ ॥

(१) 'पूर्वापरयोः' इति फ-ज०।

(क) 'सूत्रम्' सूत्रार्थः।

## न्यायभाष्यम्

यमद्राक्षं तमेवैतर्हि पश्यामीति। इन्द्रियचैतन्ये तु नान्यदृष्टमन्यः प्रत्यभिजानातीति प्रत्यभिज्ञानुपपत्तिः। अस्ति त्विदं प्रत्यभिज्ञानम् तस्मादिन्द्रियव्यतिरिक्तश्चेतनः ॥ ७ ॥

## न्यायवार्त्तिकम्

सिद्धत्वादनारम्भ इति—दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येतस्मिन् प्रकरणे सिद्ध आत्मव्यतिरेकः, सिद्धत्वादनारम्भ्यं प्रकरणमिति। इन्द्रियव्यतिरेकज्ञापनार्थमित्येके—एके इदं प्रकरणमिन्द्रियव्यतिरेकज्ञापनार्थं वर्णयन्ति। तन्न, तत एव सिद्धेः—पूर्वप्रकरणेनैव इन्द्रियशरीरव्यतिरेकः सिद्ध इति। समुच्चयार्थमित्यपरे—अपरे तु समुच्चयार्थं सव्यदृष्टस्येतरेण प्रत्यभिज्ञानादिति हेतुं ब्रुवते। युक्तोऽन्यः समुच्चयः, अयं तु न युक्तो विरोधात्। सव्यदृष्टस्येतरेण प्रत्यभिज्ञानादिति ब्रुवाणो युक्तिं बाधते। का पुनरियं युक्तिबाधा? अनेकत्वादिन्द्रियस्य युगपदधिष्ठानासम्भवः—अणु मनोऽनेकं चक्षुः, न चाणोर्मनसो युगपदनेकेन चक्षुषा सम्बन्धः सम्भवति। अथासम्बद्धमपि द्वितीयं चक्षुरर्थानालोचयति? एवं च सति द्वितीयचक्षुर्वदितरचक्षुरपि मनसाऽनधिष्ठितमेव प्रवर्त्तिष्यत इति व्यर्थं मनः प्राप्तम्। अनधिष्ठितं च प्रवर्त्तमानमिन्द्रियं करणत्वं बाधते, न च करणमनधिष्ठितं प्रवर्त्तमानं दृष्टमिति। समग्रासमग्रयोश्च तुल्योपलब्धि-

## न्यायवार्त्तिकतात्पर्यटीका

(क)तदेतत्प्रकरणं वार्त्तिककारो दूषयति—सिद्धत्वादनारम्भ इति। युक्तोऽन्यः समुच्चयः शास्त्रे। अयमभिसन्धिः। काणस्तथा न पश्यति पिहितैकलोचनो वा यथाऽविकलेन्द्रियः। तत्र यदि सव्यदक्षिणाधिष्ठानभेदभिन्नं चक्षुः, न चैतद् द्वयमणुना मनसा युगपदधिष्ठातुं शक्यमित्यन्यतरदधिष्ठेयम्। तथा च सर्व एवैकैकेन चक्षुषा पश्यतीति (ख)पिहितैकलोचनेनातुल्योपलम्भः अविकलाक्षस्य स्यात्; न चैवमस्ति। एकत्वे तु तदुभाभ्यामधिष्ठानाभ्यां विनिर्यत् क्वचिदपि मनसा-

## वृत्तिः

प्रसङ्गाच्चक्षुरद्वैतप्रकरणमारभते—( सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् )

वामेन चक्षुषा दृष्टस्य दक्षिणेन चक्षुषा प्रत्यभिज्ञानात् स्थिरात्मसिद्धिरिति केषाञ्चिन्मतम् तन्निराकरणाय चैतदुपन्यासः ॥ ७ ॥

---

(क) क-ख-तात्पर्यपुस्तकयोः 'तदेतत् प्रकरणम्' इत्यतः पूर्वं 'तदेतच्चुरैकेनाचिपति—(७२८—७३१ पृ: ता-टी० ३ पं ) सूत्रार्थः' इत्यन्तो ग्रन्थभागो मुद्रितः। तच्चायुक्तमित्यस्माभिरुत्तरत्र सन्निवेशितम्।

(ख) 'पिहितैकलोचनेन तुल्य उपलम्भः' इति युक्तः पाठः।

## नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥

### न्यायभाष्यम्

(१)एकमिदं चक्षुर्मध्ये नासास्थिव्यवहितं तस्यान्तौ गृह्यमाणौ द्वित्वाभिमानं प्रयोजयतो मध्यव्यवहितस्य दीर्घस्येव ॥ ८ ॥

### न्यायवार्त्तिकम्

प्रसङ्गः—न ह्यनधिष्ठितमिन्द्रियं प्रवर्त्तत इत्यणुत्वान्मनसा नित्यमेकमेव सम्बध्यत इति विकलाविकलयोस्तुल्योपलब्धिः प्राप्नोति। (क)प्रकरणविरोधश्चेन्द्रियपञ्चत्वादिति इन्द्रियपञ्चत्वप्रतिपादकं प्रकरणं विरुध्यते इति ॥ ७ ॥

यदि तर्ह्येकमिन्द्रियं द्वित्वोपलब्धिः कथम्? द्वित्वोपलब्धिप्रतिपादनार्थम्—

नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् इति सूत्रम्। एकमिन्द्रियं द्रव्यं द्व्यधिष्ठानसमभिन्नम्। कोऽधिष्ठानार्थः? तैजसस्य चक्षुषः पार्थिवेन कृष्णसारेण उपकारविकारभेदानुविधानम्—यस्मात् कृष्णसार उपक्रियमाण उपक्रियते विक्रियमाणे विक्रियते तिष्ठति पश्यतीति, तस्मादस्य कृष्णसारमधिष्ठानमुच्यते। एतच्च व्याख्यातं शरीरसूत्रे। तस्यान्तौ गृह्यमाणौ द्वित्वाभिमानं प्रयोजयतः यथा दीर्घस्य द्रव्यस्य मध्ये व्यवहितस्यान्तावुपलभ्यमानौ द्वित्वाभिमानं प्रयोजयत इति ॥ ८ ॥

### न्यायवार्त्तिकतात्पर्यटीका

ऽधिष्ठितमेवेत्यविकलाक्षस्य न विकलाक्षवदुपलम्भप्रसङ्गः। तस्मादेकमनेकाधिष्ठानं चक्षुरिति। (ख)प्रकरणविरोधश्चेन्द्रियपञ्चत्वादिति। न चैतदेकस्मिन् शरीरे जात्यभिप्रायं(ग)घ्राणादीनां व्यक्तीनां चतसृणां व्यक्त्यन्तरेण समभिव्याहारोपपत्तेर्न तु जात्या। न हि भवति ब्राह्मणयुधिष्ठिरावागताविति किन्तु ब्राह्मणराजन्याविति वा वशिष्ठयुधिष्ठिराविति वा ॥ ७ ॥

तदेतच्चक्षुरैक्येनाऽऽक्षिपति—

नैक—त् ( सू० ८ ) (घ) ॥

### वृत्तिः

एतद् दूषयति—( नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् )।

मध्यस्थसेतुना तडागस्येव नासास्थिव्यवहितगोलकान्तरावच्छिन्नतया द्वैतप्रत्ययो भ्रम इत्यर्थः ॥ ८ ॥

---

(१) 'न। एकमिदं—' इति टि-पु-पाठः।

(क) प्रकरणविरोधश्च इन्द्रियपञ्चकत्वात् इति क-ख-वार्त्तिक-पाठः। (ख) 'इन्द्रियार्थपञ्चत्वात्' इति सूत्रम् ( सू० ५६ आ० १ अ० ३ )। (ग) घ्राणादिसमभिव्याहारस्य घ्राणरसनेत्यादि (अ० १, आ० १, सू० १२) सूत्रे दृष्टत्वात्, क-ख-तात्पर्यपुस्तकयोर्मुद्रितः 'घ्राणादीनाम्' इति पाठः परित्यक्तः। (घ) अवतरणिकातिरिक्ता टीकाऽत्र नोपलभ्यते।

## एकविनाशे द्वितीयाविनाशान्नैकत्वम् ॥ ९ ॥

### न्यायभाष्यम्

एकस्मिन्नुपहते चोद्धृते वा चक्षुषि द्वितीयमवतिष्ठते चक्षुः(१)विषयग्रहणलिङ्गम्, तस्मादेकस्य व्यवधानानुपपत्तिः ॥ ९ ॥

## अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः ॥ १० ॥

एकविनाशे द्वितीयाविनाशादित्यहेतुः। कस्मात्? वृक्षस्य हि कासुचिच्छाखासु छिन्नासूपलभ्यते एव वृक्षः ॥ १० ॥

### न्यायवार्त्तिकम्

एकविनाशे द्वितीयाविनाशान्नैकत्वम्। एकस्मिन् विनष्टे (क) उद्धृते वा द्वितीयमवतिष्ठते विषयग्रहणे लिङ्गम्। न, अन्यथा तदुपपत्तेः—द्वितीयमवतिष्ठते इति नैतत् कस्यचित् प्रत्यक्षम्; प्रत्ययमात्रं तु विनष्टेऽप्येकस्मिन्नधिष्ठाने यदवतिष्ठते तेन भवति। न चाधिष्ठानमिन्द्रियम्, अपि तु यत् (२)तदनुविधायि तद् अनुविधत्त इति, यथा बहुवातायनस्य वेश्मन एकपिधानादितरेण ग्रहणमिति ॥ ९ ॥

अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः। अपरे त्ववयवनाशेऽप्यवयव्युपलब्धेरहेतुरिति (३)परिहारं वर्णयन्ति ॥ १० ॥

### न्यायवार्त्तिकतात्पर्यटीका

समाधत्ते—

एक—त्वम् ( सू० ९ ) ॥ विनाशाविनाशलक्षणविरुद्धधर्माध्यासान्नानात्वमित्यर्थः।

विनष्टेऽप्येकस्मिन्नधिष्ठाने (ख)योऽविनष्टोऽवशिष्यते तेन प्रत्ययमात्रं (ग)काणस्येव भवति ॥ ९ ॥

आक्षेप्ताह—

अव—तुः ( सू० १० ) (घ) ॥

### वृत्तिः

आक्षिपति—( एकविनाशे द्वितीयाविनाशान्नैकत्वम् )

चक्षुरैक्ये एकचक्षुर्नाशेऽन्धत्वं स्यादिति भावः ॥ ९ ॥

---

(१) 'विषयग्रहणे लिङ्गम्' इति ग०, 'ग्रहणं लिङ्ग'' इति वि०। (२) 'तदेकमनुविधत्त इति' इति आदर्शपुस्तकधृतपाठान्तरम्। (३) 'परिहारान्तरं' इति क-खपुस्तकधृतपाठान्तरम्।

(क) ''उद्वृत्ते'' इति क-ख-वार्त्तिकपाठः प्रामादिक इति बुद्ध्या शोधितः। (ख)वार्त्तिके 'यदवतिष्ठते' इति। (ग) क-ख-पुस्तकयोः 'कारणस्येव' इति प्रामादिकः पाठः।

(घ) १०म-सूत्रस्य अवतरणिकातिरिक्ता टीका नोपलभ्यते।

## दृष्टान्तविरोधादप्रतिषेधः ॥ ११ ॥

### न्यायभाष्यम्

न (१)कारणद्रव्यस्य विभागे कार्यद्रव्यमवतिष्ठते नित्यत्वप्रसङ्गात्। बहुष्ववयविषु यस्य कारणानि विभक्तानि तस्य विनाशः, येषां कारणान्यविभक्तानि तानि अवतिष्ठन्ते।

अथ वा दृश्यमानार्थविरोधो दृष्टान्तविरोधः। मृतस्य हि शिरःकपाले (क)द्वाववटौ नासास्थिव्यवहितौ चक्षुषः स्थाने भेदेन गृह्येते न चैतदेकस्मिन्नासास्थिव्यवहिते सम्भवति।

(२)अथ वा एकविनाशस्यानियमाद् द्वाविमावर्थौ, तौ च पृथगावरणोपघातौ

### न्यायवार्त्तिकम्

तस्योत्तरम्—

दृष्टान्तविरोधादप्रतिषेध इति सूत्रम्। अस्यार्थः—न कारणद्रव्यविनाशे कार्यद्रव्यमवतिष्ठते। यदि नावतिष्ठते कथं कारणद्रव्यविनाशे कार्यमुपलभ्यत इति? क एवमाह उपलभ्यत

### न्यायवार्त्तिकतात्पर्यटीका

समाधाता आह—

दृष्टा—धः ( सू ११ )॥ तृतीयं व्याख्यानमाह—

अथ वा एकविनाशस्यानियमादिति। एकत्वे चक्षुषो विनाशनियमो न स्यात् सव्यस्यैव चक्षुषो न दक्षिणस्येति; एकत्वात् सव्यविनाशे दक्षिणस्यापि नाशप्रसङ्गात्। दृश्यते चायं नियमः। तस्माद् द्वावर्थौ पृथगावरणौ पृथगुपघातौ चेति। अपि च यदि चक्षुरेकं (ख)सव्येन नासावंशेनावपीडितम्, ततोऽङ्गुल्याऽवपीडितं यथैकं भिन्नमिवावभासयति अवपीडने निवर्त्तमाने भिन्नावभासौ तावर्थौ संदधातीति तथा नासावंशावपीडितं भिन्नमिव दर्शयेत् तन्निवृत्तौ संदध्या-

### वृत्तिः

अत्रैकदेशी परिहरति—( अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः )।

अवयवस्य शाखादेर्नाशेऽप्यवयविनो वृक्षस्य प्रत्यभिज्ञानात् नावयवनाशे सर्वत्रावयविनाशनियमः, तथा चैकनाशेऽपि नान्धत्वमिति ॥ १० ॥

एकदेशिमतस्य पूर्वोक्ताक्षेपस्य च समाधानाय सिद्धान्तिनः सूत्रम्—(दृष्टान्तविरोधादप्रतिषेधः)

उक्तः प्रतिषेधो न युक्तः दृष्टान्तस्य विरोधाद् अयुक्तत्वात्। न हि शाखाच्छेदे

(१) 'कारणद्रव्ये विभागे' इति ग०। (२) 'अथ च' इति ल-ग०।
(क) 'द्वाववटौ' इति द्वौ गर्त्तावित्यर्थः। (ख) 'सव्येन' इत्यत्र 'मध्येन' इति पाठः सम्भाव्यते।

## न्यायभाष्यम्

अनुमीयेते विभिन्नाविति। अवपीडनाच्चैकस्य चक्षुषो रश्मिविषयसन्निकर्षस्य भेदाद् दृश्यभेद इव गृह्यते ; तच्चैकत्वे विरुध्यते ; अवपीडननिवृत्तौ चाभिन्नप्रतिसन्धानमिति। तस्मादेकस्य व्यवधानानुपपत्तिः ॥ ११ ॥

अनुमीयते चायं (१)देहादिसङ्घातव्यतिरिक्तश्चेतन इति—

## न्यायवार्त्तिकम्

इति, अपि तु बहुष्ववयविषु यस्य कारणानि विभक्तानि तद्विनष्टम्, यस्य न विभक्तानि तदुपलभ्यत इति। शेषं भाष्ये ॥ ११ ॥

अनुमीयते चायं देहादिव्यतिरिक्तश्चेतन आत्मा—

## न्यायवार्त्तिकतात्पर्यटीका

द्विवेत्याह—अवपीडनाच्चैकस्य चक्षुष इति। रश्मिभेदाद्विषयसन्निकर्षस्य भेद इत्यर्थः। अङ्गुल्यवपीडितेन चक्षुषा दृष्टान्तेन विरोधादित्यर्थः। एकविनाशेन (क)इतरविनाशो वा दृष्टान्तः, तेन विरोधादिति। स खलु दृश्यमानश्च एकान्तावधारणाद् (ख)अन्तश्चेति दृष्टान्त इति सूत्रार्थः।

न च नासावंशावपीडितेन सर्वेषां सर्वदा सर्वत्र द्विचन्द्रवद्विभ्रमप्रसङ्गः, आगन्तुकमवपीडनं भ्रमहेतुर्नौत्पत्तिकमिति कार्यदर्शनात् कल्प्यते ॥ ११ ॥

तदेवं प्रतिसन्धानद्वारेणात्मनि (२)प्रत्यक्षं प्रमाणयित्वा अनुमानमिदानीं प्रमाणयति— अनुमीयते चायमिति। विप्रतिपन्नं हि प्रति प्रतिसन्धानमुक्तं परमार्थतस्तु अनुभवानुसारमार्गोऽयमिति मन्तव्यम्।

## वृत्तिः

वृक्षस्तिष्ठति, तथा सति वृक्षस्यानाशप्रसङ्गात्, अतोऽवस्थितावयवैस्तत्र खण्डवृक्षोत्पत्तेर्नैकदेशिमतं युक्तम्। एतेनैकनाशे द्वितीयाविनाशाद् भेदसाधनमपि प्रत्युक्तम्, चक्षुर्नाशेऽपि गोलकान्तरावच्छिन्नावयवैः खण्डचक्षुःसम्भवात्। इत्थं च लाघवाच्चक्षुरद्वैतमिति टीकास्वरससिद्धम्।

परे तु चक्षुर्द्वैतमेव सूत्रार्थं मन्यमाना व्याचक्षते। सिद्धान्तिनः सूत्रं सन्व्येति। शङ्कते—नैकस्मिन्निति। समाधत्ते—एकेति। शङ्कते—अवयवेति। निराकरोति—दृष्टान्तेति। शाखानाशे वृक्षनाशावश्यकत्वात् दृष्टान्तो न युक्तः। यद्वा दृष्टान्तस्य गोलकभेदस्य विरोधाद् अन्यथाऽनुपपन्नत्वात्। दृष्टं हि मृतस्य चक्षुरधिष्ठानगोलकद्वयं भेदेनैवोपलभ्यत इति वदन्ति ॥ ११ ॥

(१) 'देहादिव्यतिरिक्त' इति वि०। (२) 'प्रत्ययं' इति क०।

(क) 'इतरविनाशो वा' इति युक्तः पाठः। (ख) 'अतश्चेति' इति क-ख-तात्पर्यपाठः शोधितः।

# इन्द्रियान्तरविकारात् ॥ १२ ॥

## न्यायभाष्यम्

कस्यचिदम्लफलस्य (१)गृहीततद्रससाहचर्ये रूपे गन्धे वा केनचिदिन्द्रियेण गृह्यमाणे रसनस्येन्द्रियान्तरस्य विकारः रसानुस्मृतौ रसगर्धिप्रवर्तितो दन्तोदकसंप्लवभूतो गृह्यते। तस्येन्द्रियचैतन्येऽनुपपत्तिः, नान्यदृष्टमन्यः स्मरति ॥ १२ ॥

## न्यायवार्त्तिकम्

इन्द्रियान्तरविकारात्। कस्यचिदम्लस्य फलस्य दृष्टसाहचर्ये रूपे गन्धे वा केनचिदिन्द्रियेण गृह्यमाणे रसनेन्द्रियविकारः। कः पुनर्विकारः? रसानुस्मृतौ रसगर्द्धिप्रवर्त्तितः, गर्द्धिः तृष्णा, रसतृष्णाप्रवर्त्तितो दन्तान्तरपरिस्रुताभिरद्भी रसनेन्द्रियस्य संप्लवः सम्बन्धो विकार इत्युच्यते। सा चेयं स्मृतिरिन्द्रियचैतन्ये न प्राप्नोति न च प्रतिक्षणध्वंसिषु संस्कारेषु, अन्यानुभूतस्यान्येनास्मरणादिति। इन्द्रियान्तरविकार इन्द्रियान्तरधर्मः, स कथं व्यधिकरणत्वात्आत्मव्यतिरेकं प्रतिपादयति? नेन्द्रियान्तरविकार आत्मव्यतिरेकप्रतिपत्तिकारणम्, अपि तु स्मृतिः। न ह्येकमनुभवितारमन्तरेण स्मृतिः प्राप्नोति, स्मृतिश्च भावत्वाद्यवित्रपेक्षा उत्पत्तिवदिति न्यायः। न च स्मृतिमन्तरेणेन्द्रियविकारः सम्भवतीति प्रत्यक्ष इन्द्रियान्तरविकार उपादीयते अननुभूतरसस्येन्द्रियविकाराभावादिति व्यतिरेकहेतुः ॥ १२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

इन्द्रि—त् (सू० १२)॥ कस्यचिद् (क)अम्लस्य फलस्य चिरविल्वादेरनुभूतस्य तेन सहचरितं रूपं वा गन्धं वाऽनुभवति, अथ तत्सहचरितं रसमनुस्मरति, स्मृत्वा चेच्छति, इच्छातो रसनेन्द्रियविकारो दन्तोदकसंप्लवलक्षणः प्रवर्तते, तद्दर्शनाच्चास्येच्छाऽनुमीयते, इच्छया च स्मृतिः। सेयं स्मृतिरसत्यात्मनि सर्वेन्द्रियविषयवेदिनि न भवितुमर्हतीति ॥ १२ ॥

## वृत्तिः

आत्मन इन्द्रियभेदे युक्त्यन्तरमाह—(इन्द्रियान्तरविकारात्)

चिरविल्वाद्यम्लद्रव्ये दृष्टे तद्रसस्मरणात् दन्तोदकसंप्लवरूपरसनेन्द्रियविकारादिन्द्रियव्यतिरिक्त आत्मा सिध्यति ॥ १२ ॥

---

(१) 'गृहीतसाहचर्यं' इति वि-ज०।

(क) 'अम्लचिरविल्वादेः' इति का-ख-तात्पर्यपाठः। 'चिरविल्वो नक्तमालः करजश्च करञ्जके' इत्यमरः।

# न स्मृतेः स्मर्तव्यविषयत्वात् ॥ १३ ॥

## न्यायभाष्यम्

स्मृतिर्नाम धर्मो निमित्तादुत्पद्यते, तस्याः स्मर्तव्यो विषयः, तत्कृत इन्द्रियान्तर-विकारो नाऽऽत्मकृत इति ॥ १३ ॥

# तदात्मगुणसद्भावादप्रतिषेधः ॥ १४ ॥

तस्या आत्मगुणत्वे सति सद्भावादप्रतिषेध आत्मनः। यदि स्मृतिरात्मगुणः, एवं सति स्मृतिरुपपद्यते नान्यदृष्टमन्यः स्मरतीति। इन्द्रियचैतन्ये तु नानाकर्तृकाणां विषयग्रहणानामप्रतिसन्धानम्, (१) प्रतिसन्धाने वा विषयव्यवस्थानुपपत्तिः। एकस्तु चेतनोऽनेकार्थदर्शी भिन्ननिमित्तः पूर्वदृष्टमर्थं स्मरतीति एकस्यानेकार्थदर्शिनो दर्शन-

## न्यायवार्त्तिकम्

न स्मृतेः स्मर्तव्यविषयत्वात्। स्मृतिर्नाम धर्मः तस्याः स्मर्तव्योऽर्थो विषयः। सेयं स्मर्तव्यार्थसन्निधानादुपजायमानाऽपरिदृष्टसामर्थ्यं न स्मर्तारं प्रतिपादयिष्यति। न हि स्वकारण-सन्निधानादुत्पन्नोऽङ्कुरोऽपरिदृष्टसामर्थ्यं कुम्भादिकमर्थं प्रतिपादयति।

तदात्मगुणसद्भावादप्रतिषेधः। न स्मर्तव्यमात्राद् स्मृतिरुत्पद्यते, यदाऽयमतीतमर्थं स्मरति तदा स्मृतिरनाधारा प्राप्नोति। न चेयमनाधारा युक्ता गुणत्वात्। न हि कश्चिद् गुणो-

## न्यायवार्त्तिकतात्पर्यटीका

अस्याऽऽक्षेपसूत्रम्—

न स्मृ—त् ( सू० १३ )॥ स्मृतिरात्मानं कारणत्वेनावगमयेत् विषयत्वेन वा। न तावत्कारणत्वेन तस्याः संस्कारकारणत्वात्। न विषयत्वेन स्मर्तव्यविषयत्वात्। स्मृतात्त्व तस्मादिन्द्रियान्तरविकारोत्पत्तिरित्यर्थः ॥ १३ ॥

समाधत्ते—

तदा—धः ( सू १४ ) ॥

असत्यात्मनि स्मृत्यनुत्पत्तिं दर्शयित्वा स्मर्तव्यार्थविषयैव स्मृतिर्नाऽऽत्मविषयेति पूर्वपक्षिणो-

## वृत्तिः

आक्षिपति—(न स्मृतेः स्मर्तव्यविषयत्वात्)

स्मृतिर्हि स्मर्तव्यविषयिणीति नियमः, तस्याश्च दर्शनादिना सामानाधिकरण्ये माना-भावात्, अस्तु वा विषयतयैव सामानाधिकरण्यमिति भावः ॥ १३ ॥

समाधत्ते—(तदात्मगुणसद्भावादप्रतिषेधः)

(१) 'अप्रतिसन्धाने' इति पा०।

## न्यायभाष्यम्

प्रतिसन्धानात् स्मृतेरात्मगुणत्वे सति सद्भावः विपर्यये चानुपपत्तिः। स्मृत्याश्रयाः प्राणभृतां सर्वे व्यवहाराः। आत्मलिङ्गमुदाहरणमात्रमिन्द्रियान्तरविकार इति।

अपरिसङ्ख्यानाच्च स्मृतिविषयस्य—अपरिसङ्ख्याय च स्मृतिविषयमिदमुच्यते 'न स्मृतेः स्मर्तव्यविषयत्वा'दिति। येयं स्मृतिरगृह्यमाणेऽर्थे अज्ञासिषमहममुमर्थमिति, एतस्या ज्ञातृज्ञानविशिष्टः (१) पूर्वज्ञातोऽर्थो विषयो नार्थमात्रम्, ज्ञातवानहममुमर्थम्,

## न्यायवार्त्तिकम्

ऽनाधारो दृष्ट इति। न चेयमिन्द्रिये सम्भवत्यननुभूतत्वात्। न विषये तस्यासत्त्वात्। न शरीरे, शरीरगुणानां प्रत्यक्षाणां स्वात्मपरात्मप्रत्यक्षत्वात्। न चेयमनाधारा गुणत्वादित्युक्तम्। न चेयं नास्ति। न चाऽऽत्मन्यसत्यस्याः सद्भावो युक्त इति। तेभ्योऽन्यस्य तदुत्पत्तौ सामर्थ्यमवगम्यते कथमित्यनेनैव प्रत्युक्तम्। अस्त्यात्मनः सामर्थ्यं स्मृतेराधारभावः। न चेयमनाधारा कार्यत्वात् सर्वं कार्यमाधारवत् क्षीरादि दृष्टमिति।

## न्यायवार्त्तिकतात्पर्यटीका

ऽवधारणं खण्डयति—

अपरिसंख्यानाच्च स्मृतिविषयस्येति। मानसानुव्यवसायजनितसंस्कारकारणाच्च चतसृष्वपि स्मृतिषु नार्थमात्रं विषयोऽपि तु ज्ञानज्ञातृज्ञेयानि सर्व एव विषयाः। चतुर्षु वाक्येषु एकत्र ज्ञानं क्रिया कारकान्निष्कृष्टा यथा अमुष्मिन् मम ज्ञानमभूदिति अगृह्यमाणोऽप्यर्थः स्मृतिसन्निधापनादमुष्मिन्नित्युच्यते। कारकादनिष्कृष्टाऽप्येकत्र पूर्वापरीभूतभावनाप्रधाना ज्ञानक्रिया गम्यते अज्ञासिषमहममुमर्थमिति। अन्यत्र तु ज्ञानभावने कारकादनिष्कृष्टे कर्तृप्रधाने यथा

## वृत्तिः

उक्तः प्रतिषेधो न युक्तः धर्मिग्राहकमानेन स्मृतेरात्मगुणत्वात् परिशेषेणाऽऽत्मगुणत्वसिद्धेरहं स्मरामीत्यनुभवाद् विषयनिष्ठकार्यकारणभावे चैत्रस्य ज्ञानान्मैत्रस्य स्मरणापत्तेरिति भावः ॥ १४ ॥

विषयाणां स्मर्तव्यानां स्मृतिसमवायित्वं स्यादित्याशङ्क्य समाधत्ते—

( अपरिसङ्ख्यानाच्च स्मृतिविषयस्य )

'अपरिसङ्ख्यानात् आनन्त्यात्'। तथा च लाघवादतिरिक्तात्मसिद्धिः। इदं न सूत्रं किन्तु भाष्यमिति केचित् ॥ १५ ॥ (क)

समाप्तं चक्षुरद्वैतप्रकरणम् ॥ ३ ॥

(१) 'पूर्वज्ञातो विषयः' इति वि-टि०।

(क) वृत्तिकृताऽस्य सूत्रत्वस्वीकारात् इतः प्रभृति भाष्यादिसम्मतसूत्रसंख्यातो वृत्तिकृत्सम्मतसूत्रसंख्या भिद्यते।

### न्यायभाष्यम्

असावर्थो मया ज्ञातः, अस्मिन्नर्थे मम ज्ञानमभूदिति चतुर्विध(१)मेतद्वाक्यं स्मृतिविषयज्ञापकं समानार्थम्। सर्वत्र खलु ज्ञाता ज्ञानं ज्ञेयं च गृह्यते। अथ प्रत्यक्षेऽर्थे या स्मृति(२)स्तया त्रीणि (२*) ज्ञानानि एकस्मिन्नर्थे प्रतिसन्धीयन्ते समानकर्तृकाणि, न नानाकर्तृकाणि नाकर्तृकाणि। किं तर्हि? एककर्तृकाणि। अद्राक्षममुमर्थं यमेवैतर्हि पश्यामि। अद्राक्षमिति दर्शनं दर्शनसंविच्च, न खल्वसंविदिते स्वे दर्शने स्यादेतदद्राक्षमिति। ते खल्वेते द्वे ज्ञाने, यमेवैतर्हि पश्यामीति (३)तृतीयं ज्ञानम्, एवमेकोऽर्थ-

### न्यायवार्त्तिकम्

एतेन— "न तच्चक्षुषि नो रूपे नान्तराले तयोः स्थितम्।
न तदस्ति न तन्नास्ति यत्र तन्निष्ठितं भवेत्॥"

इति प्रत्युक्तम्। न तदस्ति न तन्नास्तीति व्याहतम्। न चानया कारिकया विज्ञानस्याऽऽ-

### न्यायवार्त्तिकतात्पर्यटीका

ज्ञातवानहममुमर्थमिति। अन्यत्र ज्ञानभावने कारकादनिष्कृष्टे कर्मप्रधाने यथा असावर्थो मया ज्ञात इति। समानार्थमिति ज्ञानज्ञेयज्ञातृप्रकाशनं समानमित्यर्थः। एवं तावदगृह्यमाणेऽर्थे स्मृतिः प्रदर्शिता। अथ प्रत्यक्षेऽर्थे स्मृतिः प्रदर्श्यते—अथ प्रत्यक्षेऽर्थ इति। स्मृतिरिति प्रत्यभिज्ञानमाह स्मृतिच्छायावाहित्वात्। अद्राक्षमिति पूर्वार्थमर्थदर्शनं परामृशति। तेनार्थदर्शनानुभवः कल्प्यतामनुभवकल्पना तु कुतस्त्येत्यत आह—न खल्वसंविदिते स्वे दर्शने इति। अपि त्वर्थदर्शनं तद्दर्शनं च संविदिते एवेत्यर्थः। कुत एतदित्यत आह—एतदद्राक्षमिति। यस्मादनुभवपुरःसरं यदत्राद्राक्षमिति भवति नूनं तत्रानुभवप्रथाऽप्यभूदिति कल्पनीयमित्यर्थः। इतोऽपि न शरीरगुणः स्मृतिः बाल्ये अनुभूतस्य वार्धके स्मरणात्। अन्यद्धि बालशरीरमन्यच्च वृद्धशरीरमिति। आस्तां तावत्प्रत्यभिज्ञानं साहश्यमपि दुर्विज्ञानम्। न च परमाणूनां चैतन्यम्, ते हि प्रत्येकं वा चेतयेरन् मिलिता वा? पूर्वस्मिन् कल्पे अनेकचैतन्ये एकस्मिन् शरीरे नैकमित्यनियमो भवेत्। न हि नानाचेतनानामैकमत्यनियमो दृष्टः। मिलितानां तु चैतन्ये परमाणूनामावापोद्वापभेदेन मेलकस्य नानात्वात् स एवान्योपलब्धस्यान्येन स्मृत्यभावप्रसङ्गः। तस्मान्न शरीराधारा चेतनेति।

परेषां कारिकां दूषयति वार्त्तिककारः—एतेन न तच्चक्षुषि नो रूप इति प्रत्युक्तम् (क)आत्मनः पारिशेष्यात्सिद्धेः स्मृत्याधारत्वव्युत्पादनेनेत्यर्थः। यत्राधिकरणे तज्ज्ञानं निष्ठितं भवेन्न तदधिकरणमस्ति न च नास्तीति व्याहतम्। स्यादेतत्—नायं विशेषप्रतिषेधो न

---

(१) '-मपि तद्वाक्यं' इति टि०। (२) '-स्तथाऽत्रापि' इति टि०। (३) 'तृतीयमेवार्थज्ञानमेकमेकः' इति वि०। (क) प्रतिवादप्रकारमाह आत्मन इति। स्मृत्याधारत्वेति 'एतेन' इति वार्त्तिकव्याख्यानमिति बोध्यम्।

## न्यायभाष्यम्

स्त्रिभि(१)र्ज्ञानैर्युज्यमानो नाकर्तृको न नानाकर्तृकः किं तर्हि ? एककर्तृक इति(१*)। सोऽयं स्मृतिविषयोऽपरिसङ्ख्यायमानो विद्यमानः प्रज्ञातोऽर्थः प्रतिषिध्यते—नास्त्यात्मा स्मृतेः स्मर्तव्यविषयत्वादिति। न चेदं स्मृतिमात्रं स्मर्तव्यमात्रविषयम् (२)वा इदं खलु ज्ञानप्रतिसन्धानवत् स्मृतिप्रतिसन्धानमेकस्य सर्वविषयत्वात्। एकोऽयं ज्ञाता सर्वविषयः स्वानि ज्ञानानि प्रतिसन्धत्ते अमुमर्थं ज्ञास्यामि अमुमर्थं विजानाम्यमुमर्थमज्ञासिषममुमर्थं जिज्ञासमानश्चिरमज्ञात्वाऽध्यवस्यत्यज्ञासिषमिति। एवं स्मृतिमपि त्रिकालविशिष्टां सुस्मूर्षाविशिष्टां च प्रतिसन्धत्ते। संस्कारसन्ततिमात्रे तु सत्त्वे उत्पद्योत्पद्य संस्कारास्तिरोभवन्ति। स नास्त्येकोऽपि संस्कारो यस्त्रिकालविशिष्टं ज्ञानं स्मृतिं चानुभवेत्। न चानुभवमन्तरेण ज्ञानस्य स्मृतेश्च प्रतिसन्धानमहं ममेति चोत्पद्यते देहान्तरवत्। अतोऽनुमीयते अस्त्येकः सर्वविषयः प्रतिदेहं स्वज्ञानप्रबन्धं स्मृतिप्रबन्धं च प्रतिसन्धत्ते इति,यस्य देहान्तरेषु वृत्तेरभावान्न प्रतिसन्धानं भवतीति ॥१४॥

## न्यायवार्त्तिकम्

आश्रयिभावः प्रतिषेद्धुं शक्यते। किं कारणम् ? विशेषप्रतिषेधात्—न तच्चक्षुषि नो रूप इत्यादिविशेषप्रतिषेधः। अथानाश्रितमेव विज्ञानम्, व्यर्थं वाक्यं 'न तच्चक्षुषि नो रूप' इति। कस्य वा चक्षुषि रूपे वा विज्ञानं वर्तते यं प्रति प्रतिषेधः ? अयं च विज्ञानस्याऽऽश्रयप्रतिषेधो विचार्यमाण आत्मसत्त्वं प्रतिपादयति। न हि विज्ञानस्याऽऽत्मसत्त्वमन्तरेण वाक्यमेतदर्थवत्तायां व्यवतिष्ठते।

अथवा एकस्यानेकविषयोपलब्धिप्रतिसन्धानमनेन सूत्रेणोपदर्श्यत इत्युक्तन्यायम्। शेषं भाष्य इति।

अपरिसंख्यानाच्च स्मृतिविषयस्य ॥ १४ ॥ (क)

( इत्यष्टभिः सूत्रैः प्रासङ्गिकं चक्षुरद्वैतप्रकरणम् ॥ )

## न्यायवार्त्तिकतात्पर्यटीका

चक्षुषि विज्ञानं न रूप इति, किन्तु ये चक्षुराद्याश्रयं विज्ञानं मन्यन्ते तन्मतं प्रतिषिध्यते। आधारवत्त्वं तु न प्रतिषिद्धमप्रसक्तत्वादित्यत आह—कस्य वेति। अपि चैषा कारिका आत्माभावविवक्षया प्रयुक्ता आत्मसत्त्वमेव प्रतिपादयन्ती विवक्षितविरुद्धेत्याह—अयं च विज्ञानस्येति।

तदेवं भाष्यमतेनेन्द्रियान्तरविकारादिति सूत्रं व्याख्याय वार्त्तिककारः स्वमतेन व्याचष्टे—अथ वा एकस्येति। उक्तमेव प्रतिसन्धानं पुनरिन्द्रियान्तरविकारद्वारेण दर्शयति सूत्रम्। यथा च प्रतिसंधानं देहेन्द्रियादिव्यतिरिक्तमात्मानं प्रतिपादयति तथाऽधस्तादेव विवृतमित्याह—उक्तन्यायमिति ॥ १४ ॥

---

(१) '-र्ज्ञानैरभिद्यमानो नाज्ञातृको न नानाज्ञातृकः' इति वि०। (२) 'वा'-इति ग-ल-पुस्तकयोः नास्ति।

(क) क-ख-पुस्तकयोः सूत्राचरैर्मुद्रितमपीदं वाक्यं वार्त्तिककृन्मतेऽपि न सूत्रमिति बोध्यम्।

## (सू)—नाऽऽत्मप्रतिपत्तिहेतूनां मनसि सम्भवात् ॥ १५ ॥

### न्यायभाष्यम्

न देहादिसङ्घातव्यतिरिक्त आत्मा। कस्मात्? आत्मप्रतिपत्तिहेतूनां मनसि सम्भवात्—'दर्शनस्पर्शनाभ्यामेकार्थग्रहणादि'त्येवमादीनामात्मप्रतिपादकानां हेतूनां मनसि सम्भवो यतः, मनो हि सर्वविषयमिति। तस्मान्न शरीरेन्द्रियमनोबुद्धि-सङ्घातव्यतिरिक्त आत्मेति ॥ १५ ॥

## (सू)—ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ॥ १६ ॥

ज्ञातुः खलु ज्ञानसाधनान्युपपद्यन्ते—चक्षुषा पश्यति घ्राणेन जिघ्रति स्पर्शनेन स्पृशति, एवं मन्तुः सर्वविषयस्य मतिसाधनमन्तःकरणभूतं सर्वविषयं विद्यते येनायं मन्यत इति। एवं सति ज्ञातर्यात्मसंज्ञा न मृष्यते मनःसंज्ञाऽभ्यनुज्ञायते। मनसि च मनःसंज्ञा न मृष्यते मतिसाधनं त्वभ्यनुज्ञायते। तदिदं संज्ञाभेदमात्रं नार्थे विवाद इति।

### न्यायवार्त्तिकम्

नाऽऽत्मप्रतिपत्तिहेतूनां मनसि सम्भवात्। य एते भवता आत्मप्रतिपादका हेतव
उपदिष्टाः सर्व एते मनसि सम्भवन्ति। एवं च न मनोव्यतिरिक्त आत्मा सिध्यति ॥ १९ ॥

ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम्। यथा ज्ञातारमभ्युपगच्छता ज्ञानसाधनानि
चक्षुरादीनि प्रतिपद्यन्ते तथा मन्तारं प्रतिपद्यमानेन मतिसाधनमभ्युपेयम्। यच्च तन्मतिसाधनं

### न्यायवार्त्तिकतात्पर्यटीका

नाऽऽत्म—वात् (सू० १५) (क) ॥

ज्ञातु—त्रम् (सू० १६) ॥ 'मतिः' स्मृत्यनुमानादिज्ञानम्। यद्यपि चेदं प्रातिस्विक-
संस्कारादिकारणकं तथाऽप्यवश्यमेतेनेन्द्रियजेन भवितव्यम्, ज्ञानत्वात्, रूपादिज्ञानवदिति;

### वृत्तिः

ननु मनसो नित्यत्वादात्मत्वमस्त्वित्याशङ्कते—(नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात्)
नातिरिक्त आत्मा, आत्मसाधकमानानां मनसाऽर्थान्तरत्वमिति भावः ॥ १६ ॥
समाधत्ते—(ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम्)।
यदि मनसो ज्ञातृत्वं तदा व्यासङ्गाद्युपपादनाय करणान्तरमवश्यं वाच्यम्।

(क) १५श-सूत्रस्य तात्पर्यटीका नोपलभ्यते।

## न्यायभाष्यम्

प्रत्याख्याने वा सर्वेन्द्रियविलोपप्रसङ्गः। अथ मन्तुः सर्वविषयस्य मतिसाधनं सर्वविषयं प्रत्याख्यायते नास्तीति, एवं रूपादिविषयग्रहणसाधनान्यपि न सन्ति इति (१) सर्वेन्द्रियविलोपः प्रसज्यत इति ॥ १६ ॥

## ( सू )—नियमश्च निरनुमानः ॥ १७ ॥

योऽयं नियम इष्यते रूपादिग्रहणसाधनान्यस्य सन्ति, मतिसाधनं सर्वविषयं नास्तीति, अयं नियमो निरनुमानः। नात्रानुमानमस्ति येन नियमं प्रतिपद्यामह इति।

रूपादिभ्यश्च विषयान्तरं सुखादयस्तदुपलब्धौ करणान्तरसद्भावः। यथा चक्षुषा गन्धो न गृह्यत इति करणान्तरं घ्राणम् एवं चक्षुर्घ्राणाभ्यां रसो न गृह्यत इति करणान्तरं रसनम्। एवं शेषेष्वपि। तथा चक्षुरादिभिः सुखादयो न गृह्यन्त इति

## न्यायवार्त्तिकम्

तन्मन इति सञ्ज्ञाभेदमात्रम्। अथ मन्ता निःसाधनो मतिं करोति ? एवमयं ज्ञाता निःसाधनो ज्ञानं करिष्यतीति सर्वेन्द्रियविलोपप्रसङ्गः ॥ १६ ॥

नियमश्च निरनुमानः। योऽयं नियम आश्रीयते मतिरसाधना न पुनर्ज्ञप्तिरिति, नियमो निरनुमानः, ज्ञप्तिवत्तु मतेः ससाधनत्वेऽनुमानमस्ति। सुखादयश्च रूपादिभ्यो विषयान्तरमिति तद्विषयत्वादुपलब्धेः साधनेन भवितव्यम्; न हि किञ्चित् सविषयं ज्ञानमसाधनं दृष्टं रूपादिज्ञानवदिति। नियमश्च निरनुमानः सुखादिविज्ञानानि निःसाधनानि भवन्तु मा भूवन्

## न्यायवार्त्तिकतात्पर्यटीका

तच्चेन्द्रियमसति चक्षुरादौ भावान्मतेश्चक्षुराद्यतिरिक्तं मन इत्युच्यते ॥ १६ ॥

निय—नः ( सू० १७ ) ॥ ननु भवतु करणान्तरं मनः, तत्तु कथमिन्द्रियान्तरसहकारि

## वृत्तिः

तथा चैको ज्ञाता, ज्ञानसाधनं चैकं सिद्धम्, मन आत्माऽस्त्विति संज्ञाभेदमात्रम्, किञ्च व्यासङ्गोपपादकतया मनसोऽणुत्वं सिद्धमात्मनश्च प्रत्यक्षोपपादकतया महत्त्वमिति भेद आवश्यक इति भावः ॥ १७ ॥

---

(१) 'सर्वेन्द्रियविषयलोपः' इति टि०।

## न्यायभाष्यम्

(१)करणान्तरेण भवितव्यम्। तच्च ज्ञानायौगपद्यलिङ्गम्। यच्च सुखाद्युपलब्धौ करणं तच्च ज्ञानायौगपद्यलिङ्गं तस्येन्द्रियमिन्द्रियं प्रति सन्निधेरसन्निधेः (२)च न युगपज् ज्ञानान्युत्पद्यन्ते इति। तत्र यदुक्तम् 'आत्मप्रतिपत्तिहेतूनां मनसि सम्भवात्' इति तदयुक्तम् ॥ १७ ॥

## न्यायवार्त्तिकम्

रूपादिविषयाणीति। यदि सर्वं विज्ञानं ससाधनमुच्यते मनस्यपि करणान्तरं प्राप्नोति विषयत्वात्, ओमित्युच्यते—अस्ति मनसि करणम्। किं पुनस्तत् ? येन मनोऽधिगम्यते। केन च मनोऽधिगम्यते ? अयुगपज्ज्ञानोत्पत्त्या। यस्य तु मनः प्रत्यक्षं भवति तस्य योगजधर्मानुगृहीत आत्ममनःसंयोगः करणम्, योगिधर्माणां चाचिन्त्यविषयत्वात् कथं ते मनो गृह्णन्तीत्यविचारणीयमेतत्। एतेनाऽऽत्मज्ञानं प्रत्युक्तम्, आत्ममनःसंयोगस्य (क)कारणभावादिति। एवं तावदात्मनोऽस्तित्वव्यतिरेकौ सिद्धौ, बहुत्वं चात एव, दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् नान्यदृष्टमन्यः स्मरतीति शरीरदाहे पातकाभावादिति। सेयं सर्वा व्यवस्था शरीरिभेदे सति सम्भवतीति ॥१७॥

( इति त्रिभिः सूत्रैर्मनोव्यतिरिक्तात्मप्रकरणम्। )

## न्यायवार्त्तिकतात्पर्यटीका

कथं चाणुपरिमाणमित्यत आह—तच्च ज्ञानायौगपद्यलिङ्गमिति।

वार्त्तिकम्—यदि सर्वं विज्ञानं ससाधनमुच्यते मनस्यपीति। न च तत्र मन एव करणमात्मनि वृत्तिविरोधादिति तदन्यस्य करणत्वे तज्ज्ञानायापीन्द्रियान्तरमुपासनीयमित्यनवस्था, अनिन्द्रियजत्वे तु मतावपि संस्काराद्येव कारणमस्तीति कृतं मनसेति भावः। परिहरति—ओमितीति। यथा कारणसत्तया कार्यं जनितं कारणं (ख) ज्ञापयति एवं मनःसत्तया मनोलिङ्गज्ञानं जनितं मनो ज्ञापयति। तच्च लिङ्गजं मनोज्ञानं मनःसत्ताहेतुकम्, न च स्वात्मनि वृत्तिविरोधः; न हि मनःसत्तायां मनः करणं मनोज्ञाने वा मनोज्ञानं करणं येन स्वात्मनि वृत्तिविरोधः स्यात्, केवलं वा मनः स्वज्ञाने करणं येनैकत्र कर्मकरणत्वे स्याताम्; अपि तु मनोज्ञाने लिङ्गज्ञानसहितं मनः करणम्, तत्स्वरूपं तु लिङ्गज्ञानसाहित्यादिति न स्वात्मनि वृत्तिविरोधः। नाप्येकस्यैव केवलस्य कर्मकरणभाव इति भावः। स्यादेतद् लिङ्गज्ञानसहितस्य मनसः करणत्वे मा भूदेकस्यैव कर्मकरणभावः स्वरूपेण कर्मत्वाद् लिङ्गज्ञानसाहित्येन च करणत्वात्; यदा तु योगिना प्रत्यक्षेण मनो गृह्यते तदा कथमेकस्य कर्मकरणभाव इत्यत आह—यस्य तु मनः प्रत्यक्षमिति ॥ १७ ॥

---

(१) 'कारणान्तरेण' इति वि०। (२) 'च' इति ख-ग-झा-पुस्तकेषु नास्ति।
(क) अत्र 'करणभावात्' इति पाठः सम्भाव्यते। (ख) क-ख-पुस्तकयोः 'ज्ञायते' इति मुद्रितम्।

## न्यायभाष्यम्

किं पुनरयं देहादिसङ्घातादन्यो नित्यः उतानित्य इति। कुतः संशयः? उभयथा दृष्टत्वात् संशयः। विद्यमानमुभयथा भवति नित्यमनित्यं च। प्रतिपादिते च (१) आत्मसद्भावे संशयानिवृत्तेरिति।

## न्यायवार्त्तिकम्

'किं पुनरयं देहादिसङ्घातादन्यो नित्यः (क) अथानित्य इति' एतस्मिन्नर्थे 'उभयथा दृष्टत्वा'-दिति संशयमुपपादयति। अनुपपन्नरूपश्चायं संशयः—आत्मास्तित्वव्यतिरेकहेतुभिः शरीरभेदेऽप्यभेद आत्मनि सिद्धः, सिद्धत्वात् प्रकरणमनारभ्यमिति। नानारभ्यम्। कथम्? जन्मप्रभृति यावत् प्रायणमेतस्मादेकः सिध्यति न पुनर्देहविनाशादूर्ध्वं भवतीत्येतत् सिध्यति एतस्यार्थस्य ज्ञापनार्थम्।

## न्यायवार्त्तिकतात्पर्यटीका

शास्त्रार्थभूताभ्युदयनिःश्रेयसोपयोगिनं परलोकं परीचिक्षिषुः परीक्षाहेतुभूतं संशयमाह—किं पुनरयमिति।

अत्र वार्त्तिककारः संशयं दूषयन् प्रकरणान्तरारम्भमाक्षिपति—एतस्मिन्नर्थ इति। देहेन्द्रियबुद्धिवेदनाभ्यो व्यतिरिक्तत्वमात्मनो दर्शयता बाल्यकौमारयौवनवार्द्धकभेदेऽपि चैकात्मप्रतिसंधानमर्थादुपपादयता शरीरनाशादूर्ध्वमात्मसद्भावो दर्शितः। तावता च नः प्रयोजनं तत्किमवशिष्यते यत्र संशयो यत्कृते च प्रकरणोत्थानमित्यर्थः। समाधत्ते—नानारभ्यमिति। सिद्धेऽपि देहादिव्यतिरेके बाल्यादिषु चानुगमे किमयमात्मा आ शरीरोत्पत्तेरा च प्रायणाद्व यावद्देहसंतानभावी आहोस्विदुपरतेऽपि देहादिसंतानेऽनुवर्तत एवेत्येष विमर्शोऽद्यापि न निराकृत इति तन्निरासायेदं प्रकरणमारभ्यत इत्यर्थः।

## वृत्तिः

ननु रूपादिप्रत्यक्षं सकरणकमस्तु, न तु सुखादिप्रत्यक्षम्, एवं परमाण्वन्तरस्यातीन्द्रियत्वेऽपि मनसः प्रत्यक्षं स्यादत आह—( नियमश्च निरनुमानः )।

उक्तो नियमविशेषो निरनुमानः निष्प्रमाणको गौरवाद् वैपरीत्ये (ख) च विनिगमकाभावाच्चेति भावः॥ १८॥

समाप्तं मनोभेदप्रकरणम्॥ ४॥

(१) 'आत्मसम्भवे' इति वि०।

(क) भाष्ये 'अथ' इत्यत्र 'उते'ति विशेषः। (ख) चकारोऽयं प्रमादापतितः सम्भाव्यते।

## न्यायभाष्यम्

आत्मसद्भावहेतुभिरेवास्य प्राग् देहभेदादवस्थानं सिद्धम् ऊर्द्ध्वमपि देहभेदादवतिष्ठते। कुतः ?

### पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः ॥१८॥

जातः खल्वयं कुमारकोऽस्मिन् जन्मन्यगृहीतेषु हर्षभयशोकहेतुषु हर्षभयशोकान् प्रतिपद्यते लिङ्गानुमेयान्। ते च स्मृत्यनुबन्धादुत्पद्यन्ते नान्यथा। स्मृत्यनुबन्धश्च पूर्वाभ्यासमन्तरेण न भवति। पूर्वाभ्यासश्च पूर्वजन्मनि सति, नान्यथेति सिध्यत्येतत् अवतिष्ठतेऽयमूर्द्ध्वं शरीरभेदादिति ॥ १८ ॥

## न्यायवार्त्तिकम्

पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेरिति सूत्रम्। अस्यार्थः। जातः खल्वयं कुमारको विषयाधिगमासमर्थेषु इन्द्रियेषु हर्ष-भय-शोकान् प्रतिपद्यमानो दृष्टः स्मित-कम्प-रुदितानुमेयान्, ते च स्मृत्यनुबन्धादुत्पद्यन्ते। स्मृत्यनुबन्धश्च नान्तरेण पूर्वशरीरमिति। तत्र जन्म निकायविशिष्टाभिः शरीरेन्द्रियबुद्धिवेदनाभिः सम्बन्धः। अभिप्रेतविषयप्रार्थनाप्राप्तौ सुखानुभवो हर्षः। अनिष्टविषयसाधनोपनिपाते तज्जिहासोर्हानाशक्यता भयम्। इष्टविषयवियोगे सति तत्प्राप्त्यशक्यप्रार्थना शोकः। तदनुभवः सम्प्रतिपत्तिः। एकविषयानेकविज्ञानोत्पादोऽभ्यासः एकाकारविषयो वा। यथा शालयोऽनेनाभ्यस्ता इति।

## न्यायवार्त्तिकतात्पर्यटीका

भाष्यम् देहभेदादिति। ल्यब्लोपे पञ्चमी। बाल्यकौमारयौवनवार्द्धकदेहभेदमभिसमीक्ष्य प्रतिसंधानादस्यावस्थानं सिद्धमित्यर्थः।

पूर्वा—त्तेः ( सू० १८ )॥ वार्त्तिकम्—अभिप्रेतविषयप्रार्थनाप्राप्ताविति। अभिप्रेतविषयप्राप्ताविति वक्तव्ये प्रार्थनाग्रहणम् इष्यमाणतमत्वं सूचयति। नेष्यमाणप्राप्तौ हर्षोऽपि त्विष्यमाणतमप्राप्तौ, तेनाभिप्रेतविषयस्य प्रार्थनायां सत्यां प्राप्तावित्यर्थः। हानाशक्यतेति विषयेण विषयिणीं बुद्धिमुपलक्षयति। अनिष्टो विषयो मरणादिस्तस्य साधनमहिव्याघ्रादिस्तस्योपनिपातः सन्निधानम्, तस्मिन्सति व्याघ्रादिजिहासोरशक्यहानमेतदिति बुद्धिर्भयं सा हि कस्यापि जनयति। इष्टविषयवियोगे सति तत्प्राप्त्यशक्यप्रार्थना शोकः। तस्यैव

## वृत्तिः

एवं साधितेऽपि देहादिभिन्न आत्मनि विना तन्नित्यतां न परलोकार्थिनः प्रवृत्तिरत आत्मनित्यताप्रतिपादनाय सूत्रम्—(पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः)।

जातस्य बालस्य एतज्जन्माननुभूतेष्वपि हर्षादिहेतुषु सत्सु हर्षादीनां सम्प्रतिपत्तिः उत्पत्तिः, तस्याः पूर्वपूर्वानुभवाधीनस्मृतिसम्बन्धादेव सम्भवात्। इत्थं चेदानीन्तन-

## न्यायवार्त्तिकम्

प्रत्यक्षबुद्धिनिरोधे तदनुसन्धानविषयः प्रत्ययः स्मृतिः। तदनुगृहीतस्तदनुसन्धानविषयः प्रत्ययस्तद्भावविषयः प्रत्यभिज्ञानम्। अनुबन्धो—भावनाख्यः स्मृतिहेतुः संस्कारः। इष्टविषयानुस्मरणान्नयनादिप्रसादः स्मितम्। अनिष्टविषयानुस्मरणात् तत्साधनजिहासानुष्ठानलक्षणो हस्तादिविक्षेपवतोऽश्रुविमोचनसहितः शब्दविशेषो रुदितम्।

स्मितरुदिते व्यधिकरणत्वादसाधनम्—अथ मन्यसे स्मितरुदिते बाल्यावस्थायां भवतः, न च बाल्यावस्था आत्मनः, तस्माद् व्यधिकरणत्वादसाधनमिति ? न, शोकादिमदात्मवतीति बाल्यावस्थायाः साध्यत्वात्—शोकादिमदात्मवती बाल्यावस्थेति साध्यं स्मितरुदितादिमत्त्वादिति। बाल्यावस्था वयोधर्मो यौवनावस्थावत्। एतेन स्मृतिसंस्कारानुभवपूर्वशरीरसम्बन्धवदात्मवत्त्वं व्याख्यातम्। कथमिति ? यथा स्मितरुदितवत्त्वेन शोकादिमदात्मवती बाल्यावस्था साध्यते एवं शोकादिमदात्मवत्त्वेन स्मृतिमदात्मवती बाल्यावस्था साध्या, तथा स्मृतिमदात्मवत्त्वेन संस्कारवदात्मवती बाल्यावस्था साध्या, संस्कारवदात्मवत्त्वेन पूर्वानुभववदात्मवती, पूर्वानुभववदात्मवत्त्वेन पूर्वशरीरसम्बन्धवदात्मवती साध्या सर्वत्र पूर्वानुभववदात्मवत्त्वेन पूर्वशरीरसम्बन्धवदात्मवती साध्या। सर्वत्र (१) यौवनावस्था दृष्टान्तः। सा हि स्मितरुदितवती भवतीति शोकादिमदात्मवती चेति सर्वत्र वक्तव्यम्॥ १८॥

## न्यायवार्त्तिकतात्पर्यटीका

पुरुषस्य यः प्राप्त्यशक्यः तत्र प्रार्थना शोकः। य इष्टो विषयः प्राप्तुमशक्यस्तत्र प्रार्थना इदं मे उपपद्यतां (क)भवत्विति इत्थंभूता चेयं प्रार्थना न स्वरूपेण शोक इत्यत आह—इष्टविषयवियोगे सतीति, अनर्हणेनेति यावत्। तदयमर्थः—इष्टवियोगे तत्प्राप्त्यशक्यताज्ञानं शोक इति। अनर्हणेन प्राप्त्यशक्यताज्ञानं शोचतः सूचयति। प्रत्यक्षबुद्धिनिरोध इति। प्रत्यक्षग्रहणेन ग्रहणमात्रमुपलक्षयति। तदनुगृहीतः स्मृत्यनुगृहीतः। तदनुसंधानविषय इति। अनुसंधीयत इत्यनुसंधानं स्मृते यदनुसंधेयं तद्विषय इत्यर्थः। तथाऽपि स्मृतिप्रत्यभिज्ञयोरविशेष इत्यत आह—वर्तमानस्य विषयस्य दृश्यस्य तद्भावविषय इति। दृष्टो हि निरालम्बनो बालः स्खलन्मातुरङ्कात्पतनस्यानिष्टसाधनत्वमनुस्मृत्येदं च पतनमिति परामृष्य तस्यानिष्टसाधनत्वमनुमाय रुदन्मातुर्मङ्गल्यमुरःसूत्रं विक्षिप्य हस्तौ वेपमान उपाददानः; तस्यानया चेष्टया भयशोकावनुमीयेते इत्यर्थः॥ १८॥

## वृत्तिः

स्याऽऽत्मनः पूर्वपूर्वसिद्धौ तस्यानादित्वमनादेश्च भावस्य न नाश इति नित्यत्वसिद्धिरिति भावः॥ १९॥

(१) 'यौवनादिदृष्टान्तः'—इति क-ख-धृतपाठान्तरम्।
(क) 'भवतु' इति 'उपपद्यता'मित्यस्य विवरणं सम्भाव्यते।

## ( सू० )—पद्मादिषु प्रबोधसम्मीलनविकारवत्तद्विकारः ॥ १९ ॥

### न्यायभाष्यम्

यथा पद्मादिष्वनित्येषु (१)प्रबोधः सम्मीलनं विकारो भवति एवमनित्यस्याऽऽत्मनो हर्षभयशोकसम्प्रतिपत्तिर्विकारः स्यात् ।

हेत्वभावादयुक्तम्—अनेन हेतुना पद्मादिषु प्रबोधसम्मीलनविकारवदनित्यस्याऽऽत्मनो हर्षादिसम्प्रतिपत्तिरिति नात्रोदाहरणसाधर्म्यात्साध्यसाधनं हेतु(२)र्न वैधर्म्यादस्ति, हेत्वभावात् असम्बद्धार्थकमपार्थकमुच्यते इति ।

### न्यायवार्त्तिकम्

पद्मादिषु प्रबोधसम्मीलनविकारवत् तद्विकारः । अनित्येऽपि विकारदर्शनादनेकान्त इति सूत्रार्थः ।

कः पुनरयं प्रबोधः, किं च सम्मीलनमिति ? पद्मपत्रावयवविभागोऽविनश्यत्कार्यः प्रबोधः, पद्मपत्रावयवानामारब्धकार्याणां याः पुनः परस्परेण प्राप्तयः तत् सम्मीलनमिति । न विकल्पानुपपत्तेः—पद्मादिषु प्रबोधसम्मीलनविकारादिवत्तद्विकार इति किमयं दृष्टान्तः साधनपक्षे उतानैकान्तिकपक्ष इति ? यदि साधनपक्षे, हेतुमन्तरेण दृष्टान्तमात्रं न साधनमित्यसाधनं दृष्टान्तः । अथ दूषणम्, तत्किं दृष्टकारणप्रत्याख्यानम्, उत कारणान्तरोपपादनम्, अथाऽऽत्मन उत्पत्तिनिरोधकारणानुमानम्, अथाऽऽकस्मिकत्वमिति ? तद्व यदि तावद्व दृष्टकारणप्रत्याख्यानम्, तदयुक्तम्, दृष्टेन विशेषितत्वात्—यौवनाद्यवस्थासु स्मितरुदितवत्त्वं शोकादिमदात्मवत्त्वं च दृष्टमिति—दृष्टेन स्मितरुदितवत्त्वेन शोकादिमदात्मवत्त्वं बाल्यावस्थायां गम्यत इति न दोषः । अथ कारणान्तरोपपादनम् ? तदपि न युक्तम् अत एव—दृष्टेन विशेषितत्वादिति । अथाऽऽत्मन

### न्यायवार्त्तिकतात्पर्यटीका

पद्मा—रः (सू० १९) ॥ दृष्टेन विशेषितत्वादिति । दृष्टशब्देन विशेषितो व्यवस्थापितः कार्यकारणभावो न शक्यो व्युदसितुमित्यर्थः । अथाऽऽत्मन उत्पत्तिनिरोधानुमानमिति । यदि यद्विकारि तदुत्पत्तिनिरोधधर्मकं दृष्टम्, यथा पद्मम्; तथा चाऽऽत्मा, तस्मादनित्य इत्यर्थः । यदि धर्मोपजननमात्रं विकारः स आकाशादिष्वपीत्यनेकान्तः । धर्मधर्मिणोश्च भेदान्न धर्मोपजननापायौ धर्मिणि युज्येते इति नानित्यत्वानुमानं विकारात् । अस्माकं त्वात्मनित्यत्वेऽनुमानमस्तीत्याशयेन

### वृत्तिः

अत्र शङ्कते—( पद्मादिषु प्रबोधसम्मीलनविकारवत् तद्विकारः ) ।

(१) 'प्रबोधसम्मीलनं' ल-ज-मा० । (२) 'न च' इति फ० ।

## न्यायभाष्यम्

दृष्टान्ताच्च हर्षादिनिमित्तस्यानिवृत्तिः—या चेयमासेवितेषु विषयेषु हर्षादिसम्प्रतिपत्तिः स्मृत्यनुबन्धकृता प्रत्यात्मं गृह्यते सेयं पद्मादिसम्मीलनदृष्टान्तेन न (१)निवर्तते। यथा चेयं न निवर्त्तते तथा जातस्यापीति। (२)क्रियाजातौ च पर्णविभागसंयोगौ प्रबोधसम्मीलने, क्रियाहेतुश्च (३) क्रियानुमेयः। एवं च सति किं दृष्टान्तेन प्रतिषिध्यते ॥ १९ ॥

अथ निर्निमित्तः पद्मादिषु प्रबोधसम्मीलनविकार इति मतमेवमात्मनोऽपि हर्षादिसम्प्रतिपत्तिरिति। तच्च—

**( सू० )—नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ॥ २० ॥**

उष्णादिषु सत्सु भावाद् असत्स्वभावात् तन्निमित्ताः पञ्चभूतानुग्रहेण निर्वृत्तानां पद्मादीनां प्रबोधसम्मीलनविकारा इति न निर्निमित्ताः। एवं हर्षादयोऽपि विकारा

## न्यायवार्त्तिकम्

उत्पत्तिनिरोधकारणानुमानम्, तन्न युक्तं—द्रव्यस्य सतः सर्वदा अमूर्तत्वाद् अकारण आत्मा आकाशादिवदिति। आत्मानं च कृतकं प्रतिपद्यमानेन कारणमस्य वाच्यम्। कुतः? कार्यस्य (४) कारणवत्त्वात्, सर्वं कार्यं कारणवद् दृष्टमिति ॥ १९ ॥

अथ पद्मादिप्रबोधसम्मीलनविकारोऽकस्माद्भवतीति ? तत्—

नोष्णशीत(५)वर्षकालनिमित्तत्वात् पञ्चात्मकविकाराणाम्। नायमाकस्मिकः

## न्यायवार्त्तिकतात्पर्यटीका

नित्यत्वानुमानमाह—तन्न युक्तमिति। सर्वदाऽमूर्तत्वादिति। घटादयोऽप्येकस्मिन् क्षणे भवन्त्यमूर्ताः, परिमाणविशेषो हि मूर्त्तिः, न च द्रव्यसमानकालोत्पत्तिर्गुणानामिति तन्निवृत्त्यर्थं सर्वदेत्युक्तम् ॥ १९ ॥

## वृत्तिः

बालस्य हर्षादयो मुखविकासाद्यनुमेयाः। न च तत्सम्भवः, पद्मादीनां प्रबोधादिवददृष्टविशेषाधीनक्रियावशादेव तदुपपत्तेरिति भावः ॥ २० ॥

---

(१) 'निवर्त्यते' इति ग०। (२) अत्र फ-पुस्तकपाठो गृहीतः।
'क्रियाजातश्च पर्णविभागः संयोगः प्रबोधसम्मीलने' इति ख०।
'क्रियाजातश्च पर्णविभागः संयोगप्रबोधसम्मीलने' इति ग०।
'क्रियाजातश्च पर्णविभागः संयोगप्रबोधः सम्मीलने' इति ज०।
'क्रियाजाताश्च पर्णसंयोगविभागाः' इति झा०।
(३) 'अनुमेयः' इति ज०। (४) 'कारणवत्त्वनियमात्' इति क-ख-धृतपाठान्तरम्। (५) 'वर्षाकाल'—इति क-ख-धृतपाठान्तरम्।

## न्यायभाष्यम्

निमित्ताद् भवितुमर्हन्ति न निमित्तमन्तरेण। न चान्यत् पूर्वाभ्यस्तस्मृत्यनुबन्धान्निमित्तमस्तीति। न चोत्पत्तिनिरोधकारणानुमानमात्मनो दृष्टान्तात्, (१)न हर्षादीनां निमित्तमन्तरेणोत्पत्तिः, नोष्णादिवन्निमित्तान्तरोपादानं हर्षादीनाम्, तस्मादयुक्तमेतत्॥ २०॥

इतश्च नित्य आत्मा—

### प्रेत्याऽऽहाराभ्यासकृतात् स्तन्याभिलाषात्॥ २१॥

जातमात्रस्य वत्सस्य प्रवृत्तिलिङ्गः स्तन्याभिलाषो गृह्यते। स च नान्तरेणाऽऽहाराभ्यासम्। कया युक्त्या? दृश्यते हि शरीरिणां क्षुधा पीड्यमानानामाहाराभ्यासकृतात् स्मरणानुबन्धादाहाराभिलाषः। (२)न च पूर्वशरीराभ्यासमन्तरेणासौ

## न्यायवार्त्तिकम्

पद्मादिप्रबोधसम्मीलनविकार इति सूत्रार्थः। एवं च सति दृष्टान्तेन न किञ्चित् प्रतिपिध्यते। पञ्चात्मकविकाराणामिति, न (३)पञ्चात्मकानि पद्मानीति, अपि तु पञ्चानां भूतानामनुग्रहे सति भवन्तीति पञ्चात्मकानीत्युच्यन्ते। वस्तुतस्तु न पञ्चात्मकं किञ्चिदस्तीत्युपरिष्टाद् वक्ष्यामः॥ २०॥

प्रेत्याऽऽहाराभ्यासकृतात् स्तन्याभिलाषात्। जातमात्रस्य वत्सस्य प्रवृत्त्या स्तन्याभिलाषो गम्यते, तत्र (४) प्रवृत्त्युन्नेयः स्तन्याभिलाषः, तेन स्मृतिस्तया संस्कारस्तेनानुभवस्तेन

## न्यायवार्त्तिकतात्पर्यटीका

नोष्ण—णाम् ( सू० २० )॥ पञ्चात्मकानां पद्मादीनां विकाराः पञ्चात्मकविकारा इति॥ २०॥

## वृत्तिः

सिद्धान्तसूत्रम्—( नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् )। उक्तं न युक्तम्, यतः पञ्चात्मकानां पाञ्चभौतिकानां पद्मादीनां ये विकारास्तेषाम् उष्णकालादिनिमित्तत्वात्। मनुष्यादीनां तु हर्षादिनिमित्तका मुखविकासादय इति न तुल्यतेति भावः॥ २१॥

(१) 'न' इति टि-पु० नास्ति। (२) 'न च पूर्वशरीरमन्तरेणासौ' इति ज-टि०। (३) 'पञ्चात्मककारणानि'—इति क-ख-पुस्तकयोर्मुद्रितम्, तत्र पाठान्तरतया धृत आकारस्तु गृहीतः। (४) 'प्रवृत्त्यनुमेयः'—इति क-ख-धृतपाठान्तरम्।

## न्यायभाष्यम्

जातमात्रस्योपपद्यते। तेनानुमीयते भूतपूर्वं शरीरं यत्रानेनाऽऽहारोऽभ्यस्त इति। स खल्वयमात्मा पूर्वशरीरात् प्रेत्य शरीरान्तरमापन्नः क्षुत्पीडितः पूर्वाभ्यस्तमाहारमनुस्मरन् स्तन्यमभिलषति। तस्मान्न देहभेदादात्मा भिद्यते भवत्येवोर्द्ध्वं देहभेदादिति ॥ २१ ॥

**अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् ॥ २२ ॥**

यथा खल्वयोऽभ्यासमन्तरेणायस्कान्तमुपसर्पति, एवमाहाराभ्यासमन्तरेण बालः स्तन्यमभिलषति ॥ २२ ॥

## न्यायवार्त्तिकम्

पूर्वशरीरमिति पूर्ववत् प्रयोगः। किमर्थं पुनरिदं सूत्रमारभ्यते यदाऽयमर्थः पूर्वाभ्यस्तसूत्रेऽवगतः ? (१) सामान्यतोऽधिगतस्य विशेषज्ञापनार्थं सूत्रमित्यदोषः ॥ २१ ॥

प्रवृत्तिमात्रस्यानैकान्तिकत्वज्ञापनार्थम्—

अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणमिति सूत्रम्। न विकल्पानुपपत्तेः—किमिदमयसोऽयस्कान्ताभिगमनं सनिमित्तमाहो निर्निमित्तमिति ?

## न्यायवार्त्तिकतात्पर्यटीका

सामान्यतोऽधिगतस्य विशेषज्ञापनार्थमिति। हर्षादिना सामान्यत इच्छामात्रमवगतं तद्विशेषस्तु स्तन्याभिलाषो रागश्चात्रोक्त इत्यर्थः ॥ २१ ॥

अय—णम् ( सू० २२ ) ॥ न पूर्वाभ्यस्तस्मृत्यनुबन्ध एव प्रवृत्तिकारणम् अयसोऽयस्कान्तोपसर्पणे तदभावात्। यदि च बालकस्य पूर्वाभ्यस्तस्मृत्यनुबन्धो भवेत् (क)जात्यन्धबधिरादयस्तज्जन्मानुभूतान् गन्धस्पर्शान् जात्यन्तरानुभूतान् रूपस्पर्शादीनपि व्याचक्षीरन्नित्यभिप्रायः। विकल्प्य दूषयति—किमिदमिति। यौवनाद्यवस्थायां चेतनस्य प्रवृत्तिः

## वृत्तिः

आत्मनित्यत्वे हेत्वन्तरमाह—( प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् )।

प्रेत्य मृत्वा। जातमात्रस्य यः स्तन्याभिलाषः स तावदाहाराभ्यासजनितः। जन्मान्तरीयाहारेष्टसाधनताधीजन्यजीवनादृष्टोद्बोधितसंस्काराधीनेष्टसाधनतास्मरणेन हि बालः स्तन्यपाने प्रवर्तते इत्यनादित्वमिति ॥ २२ ॥

शङ्कते—( अयसोऽयस्कान्ताभिगमनवत् तदुपसर्पणम् )।

---

(१) 'सामान्यतो ज्ञातस्य'—इति क-खधृतपाठान्तरम्।

(क) अत्र 'जात्यन्धबधिरादय एतज्जन्मानुभूतान् गन्धस्पर्शानिव जात्यन्तरानुभूतान् रूपशब्दादीनपि' इति पाठो युक्तः।

### न्यायभाष्यम्

किमिदमयसोऽयस्कान्ता(१)भिसर्पणं निर्निमित्तमथ निमित्तादिति? निर्निमित्तं तावत्—

## नान्यत्र प्रवृत्त्यभावात् ॥ २३ ॥

यदि निर्निमित्तम्, लोष्टादयोऽप्ययस्कान्तमुपसर्पेयुः। न जातु नियमे कारणमस्तीति। अथ निमित्तात्, तत्केनोपलभ्यते इति। क्रियालिङ्गः क्रियाहेतुः, क्रियानियमलिङ्गश्च क्रियाहेतुनियमः, तेनान्यत्र प्रवृत्त्यभावः, बालस्यापि नियतमुपसर्पणक्रियोपलभ्यते। न च स्तन्याभिलाषलिङ्गमन्यदाहाराभ्यासकृतात् स्मरणानुबन्धात्। निमित्तं

### न्यायवार्त्तिकम्

यदि सनिमित्तम्, तत्केन गम्यते? नियमेन अयांस्ययस्कान्तमेवोपसर्पन्ति न तु लोष्टादीन्, न च लोष्टादय उपसर्पन्ति, सोऽयं कार्यनियमात् कारणनियमो गम्यते। एतेनाऽऽकस्मिकत्वं प्रतिषिद्धम्। तदिदमयसामुपसर्पणं किं दृष्टकारणप्रत्याख्यानार्थमुपन्यस्तम्, अथवा कारणान्तरोपदर्शनार्थम्, अथाऽऽत्मन्युत्पत्तिनिरोधानुमानमिति पूर्ववत्प्रसङ्गः ॥ २२ ॥

आकस्मिकत्वप्रतिषेधार्थं च—

नान्यत्र प्रवृत्त्यभावात् इति सूत्रम् ॥ २३ ॥

### न्यायवार्त्तिकतात्पर्यटीका

क्षीरादौ पूर्वाभ्यस्तस्मृत्यनुबन्धहेतुका प्रतीतेति बाल्यावस्थायामपि चेतनस्य तद्धेतुकैव भवितुमर्हति तेन हेतुना चेतनप्रवृत्तेः स्वाभाविकसंबन्धावगमाद् वह्निनेव धूमस्य। एवं व्यवस्थिते यत्र स्मृतेः कार्यं दृश्यते तन्मात्रविषयैव बालस्य स्मृतिरनुमीयते नान्यत्र। न च य एकं स्मरति तेनापरमपि स्मर्तव्यमिति कश्चिन्नियमहेतुरस्ति येन जात्यन्धबधिरादयो रूपादिभेदान् व्याचक्षीरन् अदृष्टपरिपाकोद्बोधितस्य संस्कारस्य (क)तन्नियमेन नियमोपपत्तेः। अद्यत्वेऽपि चानुभूतेषु कस्यचिदेव स्मरत्यात्मा न सर्वस्येति ॥ २२ ॥

नान्य—वात् (सू० २३)॥ भाष्यम्—न च स्तन्याभिलाषलिङ्गमन्यदिति। स्तन्याभिलाषो लिङ्गमस्य निमित्तान्तरस्य तत् तथोक्तम्। (ख)अन्यत्र लोष्टादौ, लोष्टादेरिति

### वृत्तिः

यथाऽयस्कान्तसन्निहितस्यायसोऽयस्कान्ताभिमुखतया गमनं तथैव वत्सस्यापि स्तनोपसर्पणम्, न त्विष्टसाधनत्वज्ञानाधीनप्रवृत्तिजन्यचेष्टेयमित्यर्थः ॥ २३ ॥

---

(१) '-भिगमनम्'—इति वि०।

(क) तन्नियमेनेति तन्नियामकत्वेनेत्यर्थः। (ख) तेनान्यत्र प्रवृत्त्यभाव इति भाष्यं पूर्वं व्याख्यातुमुचितमपि व्युत्क्रमाद् गृहीत्वा व्याचष्टे अन्यत्रेति।

### न्यायभाष्यम्

दृष्टान्तेनोपपाद्यते, न चासति निमित्ते कस्यचिदुत्पत्तिः। न च दृष्टान्तो दृष्टमभिलाषहेतुं बाधते। तस्मादयसोऽयस्कान्ताभिगमनमदृष्टान्त इति।

अयसः खल्वपि नान्यत्र प्रवृत्तिर्भवति, न जात्वयो लोष्टमुपसर्पति, (१)किं कृतोऽस्य नियम इति? (२)यदि कारणनियमात्, स च क्रियानियमलिङ्गः(२*)। एवं बालस्यापि नियतविषयोऽभिलाषः कारणनियमाद्भवितुमर्हति। तच्च कारणमभ्यस्तस्मरणमन्यद्वेति दृष्टेन विशिष्यते। दृष्टो हि शरीरिणामभ्यस्तस्मरणादाहाराभिलाष इति ॥ २३ ॥

इतश्च नित्य आत्मा। कस्मात्?—

## वीतरागजन्मादर्शनात् ॥२४॥

सरागो जायत इत्यर्थादापद्यते। अयं जायमानो रागानुबद्धो जायते, रागस्य पूर्वानुभूतविषयानुचिन्तनं योनिः, पूर्वानुभवश्च विषयाणामन्यस्मिन् जन्मनि

### न्यायवार्त्तिकम्

नित्य आत्मा—

वीतरागजन्मादर्शनात्। न हि कश्चिज्जातमात्रो वीतरागो जायते, वीतरागाणां जन्मादर्शनात् सरागो जायते इति गम्यते। जन्म व्याख्यातम्। ततः किम्? 'रागस्य पूर्वानुभूत-

### न्यायवार्त्तिकतात्पर्यटीका

यावत्, षष्ठीसप्तम्योरभेदार्थत्वात्। एतदुक्तं भवति लोष्टादेरन्यस्यायस्कान्तप्रवृत्त्यभावाद् (क) अयसश्च सनिमित्तमुपसर्पणमिति पूर्वं व्याख्यातम्। संप्रति त्वन्यथा व्याचष्टे—अयसः खल्वपीति। निपातसमुदायः कल्पान्तरं द्योतयति ॥ २३ ॥

वीत—नात् ( सू० २४ ) ॥ पूर्वानुभूतविषयानुचिन्तनमिति। एकविषयः स्मृतिप्रवाहो विजातीयप्रत्ययासंभिन्नश्चिन्तनम्, तच्चानुभवस्य पश्चाद्भवतीत्यनुचिन्तनम्, न च तत् स्मृतिमन्तरेण भवति, न हि तत्र प्रवाहः प्रवाहिणं विनाऽस्ति। तदेव अनुचिन्तनं (ख)पूर्वानुभूतविषयप्रार्थनार्थः सङ्कल्पः, प्रार्थना सङ्कल्पः, स च पूर्वानुभूतविषय इत्यर्थः।

### वृत्तिः

समाधत्ते—(नान्यत्र प्रवृत्त्यभावात्)।

स्तनपाने एव बालः प्रवर्त्तते न त्वन्यत्रेति नियमः कथं स्यात्?

---

(१) 'किंकृतोऽस्यानियमः'—इति ज०। (२) 'यदि कारणनियमात् सर्वक्रियानियमलिङ्गः'—इति वि०, 'यदि कारणनियमाः सर्व-' इति ज०।

(क) अत्र प्रवृत्त्यभाव इति प्रथमान्तः 'इति'शब्दान्तो वा पाठः सम्भाव्यते। (ख) प्रसङ्गात् 'पूर्वानुभूतविषयप्रार्थना संकल्पः' ( ७४९ पत्राङ्कः ) इति वार्त्तिकमत्रैव व्याचष्टे पूर्वेति।

## न्यायभाष्यम्

शरीरमन्तरेण नोपपद्यते। सोऽयमात्मा पूर्वशरीरानुभूतान् विषयाननुस्मरन् तेषु तेषु रज्यते, तथा चायं द्वयोर्जन्मनोः (क)प्रतिसन्धिः। एवं पूर्वशरीरस्य पूर्वतरेण (१)पूर्वतरस्य पूर्वतमेनेत्यादिनाऽनादिश्चेतनस्य शरीरयोगः, अनादिश्च रागानुबन्ध इति सिद्धं नित्यत्वमिति ॥ २४॥

## न्यायवार्त्तिकम्

विषयानुचिन्तनं योनिः'। न च विषयावगमासमर्थेषु इन्द्रियेषु रागः सम्भवति, न च स्मृतिमन्तरेण विषयानुचिन्तनं युक्तम् (ख)पूर्वानुभूतविषयप्रार्थना सङ्कल्पः। अदृष्टादिति चेत्—अथ मन्यसे न पूर्वशरीरयोगो रागाद्गम्यते अपि त्वदृष्टाद्राग इति ? (२)नाभिप्रायापरिज्ञानात्—नैवमभिप्रायः कारणनियमेन रागः अपि तु पूर्वशरीरसम्बन्धप्रतिपादनं सूत्रार्थः। न चादृष्टाद्राग इति ब्रुवता तत्प्रतिषिध्यत इति किञ्चिदुक्तम् (ग) ॥ २४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

अथास्मिन्नेव जन्मनि इन्द्रियजो विषयानुभवोऽन्वयव्यतिरेकावधारितेष्टोपायतासहकारी कस्माद्र रागहेतुर्न भवतीत्यत आह वार्त्तिककारः—न विषयावगमासमर्थेष्विति। तदनेन पूर्वानुभवश्च विषयाणामन्यस्मिन् जन्मनीति भाष्यं व्याख्यातम् ॥ २४ ॥

## वृत्तिः

वस्तुतस्तु अन्यत्र अयसि प्रवृत्त्यभावात्, प्रवृत्तिर्हि चेष्टानुमिता लिङ्गं न तु क्रियामात्रम् अतो न व्यभिचार इति भावः ॥ २४ ॥

हेत्वन्तरमाह—( वीतरागजन्मादर्शनात् )।

वीतरागो रागशून्यः तावत् नोत्पद्यते अपि तु सरागः, तत्र च जन्मान्तरीयेष्टसाधनताज्ञानाधीनस्मरणं हेतुरिति। पूर्वं स्तन्याभिलाष उक्तः, सम्प्रति तु पतगादीनां कणादिभक्षणाभिलाषसाधारणं रागमात्रमित्यपौनरुक्त्यम् ॥ २५ ॥

---

(१) 'पूर्वतरशरीरस्य' इति फ०। (२) 'नाभिप्रायाविज्ञानात्' इति क-ख-धृतपाठान्तरम्।

(क) 'प्रतिसन्धिस्तु पूर्वजन्मनिवृत्तौ पुनर्जन्म' इति भाष्यम्, ४ अ, १ आ, 'न प्रवृत्तिः...' इति सू०।

(ख) 'पूर्वानुभूतविषयप्रार्थना संकल्पः' इत्ययमंशोऽत्र नोपयुज्यते किन्तु २६श-सूत्रीय-वार्त्तिकात् प्रमादेन स्थानभ्रंशमापादित इति सम्भाव्यते। तात्पर्यव्याख्यानदर्शनेन तस्य युक्तत्वस्वीकारे तु 'तदेव पूर्वानुभूतविषयप्रार्थना संकल्पः' इति पाठोऽत्र भवितुमर्हति।

(ग) अतः परं 'तन्मयत्वाद्राग इति, विषयाभ्यासः खल्वयं भावनाहेतुस्तन्मयत्वमुच्यते। जातिविशेषाश्च रागविशेष इति। कर्म खल्विदं जातिविशेषस्य निर्वर्तकं तादर्थ्यात्ताच्छब्द्यं लभ्यते चौर्यादिवत्' इत्यंशः आदर्शपुस्तकयोरुपलभ्यते स च भाष्यानुसारेण २६श-सूत्रीयवार्त्तिकेऽन्तर्भावितः।

## न्यायभाष्यम्

कथं पुनर्ज्ञायते (१)पूर्वानुभूतविषयानुचिन्तनजनितो जातस्य रागः, न पुनः—

### ( सू० )—सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः ॥ २५ ॥

यथोत्पत्तिधर्मकस्य द्रव्यस्य गुणाः कारणत उत्पद्यन्ते तथोत्पत्तिधर्मकस्याऽऽत्मनो रागः (२) कुतश्चिदुत्पद्यते। अत्रायमुदितानुवादो निदर्शनार्थः ॥ २५ ॥

### ( सू० )—न, सङ्कल्पनिमित्तत्वाद्रागादीनाम् ॥ २६ ॥

न खलु सगुणद्रव्योत्पत्तिवदुत्पत्तिरात्मनो रागस्य च। कस्मात्? सङ्कल्पनिमित्तत्वाद्रागादीनाम्। अयं खलु प्राणिनां विषयानासेवमानानां सङ्कल्पजनितो रागो गृह्यते, सङ्कल्पश्च पूर्वानुभूतविषयानुचिन्तनयोनिः। तेनानुमीयते जातस्यापि पूर्वानुभूतार्थचिन्तनकृतो राग इति। (३) आत्मोत्पादाधिकरणात्तु रागोत्पत्तिर्भवन्ती सङ्कल्पादन्यस्मिन् रागकारणे सति वाच्या कार्यद्रव्यगुणवत्। न चाऽऽत्मोत्पादः सिद्धो

## न्यायवार्त्तिकम्

सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिरिति अनैकान्तिकपक्षे सूत्रम्। नोक्तोत्तरत्वात्—उक्तोत्तरमेतत् ॥ २५ ॥

न सङ्कल्पनिमित्तत्वाद्रागादीनामिति। (क)अत्रापि पूर्ववत् सङ्कल्पस्मृतिसंस्कार-

## न्यायवार्त्तिकतात्पर्यटीका

सगु—त्तिः ( सू० २५ ) ॥ अत्रायमुदितानुवाद इति भाष्यम्। तस्यार्थः उदितमिदं चोद्यम् अयस्कान्तदृष्टान्तेन चोद्येन, तथाऽपि तस्यानुवादो निदर्शनार्थः। पूर्वमयस्कान्तो निदर्शनमिदानीं तु घटादीनामुत्पद्यमानानां रूपादयो निदर्शनमिति तदर्थमित्यर्थः। चोद्यस्योदितानुवादत्वात् परिहारोऽप्युदितानुवाद एवेति ॥ २५ ॥ (ख)

न स—नाम् (सू० २६) ॥ ननु सगुणद्रव्योत्पत्तिवदिति साधनपक्षे मा भूत्, अनैकान्तिकापादनपक्षे तु को दोष इत्यत आह वार्त्तिककारः—अनैकान्तिकपक्षे सूत्रम्। न, कस्मात्? (ग) उक्तोत्तरत्वात्—उक्तोत्तरमेतद् यत इति ॥ २६ ॥

## वृत्तिः

शङ्कते—(सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः)।

द्रव्यस्य घटादेर्यथा सगुणस्य रूपादिविशिष्टस्योत्पत्तिः। यथा घटादिः स्वत एव रूपादिमान् भवति, तथैवाऽऽत्माऽपि स्वत एव सरागो भवतीत्यप्रयोजकत्वं त्वदीयहेतूनामिति भावः ॥ २६ ॥

---

(१) 'पूर्वविषयानुचिन्तन-'—ख-ग-ज-झा०। (२) 'कुतश्चिदुत्पद्यते' इति ख-पु० नास्ति। (३) 'आत्मोत्पादाधिकरणा तु' ख०,—'करणात्तु' झा०।

(क) ७४९-सपत्रे मुद्रितः 'पूर्वानुभूतविषयप्रार्थना संकल्पः' इति वार्त्तिकग्रन्थ इहोपयुज्यते। (ख) अतः परमादर्शपुस्तकयोः 'तन्मयत्वाद्द रागः' इत्यादिः 'प्रायणाभिभूतेति भावः' इत्यन्तः सन्दर्भो मुद्रितो वर्त्तते, स तु प्रमादात् स्थानभ्रंशमापादित इति भाष्यानुसारेण सन्निवेशित इति बोध्यम्। (ग) अत्र 'नोक्तोत्तरत्वात्' इति क-ख-पुस्तकयोः प्रमादान्मुद्रितम्।

## न्यायभाष्यम्

नापि सङ्कल्पादन्यद् रागकारणमस्ति। तस्माद्युक्तं सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिरिति।

अथापि सङ्कल्पादन्यद् रागकारणं धर्माधर्मलक्षणमदृष्टमुपादीयते, तथाऽपि पूर्वशरीरयोगोऽप्रत्याख्येयः। तत्र हि तस्य निर्वृत्तिः नास्मिन् जन्मनि।

तन्मयत्वाद्राग इति। विषयाभ्यासः खल्वयं भावनाहेतुः तन्मयत्वमुच्यते इति। जातिविशेषाच्च रागविशेष इति। कर्म खल्विदं जाति(१)विशेषनिर्वर्तकं (२)तादर्थ्यात्ताच्छब्द्यं विज्ञायते। तस्मादनुपपन्नं सङ्कल्पादन्यद्रागकारणमिति ॥ २६ ॥

## न्यायवार्त्तिकम्

पूर्वानुभवपूर्वशरीरवदात्मवत्त्वानि योज्यानीति। (क)'तन्मयत्वाद्राग इति' विषयाभ्यासः खल्वयं भावनाहेतुस्तन्मयत्वमुच्यते। 'जातिविशेषाच्च रागविशेष इति'। कर्म खल्विदं जातिविशेषस्य निर्वर्तकं तादर्थ्यात्ताच्छब्द्यं लभ्यते वीरणादिवत्। एवं चानादिः संसारोऽपवर्गान्तः सिध्यतीति व्यवस्थितमेतद् अस्त्यात्मा व्यतिरिक्तो नित्यश्चेति ॥ २६ ॥

( इति नवभिः सूत्रैर्नित्यत्वप्रकरणम्। )

## न्यायवार्त्तिकतात्पर्यटीका

(ख)तन्मयत्वाद्राग इति। अभ्युपेत्यादृष्टकारणत्वं रागादीनां परिहृतं परमार्थतस्तु तन्मयत्वाद्राग इत्यर्थः। स्यादेतद् यदि पूर्वाभ्यस्तस्मृत्यनुबन्धाद् रागादीनामुत्पादो हन्त मनुष्यजन्मानन्तरं प्राप्तकरभभावस्य मनुष्यजन्मोचितानां भावानामानन्तर्यात्तदनुरूपा एव रागादयो भवेयुर्न करभभावानुरूपाः करभजातेरस्य विजातीयजन्मसहस्रव्यवहितत्वादत आह—जातिविशेषाच्चेति। कर्मणः संस्कारोद्बोधकत्वात् करभजात्यर्थेन कर्मणा जन्मसहस्रव्यवहिताऽपि करभभावनोद्बोध्यते नानन्तराऽपि मनुष्यभावना प्रायणाभिभूतेति भावः।

अपि च मनुष्यत्वेन तुल्यत्वेऽपि प्रज्ञामेधाप्रकर्षनिकर्षभेददर्शनात् प्राग्भवीयाभ्यासकल्पना। अद्यत्वेऽपि हि शास्त्राभ्यासस्तद्गोचरप्रज्ञामभिवर्धयन्नन्वयव्यतिरेकाभ्यामनुभूयते। सोऽयम् इहजन्मन्यकृतशास्त्राभ्यासस्य तद्विषयः प्रज्ञामेधातिशयः प्राग्भवीयाभ्यासातिशयं स्वकारणमवगमयति। जनस्य तिर्यगादिजातिशतव्यवधानपरिम्लानप्राग्भवीयसंस्कारस्य प्रज्ञामेधानिकर्ष इति

---

(१) '-विशेषनिवर्त्तकं' ज०। (२) 'तादर्थ्यात्ताच्छील्यं' टि०।

(क) इतः प्रभृति 'वीरणादिवत्' इत्यंशः आदर्शपुस्तकयोरिह नोपलभ्यते। तद्बीजं ७४९तमपत्रे ग-

टिप्पन्यां द्रष्टव्यम्। (ख) इतः प्रभृति 'भावः' इत्यन्तो ग्रन्थः आदर्शतात्पर्यपुस्तकयोरिह नोपलभ्यते किन्तु (७५०म पत्रे) 'उदितानुवाद एवेति' इत्यनन्तरं मुद्रितः। तच्चायुक्तमिति भाष्यानुसारेण एतन्मूलभूतवार्त्तिकग्रन्थवदिह गृहीतः।

## न्यायभाष्यम्

अनादिश्चेतनस्य शरीरयोग इत्युक्तम्, स्वकृतकर्मनिमित्तं चास्य शरीरं सुख-दुःखाधिष्ठानम्। तत् परीक्ष्यते—किं घ्राणादिवदेकप्रकृतिकमुत (१)नानाप्रकृतीति। कुतः संशयः? विप्रतिपत्तेः संशयः। पृथिव्यादीनि भूतानि सङ्ख्याविकल्पेन शरीरप्रकृति-रिति प्रतिजानत इति। किं तत्र तत्त्वम्?

## न्यायवार्त्तिकम्

आत्मानन्तरं शरीरमवसरप्राप्तं परीक्ष्यते। (क)अथवा अनादिश्चेतनस्य शरीरयोग इति शरीरं परीक्ष्यते। तस्मिन् परीक्ष्यमाणे आत्माधिकारश्च परिसमाप्तो भवति। किं पुनरस्य परीक्ष्यम्? किं घ्राणादिवदेकप्रकृति अथ नानाप्रकृतीति? 'विप्रतिपत्तेः संशयः'। श्रूयते खल्वत्र विप्रतिपत्तिः।

## न्यायवार्त्तिकतात्पर्यटीका

कल्पनीयम्। तस्मान्नित्यस्याऽऽत्मनः कर्माविद्यानिबन्धनोऽनादिरेषोऽनेकविधशरीरपरिग्रह-परित्यागप्रवाहोऽपवर्गान्त इति सिद्धम् ॥ २६ ॥

आत्मानन्तरमुद्दिष्टं शरीरं परीचिक्षिपमाणोऽवान्तरसङ्गतिमाह भाष्यकारः—अनादिश्चेतनस्य शरीरयोग इत्युक्तम्। परीक्षोपयोगिनिर्वेदसाधनत्वमाह—स्वकृतकर्मेति। परीक्षापूर्वरूपं संशयमाह—किं घ्राणादिवदिति। एकद्वित्रिचतुःपञ्चप्रकृतिकतामास्थिषत शरीरस्य वादिनः, सोऽयं संख्याविकल्पः।

अत्र वार्तिककारः स्वातन्त्र्येण शरीरपरीक्षायां सङ्गतिमाह—आत्मानन्तरमिति। भाष्य-मतेन सङ्गतिमाह——अथ वेति। अवान्तरसङ्गतेस्तात्पर्यमाह—तस्मिन् परीक्ष्यमाण इति।

## वृत्तिः

समाधत्ते—(न संकल्पनिमित्तत्वाद् रागादीनाम्)।

सङ्कल्पो ज्ञानम्, इष्टसाधनताज्ञानमिति यावत्, तन्निमित्तका हि रागादयः। तथा च इष्टसाधनताज्ञानत्वेनेच्छात्वादिना कार्यकारणभावात् प्रवृत्तित्वेन चेष्टात्वेन च कार्यकारण-भावान्नाप्रयोजकत्वमिति भावः ॥ २७ ॥

समाप्तमनादिनिधनप्रकरणम् ॥ ५ ॥

(१) '-प्रकृतिकम्'—इति क-खधृतपाठान्तरम्।

(क) भाष्ये आत्मनिरूपणानन्तरं शरीरनिरूपणे अवसरसङ्गतिरुक्ता वार्त्तिककृता तु प्रसङ्गस्य उपोद्घातस्य वा सङ्गतित्वमिह सम्भवतीति प्रतिपादनायोक्तम् अथवेति।

## (सू०)—पार्थिवं गुणान्तरोपलब्धेः ॥ २७ ॥

### न्यायभाष्यम्

तत्र मानुषं शरीरं पार्थिवम्। कस्मात्? गुणान्तरोपलब्धेः। गन्धवती पृथिवी गन्धवच्च शरीरम्। अबादीनामगन्धत्वात् तत्प्रकृत्यगन्धं स्यात्। न त्विदमबादिभिरसम्पृक्तया पृथिव्यारब्धं चेष्टेन्द्रियार्थाश्रयभावेन कल्पते इत्यतः पञ्चानां भूतानां संयोगे सति शरीरं भवति। भूतसंयोगो हि मिथः पञ्चानां न निषिद्ध इति। आप्य-तैजस-वायव्यानि लोकान्तरे शरीराणि तेष्वपि भूतसंयोगः पुरुषार्थतन्त्र इति। स्थाल्यादिद्रव्यनिष्पत्तावपि (१)निःसंशयो नाबादिसंयोगमन्तरेण निष्पत्तिरिति ॥ २७ ॥

### न्यायवार्त्तिकम्

पार्थिवं गुणान्तरोपलब्धेः। 'मानुषं शरीरं पार्थिव'मिति। मानुषमिति (२)किमर्थं विशिष्यते? लोकान्तरशरीराणि न पार्थिवानीति युक्तं विशेषणम्। (क)गन्धवत्त्वात् परमाणुवत्—गन्धवान् परमाणुरेकात्मको दृष्टः गन्धवच्च शरीरम्, तस्मादेकात्मकमेकस्वभावमिति। 'न त्विदमबादिभिरसंपृक्तया पृथिव्यारब्धं चेष्टेन्द्रियार्थाश्रयभावेन कल्प्यत' इति भूतसंसर्गोऽविप्रतिषिद्धः ॥ २७ ॥

### न्यायवार्त्तिकतात्पर्यटीका

पार्थि—ब्धेः (सू० २७) ॥ (ख)मानुषं शरीरं पार्थिवं गन्धवत्त्वात् पार्थिवपरमाणुवदिति। न कारणं कार्यस्याऽऽत्मा तत्कथमेकात्मकमित्यत आह—(ग)एकात्मकमित्येकस्वभावम्, स्वो भावो भवितॄणां जातिः एकजातीयसमवायिकारणत्वे हि तत् तदेकजातीयं स्याद् नान्यथेत्यर्थः।

परोक्तान् हेतूनन्यथासिद्धयिष्यन् प्रथमं तावत्तद्दूषणभावेनाऽऽह—न त्विदमबादिभिरिति ॥२७॥

### वृत्तिः

क्रमप्राप्ते शरीरपरीक्षणे मानुषादिशरीरं पाञ्चभौतिकमित्येके। तत्र सिद्धान्तसूत्रम्—(पार्थिवं गुणान्तरोपलब्धेः)।

---

(१) 'निःसंशया'—इति ख-ग-भा०। (२) 'किमिति' इति क-ख-धृतपाठान्तरम्।

(क) मानुषं शरीरमिति भाष्यगता प्रतिज्ञा। ततोऽपेक्षितस्य गुणान्तरोपलब्धेरिति हेतोः सौदाहरणं तात्पर्यमाह गन्धवत्त्वादिति। ततश्च नात्र वार्त्तिककृता स्वातन्त्र्येण न्यायः प्रयुज्यते किन्तु भाष्यमेव व्याख्यायते एतेन प्रतिज्ञानन्तरं हेतुकथनस्यौचित्येन तदन्तराले मानुषमिति किमर्थमित्यादिप्रश्नोत्तरग्रन्थोऽनुचित इति परास्तम्। (ख) भाष्यवार्त्तिकयोः प्राप्तं न्यायैकदेशं संगृह्याऽऽह मानुषमिति। पार्थिवपदं वार्त्तिकेऽनुक्तमपि तात्पर्यतो लभ्यम्। (ग) वार्त्तिके 'इति'पदं न दृश्यते।

## (सू०)—पार्थिवाप्यतैजसं तद्गुणोपलब्धेः ॥ २८ ॥

## (सू०)—निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् ॥ २९ ॥

## (सू०)—गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् ॥३०॥

### न्यायभाष्यम्

त इमे सन्दिग्धा हेतव इत्युपेक्षितवान् सूत्रकारः। कथं सन्दिग्धाः? सति च प्रकृतिभावे भूतानां धर्मोपलब्धिरसति च संयोगाप्रतिषेधात् सन्निहितानामिति, यथा स्थाल्यामुदकतेजोवाय्वाकाशानामिति। तदिदमनेकभूतप्रकृति शरीरमगन्धमरस-

### न्यायवार्त्तिकम्

एवं तर्हि—

(क) पार्थिवाप्यतैजसं तद्गुणोपलब्धेः।

निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम्।

गन्ध-क्लेद-पाक-व्यूहावकाशदानेभ्यः पाञ्चभौतिकम्।

इति प्रत्युक्तम्, तत्र सन्निहितानां तद्गुणोपलब्धेरिति। 'तदिदमनेकभूतप्रकृति शरीरम् (ख)अगन्धमरसमरूपमस्पर्शं च प्रकृत्यनुविधानात् स्या'दिति भाष्यम्। तस्य व्याख्यानं—(१) पृथिव्युदकाभ्यामारभ्यमाणमगन्धं कारणगन्धस्यैकस्यानारम्भकत्वात्, (२) पृथिव्यनलाभ्या-

### न्यायवार्त्तिकतात्पर्यटीका

पार्थि—ब्धेः ( सू० २८ ) ॥

निःश्वा—कम् ( सू० २९ ) ॥

गन्ध—कम् ( सू० ३० ) (क) ॥

परोक्तसाधनमन्यथासिद्धमुक्त्वा बाधकमुक्तं भाष्यकृता, तदनुभाष्य वार्त्तिककारो व्याचष्टे—(ग)तदिदमनेकभूतप्रकृतीति। पृथिव्युदकाभ्यामारभ्यमाणमगन्धं कारणगन्धस्यैकस्या-

### वृत्तिः

मानुषादिशरीरं पार्थिवं पृथिवीसमवायिकारणकं गुणान्तरस्य गन्ध-नीलादिरूप-काठिन्यादेरुपलब्धेरिति ॥ २८ ॥

मतान्तराभिधानाय त्रिसूत्री—

( पार्थिवाप्यतैजसं तद्गुणोपलब्धेः )

( निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् )

---

(क) क-ख-वार्त्तिकयोः सूत्राकारेणामुद्रितमपि वाक्यत्रयं भाष्याद्यनुसारेण सूत्रतया ज्ञातमिति तथैव मुद्र्यते। (ख) भाष्ये 'अगन्धमरसम्' इति बहुमुद्रितग्रन्थानुसारेण मुद्रितम्। तेन क-ख-वार्त्तिकपुस्तकयोः 'अरसमगन्ध'मिति मुद्रणं प्रामादिकमिति बुद्ध्वा यथाभाष्यं सन्निवेशितम्। (ग) भूतपदं क-ख-तात्पर्य-पुस्तकयोर्न मुद्रितम्।

## न्यायभाष्यम्

मरूपमस्पर्शं च प्रकृत्यनुविधानात् स्यात्, न त्विदमित्थम्भूतम्। तस्मात् 'पार्थिवं गुणान्तरोपलब्धेः' ॥ २८-२९-३० ॥

## न्यायवार्त्तिकम्

मारभ्यमाणमगन्धमरसं च कारणगन्धरसयोः केवलयोरनारम्भकत्वात्, (३) पृथिव्यनिलाभ्यामगन्धमरसं चारूपं च वायोरगन्धरसरूपत्वात्, (४) पृथिव्याकाशाभ्यामगन्धमरसमरूपमस्पर्शं च आकाशे गन्धाद्यभावात्। सर्वत्र समानो न्यायः कारणगुणस्य केवलस्यानारम्भकत्वात्— (५)जलानलाभ्यामगन्धञ्चारसं च, (६)जलवायुभ्यामगन्धं चारसञ्चारूपं च, (७) जलाकाशाभ्यामगन्धमरसमरूपमस्पर्शं च, (८) तेजोऽनिलाभ्यामगन्धं चारसं चारूपञ्च, (९) अनलाकाशाभ्यामगन्धमरसमरूपमस्पर्शं च, (१०) (क) अनिलाकाशाभ्यामेवमेव, (११) भूजलानलैरगन्धमेव, (१२) भूजलानिलैरेवमेव, (१३) भूजलाकाशैरेवमेव, (१४) (ख) पृथिव्यनिलानलैरगन्धमरसं च, (१५) पृथिव्यनलाकाशैरेवमेव, (१६) पृथिव्यनिलाकाशैरगन्धमरसमरूपं च, (१७) (ग) जलानिलानलैरगन्धमरसं च, (१८) जलानलाकाशैरेवमेव, (१९) जलानिलाकाशैरगन्धं चारसं चारूपं च, (२०) (घ) अनलानिलाकाशैरेवमेव, (२१) पृथिव्युदकतेजोवायुभिरगन्धम्, (२२) पृथिव्युदक-

## न्यायवार्त्तिकतात्पर्यटीका

नारम्भकत्वात्। अयमभिसन्धिः—पृथिव्याप्यपरमाणू तावन्नैकं द्व्यणुकमारब्धुमर्हतः तयो रूपरसस्पर्शवत्त्वेन तदारम्भसम्भवेऽपि गन्धवत्त्वाभावप्रसङ्गात्, एवं पार्थिवाणुसमवेतस्य गन्धस्यैकत्वेनानारम्भकत्वात्। नापि पार्थिवपरमाणुद्वयमेकश्च पाथसीयः परमाणुरित्यणूनामारम्भकत्वे गन्धवत्त्वोपपत्तिरिति साम्प्रतम्, परमाणूनां बहूनामनारम्भकत्वात्। तथा हि त्रयः परमाणवो न कार्यद्रव्यमारभन्ते परमाणुत्वे सति बहुत्वसंख्यायुक्तत्वाद् घटोपगृहीतपरमाणुप्रचयवत्। आरम्भकत्वे तेषां घटोपगृहीतानां कपालशर्कराचूर्णक्रमो घटनाशे नोपलभ्येत। द्व्यणुके च विजातीयानारम्भकत्वे सिद्धे तेनैव दृष्टान्तेनान्यत्रापि विजातीयेनाऽऽरम्भो निषेध्यः। एतेन पार्थिवावयवानां महतां पाथसीयैरवयवैः शरीरारम्भः प्रत्युक्तः विजातीयानामनारम्भकत्वस्य दृष्टान्तधर्मिणि विनिश्चयादिति। तदनेन वार्तिककृता षड्विंशतिकल्पा निराकृता इति। यदि पुनरेकैकं कारणं

## वृत्तिः

( गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम् )। एतावता तद्गुणानां पृथिव्यप्तेजोगुणानां (ङ)गन्धस्नेहोष्णस्पर्शानामुपलब्धेः।

(क) एवं द्वाभ्यामारम्भे दशप्रकाराः। (ख-ग) उभयत्र अनलानिलयोः क्रमविपर्ययः प्रामादिकः। (ङ) एतेन शरीरस्य त्रैभौतिकत्ववादिमते एवमुत्तरत्रापि। (घ) एवं त्रिभिरारम्भे दशप्रकाराः। गन्ध-स्नेहोष्णस्पर्शा एव पृथिव्यादीनां गुणाः पार्थिवत्वाद्यनुमानसाधनमिति प्रतीयते। स्नेहो जलस्य शैत्यं च तेजसो लक्षणमिति वैभाषिकाः तन्मते खरत्वं पृथिव्या लक्षणम्। तथा च क इमे त्रैभौतिकत्ववादिन इत्यनुसन्धेयम्। अन्ये तु गन्धरसरूपाण्येव यथाक्रमं पार्थिवत्वाद्यनुमानसाधनानि मन्यन्ते।

## (सू०)—श्रुतिप्रामाण्याच्च ॥ ३१ ॥

### न्यायभाष्यम्

'सूर्यं ते चक्षुर्गच्छता'दित्यत्र मन्त्रे 'पृथिवीं ते शरीर'मिति श्रूयते। तदिदं

### न्यायवार्त्तिकम्

ज्वलनाकाशैरेवमेव, (२३) (क) अवनिजलानिलाकाशैरेवमेव, (२४) पृथिव्यनिलज्वलनाकाशैः (ख)अगन्धमरसं च, (२५) (ग) जलानिलानलाकाशैरेवमेव, (२६) पृथिव्युदकतेजोवाय्वाकाशैरगन्धम्, कारणगुणस्यैकस्यानारम्भकत्वादिति (घ)वाच्यम्, (१) एककारणकत्वे तु सततोत्पत्त्यनुत्पत्ती नित्यत्वप्रसङ्गश्चेत्युक्तम् ॥ २८-२९-३० ॥

श्रुतिप्रामाण्याच्च। सूर्यं ते चक्षुः स्पृणोमीत्यस्य मन्त्रस्यान्ते 'पृथिव्यां ते शरीर'मिति। सेयं स्मृतिः कारणात् कार्योत्पत्तिः। यदुक्तं भवति सूर्यश्चक्षुःकारणम्, पृथिवी शरीरस्येति, अन्त्येष्टिकाले मन्त्रः सूर्यं ते चक्षुर्गच्छतु पृथिवीं शरीरमिति। अस्यापि मन्त्रस्यार्थो यद्व यस्मा-

### न्यायवार्त्तिकतात्पर्यटीका

स्यात् ततः किं भवेदित्यत आह—(ङ)एककारणत्वे त्विति। नित्यं निरपेक्षमेकं कारणमिति सततोत्पत्तिः कार्यस्य भवेत्। कारणविनाशात्तद्विभागाद्वा द्रव्यं विनश्यति, न चैकस्य कारणस्य नित्यस्य विनाशोऽस्ति, न च विभागः तस्य सद्वितीयवस्त्वाश्रयत्वात्, एकस्य च द्वितीयाभावाद्व विनाशकारणाभावात् कृतकनित्यत्वप्रसङ्गः, रूपमसहायमेकमवयविनि न रूपमारभत इति नीरूपोऽवयवी। तथा च रूपसंस्काराभावेनावयवी नोपलभ्येतेत्यर्थः ॥ २८-२९-३० ॥

### वृत्तिः

त्रैभौतिकत्वे सिद्धे निःश्वासादितश्चातुर्भौतिकत्वम्, निःश्वासोच्छ्वासौ प्राणवायोर्व्यापारविशेषौ। क्लेदो जलविशेषो जलविशिष्टपृथिवी वेति उभयथाऽपि जलमावश्यकम्। भुक्तान्नादेर्जठरानलैः पाकस्य तेजःसंयोगाधीनत्वात् तेजःसिद्धिः, व्यूहो निःश्वासादिः, अवकाशदानं छिद्रम्।

एतानि मतानि सूत्रकृता तुच्छत्वान्न दूषितानि। तथाहि एकस्मिन् शरीरे पृथिवीत्वादिनानाजातेः सङ्करापत्ते(२)रसम्भवात्, न वा नानोपादानकत्वं विजातीयानामनारम्भकत्वात्, तथात्वे वा जलाद्यारब्धस्य न पृथिवीत्वं व्यभिचारात्, न वा चित्रद्रव्यं गन्धवत्त्वविरोधात्। गन्धादीनामानाशमनपायाच्च पार्थिवत्वमित्युक्तप्रायम्।

(१) 'एककारणगुणत्वे' इति क-ख-धृतपाठान्तरम्। (२) '-रसम्भव' इति प्रथमान्तपाठस्तु युक्तः। (क) क-ख-वार्त्तिकयोः 'अवनिजलाकाशै'रिति प्रामादिकः। (ख) 'अगन्धमरूपं च' इति क-ख-वार्त्तिकयन्यपाठः प्रामादिकः। तत्र धृतं पाठान्तरं तु गृहीतम्। (ग) एवं चतुर्भिरारब्धे पञ्च प्रकाराः। (घ) 'वाच्यम्' इत्यत्र 'समानम्' इति क-ख-पुस्तकधृतपाठान्तरम्। (ङ) वार्त्तिके 'एककारणकत्वे' इत्यत्रमात्रे विशेषः।

### न्यायभाष्यम्

प्रकृतौ विकारस्य प्रलयाभिधानमिति। 'सूर्यं ते चक्षुः स्पृणोमि' इत्यत्र मन्त्रान्तरे 'पृथिवीं ते शरीरं स्पृणोमी'ति श्रूयते। सेयं कारणाद् विकारस्य स्पृतिरभिधीयते इति। स्थाल्यादिषु च तुल्यजातीयानामेककार्यारम्भदर्शनाद् भिन्नजातीयानामेककार्यारम्भानुपपत्तिः ॥ ३१ ॥

अथेदानीमिन्द्रियाणि प्रमेयक्रमेण विचार्यन्ते—किमाव्यक्तिकान्याहोस्विद् भौतिका-

### न्यायवार्त्तिकम्

दायातं तत्तस्मिन्नेव प्रलयं गच्छति। 'प्रकृतौ विकारस्य प्रलयाभिधानम्'। प्रलयशब्देन च कार्यशून्यं कारणमुच्यते न पुनः कार्यस्य कारणे (क)लयः प्रलयः। एवं चासदुत्पद्यते सन्निरुध्यते इत्ययमर्थ उक्तो भवति ॥ ३१ ॥

( इति शरीरपरीक्षाप्रकरणम् । )

अथेदानीमिन्द्रियाणि प्रमेयक्रमेण विचार्यन्ते—किमाव्यक्तिकानि आहङ्कारिकाणि आहो

### न्यायवार्त्तिकतात्पर्यटीका

श्रुति—च (सू० ३१)॥ (ख)स्पृतिरुत्पत्तिरित्यर्थः। न्यायसिद्धमर्थं श्रुतिरुपोद्वलयति (ग)न पुनरस्य प्रापिका सांख्यराद्धान्तावलम्बनेनाप्यस्याः कथञ्चिदुपपत्तेः ॥ ३१ ॥

उद्देशक्रमानुरोधाच्छरीरानन्तरमिन्द्रियाणां परीक्षां प्रतिजानीते भाष्यकारः—अथेदानीमिन्द्रियाणि प्रमेयक्रमेणेति। तत्र परीक्षापूर्वरूपं संशयमाह—किमाव्यक्तिकानि आहोस्विद्भौति-

### वृत्तिः

यद्वा पार्थिवत्वे कथं जलादिसम्बन्ध इत्याशङ्कायां जलादिनिमित्तवशात् त्रैभौतिकत्वादिव्यपदेश इत्याशयेन त्रिसूत्री ॥ २९-३०-३१ ॥

पार्थिवत्वे युक्त्यन्तरमाह—(श्रुतिप्रामाण्याच्च)

'सूर्यं ते चक्षुः स्पृणोमि' इति मन्त्रान्ते 'पृथिवीं ते शरीरम्' इत्यभिधानात् एवं प्रकृतौ विकारस्य लयाभिधाने 'सूर्यं ते चक्षुर्गच्छतात्' इति मन्त्रान्ते 'पृथिवीं ते शरीरम्' इति।

इमां चतुःसूत्रीं केचन भाष्यतया वर्णयन्ति, तन्न, तथा सत्येकसूत्रस्य प्रकरणत्वानुपपत्तेः।

अत एव चतुर्थं सूत्रमेवेत्यपरे।

अन्ये तूक्तयैवानुपपत्त्या 'आप्यतैजसवायव्यानि लोकान्तरशरीराणि, तेष्वपि भूतसंयोगः पुरुषार्थतन्त्र' इति भाष्यं सूत्रतया वर्णयन्ति। तदर्थस्तु आप्यादीनि लोकान्तरेषु वरुणलोकादिषु प्रसिद्धानि शरीराणि। जलादिरूपत्वे कथमुपभोगक्षमतेत्यत्र—तेष्वपीति।

(क) लयः अनभिव्यक्ततया अवस्थानम्। (ख) आदर्शपुस्तकयोः 'स्मृति'रिति मुद्राप्रमादकृतम्। (ग) 'न पुनरप्राप्तस्य' इति भवितुमर्हति।

## न्यायभाष्यम्

नीति। कुतः संशयः ?—

**(सू०)—कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात् संशयः (क) ॥ ३२ ॥**

कृष्णसारं भौतिकम्, तस्मिन्ननुपहते रूपोपलब्धिः उपहते चानुपलब्धिरिति। व्यतिरिच्य कृष्णसारमवस्थितस्य विषयस्य उपलम्भो न कृष्णसारप्राप्तस्य। न चाप्राप्यकारित्वमिन्द्रियाणाम्, तदिदमभौतिकत्वे विभुत्वात् सम्भवति। (ख)एवमुभयधर्मो-

## न्यायवार्त्तिकम्

भौतिकानीति। संशयकारणप्रतिपादनार्थं सूत्रम्—

कृष्णसारे सत्युपलम्भाद्व्यतिरिच्य चोपलम्भात् संशयः। कृष्णसारं भौतिकं तस्मिन्ननुपहते विषयोपलब्धिः, कृष्णसारव्यतिरेकेण विप्रकृष्टदेशावस्थितस्य विषयस्योपलब्धिः,

## न्यायवार्त्तिकतात्पर्यटीका

कानीति। उपलक्षणं चैतत्। यदाऽपि भौतिकानि तदाऽपि किं कृष्णसारं (ग) यदेतदुपलभ्यते तदेवेन्द्रियम् आहो तदधिष्ठानं तैजसमित्यपि संशयो द्रष्टव्यः। विप्रतिपत्तेः संशयः। तत्र पूर्वः सांख्यनैयायिकयोर्विप्रतिपत्तेः, उत्तरस्तु सौगतनैयायिकयोरिति। आव्यक्तिकत्वमाहङ्कारिकत्वं द्रष्टव्यम्, अहङ्काराद्धि(घ) बुद्धिविकाराद्द (ङ)वैकारिकाद्द (च)एकादशेन्द्रियाणि जायन्त इति हि सांख्याः, आव्यक्तिकत्वं त्वव्यक्तस्य मूलकारणत्वादुक्तम्। विप्रतिपत्तिबीजं पृच्छति—कुतः, संशय इति विप्रतिपत्तिमाह कारणे कार्योपचारात्। उत्तरम्—कृष्णसारे सतीति। (छ)वार्तिकम्—किमाव्यक्तिकानि तस्य व्याख्यानम् आहंकारिकाणीति।

## वृत्तिः

भूतसंयोगः पृथिव्युपष्टम्भः, पुरुषार्थतन्त्रः उपभोगसम्पादकः ॥ ३२ ॥

समाप्तं शरीरपरीक्षाप्रकरणम् ॥ ६ ॥

---

(क) अत्र सर्वेष्विन्द्रियेषु परीक्षणीयेषु चक्षुर्मात्रमधिकृत्य संशयप्रदर्शनं तु प्राप्यकारित्वाप्राप्यकारित्व-प्रतिहतत्वाप्रतिहतत्वादिभौतिकाभौतिकधर्मविशेषाणां तत्रैव स्फुटोपलम्भ इत्यभिप्रायेणेति बोध्यम्।

(ख) उभयधर्मोपलब्धेरित्यनेन समानधर्मज्ञानजन्योऽयं संशय इत्यापाततः प्रतीयते किन्तु यथाश्रुति सूत्रतो भौतिकाभौतिकसाधारणधर्मानुपस्थित्या तात्पर्यटीकायां तस्य विप्रतिपत्तिजन्यत्वमुक्तम्। अत एव वार्त्तिके संशयकारणप्रतिपादनार्थमिति।

( ग ) 'यत्तदेतद' इति क०।

(घ) हि-शब्दोऽवधारणे न तु हेतौ नात उत्तरस्य तस्य वैयर्थ्यम्।

( ङ ) 'वैकारिकाणि' इति पाठः सम्भाव्यते।

( च ). 'प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः' सांख्यकारिका।

( छ ) अयमंशः क-ख-तात्पर्यपुस्तकयोः 'वक्ष्यति' ( पृः ७६२ ) इति ग्रन्थानन्तरं मुद्रितः। तच्च प्रमादकृतमिति बुद्ध्या इह गृहीतः।

## न्यायभाष्यम्

पलब्धेः संशयः ॥ ३२ ॥

## न्यायवार्त्तिकम्

सेयं व्यतिरेकोपलब्धिरभौतिकधर्मः, तदेवमुभयधर्मोपलब्धेः संशय इति। कृष्णसारमेव चक्षुः, तस्मिन् सति भावाद्रूपग्रहणस्य—यस्मादिदं रूपग्रहणं सति कृष्णसारे भवति असति न भवति ; यच्च यस्मिन् सति भवत्यसति न भवति तत्स्य तदिति, यथा कार्यद्रव्यस्य रूपादय इति। न प्रदीपादिभिरनेकान्तात्—प्रदीपे सति रूपोपलब्धिर्भवति न च प्रदीपस्य रूपोपलब्धिरित्यनेकान्तः। यस्य कृष्णसारं चक्षुः तस्य सन्निकृष्टविप्रकृष्टयोस्तुल्योपलब्धिप्रसङ्गः—कृष्णसारं न विषयं प्राप्नोति अप्राप्त्यविशेषात् सन्निकृष्टविप्रकृष्टयोस्तुल्योपलब्धिः प्राप्नोति। विषयीभावादिति चेत्—अथ मन्यसे सन्निकृष्टोऽस्य विषयो भवति विप्रकृष्टो न विषयः एवं च न तुल्योपलब्धिरिति ? न उक्तोत्तरत्वात् प्रत्यक्षसूत्र इति ॥ ३२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

कृष्ण—यः ( सू० ३३ )॥ कृष्णसारे सत्युपलम्भात् कृष्णसारमेव चक्षुरिति बौद्धाः। व्यतिरिच्य चोपलम्भात् तदतिरिक्तम्, तच्चाऽऽहङ्कारिकम् अहङ्कारस्य विभुत्वेनाप्रतिघातात्, भौतिकत्वे काचाभ्रपटलादिभिर्भौतिकैः प्रतिघातप्रसङ्गादिति सांख्याः।

(क) न प्रदीपादिभिरनेकान्तादिति। वर्तिदेशस्थेन पिण्डितेन तेजसा प्रदीपेनानेकान्तात्। प्रभा हि विसारिणी तमर्थं प्राप्य प्रकाशयति न तु प्रदीप इत्यर्थः। विषयीभावादिति चेदिति। उत्पादविशेष एव स तादृक् चक्षुरर्थक्षणयोः यतोऽप्राप्तयोरपि विषयविषयिभावाद् वेद्यवेदकत्वम्, न चायं व्यवहितविप्रकृष्टयोरिति न तयोर्वेद्यवेदकभाव इत्यर्थः। निराकरोति—नोक्तोत्तरत्वात्

## वृत्तिः

अथेन्द्रियं परीक्षणीयम्, तत्र लक्षणसूत्रोक्तं भौतिकत्वमिन्द्रियाणां परीक्षितुं संशयमाह—

( कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात् संशयः )

कृष्णसारे चक्षुर्गोलके सति घटाद्युपलम्भाद् गोलकस्येन्द्रियत्वमिति बौद्धाः। व्यतिरिच्य विषयं प्राप्य उपलम्भात् उपलम्भजननाद् गोलकातिरिक्तानि इत्यपरे।

तत्र इन्द्रियाणि गोलकातिरिक्तानि न वेति संशयः। गोलकातिरिक्तानीति नैयायिकादयः, तत्राप्यभौतिकान्याहङ्कारिकाणीति साङ्ख्याः। भौतिकानीत्यपरे ॥ ३३ ॥

---

(क) 'न प्रदीपादिभिः' इत्यादिः 'इति भावः' इत्यन्तो ग्रन्थः (७६१पत्रे) 'वक्ष्यति' इत्यनन्तरं मुद्रितात् 'वार्त्तिकं किमाव्यक्तिकानि तस्य व्याख्यानमाहङ्कारिकाणीति' इति ग्रन्थात् परं मुद्रितः, व्याख्येयव्याख्यानयोरेवं क्रमविपर्यये लिपिप्रमाद एव हेतुरिति बुद्ध्या इह यथाक्रमं सन्निवेशितः।

## न्यायभाष्यम्

अभौतिकानीत्याह। कस्मात् ?—

### (सू०)—महदणुग्रहणात् ॥३३॥

महदिति महत्तरं महत्तमं चोपलभ्यते यथा न्यग्रोधपर्वतादि। अण्विति अणुतरमणुतमं च गृह्यते (१)यथा न्यग्रोधधानादि। तदुभयमुपलभ्यमानं चक्षुषो भौतिकत्वं बाधते। भौतिकं हि यावत्तावदेव व्याप्नोति। अभौतिकं तु विभुत्वात् सर्वव्यापकमिति ॥ ३३ ।

## न्यायवार्त्तिकम्

अभौतिकानीत्यपरे—

महदणुग्रहणात्। (२)महदिति महत्तरं महत्तममुच्यते अण्विति अणुतरमणुतममिति तदिदमुभयं चक्षुष्युपलभ्यमानं भौतिकत्वं चक्षुषो बाधते। भौतिकं हि यावद्भवति तावदेव व्याप्नोति अभौतिकं तु व्यापकत्वात् सर्वसम्बद्धम्।

न भौतिकेषु प्रदीपादिषु दृष्टत्वात्—भौतिकाः प्रदीपादयो महदण्वोः प्रकाशका भवन्तीत्यनेकान्तः, प्रदीपाद्यनभ्युपगमे वा महदणुप्रकाशकत्वं चक्षुष एवेत्यसाधारणत्वादहेतुः भौतिकाभौतिकयोर्निवृत्तेः। ननु चाभौतिके ज्ञाने महदणुप्रकाशकत्वं दृष्टम् ? न दृष्टम्—न हि बुद्ध्या

## न्यायवार्त्तिकतात्पर्यटीका

स एवार्थो विप्रकृष्टो न विषयः सन्निकृष्टश्च विषय इत्येकस्य विषयीभावस्तदभावश्चायुक्तः क्षणभङ्गश्च निषेत्स्यत इति भावः ॥ ३२ ॥

तत्र सांख्यमुत्थाप्य बौद्धपक्षं दूषयति—अभौतिकानीति। कृष्णसाराधिकग्रहणे विवक्षिते (क) अर्थग्रहणं संपातायातं न तु तदत्र विवक्षितम् असाधकत्वादिति।

मह—णात् ( सू० ३३ ) ॥ धाना अङ्कुरः अभौतिकं तु व्यापकत्वादिति। तद्यथा विज्ञानाद्यभौतिकं महच्चाणु गृह्णातीत्यर्थः ॥ ३३ ॥

एकदेशिमतेन दूषणमाह—न भौतिकेषु प्रदीपादिष्विति। ननु बुद्धिर्यदि महदण्वोः

## वृत्तिः

तत्र साङ्ख्यमतेन बौद्धमतमुदस्यन्नाह—( महदणुग्रहणात् )

गोलकं नेन्द्रियम् अप्राप्यकारित्वेऽतिप्रसङ्गात्। इत्थं च गोलकातिरिक्तं भौतिक-

---

(१) 'यथा' इति ग-ज-पुस्तकयोः नास्ति। (२) 'महदिति महत्तरमुच्यते अण्विति अणुतरमिति'—इति क-ख-पुस्तकधृतपाठान्तरम्।

(क) अर्थः न्यग्रोधपर्वतादिः।

## न्यायवार्त्तिकम्

महदणुनी प्रकाश्येते, अपि तु प्रकाशो बुद्धिर्न प्रकाशनमिति, अवधारितस्यार्थस्य हानोपादानोपेक्षाबुद्धीनां साधनं बुद्धिरिति नाभौतिकं महदणुप्रकाशकमस्ति। ननु मनो विद्यते? सत्यं न पुनस्तद्भौतिकं नाप्यभौतिकमिति। एतेनाऽऽत्मा व्याख्यातः—न भौतिको नाभौतिक इति। यदि मनो नाभौतिकं यदुक्तं भौतिकानीन्द्रियाणि अभौतिकं मन इति तद्व्याहतम्? नाभौतिकार्थस्याभूतात्मकपर्यायत्वात्—अभौतिकं मन इति अभूतात्मकं मन इति यावदुक्तं भवति। मुख्यतस्तु मनो न भौतिकं नाभौतिकमिति। नेन्द्रियेऽपि समानत्वात्—इन्द्रियमभौतिकमिति यावदुक्तं भवति अभूतात्मकमिति? अभूतात्मकं व्यापकं चेन्द्रियं प्रतिपद्यमान इदं पर्यनुयोज्यः व्यवहितार्थग्रहणं कस्मान्न भवति? किं कारणम्—व्यापकत्वादिन्द्रियस्य न कुड्यादेरावरणसामर्थ्यमस्तीति। वृत्तिः प्रतिषिध्यत इति चेत्—अथ मन्यसे सत्यं व्यापकमिन्द्रियम्, तस्य तु पुरुषार्थहेतुना क्षोभ्यमाणस्य महाह्रदाद् बुद्बुदा इव निःसरन्त्यस्ताः कुड्यादिभिः (१)प्रतिषिध्यन्त इति? न वृत्तिव्यतिरेकेणेन्द्रियसत्त्वे प्रमाणाभावात्—येयं विषयग्रहणात्मिका वृत्तिः तां त्यक्त्वा तद्व्यतिरिक्तमिन्द्रियमिति किं प्रमाणम्? न चाप्रामाणिकोऽर्थः शक्यः प्रतिपत्तुम्। न च (२)प्रतिषिध्यमानाप्रतिषिध्यमानयोरेकत्वम्, एकत्वे वा आनर्थक्यं वृत्तिः प्रतिषिध्यते (क)निःसरतीति च। अव्यतिरेकाच्च तदुत्पत्तिविनाशधर्मकम्—यदि वृत्त्यव्यतिरेकीन्द्रियं यथा वृत्तेरुत्पादविनाशावेवमिन्द्रियस्यापि प्राप्नुतः। वृत्तेर्व्यक्तिर्नोत्पत्तिरिति चेत्—अथ मन्यसे न मया वृत्तेरुत्पत्तिरभ्युपगम्यते अपि तु व्यक्तिः न निरोधो विनाशोऽपि तु तिरोभाव इति? नोत्पत्तिविशेषत्वात्—व्यक्तिरुत्पत्तेर्विशेषः। कथमिति? नानुपजातविशेषस्य व्यक्तिरिति। अथानुपजातविशेषं व्यज्यत इति मन्यसे, नित्यं व्यक्तिः स्यात्। एतेन विनाशो व्याख्यातः। तिरोभाव इति विद्यमानं न किञ्चिन्निरुद्धम्, न ह्यनिवृत्तविशेषस्याग्रहणं भवति। न च सर्वनित्यवादिना ग्रहणाग्रहणे युक्ते—विशेषस्यानुपजननान्न ग्रहणं (ख)विशेषस्यानुपचयान्नाग्रहणमिति। नित्यं व्यापकञ्चेन्द्रियमभ्युपगच्छतः कारणार्थो हीयते—कारणं नाम यस्यानन्तरं यद्भवति, कारणञ्च नित्यं

## न्यायवार्त्तिकतात्पर्यटीका

प्रकाशनं तत् किमिदानीं सर्वस्यैवाप्रकाशनमित्यत आह—अवधारितस्य (ग)त्वर्थस्येति। न च हानोपादानोपेक्षाबुद्ध्योऽण्व्यौ महत्यो वेति भावः। पूर्वपक्ष्याह—नेन्द्रियेऽपि समानत्वादिति। तदेवमेकदेशिनोऽसाधारणत्वापादने पूर्वपक्षिणा दूषिते सिद्धान्त्याह—अभूतात्मकं व्यापकं चेति। सांख्यः शङ्कते—वृत्तिरिति। इन्द्रियाणां वृत्तयो ज्ञानहेतवः प्रतिषिध्यन्त इत्यर्थः।

---

(१) 'प्रतिवध्यन्त'—इति क-ख-धृतपाठान्तरम्। (२) 'प्रतिवध्यमानाप्रतिवध्यमानयोः'—इति क-ख-धृतपाठान्तरम्।

(क) 'निश्चरतीति' इति क-ख-वार्त्तिकमुद्रितपाठः शोधितः। (ख) 'विशेषस्यानपचयात्' इति युक्तम्। (ग) 'तु'कारो वार्त्तिके न दृश्यते।

### न्यायभाष्यम्

न महदणुग्रहणमात्रादभौतिकत्वं विभुत्वं चेन्द्रियाणां शक्यं प्रतिपत्तुम्। इदं खलु—

## (सू०)—रश्म्यर्थसन्निकर्षविशेषात्तद्ग्रहणम् ॥ ३४ ॥

तयोर्महदण्वोर्ग्रहणं चक्षूरश्मेरर्थस्य च सन्निकर्षविशेषाद् भवति यथा प्रदीपरश्मे-

### न्यायवार्त्तिकम्

कार्यञ्च नित्यमिति किं कस्यानन्तरम्, कार्यकारणभावश्च कथं तयोर्नित्यत्वात्। कारकशब्दार्थश्च वाच्यः। ननु करोतीति कारकम्? सत्यं करोतीति कारकम्, न पुनर्नित्यवादिनः किञ्चित् कर्तव्यमस्ति, न चासति कर्तव्ये कारकार्थं पश्यामः। व्यक्तौ कारकार्थ इति चेत्, व्यक्तौ च तुल्यम्—व्यक्तिरपि व्यङ्ग्यवन्नित्येति व्यक्तावपि न कारकार्थोऽस्ति। युगपदनेकविज्ञानप्रसङ्गाच्च—यदि च वृत्तिर्वृत्तिमतो नान्या भवति वृत्तिमतोऽवस्थानाद् वृत्तीनामवस्थानमिति युगपदनेकविज्ञानप्रसङ्गः। वृत्त्यनेकत्वे चैकमिन्द्रियमनेकं प्राप्नोति वृत्तिभ्योऽनन्यत्वात्। अथ मा भूदिन्द्रियभेद इति, वृत्तीनां तह्येंकत्वं प्राप्नोति वृत्तिवृत्तिमतोरनन्यत्वात्। अथ मा भूदयं दोष इत्युभयं नेष्यते, भेदस्तर्हि वृत्तिवृत्तिमतोरिति। न चान्या गतिरस्ति। तस्मादयुक्तं व्यापकमिन्द्रियं नित्यं चेति ॥ ३३ ॥

महदणुग्रहणस्य चान्यथासिद्धेरहेतुः—योऽयं हेतु(१)र्महदणुग्रहणादभौतिकानीन्द्रियाणीति अयमन्यथासिद्धः, न महदणुग्रहणमात्रादभौतिकत्वं व्यापकत्वमिन्द्रियाणां शक्यं प्रतिपत्तुम्। कस्मात् इदम्?

रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम्। यस्माद् रश्म्यर्थसन्निकर्षविशेषान्महदणवो-

### न्यायवार्त्तिकतात्पर्यटीका

युगपदनेक(क)ग्रहणप्रसङ्गाच्चेति। यद्यपि सांख्यीयराद्धान्ते दीर्घां शष्कुलीं भक्षयतो युगपदनेकज्ञानोत्पत्तिरभिमता तथाऽपि क्वचित् क्रमोऽपि दृश्यते स न स्यात्। वृत्तिमतोऽवस्थाने तदभिन्ना वृत्तिरप्यवतिष्ठत इति तन्मात्राधीनोत्पत्तीनां विज्ञानानां क्रमो न स्यादिति भावः। उभयं नेष्यत इति, वृत्तिभ्योऽनन्यत्वं वृत्तिमतो नेष्यते नापि वृत्तीनामनन्यत्वं वृत्तिमत इत्यर्थः ॥ ३३ ॥

### वृत्तिः

मिति वाच्यम्, तदप्यसङ्गतम्, चक्षुषा हि न्यूनपरिमाणं महत्परिमाणं च गृह्यते, न च न्यूनेन महतो व्यापनं सम्भवति। न च अव्याप्य ग्रहणम्, अतोऽभौतिकानीन्द्रियाण्याहङ्कारिकाणीति ॥ ३४ ॥

---

(१) '-र्महदण्वोर्ग्रहणात्'—इति क-ख-धृतपाठान्तरम्।
(क) वार्त्तिके—'विज्ञानप्रसङ्गा'दिति विशेषः।

## न्यायभाष्यम्

रर्थस्य चेति। (१) रश्म्यर्थसन्निकर्षश्चाऽऽवरणलिङ्गः। चाक्षुषो हि रश्मिः कुड्यादिभिरावृतमर्थं न प्रकाशयति यथा प्रदीपरश्मिरिति ॥ ३४ ॥

## न्यायवार्त्तिकम्

ग्रहणम्—चक्षूरश्मेरर्थस्य च सन्निकर्षविशेषान्महदण्वोर्ग्रहणं भवति। । तत्र सन्निकर्षमात्रात् सामान्यग्रहणं सन्निकर्षविशेषाद्विशेषग्रहणम्। कः पुनः सन्निकर्षस्य विशेषः? भूयोऽवयवसन्निकर्षानुग्रहः। यस्मादयं सन्निकर्षो विशेषप्रतिपत्तिहेतुर्भूयोऽवयवसंयोगैरनुगृह्यते सोऽयमवयवान्तरसंयोगापेक्षोऽवयवीन्द्रियसन्निकर्षः सन्निकर्षविशेष इत्युच्यते, स च रश्म्यर्थसन्निकर्षविशेषोऽणुमहतोस्तुल्यो भवतीत्यन्यथा महदण्वोर्ग्रहणं सिध्यति। रश्म्यर्थसन्निकर्षश्चाऽऽवरणलिङ्गः कुड्यादिव्यवहितानामप्रकाशरूपत्वात् अप्राप्यकारित्वे तु न कुड्यादेरावरणसामर्थ्यमस्तीत्यस्ति चाक्षुषो रश्मिः यथा प्रदीपरश्मिरिति ॥ ३४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

नैयायिकः सांख्यं दूषयति—

रश्म्य—णम् ( सू० ३४ )॥ आहङ्कारिकत्वे चक्षुर्न प्रतिहन्यते यदि (क) तत् काचाभ्रपटलान्तरितप्रकाशवत् कुड्यान्तरितमपि प्रकाशयेत्। न चैवमस्ति। तस्मात् कृष्णसाराधिष्ठानं तेज एव भौतिकं प्राप्य गृह्णाति कुड्यान्तरितं त्वर्थमप्राप्तं न गृह्णाति। काचाभ्रपटलान्तरिते तु वक्ष्यति (ख)।

भूयोऽवयवसन्निकर्षानुग्रह इति। इन्द्रियावयवानामर्थावयवैः इन्द्रियावयवानामर्थेन अर्थावयवानामिन्द्रियेण इन्द्रियस्यार्थेनेति ॥ ३४ ॥

## वृत्तिः

साङ्ख्यं निरस्यति—( रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम् )

रश्मिः गोलकावच्छिन्नं तेजः ; तेनार्थस्य घटादेर्यः सन्निकर्षविशेषः संयोगविशेषस्तस्मात् तयोर्महदण्वोर्ग्रहणमुपपद्यते। भौतिकेऽपि प्रदीपादौ महदणुप्रकाशकत्वं दृष्टम्, अभौतिकत्वे तु पुरःपश्चाद्वर्तिनां सर्वेषामेव ग्रहणं स्यात् ॥ ३५ ॥

---

(१) 'रश्म्यर्थसन्निकर्षविशेषश्च' फ०।

(क) 'तदि'ति तथा अप्रतिहतमिति यावत्। 'काचाभ्रपटलान्तरितव'दिति पाठो युक्तः।

(ख) क-ख-तात्पर्यपुस्तकयोरतः परं 'वार्त्तिकं—किमाव्यन्तिकानि, तस्य व्याख्यानमाहंकारिकाणीति। न प्रदीपादिभिरनैकान्तादिति। वर्तिदेशस्थेन पिण्डितेन तेजसा प्रदीपेनानैकान्तात्। प्रभा हि विसारिणी तमर्थं प्राप्य प्रकाशयति न तु प्रदीप इत्यर्थः। विषयीभावादिति चेदिति। उत्पादविशेष एव स तादृक् इत्येकस्य विषयीभावस्तदभावश्चायतः चक्षुरर्थचणयोर्यतोऽप्राप्तयोरपि विषयविषयिभावाद्वेद्यवेदकत्वम्, न चायं व्यवहितविप्रकृष्टयोरिति न तयोर्वेद्यवेदकभाव इत्यर्थः। निराकरोति—नोक्तोत्तरत्वात्। स एवार्थो विप्रकृष्टो न विषयः सन्निकृष्टस्य विषयभङ्गस्य निवेत्स्यत इति भावः' इत्यन्तो ग्रन्थो मुद्रितः।

न्यायभाष्यम्

आवरणानुमेयत्वे सतीदमाह—

( सू० )—तदनुपलब्धेरहेतुः ॥ ३५ ॥

रूपस्पर्शवद्धि तेजः, महत्त्वादनेकद्रव्यवत्त्वाद् रूपवत्त्वाच्चोपलब्धिरिति प्रदीपवत् प्रत्यक्षत उपलभ्येत चाक्षुषो रश्मिर्यदि स्यादिति ॥ ३५ ॥

(सू०)—नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥३६॥

सन्निकर्ष(१)प्रतिषेधार्थेनाऽऽवरणेन लिङ्गेनानुमीयमानस्य रश्मेर्या प्रत्यक्षतोऽनुपलब्धिर्नासावभावं प्रतिपादयति यथा चन्द्रमसः परभागस्य पृथिव्याश्चाधोभागस्य ॥३६॥

न्यायवार्त्तिकम्

आवरणानुमेयत्वे सतीदमाह—

तदनुपलब्धेरहेतुः। न चाक्षुषो रश्मिर्विद्यत इति सूत्रार्थः। कथमिति ? उपलब्धिलक्षणप्राप्तत्वादनुमानानुपपत्तिः—यत् खलूपलब्धिलक्षणप्राप्तं नोपलभ्यते तन्नास्ति, यथा घटादि, घटादेर्महदनेकद्रव्यवत्त्वरूपवत्त्वानि सन्तीत्युपलभ्यन्ते घटादयः तथा महदनेकद्रव्यवत्त्वरूपवांश्चाक्षुषो रश्मिः कस्मात् प्रत्यक्षतो नोपलभ्यत इति—महत्त्वं तावत् (क)कारणमहत्त्व-बहुत्व-प्रचयेभ्यः, अनेकद्रव्यवत्त्वमपि कारणबहुत्वादेव, रूपस्पर्शवद्धि तेज इति नारूपं तत्—एवमशेषोपलब्धिकारणसन्निधाने सति (२)यन्नोपलभ्यते तेन गम्यते नास्तीति ॥ ३५ ॥

नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः। यत् प्रत्यक्षतो नोपलभ्यते तदनुमानेनोपलभ्यमानं नास्तीत्ययुक्तं यथा चन्द्रमसः परभागः पृथिव्याश्चाधोभागः प्रत्यक्ष-

न्यायवार्त्तिकतात्पर्यटीका

तद—तुः ( सू० ३६ ) तदनुपलब्धेरिति। नोपलब्धिलक्षणप्राप्तमनुपलभ्यमानं शक्यमनुमातुं नरविषाणादीनामप्यनुमानप्रसङ्गादित्यर्थः ॥ ३५ ॥

परिहारः—नानुमीयमानस्येति।

नानु—तुः ( सू० ३६ )॥ सत्यम् (ख) उपलब्धिलक्षणप्राप्तमनुपलभ्यमानं न शक्य-

वृत्तिः

तैजसे चक्षुष्यनुपलब्धिबाधं बौद्धः शङ्कते—(तदनुपलब्धेरहेतुः)

रश्म्यर्थसन्निकर्षो न हेतुर्गोलकातिरिक्तस्य रश्मेरनुपलब्धेः ॥ ३६ ॥

समाधत्ते—( नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः )

(१) '-प्रतिषेधेना'—इति भा०। (२) 'येन नोपलभ्यते' इति क-ख-धृतपाठान्तरम्।

(क) 'कारणबहुत्वात् कारणमहत्त्वात् प्रचयविशेषाच्च महत्' इति शारीरकभाष्यधृतपाठः ( ब्रह्मसूत्रे २ अ, २ पा ११ सू० )। वैशेषिकसूत्रपाठस्तु 'कारणबहुत्वाच्च' इत्येतावन्मात्रम् ( चन्द्रप्रभाप्रेससंस्करण० सू० ९, आ १, अ ७ )। (ख) क-ख-तात्पर्यपुस्तकयोः 'अनुपलब्धि—' इति मुद्रितम्।

## (सू०)—द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ॥ ३७ ॥

### न्यायभाष्यम्

भिन्नः खल्वयं द्रव्यधर्मो गुणधर्मश्च, महदनेकद्रव्यवच्च (१)विषक्तावयवमाप्यं द्रव्यं प्रत्यक्षतो नोपलभ्यते स्पर्शस्तु शीतो गृह्यते। तस्य द्रव्यस्यानुबन्धाद् हेमन्तशिशिरौ

### न्यायवार्त्तिकम्

लक्षणप्राप्तावपि न प्रत्यक्षत (क)उपलभ्यते अनुमानेन चोपलब्धेर्न तौ न स्तः। किं पुनरनुमानम्? अर्वाग्भागवदुभयप्रतिपत्तिः, तथा चाक्षुषस्य रश्मेः कुड्याद्यावरणमनुमानं सम्भवतीति ॥३६॥

अपरे तु 'महदनेकद्रव्यवत्त्वाद्रूपवत्त्वाच्चोपलब्धि'रित्युपलब्धौ नियमं वर्णयन्ति नोपलभ्यमान इति। किमुक्तं भवति? (ख) न युक्तो यत्र यत्र महदनेकद्रव्यवत्त्वरूपाणि सन्ति तत्तदुपलभ्यत इति, अपि तु यद् यदुपलभ्यते तत्र तत्र महदनेकद्रव्यवत्त्वरूपाणि सन्तीति। एवं तर्हि इदं सूत्रं नोपलब्धेः कारणप्रतिपादकं सत्स्वभावादिति—सत्सु महदनेकद्रव्यरूपेषु उपलब्धिर्न भवतीति नैतान्युपलब्धिकारणमिति—

### न्यायवार्त्तिकतात्पर्यटीका

मनुमातुं न तु (ग)महत्त्वाद्येवोपलक्षणप्राप्तेरपि तु रूपविशेषोऽपि। न चासौ विशेष उद्भवसमाख्यातः कृष्णसाराधिष्ठानस्य चक्षुषोऽस्तीत्यर्थः ॥३६॥

आचार्यदेशीयानां मतमाह—अपरे त्विति। दूषयति—एवं तर्हीदमिति। यत्रोपलब्धिस्तत्रैतदिति सूत्रार्थः। ततो महत्त्वादिषु मध्ये यत्किंचिदेकं वक्तव्यं सूत्रकारेण यत्रोपलब्धिस्तत्र तदित्येकस्मादेव सिद्धेरनेकोपादानवैयर्थ्यम्। तस्मात् संभावनायोग्यताभिधानपरं सूत्रम्।

### वृत्तिः

रूपोपलब्धेः सकरणकत्वादिनाऽनुमीयमानस्य चक्षुषः प्रत्यक्षतोऽनुपलब्धिर्नाभावनिर्णायिकेत्यर्थः ॥ ३७ ॥

कथं तर्हि नोपलम्भ इत्यत आह—( द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ) द्रव्यस्य धर्मभेदो महत्त्वादिः, गुणस्य धर्मभेद उद्भूतत्वम्, तदधीनत्वात् प्रत्यक्षस्य द्रव्यमात्रे उपलब्धेर्न नियमः। यत्रोद्भूतरूपमहत्त्वादिकं तस्य प्रत्यक्षम्, तदभावाच्चक्षुरादेरप्रत्यक्षम्।

---

(१) 'विभक्तावयवम्'—इति वि० टि०।

(क) 'उपलभ्यते' इति पाठः सम्भाव्यते। यथाश्रुतस्य सम्यक्त्वे तु प्रत्यक्षलक्षणप्राप्ताविति समस्यन्तं पदं बोध्यम्। (ख) 'न युक्तो' इत्यत्र क-ख-पुस्तकधृतं 'न ब्रूमो' इति पाठान्तरं समीचीनतया सम्भाव्यते। (ग) 'महत्त्वाद्येव उपलब्धिलक्षणप्राप्तिहेतुः' इति 'महत्त्वाद्येवोपलब्धिलक्षण'मिति 'महत्त्वाद्येवोपलब्धिलक्षणप्राप्तिः' इति वा पाठः सम्भाव्यते।

## न्यायभाष्यम्

(१) कल्प्येते तथाविधमेव च तैजसं द्रव्यमनुद्भूतरूपं सह रूपेण नोपलभ्यते, स्पर्शस्त्वस्योष्ण उपलभ्यते तस्य द्रव्यस्यानुबन्धाद् ग्रीष्मवसन्तौ (२)कल्प्येते ॥ ३७ ॥

यत्र त्वेषा भवति—

**(सू०)—अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः (क) ॥ ३८ ॥**

(३)तत्र रूपं च द्रव्यं च तदाश्रयः प्रत्यक्षत उपलभ्यते। रूपविशेषस्तु (४)यद्भावात् क्वचिद्रूपोपलब्धिः (५)यदभावाच्च द्रव्यस्य क्वचिदनुपलब्धिः (५*) स रूपधर्मोऽयमुद्भव समाख्यात इति। अनुद्भूतरूपश्चायं नायनो रश्मिः, तस्मात् प्रत्यक्षतो नोपलभ्यते

## न्यायवार्त्तिकम्

द्रव्यगुणधर्मभेदाच्चोपलब्धिनियम इति। शेषं भाष्ये ॥ ३७ ॥

कस्मात् तर्हि चाक्षुषो रश्मिर्नोपलभ्यते इति? उपलब्धिकारणाभावादिति। नैतावदेवोपलब्धिकारणं यन्महदनेकद्रव्यरूपाणि, अपि तु रूपग्रहणाद्रूपविशेषोऽभिधीयते न रूपमात्रम्। एवं च सूत्रम्—

अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः। अनेकद्रव्येण समवायाद् रूपविशेषाच्च रूपोपलब्धिरिति। अत्र रूपविशेषग्रहणेन रूपधर्म उद्भवसमाख्योऽभिधीयते। न रूपत्वं रूपान्तराद्रूपं विशिनष्टि अपि तूद्भवो विशेषकत्वाद्विशेष इत्युच्यते यथा ब्राह्मणविशेष इति न ब्राह्मणत्वं ब्राह्मणविशेषः एवं समानजातीयविशेषकत्वं यत् तद् विशेष इत्युच्यते। उद्भवश्च कार्यगम्यः यस्याभावाद्विपक्वावयवमाप्यं द्रव्यं हेमन्ते न गृह्यते तैजसञ्च ग्रीष्मे, यस्य भावात् प्रदीपरश्मिरुपलभ्यते आदित्यरश्मिश्च, स उद्भवो नाम विशेषः, स तस्मिन्नायने रश्मौ, रूपविशेषो

## न्यायवार्त्तिकतात्पर्यटीका

ननु यथाश्रुतं महत्त्वाद्युपलब्धिकारणमस्ति चाक्षुषस्य रश्मेरिति कस्मादयं नोपलभ्यत इत्यत आह—द्रव्यगुणधर्मेति।

द्रव्य—मः ( सू० ३७ ) (ख) ॥

अने—ब्धिः ( सू० ३८ ) (ग) ॥

---

(१) 'कल्पते'—इति ल-ग-भा०। (२) 'कल्पेते'—इति ल-ग-भा०। (३) 'यत्र' इति ल-ग-अ-भा-फ०। वि-पुस्तकपाठो गृहीतः। (४) 'यत्कृता' इति वि०। (५) 'तदभावाच्च तदनुपलब्धिः' इति वि०।

(क) इदं सूत्रं वैशेषिकदर्शनेऽपि (अ० ४, आ० १, सू० ८)। तत्र रूपविशेष उद्भूतत्वमनभिभूतत्वं रूपत्वञ्चेति शङ्करमिश्राः। (ख) ३७श-सूत्रे अवतरणिकातिरिक्ता टीका नास्ति। (ग) ३८श-सूत्रे तात्पर्यटीका नोपलभ्यते।

## न्यायभाष्यम्

इति। दृष्टश्च तेजसो धर्मभेदः, उद्भूतरूपस्पर्शं प्रत्यक्षं तेजो यथा आदित्यरश्मयः। उद्भूतरूपमनुद्भूतस्पर्शं च प्रत्यक्षं यथा प्रदीपरश्मयः। उद्भूतस्पर्शमनुद्भूतरूपमप्रत्यक्षं यथाऽवादिसंयुक्तं तेजः। अनुद्भूतरूपस्पर्शोऽप्रत्यक्षश्चाक्षुषो रश्मिरिति ॥३८॥

### ( सू० )—कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः ॥ ३९ ॥

यथा चेतनस्यार्थो विषयोपलब्धिभूतः सुखदुःखोपलब्धिभूतश्च (१)कल्प्यते तथेन्द्रियाणि व्यूढानि, विषयप्राप्त्यर्थश्च रश्मेश्चाक्षुषस्य व्यूहः। रूपस्पर्शानभिव्यक्तिश्च व्यवहारप्रक्लृप्त्यर्था, द्रव्यविशेषे च प्रतीघातादावरणोपपत्तिर्व्यवहारार्था। सर्वद्रव्याणां विश्वरूपो व्यूह इन्द्रियवत् कर्मकारितः पुरुषार्थतन्त्रः। कर्म तु धर्माधर्मभूतं चेतनस्योपभोगार्थमिति।

## न्यायवार्त्तिकम्

नास्तीत्यतश्चाक्षुषो रश्मिर्नोपलभ्यते। दृष्टश्च तेजसो धर्मभेदः। चतुर्विधश्च तेजो भवति—उद्भूतरूपस्पर्शं यथा आदित्यरश्मिः। उद्भूतरूपमनुद्भूतस्पर्शं यथा प्रदीपरश्मिः। उभयं च प्रत्यक्षं रूपस्योद्भूतत्वात्। उद्भूतस्पर्शमनुद्भूतरूपं यथा वारिस्थितं तेजः। अनुद्भूतरूपस्पर्शं यथा नायनं तेजः। उभयं चाप्रत्यक्षं रूपस्यानुद्भूतेः ॥ ३८ ॥

कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः। शेषं भाष्ये। रूपस्पर्शानभिव्यक्तिश्च व्यवहारप्रक्लृप्त्यर्था—यदि नायनो रश्मिरुद्भूतस्पर्शो भवेत् तेन दृश्यविशेषेऽनेकरश्मिसन्निधाने सति द्रव्यं (२)दह्येत, अनेकरश्मिसन्निपाते च सति व्यवहितत्वाद् द्रव्यस्यानुपलब्ध्या भवितव्यम्।

## न्यायवार्त्तिकतात्पर्यटीका

कर्म—न्त्रः ( सू० ३९ )॥ अनेकरश्मिसन्निधाने स्पर्शस्योद्भूतौ सत्यां द्रव्यं दह्येत रूपोद्भूतौ सत्यां व्यवहितत्वात् आदौ निपतितेन चक्षुरन्तरेण द्रव्यस्यानुपलब्ध्या भवि-

## वृत्तिः

चक्षुरादावुद्भूतरूपमेव न कुत इत्याशङ्कायां भाष्यम्—

(क)"कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः"। अदृष्टविशेषाधीन इन्द्रियाणां व्यूहो रचनाविशेष उपभोगसाधनमिति। सूत्रमेवेदमिति केचित् ॥ ३८ ॥

(१) 'कल्पते' इति ख-ग-भा०। (२) क-वार्त्तिके 'दह्येत' इति मुद्रितम्।

(क) 'अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः' इति सूत्रस्य वृत्त्यदर्शनेन विश्वनाथमते इदं काणादसूत्रमेव न तु न्यायसूत्रमिति सम्भाव्यते। तथा "कर्मकारित" इत्यादि सूत्रस्यापि भाष्यतया उल्लेखेन अतः परं वृत्तौ सूत्रसंख्याह्रासः।

## न्यायभाष्यम्

अव्यभिचाराच्च प्रतीघातो भौतिकधर्मः (क)। यश्चाऽऽवरणोपलम्भादिन्द्रियस्य द्रव्यविशेषे प्रतिघातः स भौतिकधर्मो न भूतानि व्यभिचरति, नाभौतिकं प्रतिघातधर्मकं दृष्टमिति। अप्रतिघातस्तु (१)व्यभिचारी भौतिकाभौतिकयोः समानत्वादिति।

यदपि (२) मन्येत प्रतिघाताद्भौतिकानीन्द्रियाणि, अप्रतिघातादभौतिकानीति प्राप्तम्? दृष्टश्चाप्रतिघातः काचाभ्रपटलस्फटिकान्तरितोपलब्धेः। तन्न युक्तम्। कस्मात्? यस्माद्भौतिकमपि न प्रतिहन्यते, काचाभ्रपटलस्फटिकान्तरितप्रकाशात् प्रदीपरश्मीनाम्, स्थाल्यादिषु पाचकस्य तेजसो(३)ऽप्रतिघातः ॥ ३९ ॥

## न्यायवार्त्तिकम्

अथ मन्यसे यथा आदित्यरश्मिसम्बद्धेऽर्थे नायनो रश्मिर्न व्यवधीयते एवं रश्म्यन्तरसन्निपातेऽपीति; तन्न व्यतिभिद्यार्थग्राहकत्वात्—व्यतिभिद्यादित्यरश्मिं तत्सम्बद्धेन द्रव्येण सम्बध्यते उद्भूतरूपस्पर्शवत्त्वे च चक्षुषो यस्य पूर्वं सन्निपतितं चक्षुस्तदितरेण (४)व्यवहितमपि नार्थं गृह्णीयात्। अथानेकरश्मिसन्निपाते सति समानजातीयद्रव्येभ्यो द्रव्यान्तरं रश्मिरुत्पद्यत इति? एवं सति समग्रासमग्रचक्षुषोस्तुल्योपलम्भः प्राप्नोति। न चैतदिष्टमनुपलब्धेरिति। व्यवहारक्लृप्त्यर्थं च नायनस्य रश्मेरनुद्भूतरूपस्पर्शवत्त्वमिति। सर्वद्रव्याणां विश्वरूपो व्यूहः पुरुषार्थकारित इति। कर्म च धर्माधर्मरूपं चेतनस्योपभोगार्थमिति।

(ख) 'अव्यभिचारी तु प्रतीघातो भौतिकधर्मः'। भौतिकं चक्षुः कुड्यादिभिः प्रतीघातदर्शनात् घटादिवदिति। अप्रतीघातादभौतिकमिति चेत्—अथ मन्यसे यदि प्रतीघाताद्भौतिकम् अप्रतीघातादभौतिकम्; दृष्टश्चाप्रतीघातः काचाभ्रपटलस्फटिकान्तरितोपलब्धेः? नानेकान्तात् प्रदीपरश्मिवत्—भौतिकस्याप्रतीघातः यथा प्रदीपरश्मेरिति, स्थाल्यादिषु च (ग) पाचकस्य तेजसोऽप्रतीघातादिति ॥ ३९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

तथ्यम्। शङ्कते—अथानेकेति। नानानयनावयवैरेकोऽसौ नयनावयव्यारभ्यत इत्यर्थः। निराकरोति—एवं सतीति। नानानयनावयवैरारब्ध एकोऽसौ नयनावयवी समग्रासमग्रचक्षुःपुरुषसाधारण इत्युपलब्धिस्तुल्या स्यादित्यर्थः ॥ ३९ ॥

---

(१) 'व्यभिचारी' इति ज०। (२) 'मन्यते' इति ख-ग-झा०। (३) 'अप्रतीघातात्' फ०। (४) 'व्यवहितमिति' क-ख-घतपाठान्तरम्।

(क) इदं वार्त्तिकपुस्तकयोः सूत्राकारेण मुद्रितम्। न्यायसूचीकारै तु 'अव्यभिचाराच्च' इत्येवं किञ्चित् सूत्रं पठितम्। न्यायसूचीनिबन्धादिषु अग्रहणाद् भाष्यरूपेणेदं गृहीतम्। (ख) भाष्ये 'अव्यभिचाराच्च' इति विशेषः। (ग) 'पाचकस्य तेजसः' इत्येतावदन्तं वार्त्तिकम्, 'चकारेण च 'अप्रतीघात' इत्यस्यानुषङ्गः, स एव च टिप्पणीरूपेण स्थितः, प्रमादाद् 'अप्रतीघातात्' इत्येवं मुद्रितम् इति सम्भाव्यते। यद्वा 'अप्रतीघात' इति प्रथमान्त एव पाठः।

### न्यायभाष्यम्

उपपद्यते च (१)अनुपलब्धिः कारणभेदात्—

**(सू०)—मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥४०॥**

यथा 'अनेकद्रव्येण समवायाद् रूपविशेषाच्चोपलब्धि'रिति सत्युपलब्धिकारणे (२)मध्यन्दिनोल्काप्रकाशो नोपलभ्यते आदित्यप्रकाशेनाभिभूतः, एवं महदनेकद्रव्यवत्त्वाद् रूपविशेषाच्चोपलब्धिरिति सत्युपलब्धिकारणे चाक्षुषो रश्मिर्नोपलभ्यते निमित्तान्तरतः। तच्च व्याख्यातम् (३)अनुद्भूतरूपस्पर्शस्य द्रव्यस्य प्रत्यक्षतोऽनुपलब्धिरिति ॥ ४० ॥

अत्यन्तानुपलब्धिश्चाभावकारणम्। यो हि ब्रवीति लोष्टप्रकाशो मध्यन्दिने आदित्यप्रकाशाभिभवान्नोपलभ्यते इति, तस्यैतत् स्यात् ?

### न्यायवार्त्तिकम्

उपपद्यते चानुपलब्धिः कारणभेदात्—

मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः। यथोपलब्धिलक्षणप्राप्तस्य मध्यन्दिनोल्काप्रकाशस्य निमित्तादग्रहणमभिभवात् तथोपलब्धिलक्षणप्राप्तस्य चाक्षुषस्य रश्मेरग्रहणं निमित्ताद्रूपस्यानुद्भूतेरिति ॥ ४० ॥

(क) मध्यन्दिनोल्काप्रकाशो नोपलभ्यते इति ? आदित्यप्रकाशात्। आदित्यप्रकाशाभिभवादित्ययुक्तं सर्वरश्मिवत्त्वप्रसङ्गात्—एवं सति सर्वं लोष्टादि रश्मिवत् प्राप्नोति। अथ लोष्टादिरभ्मयः कस्मान्नोपलभ्यन्ते (ख) इत्यनुयुक्तो ब्रूयाद् आदित्यरश्म्यभिभवादिति, अयुक्तं तत्। एतदुत्तरद्वारकं सूत्रम्—

### न्यायवार्त्तिकतात्पर्यटीका

मध्य—ब्धिः ( सू० ४० ) (ग) ॥

### वृत्तिः

महतो रूपवतोऽनुपलब्धौ दृष्टान्तमाह—( मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः )।

महतो रूपवतश्चोल्काप्रकाशस्य सौरालोकेनाभिभवात् मध्यन्दिनेऽनुपलब्धिवदनुद्भूतरूपवत्त्वाच्चक्षुषोऽप्यनुपलम्भः सम्भवतीति भावः ॥ ३९ ॥

नन्वेवं घटादावपि रश्मिः स्यात् सौरालोकेनाभिभवात् पुनरग्रह इत्यत्राऽऽह—

---

(१) 'अनुपलब्धेः' इति वि०। (२) 'माध्यन्दिनी-' इति ख०। (३) 'अनुद्भूतरूपस्य' इति वि०।

(क) अत्र 'कथम्' इति पदापेक्षायां स्फुटोऽर्थः।

(ख) 'इत्यनुक्तः' इति क-ख-वार्त्तिकमुद्रणं शोधितम्।

(ग) ४०श-सूत्रे तात्पर्यटीका नोपलभ्यते।

## (सू०)—न, रात्रावप्यनुपलब्धेः ॥ ४१ ॥

### न्यायभाष्यम्

अप्यनुमानतो(१)ऽनुपलब्धेरिति। एवमत्यन्तानुपलब्धेर्लोष्टप्रकाशो नास्ति, न त्वेवं चक्षुषो रश्मिरिति ॥ ४१ ॥

उपपन्नरूपा चेयम्—

## (सू०)—बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ॥ ४२ ॥

बाह्येन प्रकाशेनानुगृहीतं चक्षुः विषयग्राहकं तदभावेऽनुपलब्धिः। सति च

### न्यायवार्त्तिकम्

न रात्रावप्यनुपलब्धेः। यदि लोष्टादिरश्मयः स्युः दिवा आदित्यप्रकाशाभिभवाच्च नोपलभ्यन्ते इति रात्रौ तर्ह्युपलभ्येरन्। रात्रावपि नोपलभ्यन्ते व्यञ्जकाभावादिति चेत् न हि यद् यस्याभिभावकं तत् तस्याभिव्यञ्जकमिति कथं न प्राप्नोति लोष्टादिरश्मीनामुपलम्भः। अनुमानतश्च नोपलभ्यते लोष्टरश्मिरित्यपिशब्दाद् गम्यते। तदेवं सर्वप्रमाणनिवृत्तेर्न विद्यते लोष्टरश्मिः, न पुनरेवं चाक्षुषो रश्मिर्निरनुमानः कुड्यादेरावरणस्य सामर्थ्यादिति ॥ ४१ ॥

### न्यायवार्त्तिकतात्पर्यटीका

न रा—ब्धेः ( सू० ४१ )॥ न हि यद् यस्याभिभावकं तत्तस्य व्यञ्जकमिति। (क)रात्रौ यद् लोष्टतेजसोऽभिभावकं दिवा कथं तदेवास्य व्यञ्जकं येन तदभावाद्रात्रौ लोष्टतेजो नोपलभ्येत इत्यर्थः। अपिशब्दाद्गम्यत इति, न रात्रावपीति सूत्रगतादित्यर्थः ॥ ४१ ॥

बाह्य—ब्धिः (सू० ४२) ॥ सोऽयं चक्षुषो रश्मिः किमभावान्नोपलभ्यते किं वाऽनुद्भूतेरत्राऽऽह भाष्यकारः—उपपन्नरूपा चेयम् (ख)अनभिव्यक्तितोऽनुपलब्धिरिति योजना। अनभि-

### वृत्तिः

( न, रात्रावप्यनुपलब्धेः )

नेत्यस्य घटादौ रश्मिरिति शेषः ॥ ४० ॥

नन्वनुद्भूतरूपवत्त्वाच्चक्षुषोऽनुपलब्धिर्न त्वभिभवादित्यत्र किं विनिगमकमिति तटस्थाशङ्कायामाह—( बाह्यप्रकाशानुग्रहाद्विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः )

अनभिव्यक्तितोऽनुद्भूतरूपवत्त्वाच्चक्षुषोऽनुपलब्धिः। कुतः ? बाह्यप्रकाशानुग्रहात्। सौरालोकादिसाहित्याद्विषयोपलब्धेः तस्योद्भूतरूपवत्त्वे बाह्यप्रकाशापेक्षा न स्यात्। अभिभूतत्वे च तत्साहित्येनापि प्रत्यक्षजननं न स्यादभिभूतस्य कार्याक्षमत्वादिति भावः ॥ ४१ ॥

---

(१) 'अनुपलब्धिरिति' वि।

(क) अत्र 'दिवा यद् लोष्टतेजसोऽभिभावकं कथं रात्रौ तदेवास्य व्यञ्जकम्' इति योजना बोध्या। दिवा-रात्रिपदयोः स्थानविनिमयो मुद्राप्रमादकृत इति बोध्यम्।

(ख) 'अनभिव्यक्तितोऽनुपलब्धिः' इति सूत्रांशेन 'उपपन्नरूपा चेयम्' इति भाष्यं योजितं बोध्यम्।

## न्यायभाष्यम्

प्रकाशानुग्रहे शीतस्पर्शोपलब्धौ च सत्यां तदाश्रयस्य द्रव्यस्य चक्षुषाऽग्रहणं रूपस्यानुद्भूतत्वात्, सेयं रूपानभिव्यक्तितो रूपाश्रयस्य द्रव्यस्यानुपलब्धिर्दृष्टा। तत्र यदुक्तं 'तदनुपलब्धेरहेतु'रिति एतदयुक्तम् ॥ ४२ ॥

कस्मात्पुनरभिभवोऽनुपलब्धिकारणं चाक्षुषस्य रश्मेर्नोच्यत इति?

**(सू०)—अभिव्यक्तौ चाभिभवात् ॥ ४३ ॥**

बाह्यप्रकाशानुग्रहनिरपेक्षतायां चेति चार्थः। यद्रूपमभिव्यक्तमुद्भूतं बाह्यप्रकाशानुग्रहं च नापेक्षते तद्विषयोऽभिभवः, विपर्ययेऽभिभवाभावात्। अनुद्भूतरूपत्वाच्चा-

## न्यायवार्त्तिकम्

बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः। तस्य विद्यमानस्य बाह्यप्रकाशानुग्रहाद्विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः। दृष्टान्तस्थान एवैतत् सूत्रम्। किमुक्तं भवति? यत् खलु (१) बाह्यप्रकाशमपेक्षते तस्यानुपलब्धी रूपानभिव्यक्तित इति। अनुद्भूतेर्यथा (२) विपक्वावयवस्याऽऽप्यद्रव्यस्य रूपानुद्भूतेरग्रहणम् तथा चाक्षुषो रश्मिर्बाह्यप्रकाशानुग्रहमपेक्षते तस्मादस्यापि रूपस्यानुद्भूतेरग्रहणमिति ॥ ४२ ॥

कस्मात् पुनर्नायनस्य रश्मेरनुपलब्धेरभिभवो न कारणमुच्यते इति? नोच्यते—

अभिव्यक्तौ चाभिभवात्। यदुद्भूतरूपं बाह्यप्रकाशानुग्रहणं च नापेक्षते तदभिभूयते

## न्यायवार्त्तिकतात्पर्यटीका

व्यक्तितः अनुद्भूतेरित्यर्थः। अत्र हेतुः बाह्यप्रकाशानुग्रहाद्विषयोपलब्धेः; विषयश्च स्वरूपमात्मनोऽन्यच्च। एतदुक्तं भवति—यदुपलब्धौ बाह्यप्रकाशमनुग्राहकमपेक्षते तस्यानुद्भूतेरेवानुपलब्धिर्न त्वभिभूतेः यथा हेमन्ते विपक्वावयवस्याऽऽप्यस्य द्रव्यस्य। आप्यं हि द्रव्यं विपक्वावयवं स्वविषयोपलब्धौ बाह्यप्रकाशानुग्रहमपेक्षमाणं दृष्टम्, चक्षुरपि च विषयोपलब्धौ बाह्यप्रकाशमपेक्षते निरालोके तस्याप्रवृत्तेः। तस्माद् विषयोपलब्धौ बाह्यप्रकाशापेक्षत्वात्तदनुद्भूत्या न प्रतीयते न पुनरभिभूत्येति सिद्धं प्रकृतम्।

तदेतद्वार्त्तिककारो व्याचष्टे—तस्य विद्यमानस्येति ॥ ४२ ॥

तमिमं विशेषं मध्यन्दिनोल्काप्रकाशादावविद्वान् पृच्छति—कस्मात्पुनर्नायनस्येति। अत्रोत्तरम्—

अभि—वात् (सू० ४३) ॥ (क)अभिभवनीयस्वरूपमाह—यदुद्भूतरूपमिति। तद्वैधर्म्यमनु-

(१) 'प्रकाशानुग्रहमपेक्षते'—इति-क-ख-धृतपाठान्तरम्।
(२) 'विपक्वावयवस्याप्यस्य द्रव्यस्य' इति ख।
(क) क-ख-तात्पर्यपुस्तकयोः 'अभिभवनीयस्य' रूपम् इति मुद्रणं शोधितम्।

## न्यायभाष्यम्

नुपलभ्यमानं बाह्यप्रकाशानुग्रहाच्चोपलभ्यमानं नाभिभूयत इति। एवमुपपन्नम् अस्ति चाक्षुषो रश्मिरिति ॥ ४३ ॥

## न्यायवार्त्तिकम्

यथा मध्यन्दिनोल्काप्रकाशः। अनुद्भूतरूपश्च नायनो रश्मिर्बाह्यप्रकाशानुग्रहणं चापेक्षते। यदनुद्भूतरूपं तन्नाभिभूयते यथा तदेव विषक्तावयवमाप्यं द्रव्यम्। यच्च बाह्यप्रकाशानुग्रहापेक्षम् उद्भूतरूपमपि तन्नाभिभूयते यथा घटादिद्रव्यमिति। सोऽयमुभयविषयोऽभिभवो नायनरश्मावनुपपन्न इति विप्रतिपत्तिविषयः कृष्णसारं (क)रश्मिमत् द्रव्यत्वे सति रूपोपलब्धौ नियतस्य साधनाङ्गस्य निमित्तत्वात् प्रदीपवदिति। अथवा रश्मिमच्चक्षुः द्रव्यत्वे सति नियतत्वे च सति स्फटिकादिव्यवहितार्थप्रकाशकत्वात् प्रदीपवत् ॥ ४३ ॥

## न्यायवार्त्तिकतात्पर्यटीका

द्भूतरूपस्याऽऽह—अनुद्भूतरूपश्चेति। अनुद्भूतरूपस्याभिभवाभावे निदर्शनमाह—यदनुद्भूतरूपमिति। बाह्यप्रकाशानुग्रहापेक्षस्य चाभिभवाभावे निदर्शनमाह—यच्च बाह्यप्रकाशानुग्रहापेक्षमिति। कृष्णसारं रश्मिमदित्युच्यमाने प्रसन्नान्धस्यापि कृष्णसारं रश्मिमत्साध्येत तथा चापसिद्धान्त इत्यत आह—विप्रतिपत्तिविषय इति। तेन विप्रतिपत्तिविषयः कृष्णसारं रूपं च रश्मिमदिति साध्यनिर्देशः। उपलब्धौ निमित्तत्वादित्युच्यमाने गन्धादिभिरनैकान्तिकं स्यादत उक्तम्—रूपोपलब्धाविति रूपसाक्षात्कार इत्यर्थः। तथाऽपि सन्निकर्षादिभिरनैकान्तिकमत उक्तम्—द्रव्यत्वे सतीति। तथाऽपि मनसाऽनैकान्तिकमत उक्तम्—नियतस्य साधनाङ्गस्येति। असाधारणस्य साधनाङ्गत्वे सतीति। मनसस्तु साधारणस्य साधनाङ्गस्य रूपोपलब्धौ निमित्तत्वम्। साधनं समुदायस्तदङ्गमवयवः। अथ वे।। द्रव्यत्वे सति नियतत्वे चार्थप्रकाशकत्वादित्युच्यमाने घ्राणादिभिरनैकान्तिकं स्यादत उक्तम्—स्फटिकादिव्यवहितेति ॥ ४३ ॥

## वृत्तिः

ननु चक्षुषो नाभिभवः किं तु तद्रूपस्य, तस्य च प्रत्यक्षजनकत्वे मानाभावः, किं चाभिभवात् तस्य न प्रत्यक्षमितरप्रत्यक्षजनने च विरोधाभाव इत्याशङ्कायामाह—( अभिव्यक्तौ चाभिभवात् )।

रूपस्य अभिव्यक्तौ प्रत्यक्षे उद्भूतत्वे इति यावत्। उद्भूतरूपस्य प्रत्यक्षाभावे ह्यभिभवकल्पना, न त्वेवं प्रकृते। सुवर्णादिवत् सर्वदाऽभिभावकद्रव्यान्तरकल्पने च गौरवमिति भावः ॥ ४२ ॥

( क ) रश्मिमदित्यत्र 'रश्मिवत्' इति सम्भाव्यते, एवमुत्तरत्र, तथा तात्पर्यटीकायामपि।

## (सू०)—नक्तञ्चरनयनरश्मिदर्शनाच्च ॥ ४४ ॥

### न्यायभाष्यम्

दृश्यन्ते हि नक्तं नयनरश्मयो नक्तञ्चराणां वृषदंशप्रभृतीनाम्, तेन शेषस्यानुमानमिति । (१)जातिभेदवदिन्द्रियभेद इति चेत् ? (२)धर्मभेदमात्रं चानुपपन्नमावरणस्य प्राप्तिप्रतिषेधार्थस्य दर्शनादिति ॥ ४४ ॥

### न्यायवार्त्तिकम्

नक्तञ्चरनयनरश्मिदर्शनाच्च इति दृष्टान्तसूत्रम् । मानुषं चक्षू रश्मिमत् अप्राप्तिस्वभावत्वे सति रूपाद्युपलब्धिनिमित्तत्वात् नक्तञ्चरचक्षुर्वदिति । (क)जातिभेदवदिन्द्रियभेद इति चेत्—अथ मन्यसे यथा विडालत्वं जातिर्वृषदंशे वर्त्तते न मनुष्ये एवं रश्मिमद् विडालस्यैव चक्षुर्भविष्यति न मानुषस्येति ? नावरणसामर्थ्यात्—सत्येतस्मिन् जातिभेदे यथा वृषदंशप्रभृतीनां कुड्यादिभी रश्मय आव्रियन्ते तथा मनुष्याणामपीति समानमेवेति । इतश्च भौतिकानीन्द्रियाणि प्रतिघातित्वात् (३) घटादिवदिति, भूतं श्रोत्रं द्रव्यत्वे सति बाह्यप्राप्तार्थप्रकाशकत्वात् घ्राणादिवदिति ॥ ४४ ॥

### न्यायवार्त्तिकतात्पर्यटीका

नक्त—च्च (सू० ४४)॥ मानुषं चक्षू रश्मिमदिति । रूपाद्युपलब्धिनिमित्तत्वादिति सावधारणं रूपादीनामेवेति, तेन न मनसाऽनैकान्तः । तथाऽपि सन्निकर्षेणानैकान्त इत्यत उक्तम्—अप्राप्तिस्वभावत्व इति । इतश्च भौतिकानीन्द्रियाणि चक्षूरसनत्वग्घ्राणानीत्यर्थः । तथाऽपि श्रोत्रस्य रूपं न ज्ञायते कीदृशं तदित्यत आह—भूतं श्रोत्रम् । अर्थप्रकाशकत्वादित्युच्यमाने मनसाऽनैकान्तिकमत आह—प्राप्तेति । न हि रूपादिभिः सहास्ति मनसः प्राप्तिः तथाऽपि मनस्येवानैकान्तः, आन्तरं हि सुखादि मनः प्राप्य प्रकाशयत्यत आह—बाह्येति । तथाऽपि सन्निकर्षादृष्टादिभिरनैकान्तोऽत आह—द्रव्यत्वे सतीति ।

शङ्काभाष्यम्—जातिभेदवदिन्द्रियभेद इति चेत् । निराकरोति—धर्मभेदमात्रं चानुपपन्नम् । वृषदंशनयनस्य रश्मिमत्त्वं मानुषनयनस्य तु न तत्त्वमिति योऽयं धर्मभेदः स एव मात्रम्, तच्चानुपपन्नम् । चोऽवधारणे भिन्नक्रमः । अनुपपन्नमेवेति योजना । कुतोऽनुपपन्नमित्यत्र हेतुमाह—आवरणस्येति । यथा हि धूमवत्त्वं पर्वते रसवत्यां चान्यत् तथाऽप्येष विशेषोऽस्याग्निमत्त्वानग्नित्वे प्रत्यप्रयोजकः । एवं विडालत्वमनुष्यत्वे अप्रयोजके इत्यर्थः ॥ ४४ ॥

---

(१) 'जातिभेदादिन्द्रिय'—टि० । (२) 'धर्ममात्रभेदे च' इति टि० । (३) 'घटवदितिवत्' इति क-ख-वार्त्तिकपुस्तकयोर्मुद्रितम्, तच्च तत्र धृतपाठान्तरं गृहीतम् ।

(क) 'जातिभेदादिन्द्रियप्रभेदः' इति क-ख-वार्त्तिकपाठः शोधितः ।

## न्यायभाष्यम्

इन्द्रियार्थसन्निकर्षस्य ज्ञानकारणत्वानुपपत्तिः। कस्मात् ?

**(सू०)—अप्राप्य ग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ॥ ४५ ॥**

तृणादि सर्पद् द्रव्यं काचे (क) अभ्रपटले वा प्रतिहतं दृष्टम्, (१)अव्यवहितेन सन्निकृष्यते व्याहन्यते वै प्राप्तिर्व्यवधानेनेति। यदि च रश्म्यर्थसन्निकर्षो ग्रहणहेतुः स्यात् न व्यवहितस्य सन्निकर्ष इत्यग्रहणं स्यात्। अस्ति चेयं काचाभ्रपटलस्फटिकान्तरितोपलब्धिः सा ज्ञापयति अप्राप्यकारीणीन्द्रियाणि(ख) अत एवाभौतिकानि, प्राप्यकारित्वं हि भौतिकधर्म इति ॥ ४५ ॥

## न्यायवार्त्तिकम्

(ग) रश्म्यर्थसन्निकर्षग्रहणात्तद्ग्रहणमयुक्तम्, अन्यथाऽपि ग्रहणात्—

अप्राप्य ग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः। तृणादि सर्पद् द्रव्यं काचेऽभ्रपटले वा प्रतिहन्यते। यदि चाक्षुषो रश्मिः प्राप्तार्थप्रकाशकः स्यात् (घ) काचाभ्रपटलस्फटिकान्तरिते प्रकाशको न स्यात्। अस्ति तु। तस्मान्न प्राप्यकारि चक्षुरिति। अत एवाभौतिकं प्राप्यकारित्वं न—भौतिकधर्म इति ॥४९॥

## न्यायवार्त्तिकतात्पर्यटीका

अप्रा—ब्धेः ( सू० ४९ )॥ (ङ)

## वृत्तिः

चक्षुषि प्रमाणान्तरमाह—( नक्तञ्चरनयनरश्मिदर्शनाच )।

नक्तञ्चराणां वृषदंशादीनां गोलके रश्मिदर्शनात्। तद्दृष्टान्तेन परेषामपि रश्म्यनुमानमिति भावः। अन्यथा तमसि तस्य प्रत्यक्षं न स्यात् इति हृदयम् ॥ ४३ ॥

अप्राप्यकारित्वं चक्षुषः स्यादित्याशङ्कते—( अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः )।

---

(१) 'न व्यवहितेन' इति टि०।

(क) मेघावृतस्य चन्द्रादेरनुपलब्धेरभ्रपदमत्र तदाख्यया प्रसिद्धस्य धातुविशेषस्य बोधकमिति सम्भाव्यते, अत एव पटलपदमपि सार्थकम् भूर्जत्वग्वत् तस्य संहतस्यैवोपलम्भादिति वदन्ति। (ख) चक्षुषोऽप्राप्यकारित्वपक्षसमर्थनं रत्नाकरावतारिकायां द्रष्टव्यम्। (ग) रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम्। ( ३४ सू० १ आ, ३अ ) इति सूत्रम्। अत्र विशेषादित्यत्र ग्रहणादिति प्रमादाद् मुद्रितं सम्भाव्यते। (घ) 'काचाभ्रपटलेकान्तरिते' इति क-ख-पुस्तकयोः प्रमादान्मुद्रितम्। (ङ) ४५-तमसूत्रस्य तात्पर्यटीका नोपलभ्यते।

### न्यायभाष्यम्

## (सू०)—कुड्यान्तरितानुपलब्धेरप्रतिषेधः(क) ॥ ४६ ॥

अप्राप्यकारित्वे सतीन्द्रियाणां कुड्यान्तरितस्यानुपलब्धिर्न स्यात् ॥ ४६ ॥

प्राप्यकारित्वेऽपि तु काचाभ्रपटलस्फटिकान्तरितोपलब्धिर्न स्यात् ?

## (सू०)—अप्रतीघातात्सन्निकर्षोपपत्तिः ॥ ४७ ॥

न च (१) काचोऽभ्रपटलं वा नयनरश्मिं विष्टभ्नाति सोऽप्रतिहन्यमानः सन्निकृष्यत इति ॥ ४७ ॥

### न्यायवार्त्तिकम्

न

कुड्यान्तरितानुपलब्धेरप्रतिषेध इति । अप्राप्यकारित्वे इन्द्रियस्य न कुड्याद्यावरणसामर्थ्यमस्तीत्युक्तम् । शेषं भाष्ये ॥४६॥

अप्रतिघातात् सन्निकर्षोपपत्तिः । न काचोऽभ्रपटलं वा रश्मिं प्रतिबध्नाति, सोऽप्रतिहन्यमानो व्यतिभिद्यार्थेन सम्बध्यते ॥४७॥

### न्यायवार्त्तिकतात्पर्यटीका

कुड्या—धः ( सू० ४६ ) ॥ (ख)

अप्र—त्तिः ( सू० ४७ ) ॥

सोऽप्रतिहन्यमान इति । स रश्मिः अप्रतिहन्यमानः काचेन काचं व्यतिभिद्यार्थेन संबध्यते काचान्तर्गतेन ॥ ४७ ॥

### वृत्तिः

समाधत्ते—( कुड्यान्तरितानुपलब्धेरप्रतिषेधः ) ।

परे तु उक्तसूत्रस्य पूर्वपक्षपरत्वं मन्यमानस्य भाष्यकारस्यावतरणिका 'अप्राप्यग्रहणम्' इति ।

वस्तुतः सिद्धान्तसूत्रमेव तत्, प्रदीपदृष्टान्तेन काचाद्यन्तरितप्रकाशकत्वेन तैजसत्वं सिध्यतीति ।

नन्वप्राप्यकारित्वमेव किं न स्यादत्राऽऽह—कुड्येति ।

उक्तस्य तैजसत्वस्य प्रतिषेधो गोलकात्मकत्वं न सम्भवति कुड्यान्तरितस्यानुपलब्धेरित्याहुः ॥ ४५ ॥

---

(१) 'काचाभ्रपटलम्' इति टि० ।

(क) ल-ज-पुस्तकयोः 'न कुड्यान्तरितानुपलब्धेरप्रतिषेधः' इति सूत्रपाठो दृश्यते । ग- पुस्तके 'न' इति 'भौतिकधर्म इति' इति भाष्यतः परं मुद्रितम् । वार्त्तिकेऽपि सूत्रात् पूर्वं नकारो दृश्यते । फ-भा-वि-टि-पुस्तकेषु 'न'कारः सर्वथा परित्यक्तः । न्यायसूचीनिबन्धसम्मतपाठस्तु गृहीतः ।

(ख) ४६-तमसूत्रे तात्पर्यटीका नोपलभ्यते ।

## न्यायभाष्यम्

यश्च मन्यते न भौतिकस्याप्रतिघात इति (१) तन्न—

(सू०)—(२)आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात् ॥ ४८ ॥

(३)आदित्यरश्मेरविघातात् स्फटिकान्तरितेऽप्यविघातात्, दाह्येऽविघातात्। अविघातादिति (४)च (५)पदाभिसम्बन्धाद् वाक्यभेद इति। (६)प्रतिवाक्यं चार्थभेद(६*) इति। आदित्यरश्मिः कुम्भादिषु न प्रतिहन्यते, अविघातात् कुम्भस्थमुदकं तपति। प्राप्तौ हि द्रव्यान्तरगुणस्य उष्णस्य स्पर्शस्य ग्रहणं तेन च शीतस्पर्शाभिभव इति। स्फटिकान्तरितेऽपि प्रकाशनीये प्रदीपरश्मीनामप्रतिघातः, अप्रतिघातात्प्राप्तस्य ग्रहणमिति। भर्जनकपालादिस्थं च द्रव्यमाग्नेयेन तेजसा दह्यते तत्राविघातात्प्राप्तिः, प्राप्तौ तु दाहो नाप्राप्यकारि तेज इति।

## न्यायवार्त्तिकम्

(७) यच्च मन्येत न भौतिकस्यास्त्यप्रतीघात इति सर्वं हि भौतिकं प्रतीघातधर्मकमिति, तन्न—

आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात्। न, आदित्यरश्मेरविघातात् स्फटिकान्तरितेऽप्यविघाताद् दाह्येऽप्यविघातात्। अविघातादिति पदाभिसम्बन्धाद्वाक्यभेदः। नैकं वाक्यमनेकार्थं प्रतिवाक्यं चार्थभेद इति। शेषं भाष्ये।

कोऽयमविघातः ? अव्युह्यमानावयवद्रव्यानुप्रवेशः—यस्य द्रव्यस्यावयवा न व्युह्यन्ते

## न्यायवार्त्तिकतात्पर्यटीका

आदि—तात् (सू० ४८)॥ वार्त्तिकम्—अव्युह्यमानावयवद्रव्यानुप्रवेश इति। यस्य

## वृत्तिः

ननु कुड्यान्तरित इव काचान्तरितेऽपि सन्निकर्षो न सम्भवतीति कथं प्राप्यकारित्वमित्याशङ्कायामाह—( अप्रतिघातात् सन्निकर्षोपपत्तिः )।

काचादिना स्वच्छद्रव्येणाप्रतिघाताद् अप्रतिबन्धात् सन्निकर्ष उपपद्यत इति भावः ॥ ४६ ॥

तत्र दृष्टान्तमाह—( आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात् )।

दाह्ये इति वस्तुमात्रोपलक्षणम्।

परे तु दाह्ये कपालादौ वह्न्यादेरविघातपरं तदित्याहुः ॥ ४७ ॥

---

(१) 'तन्न' इति टि-पु० नास्ति। (२) 'नाऽऽदित्यरश्मेः' इति वि-टि०। (३) 'नाऽऽदित्यरश्मे-' इति ग०। (४) 'च' इति फ-पुस्तके नास्ति। (५) 'पदादिसम्ब-' इति टि०। (६) 'यथावाक्यं चार्थभेदः प्रतिवाक्यं वाक्यार्थभेदः' इति ज०। (७) 'यच्च' इति क०।

## न्यायभाष्यम्

अविघातादिति च केवलं पदमुपादीयते, कोऽयमविघातो नाम ? अव्युह्यमानावयवेन व्यवधायकेन द्रव्येण सर्वतो द्रव्यस्याविष्टम्भः क्रियाहेतोरप्रतिबन्धः (१) प्राप्तेरप्रतिषेध इति(१*)। दृष्टं हि कलशनिषक्तानामपां बहिः शीतस्पर्शस्य ग्रहणम्। न चेन्द्रियेणासन्निकृष्टस्य द्रव्यस्य स्पर्शोपलब्धिः। दृष्टौ च (२)प्रस्पन्दपरिस्रवौ। तत्र काचाभ्रपटलादिभिर्नयनरश्मेरप्रतिघाताद् विभिद्यार्थेन सह सन्निकर्षादुपपन्नं ग्रहणमिति ॥ ४८ ॥

## न्यायवार्त्तिकम्

तस्यान्तरावयवैरव्युह्यमानस्य योऽभिसम्बन्धः सोऽविघात इति। अन्तर्व्यवस्थितस्य वा द्रव्यस्य (क) अव्युह्यमानावयवस्य बहिरवस्थितद्रव्यप्राप्तिः। दृष्टं कलशे निषक्तानामपां बहिः शीतस्पर्शग्रहणम्, न हि (३)गुणस्यास्वतन्त्रस्य (ख)गुणिनमन्तरेण बहिर्निर्गमनं युक्तमिति। तत्र (ग) परिस्पन्दः तिर्यग्गमनं परिस्रवः पात इति ॥ ४८ ॥

## न्यायवार्त्तिकतात्पर्यटीका

द्रव्यस्य भर्जनकपालादेः अवयवा न व्युह्यन्ते पूर्वोत्पन्नद्रव्यारम्भकसंयोगनाशेन द्रव्यान्तरजनकसंयोगोत्पादनं व्यूहनं (घ)तन्न क्रियन्ते तस्य द्रव्यस्य भर्जनकपालादेः अव्युह्यमानस्य अवयवव्यूहनमवयविनोऽपीति अव्युह्यमानस्येत्युक्तम्। (ङ)तस्य भर्जनकपालादेः अन्तरावयवैर्योऽभिसंबन्धः वह्नेः (च) सोऽप्रतिघातः। एतदुक्तं भवति—सान्तरत्वादवयविद्रव्याणां तदविनाशेनाग्नेर्योऽनुप्रवेशः सोऽप्रतिघात इति। प्रवेशेऽप्रतिघातमुक्त्वा निःसरणेऽप्यविघातमाह—अन्तर्व्यवस्थितस्य वा द्रव्यस्य मधूदकादेः बहिरवस्थितहस्तादिप्राप्तिः। तस्य कीदृशस्य बहिरित्यत आह—अव्युह्यमानावयवस्य (छ) कलशादेः तस्य बहिरिति ॥ ४८ ॥

---

(१) अयमंशः टि-पु० नास्ति। (२) 'प्रस्यन्दपरिस्रवौ' इति ज-वि-टि०। (३) 'गुणस्य द्रव्यतन्त्रस्य' क-ख-धृतपाठान्तरम्।

(क) 'अव्युह्यमानावयवस्य' इत्यत्र 'वाऽव्युह्यमानावयवद्रव्यस्य' इति क-ख-वार्त्तिकपाठः। (ख) 'द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्' इति काणादसूत्रेण (१६।१।१) गुणानां स्वातन्त्र्यं प्रतिषिद्धम्। (ग) भाष्ये 'प्रस्पन्द' इति बहुपुस्तकानुसारी पाठः। (घ) 'तदन्तो न क्रियन्ते' इत्येव पाठ इति प्रतिभाति। (ङ) 'तस्य भर्जनकपालादेः' इति पदद्वयमत्र 'अन्तरावयवैः' इत्यस्य सम्बन्धिवस्तुप्रदर्शनार्थं टीकाकृता उक्तमिति प्रतिभाति। (च) वार्त्तिके 'अविघातः' इति। (छ) 'मल्लकादे'रिति क-ख-तात्पर्यमुद्रणं शोधितम्।

(सू०)—(१)नेतरेतरधर्मप्रसङ्गात् ॥ ४९ ॥

न्यायभाष्यम्

काचाभ्रपटलादिवद्वा कुड्यादिभिरप्रतिघातः, कुड्यादिवद्वा काचाभ्रपटलादिभिः प्रतिघात इति प्रसज्यते, नियमे कारणं वाच्यमिति ॥ ४९ ॥

(सू०)—आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत् तदुपलब्धिः ॥ ५० ॥

आदर्शोदकयोः प्रसादो रूपविशेषः स्वो धर्मो नियमदर्शनात्, प्रसादस्य वा स्वो धर्मो रूपोपलम्भनम्। यथा आदर्शप्रतिहतस्य परावृत्तस्य नयनरश्मेः स्वेन मुखेन सन्नि-

न्यायवार्त्तिकम्

नेतरेतरधर्मप्रसङ्गात्। इतरधर्म इतरत्र (२) प्रसज्यते इतरधर्मश्चेतरत्र। यद्यविघातः चक्षूरश्मेः स्फटिकादिभिः, कुड्यादिभिरपि प्राप्नोति ; कुड्यादिभिर्वा प्रतीघातः, स्फटिकादिभिरपि प्राप्नोति ॥४९॥

नैष दोषः—

आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत् तदुपलब्धिः। आदर्शोदकयोः प्रसादो रूपविशेषः, स च स्वो भवति नियमात्। कः पुनरयं रूपविशेषः ? (३)द्रव्यान्तरासंपृक्तद्रव्यसमवायः, तस्य वा रूपोपलम्भनसामर्थ्यं स्वो धर्मः, स च स्वभावतः, तस्य या विद्यमानता

न्यायवार्त्तिकतात्पर्यटीका

नेत—ङ्गात् ( सू० ४९ ) ॥ (क)

आद—ब्धिः (सू० ५०) ॥ द्रव्यान्तरासंपृक्तद्रव्यसमवायः स्वच्छतेत्यर्थः।

वृत्तिः

आक्षिपति—( नेतरेतरधर्मप्रसङ्गात् )

अप्रतिघातो न युक्तः, इतरस्य स्फटिकादेः इतरस्य कुड्यादेर्यो धर्मः प्रतिघातकत्वं तत्प्रसङ्गात्। स्फटिकादिकमपि कुड्यादिवत् प्रतिबन्धकं भवेदित्यर्थः ॥ ४८ ॥

समाधत्ते—( आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत् तदुपलब्धिः )

(१) 'नेतरेतरं धर्म-' इति टि०। (२) 'प्रयुज्यते'—इति ख०। (३) 'द्रव्यान्तरासंयुक्त'—इति क-ख०।

(क) ४९तम-सूत्रे तात्पर्यटीका नास्ति।

## न्यायभाष्यम्

कथं सति स्वमुखोपलम्भनं प्रतिबिम्बग्रहणाख्यमादर्शरूपानुग्रहात् तन्निमित्तं भवति, आदर्शरूपोपघाते तदभावात्, कुड्यादिषु च प्रतिबिम्बग्रहणं न भवति एवं काचाभ्रपटलादिभिरविघातश्चक्षूरश्मेः कुड्यादिभिश्च प्रतिघातो द्रव्यस्वभावनियमादिति ॥५०॥

## (सू०)—दृष्टानुमितानां (१)हि नियोगप्रतिषेधानुपपत्तिः ॥५१॥

प्रमाणस्य तत्त्वविषयत्वात्। न खलु भोः परीक्षमाणेन दृष्टानुमिता अर्थाः शक्या

## न्यायवार्त्तिकम्

उदकादिषु तत् स्वाभाव्यम्। प्रसादस्वभावत्वाद् आदर्शोदकादिषु नयनरश्मिः प्रतिहन्यते, स च प्रतिहतः प्रतिनिवृत्तौ स्वमुखादिना सम्बध्यते, तस्य चाग्रसम्बन्धाद् यदभिमुखमग्रं तदभिमुखं मुखादि पश्यतीति यथा अग्रतोऽवस्थितस्य पुरुषस्येति। आदर्शमुखग्रहणमनुक्रमेण, तदप्याशुभावान्न विभाव्यते (२)आदर्शरूपानुग्रहात् तदनुरञ्जितः प्रत्ययः। शेषं भाष्ये ॥५०॥

दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः। 'प्रमाणस्य तत्त्वविषयत्वात्'। दृष्टानुमिताः खल्विमे द्रव्यधर्मा यथाभूता भवन्ति तथाभूता एव प्रमाणेन प्रतिपाद्यन्ते, इमौ च भवता

## न्यायवार्त्तिकतात्पर्यटीका

प्रसङ्गात् प्रतिबिम्बभ्रमोत्पादक्रममाह—(क)आदर्शादिष्विति। यदभिमुखमग्रमिति। द्रष्टुः पुरुषस्याभिमुखं नयनरश्मेः परावृत्तस्याग्रं तदभिमुखं मुखादि पश्यति। सारूप्यनिबन्धनत्वाद्विभ्रमाणां सारूप्यमिहाप्याह—यथाऽग्रतोऽवस्थितस्य पुरुषस्य मुखं लोचनरोचिरग्रसंबद्धमभिमुखम् एवमेतदिति। नन्वादर्शप्रतिहतश्चेद् नयनरश्मिः परावृत्तः कथं पश्चादभिमुखविभ्रमहेतुः? हन्त भोः पातमात्रादादर्शज्ञानेन भवितव्यं पश्चात् प्रतिबिम्बविभ्रमेण न चैवमस्ति यौगपद्यप्रतिभासादित्यत आह—आदर्शेति। कुतस्तर्हि मणिकृपाणादेर्दर्पणतलेषु नानानिर्भासः प्रतिबिम्बावभास इत्यत आह—आदर्शरूपानुग्रहादिति ॥५०॥

## वृत्तिः

आदर्शे उदके च प्रसादस्वाभाव्यात् स्वच्छस्वभावत्वात् मुखादिरूपोपलब्धिर्न तु भित्त्यादौ। एवं स्फटिकाद्यन्तरितस्योपलब्धिर्न तु कुड्याद्यन्तरितस्येति स्वाभाव्यान्न दोषः।

एतेन वह्न्यादेर्घटादिनाऽप्रतिघातवच्चक्षुषोऽपि प्रतिघातो न स्यादिति प्रत्युक्तम्, वह्न्याद्यप्रतिबन्धेऽपि दीपालोकादेः प्रतिबन्धसम्भवादिति भावः ॥ ४९ ॥

चक्षुषस्तादृशत्वकल्पने किं मानमित्यत्राऽऽह—( दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः )

(१) 'हि' इति ख-ग-ज-झा-पुस्तकेषु नास्ति। (२) 'आदर्शरूपानुग्रहणात्' इति क-ख०।
(क) वार्त्तिके 'आदर्शोदकादिषु' इति विशेषः।

## न्यायभाष्यम्

नियोक्तुमेवं भवतेति, नापि प्रतिषेद्धुम् (१) एवं न भवतेति। न हीदमुपपद्यते रूपवद् गन्धोऽपि चाक्षुषो भवत्विति, गन्धवद्वा रूपं चाक्षुषं मा भूदिति, अग्निप्रतिपत्तिवत(१*) धूमेनोदकप्रतिपत्तिरपि भवत्विति, उदकाप्रतिपत्तिवद्वा धूमेनाग्निप्रतिपत्तिरपि मा भूदिति। किं कारणम्? यथा खल्वर्था भवन्ति य एषां स्वो भावः स्वो धर्म इति तथा-भूताः प्रमाणेन प्रतिपद्यन्ते इति। (२)तथाभूतविषयकं हि प्रमाणमिति। इमौ खलु नियोगप्रतिषेधौ भवता देशितौ काचाभ्रपटलादिवद्वा कुड्यादिभिरप्रतिघातो भवतु कुड्यादिवद्वा काचाभ्रपटलादिभिरप्रतिघातो मा भूदिति। न, दृष्टानुमिताः खल्विमे द्रव्यधर्माः, प्रतिघाताप्रतिघातयोर्ह्युपलब्ध्यनुपलब्धी व्यवस्थापिके। व्यवहितानुपलब्ध्या-ऽनुमीयते कुड्यादिभिः प्रतिघातः, व्यवहितोपलब्ध्याऽनुमीयते काचाभ्रपटलादिभि रप्रतिघात इति॥ ५१॥

## न्यायवार्त्तिकम्

नियोगप्रतिषेधौ देशितौ क्व विषये स्याताम्, न चैतद् युक्तम्। न हि यथा धूमेनाग्निप्रतिपत्ति-स्तथोदकप्रतिपत्तिरपि भवत्विति, न चोदकप्रतिपत्तिर्धूमेन भवतीत्यग्निप्रतिपत्तिरपि (क) न युक्ता। अर्थान्नियुञ्जानो भवाननुपेक्षणीयः। प्रतिघाताप्रतिघातयोः खलूपलब्ध्यनुपलब्धी व्यवस्थापिके— व्यवहितोपलब्ध्याऽनुमीयते स्फटिकादिभिरप्रतीघातः व्यवहितानुपलब्ध्या च कुड्यादिभिः प्रतीघात इति। यदि प्राप्यकारि चक्षुर्भवति अथ कस्मादञ्जनशलाकादि नोपलभ्यते? (३) नेन्द्रियेणा-सम्बन्धात्—इन्द्रियेण सम्बद्धा अर्था उपलभ्यन्ते न चाञ्जनशलाकादीन्द्रियेण सम्बद्धम् अधिष्ठा-नस्यानिन्द्रियत्वात्। रश्मिरिन्द्रियं नाधिष्ठानम्, न रश्मिना(ख)अञ्जनशलाका सम्बद्धेति॥ ५१॥

( इति इन्द्रियभौतिकत्वपरीक्षाप्रकरणम्। )

## न्यायवार्त्तिकतात्पर्यटीका

दृष्टा—त्तिः (सू० ५१)॥ (ग)

## वृत्तिः

हि यस्माद् दृष्टानामनुमितानां वा पदार्थानाम्, दृष्टेनानुमितानामिति वाऽर्थः, तेषामेवं भवतेति नियोगः, एवं मा भवतेति प्रतिषेधो वा नोपपद्यते, युक्त्यनुसारिणी हि कल्पनेति भावः॥ ५०॥

समाप्तमिन्द्रियपरीक्षाप्रकरणम्॥ ७॥

---

(१) अयमंशः टि-पु० नास्ति। (२) 'यथाभूताविषयकम्' इति वि०। (३) 'नेन्द्रियाणामस-म्बन्धात्'—इति क-ख-धृतपाठान्तरम्।

(क) न युक्तेति अत्रापि न हीति सम्बध्यते अथवा न युक्तेति काक्वा युक्तैवेत्यर्थः। (ख) शलाकापदमत्र शलाकाकार्यरेखाया लक्षकमिति बोध्यम्। (ग) ५१तम-सूत्रे तात्पर्यटीका नोपलभ्यते।

## न्यायभाष्यम्

अथापि खल्वेकमिदमिन्द्रियं बहूनीन्द्रियाणि वा ? कुतः संशयः ?

**(सू०)—स्थानान्यत्वे (१)नानात्वादवयविनानास्थानत्वाच्च संशयः ॥ ५२ ॥**

बहूनि द्रव्याणि नानास्थानानि दृश्यन्ते, नानास्थानश्च सन्नेकोऽवयवी चेति। तेनेन्द्रियेषु भिन्नस्थानेषु संशय इति ॥ ५२ ॥

## न्यायवार्त्तिकम्

एवं तावद् भौतिकानीन्द्रियाणीति समर्थितम्। किं पुनरेकमिन्द्रियम् आहो अनेकमिति ? एके तु—

स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः। एके तु स्थानान्यत्वे नानात्वं दृष्टं यथा बहूनां घटानामिति। एकस्य च नानास्थानत्वं यथाऽवयविन इति। अनुपपन्नरूपश्चायं संशयः। कथमिति ? यदि तावदेवं क्रियते स्थानान्यत्वे नानात्वैकत्वदर्शनादिति ? तदैकत्वे (२)स्थानान्यत्वस्यादर्शनान्न समानधर्मः। अथ नानास्थानत्वे सत्येका-

## न्यायवार्त्तिकतात्पर्यटीका

संप्रति तेषामेवेन्द्रियाणामेकानेकत्वे परीचिक्षिषुः संदिग्धे—अथापि खल्वेकमिति। प्रश्नपूर्वकं सूत्रमवतारयति—कुतः संशयः।

स्थाना—यः (सू० ५२)॥ तत्र केचिदिदं सूत्रं भाष्यमतानपेक्षं यथाश्रुति व्याचक्षते। तद्दूषणपुरःसरं भाष्यव्याख्यानं ग्रहीतुं यथाश्रुति व्याख्यानं परेषां सूत्रपाठपूर्वकमुपन्यस्यति—एके त्विति। दूषयति—अनुपपन्नरूपश्चायमिति। अत्र हि यथाश्रुति स्थानान्यत्व इति निमित्तसप्तम्या नानात्वस्य बीजं स्थानान्यत्वमुक्तं न त्वेकत्वस्येति। एकत्वस्य तु बीजं नानास्थानत्वं यथोक्तम्। अवयविनानास्थानत्वादिति, अवयवीत्येकत्वमुपलक्षयति। स्थानान्यत्वं च स्थानस्यान्यत्वमुच्यते, नानास्थानत्वं च नानास्थानानि यस्येत्यन्यपदार्थः स्थानान्यत्वादन्यः ; न तु धर्मद्वयं साक्षात्संशयकारणमित्येकतरस्यैकानेकसाधारण्यं वाच्यम्। तत्र यदि तावदेवं क्रियते—संशयः स्थानान्यत्वे नानात्वैकत्वदर्शनादिति, तदा सूत्रार्थालोचनेन एकत्वे स्थानान्यत्वस्यादर्शनान्न समानधर्मः, सूत्रं खल्वेकत्वे नानास्थानत्वमाह न स्थानान्यत्वम्। अनेकत्वमात्रे हि तदुक्तं सूत्रकारेण स्थानान्यत्वे नानात्वादिति। अथ नानास्थानत्वे सत्येकत्वानेकत्व-

## वृत्तिः

दर्शनस्पर्शनाभ्यामित्यादिकमिन्द्रियनानात्वे युज्यते इत्युपोद्घातेनेन्द्रियनानात्वं परीक्षणीयम्, तत्र संशयमाह—( स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः )

(१) 'अवयविनानात्वात्' इति ज०। (२) 'स्थाननानात्वस्य'—इति क-ख-पुस्तकपाठान्तरम्।

## न्यायवार्त्तिकम्

नेकत्वदर्शनात् संशय इति, तदा द्रव्यं नानास्थानमनेकं न किञ्चिद् दृष्टमिति न समानधर्मत्वम्। यद् घटाद्यनेकं तन्न नानास्थानम् अपि तु (१) स्थानान्यत्वं तस्य, सोऽयं संशय उभयथाऽनुपपन्न इन्द्रियेषु। स्थानेषु तु युक्तः, किं नानास्थानानि उत नानास्थानम्? इन्द्रियेषु तु न स्थाननानात्वात् सम्भवति न च नानास्थानत्वादिति। शरीरव्यतिरेकित्वात् सत्त्वाच्च संशयः— शरीरव्यतिरिक्तमुभयथा दृष्टमेकमनेकं च यथाकाशं घटादि च। सच्चोभयथा दृष्टमेकमनेकं च। तदेवमुभयथेन्द्रियेषु शरीरव्यतिरेकः सत्त्वं च, तेन सन्दिह्यते ॥ ९२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

दर्शनात् संशय इति? एतद् दूषयति—तदा द्रव्यं नानास्थानमनेकं न किंचिद् दृष्टम् (क)। अवयविनानास्थानत्वादिति सूत्रं नानास्थानत्वेनैकत्वमाह न तु नानात्वमपि। यत् पुनर्घटाद्यनेकं न तन्नानास्थानमुक्तं सूत्रकृता, अपि तु स्थानान्यत्वं सूत्रकृतोक्तं स्थानान्यत्वे नानात्वादित्यनेन। दूषणमुपसंहरति—सोऽयं संशय उभयथाऽनुपपन्न इन्द्रियेषु (ख) यथाश्रुतसूत्रपरिग्रहेण। 'उभयथा' स्थानान्यत्वेन नानास्थानत्वेन चेत्यर्थः। तदेवं परव्याख्यानं दूषयित्वा भाष्यकारीयस्य व्याख्यानस्य युक्तत्वमाह—स्थानेषु तु युक्तः। स्थानेष्विति निमित्तसप्तमी। नानास्थानत्वनिमित्त इन्द्रियेष्वेकत्वानेकत्वसंशयो युक्तः। नानास्थानं खल्वेकमवयविद्रव्यं दृष्टमनेकं च भिन्नभाजनगतं फलमिति। इन्द्रियविषयं नानास्थानत्वनिमित्तकं संशयमाह—किं नानास्थानानि इन्द्रियाणि उत नानास्थानम् एकमिन्द्रियमिति। तदिदमुक्तं भाष्यकारेण— बहूनि द्रव्याणि नानास्थानानि दृश्यन्ते नानास्थानश्च सन्नेकोऽवयवी च (ग)। तेनेन्द्रियेषु भिन्नस्थानेषु संशय इति। सूत्रेऽपि स्थानान्यत्वे इत्यनेन नानास्थानत्वमेवोपलक्षणीयमित्यविरोधः। यथाश्रुतस्तु न सूत्रार्थ इत्याह—इन्द्रियेषु तु न स्थाननानात्वात् संभवति न च नानास्थानत्वादिति। किं त्विन्द्रियविषयो नानास्थानत्वादेव संशयो भाष्यकारीयः साधीयानित्यर्थः। तदेवं परोक्तं संशयबीजं दूषयित्वा भाष्यकारीयं संशयबीजं दर्शयित्वा वार्त्तिककारः स्वातन्त्र्येण संशयबीजमाह—शरीरव्यतिरेकित्वात् सत्त्वाच्च संशय इति ॥९२॥

## वृत्तिः

स्थानान्यत्वे स्थानभेदे घटपटादीनां नानात्वदर्शनात् नानावयवस्थितस्यावयविन एकत्वदर्शनाच्च इन्द्रियाणां नानात्वमेकत्वं वेति संशयः ॥ ५१ ॥

---

(१) 'स्थाननानात्वं'—इति क-ख-धृतपाठान्तरम्।
(क) अतः परं क-ख-तात्पर्यपुस्तकयोरुपलभ्यमानं 'सूत्रम्' इति लिपिप्रमादादागतमिति सम्भाव्यते।
(ख) 'यथाश्रुतसूत्रपरिग्रहणे' इति समीचीनतया सम्भाव्यते।
(ग) भाष्यगतः 'इति'शब्दो न गृहीतः।

## न्यायभाष्यम्

एकमिन्द्रियम्—

**(सू०)—त्वगव्यतिरेकात् ॥ ५३ ॥**

(१)त्वगेकमिन्द्रियमित्याह। कस्मात्? अव्यतिरेकात्। न त्वचा किञ्चिदिन्द्रियाधिष्ठानं न प्राप्तम्, न चासत्यां त्वचि किञ्चिद्विषयग्रहणं भवति, यया सर्वेन्द्रियस्थानानि व्याप्तानि यस्यां च सत्यां विषयग्रहणं भवति सा त्वगेकमिन्द्रियमिति (क)।

नेन्द्रियान्तरार्थानुपलब्धेः। स्पर्शोपलब्धिलक्षणायां सत्यां त्वचि गृह्यमाणे त्वगिन्द्रियेण स्पर्शे इन्द्रियान्तरार्था रूपादयो न गृह्यन्ते अन्धादिभिः। न स्पर्शग्राहकात् (२)इन्द्रियादिन्द्रियान्तरमस्तीति स्पर्शवदन्धादिभिर्गृह्येरन् रूपादयः, न च गृह्यन्ते तस्मान्नैकमिन्द्रियं त्वगिति।

## न्यायवार्त्तिकम्

एकमिन्द्रियम्। किं पुनस्तत्?

त्वगव्यतिरेकात्। कः पुनरयमव्यतिरेकः? सर्वाधिष्ठानसम्बन्धः—(ख)नहि किञ्चिदिन्द्रियं न त्वचा प्राप्तम्। सति भावो वा—न ह्यसत्यां त्वचि किञ्चिदर्थग्रहणं भवति। तस्मात् त्वगेकमिन्द्रियम्।

'नेन्द्रियान्तरार्थानुपलब्धे'रिति लोकविरोधः—एकमिन्द्रियमिति ब्रुवाणो लोकं विरुणद्धि। विद्यमाने त्वगिन्द्रिये (ग) स्पर्शोपलब्धिप्रसङ्गः, इन्द्रियान्तरार्था रूपादयोऽन्धादिभिरुपलभ्येरन् न तूपलभ्यन्ते तस्मान्नैकमिन्द्रियमिति। यदप्यव्यतिरेकादिति, तदपि न अनेकान्तात्—अनेकेन

## न्यायवार्त्तिकतात्पर्यटीका

पूर्वपक्षं गृह्णाति—

त्वग—कात् (सू० ५३) ॥ कः (घ) पुनरव्यतिरेक इति, घटादिप्राप्तं चक्षुस्त्वचो व्यतिरिच्यत एवेति भावः। उत्तरम्—सर्वाधिष्ठानसंबन्ध इति। सौत्रस्याव्यतिरेकशब्दस्य व्याख्यानान्तरमाह—सति भावो वेति। तदनेन यस्यां च सत्यामिति भाष्यं व्याख्यातम्। वो विकल्पार्थः।

सिद्धान्तभाष्यम्—नेन्द्रियेति।

लोकविरोध इति। लोक्यते ज्ञायतेऽनेनेति लोकः प्रमाणम्, तद्विरोध इत्यर्थः। अनेकेन

---

(१) 'त्वगव्यतिरेकमिन्द्रियम्' इति टि०। (२) 'इन्द्रियात्' इति ज-पु० नास्ति।

(क) त्वङ्मात्रमिन्द्रियमिति प्राचीनसाङ्ख्यमतम्। तथाच 'परस्परविरुद्धश्चायं साङ्ख्यानामभ्युपगमः क्वचित् सप्तेन्द्रियाण्यनुक्रामन्ति' इति (२।२।१० सूत्र) शारीरकमीमांसाभाष्यव्याख्यायां भामती—'त्वङ्मात्रमेव हि बुद्धीन्द्रियमनेकरूपादिग्रहणसमर्थमेकम्' इति। (ख) 'नहि न किञ्चिद' इति क-ख-वार्त्तिकमुद्रणं प्रामादिकमिति शोधितम्। (ग) 'स्पर्शोपलब्धिवत्' इति समीचीनतया प्रतिभाति। 'स्पर्शोपलब्धिप्रसङ्गे' इति सप्तम्यन्तपाठस्वीकारे स्पर्शोपलब्धिप्रसक्तौ सत्यां तत्तुल्यवित्तिवेद्यतया रूपादयोऽप्युपलभ्येरन्नित्यर्थो बोध्यः।

(घ) 'पुनरयमि'ति वार्त्तिके विशेषः।

## न्यायभाष्यम्

त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः। यथा त्वचोऽवयवविशेषः कश्चिच्चक्षुषि सन्निकृष्टो धूमस्पर्शं गृह्णाति नान्यः, एवं त्वचोऽवयवविशेषा रूपादिग्राहकास्तेषामुपघातादन्धादिभिर्न गृह्यन्ते रूपादय इति।

व्याहतत्वादहेतुः। त्वगव्यतिरेकादेकमिन्द्रियमित्युक्त्वा 'त्वगवयवविशेषेण धूमोपलब्धिवद्रूपाद्युपलब्धि'रित्युच्यते। एवं च सति नानाभूतानि विषयग्राहकाणि विषयव्यवस्थानात् तद्भावे विषयग्रहणस्य भावात्तदुपघाते चाभावात्, तथा च पूर्वो वाद उत्तरेण वादेन व्याहन्यत इति।

सन्दिग्धश्चाव्यतिरेकः। पृथिव्यादिभिरपि भूतैरिन्द्रियाधिष्ठानानि व्याप्तानि, न च (१) तेष्वसत्सु विषयग्रहणं भवतीति। तस्मान्न त्वगन्यद्वा सर्वविषयमेकमिन्द्रियमिति ॥ ५३ ॥

## न्यायवार्त्तिकम्

चानिन्द्रियेण सर्वाणीन्द्रियाधिष्ठानानि पृथिव्यादिना प्राप्तानीत्यनेकान्तः।

अवयवोपघातादिति चेत्—अथ मन्येतैतत् त्वगवयवः कश्चिदुपहतो भवति तदुपघातादन्धादिभिर्नोपलभ्यन्ते रूपादय इति—यथा त्वगवयवविशेषेणैव धूमोपलब्धिः यश्चक्षुषि त्वगवयवविशेषस्तदुपघाताद् (२) धूमस्पर्शानुपलब्धिरिति ? न व्याघातात्—त्वगवयवविशेषेण धूमोपलब्धिवद्रूपाद्युपलब्धिरिति ब्रुवता यदुक्तमेकमिन्द्रियमिति तद् व्याहतं भवति। प्रागेकमिन्द्रियं त्वगित्युपगम्येदानीं त्वगवयवविशेषा रूपादिग्राहका इति ब्रुवाणः प्रतिषेध्यमभ्यनुजानाति, न ह्यवयव्यनतिरिक्ता अवयवा इति। यांश्चावयवान् रूपादिग्राहकान् त्वचो मन्यन्ते ते किमिन्द्रियात्मका उत नेति ? किं चातः ? यदीन्द्रियात्मका, नैकमिन्द्रियम्; अथेन्द्रियात्मका न भवन्ति, न तर्हीन्द्रियग्राह्या रूपादय इति ॥ ५३ ॥

## न्यायवार्त्तिकतात्पर्यटीका

चानिन्द्रियेणेति। शरीरं पार्थिवं भूतान्तरसंपृक्तं च तद् इन्द्रियाधिष्ठानानि शरीरावयवभूतानि पृथिव्यादिना (३) प्राप्तानीत्यनेकान्तः।

न व्याघातादिति परदोषोद्भावनपरम्, न पुनस्त्वगवयवत्वमिन्द्रियान्तराणामभिमतमिति ॥५३॥

## वृत्तिः

पूर्वपक्षसूत्रम्—( त्वगव्यतिरेकात् )

सर्वेष्विन्द्रियप्रदेशेष्वव्यतिरेकात् सत्त्वात् त्वगेवैकमिन्द्रियमस्तु ॥ ५२ ॥

(१) 'तेषु सत्सु' इति वि-टि०। (२) 'धूमस्यानुपलब्धिरिति'—इति क-ख-धृतपाठान्तरम्।
(३) 'व्याप्तानीति' क-ख०।

## (सू०)—न युगपदर्थानुपलब्धेः ॥ ५४ ॥

### न्यायभाष्यम्

आत्मा मनसा सम्बध्यते, मन इन्द्रियेण, इन्द्रियं सर्वार्थैः सन्निकृष्टमिति, आत्मेन्द्रियमनोऽर्थसन्निकर्षेभ्यो युगपद् ग्रहणानि स्युः। न च युगपद् रूपादयो गृह्यन्ते तस्मान्नैकमिन्द्रियं सर्वविषयमस्तीति। असाहचर्याच्च विषयग्रहणानां नैकमिन्द्रियं सर्वविषयकम्, साहचर्ये हि(१) विषयग्रहणानामन्धाद्यनुपपत्तिरिति ॥ ५४ ॥

### न्यायवार्त्तिकम्

सूत्रेण चाभिसम्बन्धः—

न युगपदर्थानुपलब्धेः। यस्यैकमिन्द्रियं तस्य युगपदर्थानामुपलब्धिः प्रसज्यते। कथमिति? आत्मा मनसा सम्बध्यते मन इन्द्रियेण, इन्द्रियं सर्वार्थैः सन्निहितैरिति, आत्मेन्द्रियमनोऽर्थसन्निकर्षेभ्यो युगपदुपलब्धयः (क)प्रादुःष्युरिति।

नैकेन्द्रियग्राह्याणां युगपदुपलब्धिप्रसङ्गात्—यथैकेन्द्रियवादिनो युगपदनेकार्थसन्निधाने सति युगपदुपलब्धिर्दोषो भवति तथाऽनेकेन्द्रियवादिनोऽपि एकेन्द्रियग्राह्येषु युगपदुपलब्धिप्रसङ्गः। य एवात्र परीहारः स एव ममापि भविष्यतीति। अथायमदुष्टः पक्षः? अदेश्यं तर्ह्येतत् युगपदुपलब्धिप्रसङ्ग इति।

अत्र केचित् परिहारं वर्णयन्ति—बुभुत्साभेदान्न युगपदुपलब्धिरिति, ममाप्येवम्—यदि बुभुत्साभेदान्न युगपदुपलब्धिर्लभ्यते ममापि न बुभुत्साभेदो दण्डवारित इति। सत्यां च बुभुत्सायामयुगपदुपलब्धौ न्यायोऽन्योऽवधारणीय इति।

करणत्वादित्यन्ये—अन्ये तु ब्रुवते परिहारं करणत्वादिति, करणस्य किलायं धर्मः अधिष्ठितमप्यनेकां युगपत् क्रियां न शक्नोति कर्तुम्, अनधिष्ठितं च न प्रवर्तत इति; तुल्यम्(ख)—यस्याप्येकमिन्द्रियं तस्यापि करणत्वं न निवार्यत इति। तस्माद् युगपदर्थानुपलब्धिरित्य-

### न्यायवार्त्तिकतात्पर्यटीका

एवं भाष्यकारीयसिद्धान्तमुक्त्वा सौत्रं सिद्धान्तमाह—सूत्रेण चाभिसंबन्धः सिद्धान्तस्य।

न यु—ब्धेः ( सू० ५४ ) ॥ नैतदस्ति एकमिन्द्रियमिति। कस्मात्? युगपदर्थानुपलब्धेरिति। तदेतत्सूत्रं भाष्यदृष्ट्या व्याचष्टे वार्त्तिककारः—यस्यैकमिन्द्रियमिति।

तदेतद् व्याख्यानं दूषयति—नैकेन्द्रियग्राह्याणामिति।

### वृत्तिः

उत्तरयति—( न युगपदर्थानुपलब्धेः )

(१) 'सर्वविषयसाहचर्ये च' इति वि०।
(क) क-ख-वार्त्तिकयोः 'प्रादुस्युरिति' इति मुद्रितम्। (ख) अत्र दूषणमाह 'तुल्य'मिति।

## (सू०)—विप्रतिषेधाच्च न त्वगेका ॥ ५५ ॥(क)

### न्यायभाष्यम्

न खलु त्वगेकमिन्द्रियं व्याघातात्—त्वचा रूपाण्यप्राप्तानि गृह्यन्त इति अप्राप्यकारित्वे स्पर्शादिष्वप्येवं प्रसङ्गः। स्पर्शादीनां च प्राप्तानां ग्रहणाद्रूपादीनां (१)प्राप्तानां ग्रहणमिति प्राप्तम्।

### न्यायवार्त्तिकम्

दोषोऽयमिति। एवं ब्रुवाण एकेन्द्रियवादी विकल्प्य पर्यनुयोज्यः—यत्तदेकमिन्द्रियं सर्वार्थमिति मन्यसे तत् किं प्राप्यकारि आहो नेति। किं चातः? यदि प्राप्यकारि, किं तदिति वक्तव्यम्। यदि त्वक्, त्वचाऽप्राप्तानां रूपाणामग्रहणप्रसङ्गः। अथाप्राप्तं रूपं गृह्णाति, स्पर्शादिष्वप्येवं प्रसङ्गः। अथ सामिकारीन्द्रियम्—किञ्चित् प्राप्तं गृह्णाति किञ्चिचाप्राप्तम्; एवं सति करणधर्मातिक्रमः। भवतु करणधर्मातिक्रमः किन्नो बाध्यत इति? एतस्मिन् पक्षे न युगपदुपलब्धिप्रसङ्गादिति सूत्रम्। यथाऽनेकेन्द्रियवादिन एकेन्द्रियग्राह्येषु युगपदुपलब्धिप्रसङ्गे करणत्वादिति परिहारः, सोऽस्य न भवति करणधर्मातिक्रमात्। व्याहतं चैतत् करणं प्राप्यकार्यप्राप्यकारि चेति। असाहचर्याच्च न त्वक्—साहचर्यं नाम यस्यैकं विषयग्रहणं तस्य द्वितीयमपीत्यन्धबधिराद्यभावप्रसङ्गः ॥५४॥

विप्रतिषेधाच्च न त्वगेका। शेषं भाष्ये। एकोपघाते तद्विनाशे वा सर्वानुपलब्धिप्रसङ्गः—अथैकमिन्द्रियं भवति तद्विघाते विनाशे वा सर्वानुपलब्धिप्रसङ्गः। आवरणानु-

### न्यायवार्त्तिकतात्पर्यटीका

भाष्यव्याख्यानं दूषयित्वा सूत्रमन्यथा व्याख्यातुं भूमिरचनां करोति—एवं ब्रुवाण एकेन्द्रियवादीति। सामि अर्धम्। एकमपीन्द्रियमर्धं प्राप्य गृह्णाति अप्राप्तं चार्धमेकदेश इति यावत्। करणधर्ममतिक्रामन्तं प्रति युगपदुपलब्धिप्रसङ्गो दूषणमित्यर्थः ॥ ५४ ॥

विप्र—का ( सू० ५५ )॥ (ख)

### वृत्तिः

युगपत् एकदा अर्थानां गन्धरूपादीनाम् अनुपलब्धेर्न त्वगेवैकमिन्द्रियम्। अन्यथा तस्या व्यापकत्वाचाक्षुषादिकाले घ्राणजादिकमपि स्यादिति भावः ॥ ५३ ॥

---

(१) 'अप्राप्तानामग्रहणम्'—इति ज-टि०।

(क) 'विप्रतिषेधाच्च न त्वगेका' इति सूत्रस्य वृत्त्यनुपलब्ध्या नास्य सूत्रत्वं वृत्तिकारसम्मतम् इति प्रतीयते।

(ख) ५५-तमसूत्रस्य तात्पर्यटीका नोपलभ्यते।

## न्यायभाष्यम्

(१)प्राप्याप्राप्यकारित्वमिति चेत्? आवरणानुपपत्तेर्विषयमात्रस्य ग्रहणम्। अथापि मन्येत प्राप्ताः स्पर्शादयस्त्वचा गृह्यन्ते रूपाणि त्वप्राप्तानीति? एवं सति नास्त्यावरणम्, आवरणानुपपत्तेश्च रूपमात्रस्य ग्रहणं व्यवहितस्य (२)चाव्यवहितस्य चेति। दूरान्तिकानुविधानं च रूपोपलब्ध्यनुपलब्ध्योर्न स्यात्। अप्राप्तं त्वचा गृह्यते रूपमिति दूरे रूपस्याग्रहणमन्तिके च ग्रहणमित्येतन्न स्यादिति ॥ ५५ ॥

प्रतिषेधाच्च नानात्वसिद्धौ स्थापनाहेतुरप्युपादीयते—

### (सू०)—इन्द्रियार्थपञ्चत्वात् ॥ ५६ ॥

अर्थः प्रयोजनम्, तत् पञ्चविधमिन्द्रियाणाम्, स्पर्शनेनेन्द्रियेण स्पर्शग्रहणे सति न

## न्यायवार्त्तिकम्

पपत्तेः—यदि त्वगेकमिन्द्रियं भवति नाऽऽवरणस्य सामर्थ्यमस्तीति विप्रकृष्टावस्थितोपलब्धिप्रसङ्गः। दूरान्तिकार्थानुविधानं चोपलब्ध्यनुपलब्ध्योर्न स्यात्—अप्राप्यकारित्वे त्वगिन्द्रियस्यान्तिके ग्रहणं दूरे चाग्रहणमित्येतन्न स्यात्॥ ५५ ॥

'प्रतिषेधाच्च नानात्वसिद्धौ स्थापनाहेतुरप्युपादीयते' प्रतिषेधान्नानात्वं (क)सिध्यतीति। तन्न बुध्यामहे—प्रतिषेधादेकत्वसाधनं न स्यात् नानात्वं कथं सिध्यतीति? नासाधना क्रियेति। एकत्वं च कथं प्रतिषेद्धुं शक्यते? प्रतिषेधात् एकत्वसाधनमनुमानं निवर्तते न पुनरेकत्वमनेकत्वं वा निवर्तत इति। कथं तर्हि अयं ग्रन्थो ग्राह्यः? प्रतिषेधाच्चानन्तरं नानात्वसिद्धौ स्थापनाहेतुरप्युपादीयते इन्द्रियार्थपञ्चत्वात्।

## न्यायवार्त्तिकतात्पर्यटीका

एकत्वप्रतिषेधादेव पारिशेष्यान्नानात्वं सेत्स्यतीत्यत आह—नासाधना क्रियेति। एकत्वं च कथमिति। न शक्यः पक्षो दूषयितुमित्युक्तम्। न च साधननिराकरणमात्रात्साध्यं निवर्तते मा भूद्धूमनिवृत्तौ वह्निनिवृत्तिरित्यर्थः। पृच्छति—कथं तर्हीति। उत्तरम्—प्रतिषेधाच्चानन्तरमिति। यद्यप्यनन्तरशब्दप्रयोगे पञ्चमी न स्मर्यते तथाऽप्यन्यशब्दस्याध्याहारेण पञ्चमी व्याख्येया। अनन्तरं प्रतिषेधादन्यः स्थापनाहेतुरिति योजना। अथ वेति। व्यतिरेकी

## वृत्तिः

इन्द्रियाणां नानात्वे कार्यभेदमानमाह—( इन्द्रियार्थपञ्चत्वात् )

इन्द्रियार्थानाम् इन्द्रियग्राह्याणां रूपादीनाम्, पञ्चत्वात् पञ्चविधत्वात्। रूपादीनां

---

(१) 'प्राप्तिकारित्वमिति चेत्'—इति ग०। (२) 'चाव्यवहितस्य' इति टि-पु० नास्ति।

(क) 'सिध्यतीत्येतन्न' इति पाठः सम्भाव्यते।

## न्यायभाष्यम्

तेनैव रूपं गृह्यत इति रूपग्रहणप्रयोजनं चक्षुरनुमीयते। स्पर्शरूपग्रहणे च (१)ताभ्यामेव न गन्धो गृह्यत इति गन्धग्रहणप्रयोजनं (२)घ्राणमनुमीयते। त्रयाणां ग्रहणे न तैरेव रसो गृह्यते इति रसग्रहणप्रयोजनं रसनमनुमीयते। न च चतुर्णां ग्रहणे तैरेव शब्दः श्रूयते इति शब्दग्रहणप्रयोजनं श्रोत्रमनुमीयते। एवमिन्द्रियप्रयोजनस्यानितरेतरसाधनसाध्यत्वात्पञ्चैवेन्द्रियाणि ॥ ५६ ॥

## न्यायवार्त्तिकम्

अथवा प्रतिषेधाच्च नानात्वसिद्धाविति प्रतिषेधहेतुना एकत्वप्रतिषेधे कृतेऽर्थान्नानात्वं सिध्यतीत्ययमर्थः। कतमः पुनरसौ प्रतिषेधहेतुः? युगपदर्थोपलब्धिप्रसङ्गादित्ययम्। अनेनैकत्वं प्रतिषिद्धम्।

(क) तदेवमवीतसिद्धौ वीतदर्शनार्थमिदमुच्यते—

इन्द्रियार्थपञ्चत्वात् इति सूत्रम्। अर्थः प्रयोजनमित्येवमादि भाष्ये। (३) इदं तु सूत्रं न कथञ्चन न्यायेन सम्बध्यते। कथमिति? विधीयमानोऽर्थः साध्यः पञ्चेन्द्रियाणीति, इन्द्रियार्थपञ्चत्वादित्यसम्बद्धम्। अथ प्रयोजनपञ्चत्वम्? तदप्येवमेव। अथ ग्रहणानि पक्षीक्रियन्ते? तत्राप्यैकान्तिको हेतुर्नास्तीति। एतेन विषया व्याख्याताः। इदं तु सूत्रमेवं स्यात्—रूप-रस-गन्ध-स्पर्श-शब्देषु नानासाधनक्रियः कर्ता एकविषयावसितौ विषयान्तरसिद्धौ करणान्तरापेक्षित्वात्—यस्य कर्तुरनेको विषयः तस्यान्यतमविषयावसाये विषयान्तरसिद्धौ करणान्तरापेक्षित्वं दृष्टम्, यथाऽनेकशिल्पपर्यवदातस्य पुरुषस्य (ख)क्रियावसायात् क्रियायां करणान्तरापेक्षित्वम्; तथा च रूपाद्यन्यतमविषयावसाये विषयान्तरसिद्धौ साधनान्तरापेक्षित्वमस्ति। तस्माद्रूपरसगन्ध-स्पर्श-शब्देषु नानासाधनक्रियः कर्ता ॥५६॥

## न्यायवार्त्तिकतात्पर्यटीका

हेतुर्द्वयोर्विरुद्धयोरेकतरनिषेधेन (ग)एकतरं व्यवस्थापयति—यथा नैरात्म्यनिषेधेन जीवच्छरीरस्य सात्मकत्वमिति ॥ ५५ ॥

इन्द्रि—त्वात् ( सू० ५६ ) ॥ सूत्रमाक्षिपति—इदं तु सूत्रमिति। एष न्यायो मया वाचो भङ्‌ग्या सूचित इत्यर्थः ॥ ५६ ॥

---

(१) 'ताभ्यामेव गन्धो' इति टि०। (२) 'प्रमाणमनु-' इति टि०। (३) क-ख-वार्त्तिकयोः 'इदं च' इति मुद्रितम्।

(क) अनुमानं प्रथमं तावद् द्विविधं वीतमवीतं च। "अन्वयमुखेन प्रवर्तमानं विधायकं वीतम्, व्यतिरेकमुखेण प्रवर्तमानं निषेधकमवीतम्, तत्रावीतं शेषवत्। वीतं च द्वेधा पूर्ववत् सामान्यतोदृष्टं च" इति। (तत्त्वकौमुदी, ५म-कारिकाव्याख्या)। (ख) 'क्रियावसायात् क्रियाया'मिति एकक्रियावसायादन्यक्रियायामित्यर्थः। (ग) 'एकतनो'मिति क-तात्पर्यपाठः। ख-तात्पर्ये तु 'एकत(नो') रं' इति मुद्रितम्।

## (सू०)—न, तदर्थबहुत्वात्(१) ॥ ५७ ॥

### न्यायभाष्यम्

न खल्विन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणीति सिध्यति। कस्मात्? तेषामर्थानां बहुत्वात्। बहवः खल्विमे इन्द्रियार्थाः, स्पर्शास्तावत् शीतोष्णा(२)नुष्णाशीता इति। रूपाणि शुक्लहरितादीनि। गन्धा इष्टानिष्टोपेक्षणीयाः। रसाः कटुकादयः, शब्दा वर्णात्मानो ध्वनिमात्राश्च भिन्नाः। तद् यस्येन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणि तस्येन्द्रियार्थबहुत्वाद् बहूनि इन्द्रियाणि प्रसज्यन्त इति ॥ ५७ ॥

## (सू०)—गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः ॥ ५८ ॥

गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्थानां गन्धादीनां यानि गन्धादिग्रहणानि तान्यसमानसाधनसाध्यत्वाद् ग्राहकान्तराणि न प्रयोजयन्ति। अर्थसमूहोऽनुमान-

### न्यायवार्त्तिकम्

न, तदर्थबहुत्वात्। अस्य यथाश्रुत्युत्थानम्, अस्य चार्थं इन्द्रियपञ्चत्वविरोधः।

न विरोधात्—अर्थबहुत्वादिन्द्रियबहुत्वमिति ब्रुवाणो यदभ्युपगतमेकमिन्द्रियमिति तद् बाधते। नासाधनात्—न मयाऽर्थबहुत्वादिन्द्रियबहुत्वं साध्यते यतो मे विरोधः स्यात्, अपि तु भवतेन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणीति यत्साधनमुक्तं तस्य मया विरोधो दृश्यते—यदीन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणि भवन्ति, इन्द्रियार्थबहुत्वाद् बहूनीन्द्रियाणि प्रसज्यन्ते इति ॥५७॥

### न्यायवार्त्तिकतात्पर्यटीका

पूर्वपक्षिणः सूत्रम्—

न, त—त्वात् ( सू० ५७ ) ॥ पूर्वपक्षमाक्षिपति—न विरोधादिति। पूर्वपक्षिणः समाधानम् नासाधनादिति ॥ ५७ ॥

### वृत्तिः

हि चक्षुराद्येकैकेन्द्रियमात्रग्राह्यत्वाद्वैलक्षण्यम्, तच्चैकेन्द्रियपक्षे न सम्भवति, अन्धादीनां रूपाद्युपलब्धिप्रसङ्गश्चेति भावः ॥ ५४ ॥

शङ्कते—( न, तदर्थबहुत्वात् )

इन्द्रियार्थानां नीलपीतादीनां बहुत्वाद् इन्द्रियाणां बहुतरत्वप्रसङ्गादिन्द्रियार्थपञ्चत्वादिन्द्रियभेदो न युक्तः ॥ ५५ ॥

(१) 'न तदर्थं बहुत्वात्' इति टि०।

(२) '-नुष्णशीता' इति ख-ज०।

न्यायभाष्यम्

मुक्तो नार्थैकदेशः। अर्थैकदेशं चाऽऽश्रित्य विषयपञ्चत्वमात्रं भवान् प्रतिषेधति तस्माद्युक्तोऽयं प्रतिषेध इति।

कथं पुनर्गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था गन्धादय इति? स्पर्शः खल्वयं त्रिविधः शीत उष्णोऽनुष्णाशीतश्च स्पर्शत्वेन स्वसामान्येन संगृहीतः। गृह्यमाणे च शीतस्पर्शे नोष्णस्यानुष्णाशीतस्य वा स्पर्शस्य ग्रहणं ग्राहकान्तरं प्रयोजयति स्पर्शभेदानामेकसाधनसाध्यत्वाद् येनैव शीतस्पर्शो गृह्यते तेनैवेतरावपीति। एवं गन्धत्वेन गन्धानाम्, रूपत्वेन रूपाणाम्, रसत्वेन रसानाम्, शब्दत्वेन शब्दानामिति। गन्धादिग्रहणानि पुनरसमानसाधनसाध्यत्वाद् ग्राहकान्तराणां प्रयोजकानि। तस्मादुपपन्नमिन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणीति॥ ५८॥

यदि सामान्यं सङ्ग्राहकम्, प्राप्तमिन्द्रियाणाम्—

## (सू०)—विषयत्वाव्यतिरेकादेकत्वम्॥ ५९॥

विषयत्वेन हि सामान्येन गन्धादयः सङ्गृहीता इति॥ ५९॥

न्यायवार्त्तिकम्

अस्योद्धारकं सूत्रम्—

गन्धत्वाद्यव्यतिरेकाद् गन्धादीनामप्रतिषेधः। गन्धत्वादिभिः सामान्यैः कृतव्यवस्था गन्धादयः न स्वकरणव्यतिरेकेण करणान्तराणि प्रयोजयन्ति यावत्तु गन्धत्वं वर्तते तावतामेकसाधनसाध्यत्वात्; यः पुनरपरो जातिभेद इष्टानिष्टोपेक्षणीयत्वादिर्नासौ करणान्तरं प्रयोजयति एवं सर्वत्र। शेषं भाष्ये॥५८॥

यदि सामान्यं संग्राहकं प्राप्तमिन्द्रियाणाम्—

विषयत्वाव्यतिरेकादेकत्वम्। अस्यार्थोऽविरोध एव। नोक्तोक्तरत्वात्—इन्द्रियार्थपंञ्चत्वादित्यस्यार्थेनोक्तोत्तरमेतत्॥ ५९॥

न्यायवार्त्तिकतात्पर्यटीका

सिद्धान्तः—

गन्ध—धः ( सू० ५८ )॥(क)

विष—त्वम् ( सू० ५९ )॥(ख)

वृत्तिः

समाधत्ते—( गन्धत्वाद्यव्यतिरेकाद् गन्धादीनामप्रतिषेधः )

उक्तः प्रतिषेधो न, गन्धादीनां सौरभादीनाम्, गन्धत्वाद्यव्यतिरेकाद् गन्धत्वादिसत्त्वात्। तथा च गुणविभाजकगन्धत्वावच्छिन्नग्राहकत्वमभिप्रेतम्, न त्ववान्तरधर्मावच्छिन्नग्राहकत्वमिति भावः॥ ५६॥

(क-ख) ५८-५९-तमसूत्रयोः तात्पर्यटीका नोपलभ्यते।

## (सू०)—न, बुद्धिलक्षणाधिष्ठान-गत्याकृति-जातिपञ्चत्वेभ्यः ॥६०॥

### न्यायभाष्यम्

न खलु विषयत्वेन सामान्येन कृतव्यवस्था विषया ग्राहकान्तरनिरपेक्षा एकसाधनग्राह्या (१)अनुमीयन्ते, अनुमीयन्ते च पञ्च गन्धादयो गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था इन्द्रियान्तरग्राह्याः, तस्मादसम्बद्धमेतत्। अयमेव चार्थोऽनूद्यते बुद्धिलक्षणपञ्चत्वादिति।

बुद्धय एव लक्षणानि विषयग्रहणलिङ्गत्वात् (२)इन्द्रियाणाम्, तदेतत् (२*)'इन्द्रियार्थपञ्चत्वात्' इत्येतस्मिन् सूत्रे कृतभाष्यमिति। तस्माद् बुद्धिलक्षणपञ्चत्वात्पञ्चेन्द्रियाणि।

### न्यायवार्त्तिकम्

अस्य चार्थस्य ज्ञापनार्थम्—

न, बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः इति सूत्रम्। तत्र बुद्धय एव लक्षणानीत्यस्यार्थो वर्णित इन्द्रियार्थपञ्चत्वादिति। नानेन्द्रियं भिन्नाधिष्ठानत्वात्—यस्याधिष्ठानं भिन्नं तदनेकं दृष्टम्, (क)यथा घटादि, अधिष्ठानभेदश्चेन्द्रियाणामस्ति तस्मान्नानेति। अधिष्ठान-

### न्यायवार्त्तिकतात्पर्यटीका

न, बु—भ्यः (सू० ६०)॥ यस्याधिष्ठानं भिन्नमिति। भिन्नं नियतम्। एतदुक्तं भवति—रूपव्यञ्जकस्य कृष्णसारमेवाधिष्ठानं न कर्णशष्कुल्यादि। एवमन्यत्रापि द्रष्टव्यम्।

### वृत्तिः

यदि गन्धत्वादिना सौरभादीनामैक्यं तदा विषयत्वेन गन्धरसादीनामप्यैक्यादिन्द्रियैक्यं स्यादिति शङ्कते—(विषयत्वाव्यतिरेकादेकत्वम्)

विषयत्वाव्यतिरेकाद् विषयत्वेनैक्यात् ॥ ५७ ॥

उत्तरयति—(न, बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः)

इन्द्रियाणामैक्यं न। हेतुमाह—बुद्धीत्यादि। बुद्धेश्चाक्षुषादेर्यल्लक्षणं चाक्षुषत्वादि तत्पञ्चत्वेन तदवच्छिन्नकरणानां पञ्चत्वम्। एवमधिष्ठानं रूपादिर्विषयः, तत्पञ्चत्वात्। गतिर्दूरादौ गमनम्, इदं चक्षुरधिकृत्य।

यद्वा गतिः प्रकारः, तथा च प्रकाराणां पञ्चत्वात्, चक्षुर्हि गत्वा गृह्णाति, त्वग् देहावच्छेदेन, श्रोत्रं कर्णावच्छेदेनेत्यादिप्रकारभेदात्।

---

(१) इदं टि-पु० नास्ति। (२) अयमंशः टि-पु० नास्ति।

(क) 'यथा घटादिष्वधिष्ठानभेदः तथेन्द्रियाणामस्ति' इति क-ख-पुस्तकपाठः। तयोर्धृतं पाठान्तरं तु उपरिष्टात् गृहीतम्।

## न्यायभाष्यम्

अधिष्ठानान्यपि खलु पञ्चेन्द्रियाणाम्, सर्वशरीराधिष्ठानं स्पर्शनं स्पर्शग्रहणलिङ्गम्, (१)कृष्णसाराधिष्ठानं चक्षुः बहिर्निःसृतं रूपग्रहणलिङ्गम्, नासाधिष्ठानं घ्राणम्, जिह्वाधिष्ठानं रसनम्, कर्णच्छिद्राधिष्ठानं श्रोत्रम्, गन्धरसरूपस्पर्शशब्दग्रहणलिङ्गत्वा(२)दिति।

गतिभेदादपीन्द्रियभेदः। कृष्णसारोपनिबद्धं चक्षुर्बहिर्निःसृत्य रूपाधिकरणानि द्रव्याणि प्राप्नोति। स्पर्शनादीनि त्विन्द्रियाणि विषया एवाऽऽश्रयोपसर्पणात्प्रत्यासीदन्ति। सन्तानवृत्त्या शब्दस्य श्रोत्रप्रत्यासत्तिरिति।

आकृतिः खलु परिमाणमियत्ता सा पञ्चधा। स्वस्थानमात्राणि घ्राणरसनस्पर्शनानि विषयग्रहणेनानुमेयानि। चक्षुः कृष्णसाराश्रयं बहिर्निःसृतं विषयव्यापि। श्रोत्रं नान्यदाकाशात्, तच्च विभु शब्दमात्रानुभवानुमेयं पुरुषसंस्कारोपग्रहणाच्चाधिष्ठाननियमेन शब्दस्य व्यञ्जकमिति।

## न्यायवार्त्तिकम्

भेदोऽसिद्ध इति चेत्, न; अन्धबधिराद्यभावप्रसङ्गात्—यस्य पुनरधिष्ठानभेदः तस्य (क)भेदे एकाधिष्ठानविनाशेऽधिष्ठानान्तराश्रयस्यावस्थानमिति न दोषः। गतिभेदादित्यस्य भिन्नगतित्वादिति प्रयोगः, प्रसङ्गः पूर्ववत्।

आकृतिः परिमाणमियत्ता। स्वस्थानपरिमाणानि घ्राणरसनस्पर्शनानि। चक्षुर्बहिर्निःसृतं विषयव्यापि तन्महत्। श्रोत्रं त्वाकाशम्, तदधिष्ठाननियमेन प्रवर्तते, धर्माधर्मसंहितया इष्टानिष्टोपेक्षणीयशब्दसाधनभूतया कर्णशष्कुल्या य आकाशस्य सम्बन्धस्तत्सम्बन्धानुविधाय्याकाशम्, न विवरान्तरेणास्यादिना (३)शब्दमुपलक्षयति नान्यत्रेति (ख)तदुपकारप्रतिकारभेदाद्वोपक्रियते प्रतिक्रियते चेति, न च पुनराकाशं नित्यत्वादुपक्रियते न प्रतिक्रियत इति। प्रकृष्टाप्रकृष्टश्रोत्रभेदोऽप्यत एव।

## न्यायवार्त्तिकतात्पर्यटीका

यस्य पुनः सिद्धान्तिनः (४)अधिष्ठानभेदः तथा च तदधिष्ठानस्येन्द्रियस्यापि भेदः तस्य एकाधिष्ठानविनाशेन तद्गतस्येन्द्रियस्य विनाशेऽपि अधिष्ठानान्तराश्रितस्य इन्द्रियान्तरस्य अवस्थानमिति न एकाधिष्ठाननाशे सर्वाधिष्ठाननाशात्सर्वेन्द्रियनाशलक्षणः तथैकाधिष्ठानावस्थाने सर्वेन्द्रियावस्थानलक्षणो दोष इति। इष्टानिष्टोपेक्षणीय इति। उपेक्षणीयस्यापि पुरुषार्थत्वं

(१) 'कृष्णताराधि-' ख-ग-झा०। (२) 'स्पर्शग्रहणाल्लिङ्गा'दिति —वि०। (३) 'शब्दमुपलभयति' इति क-ख-धृतपाठान्तरम्। (४) 'अधिष्ठानाभेदः' इति क-ख।

(क) अत्र 'भेदे' इति लिपिप्रमादादागतं सम्भाव्यते। 'भेदे एकाधिष्ठानविनाशेऽधिष्ठानान्तराश्रयस्येन्द्रियस्यावस्थानमिति' इति क-खधृतपाठान्तरम्। (ख) 'वा'शब्दोऽयमेवकारार्थ इति बोध्यम्।

## न्यायभाष्यम्

जातिरिति योनिं प्रचक्षते। पञ्च खल्विन्द्रिययोनयः पृथिव्यादीनि भूतानि, तस्मात् प्रकृतिपञ्चत्वादपि पञ्चेन्द्रियाणीति सिद्धम् ॥ ६० ॥

कथं पुनर्ज्ञायते भूतप्रकृतीनीन्द्रियाणि नाव्यक्तप्रकृतीनीति ?

## (सू०)—भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥ ६१ ॥

दृष्टो हि वाय्वादीनां भूतानां गुणविशेषाभिव्यक्तिनियमः। वायुः स्पर्शव्यञ्जकः, आपो रसव्यञ्जिकाः, तेजो रूपव्यञ्जकम्, पार्थिवं किञ्चिद् द्रव्यं कस्यचिद् द्रव्यस्य गन्धव्यञ्जकम्। अस्ति चायमिन्द्रियाणां भूतगुणविशेषोपलब्धिनियमः तेन भूतगुणविशेषोपलब्धेर्मन्यामहे भूतप्रकृतीनीन्द्रियाणि नाव्यक्तप्रकृतीनीति ॥ ६१ ॥

## न्यायवार्त्तिकम्

जातिरिति योनिं प्रचक्षते। 'पञ्च खल्विमा इन्द्रिययोनयः पृथिव्यादीनि भूतानि' इन्द्रियाणां योनय इति योनिस्तादात्म्यं (क)न पुनस्तत्कार्यत्वमाकाशे सम्भवति नित्यत्वात् ॥ ६० ॥

'कथं पुनर्ज्ञायते भूतप्रकृतीनीन्द्रियाणि नाव्यक्तप्रकृतीनी'ति ? नोक्तोत्तरत्वात्—नाव्यक्तप्रकृतीनीन्द्रियाणीत्युक्तोत्तरमेतत्।

भूतगुणविशेषोपलब्धेस्तादात्म्यम्। भूतगुणविशेषो गन्ध-रस-रूप-स्पर्श-शब्दा विशेषकत्वाद्विशेषा इत्युच्यन्ते। यथा (१)गन्धवत्त्वादिना पृथिव्यादिभ्यो भिद्यते रसादिभिरबादय इति। दृष्टो हि बाह्यानामुभयपक्षसम्प्रतिपन्नानां पृथिव्यादिभूतानां स्वगुणाभिव्यक्तिनियमः। अस्ति च घ्राणादिभिरपि गन्धाद्यभिव्यक्तिनियमः, तेन भूतगुणविशेषोपलब्धेर्भूतप्रकृतीनीन्द्रिया-

## न्यायवार्त्तिकतात्पर्यटीका

भवति केनचित् प्रकारेण। यदि हि तत्र पुरुषः प्रवर्तते ततो निष्फले कर्मणि प्रवृत्तः पुरुषस्तप्येत। दुःखं कर्मेत्यनुभवो लोकस्य उपेक्षणीयत्वे तु तन्न तस्य भवति ॥ ६० ॥

## वृत्तिः

आकृतिः गोलकानां संस्थानविशेषः। जातिः पृथिवीत्वादि। वस्तुतो जातिः धर्मः तेन श्रोत्रत्वसंग्रहः ॥५८॥

---

(१) 'गन्धवत्त्वं न' इति क-ख-धृतपाठान्तरम्।

(क) न पुनस्तत्कार्यत्वमिति भूतकार्यत्वमित्यर्थः। आकाशे इति श्रोत्रात्मके इति शेषः।

## न्यायवार्त्तिकम्

णीति। किं किमात्मकमिति ? येन यद्गुणाभिव्यक्तिः। तत्र पार्थिवं घ्राणं गन्धाभिव्यक्तिहेतुत्वात् बाह्यपार्थिवद्रव्यवदिति। एवं शेषेष्वपि ॥ ६१ ॥

### ( इन्द्रियनानात्वप्रकरणम् )

## न्यायवार्त्तिकतात्पर्यटीका

भूत—त्म्यम् ( सू० ६१ )॥ तत्र पार्थिवं घ्राणं रूप-रस-गन्ध-स्पर्शेषु नियमेन गन्धस्य व्यञ्जकत्वाद् बाह्यपार्थिववदिति, यथा हि मृगमदगन्धव्यञ्जकाः कुक्कुटोच्चारादयः पार्थिवा इत्यर्थः। न चातपेनानेकान्तः। न ह्यातपो गन्धव्यञ्जकोऽपि तु जलाभिभूतो गन्धो द्रव्याणां नोपलभ्यते केवलं जलमातपोऽपनयति न तु गन्धं द्रव्यस्याभिव्यनक्ति तस्मान्नानेकान्तः। एवं रसनमिन्द्रियमाप्यं गन्धादिषु मध्ये नियमेन रसस्य व्यञ्जकत्वाद् दन्तान्तरस्यन्दमानोदकबिन्दुवत्। न खलु विशुष्यदास्यो मोदकादिरसमनुभवति। एवं तैजसं चक्षुः गन्धादिषु मध्ये नियमेन रूपस्य व्यञ्जकत्वात् प्रदीपादिवत्। एवं वायवीयं त्वगिन्द्रियं गन्धादिषु मध्ये स्पर्शस्यैव व्यञ्जकत्वात् स्वेदोदबिन्दुशीतस्पर्शव्यञ्जकव्यजनपवनवत्। नियमग्रहणं मनोनिवृत्त्यर्थम्। गन्धादिषु मध्य इति चावधारणसिद्ध्यर्थम्, अन्यथा घ्राणादीनां गन्धत्वादिव्यञ्जकत्वेनावधारणं न स्यात्। तदेतदाह—एवं शेषेष्विति। एवं चेन्द्रियपञ्चत्वेन हस्तपाद-पायूपस्थ-वाचामिन्द्रियत्वनिषेधोऽपि सूचितः इन्द्रियलक्षणविरहात्। यच्छरीरसंयुक्तं (क)संस्कारकदोषव्यतिरिक्तं साक्षात्प्रतीतिसाधनं तदिन्द्रियमिति हीन्द्रियलक्षणम्, न चैतदस्ति हस्तादिषु। तज्ज्ञानेन्द्रियाणां लक्षणम्, इमानि कर्मेन्द्रियाणीति चेत् हन्तैषामिन्द्रियत्वलक्षणान्तरं वक्तव्यम्। शरीराश्रितमसाधारणकार्यकारीन्द्रियमिति लक्षणमिति चेत् वक्तव्यमेषामसाधारणं कार्यम्। उक्तं वचनादानविहरणोत्सर्गानन्दाः पञ्चानामिति। नन्वादानविहरणोत्सर्गास्तावद् वक्त्रहस्तादिभिरपि शक्याः कर्तुम्। अपि चास्ति कण्ठहृदयामाशयपक्वाशयादीनां गिरणादितत्तदसाधारणं कार्यमिति तान्यपीन्द्रियाणि प्रसज्येरन्निति तस्माद्यत्किंचिदेतदपीति ॥ ६१ ॥

## वृत्तिः

घ्राणादेः पृथिवीत्वादिमत्त्वे मानमाह—( भूतगुणविशेषोपलब्धेस्तादात्म्यम् )

भूतानां पृथिव्यादीनां ये गुणविशेषा गन्धादयः, तदुपलम्भकत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतादिदृष्टान्तेन पृथिवीत्वादिसाधनमिति भावः ॥ ५९ ॥

समाप्तमिन्द्रियनानात्वप्रकरणम् ॥ ८ ॥

(क) ख-पुस्तके 'संस्कार(क)दोष' इति मुद्रितम्।

## न्यायभाष्यम्

गन्धादयः पृथिव्यादिगुणा (१)इत्युद्दिष्टम् उद्देशश्च पृथिव्यादीनामेकगुणत्वे चानेकगुणत्वे (२)च समान इत्यत आह—

**(सू०)—गन्ध-रस-रूप-स्पर्श-शब्दानां स्पर्शपर्यन्ताः पृथिव्याः ॥६२॥**

**(सू०)—अप्-तेजो-वायूनां पूर्वं पूर्वमपोह्याऽऽकाशस्योत्तरः ॥६३॥**

स्पर्शपर्यन्तानामिति विभक्तिविपरिणामः(क)। आकाशस्योत्तरः शब्दः स्पर्शपर्यन्तेभ्य

## न्यायवार्त्तिकम्

गन्धादयः पृथिव्यादिगुणा इत्युद्दिष्टम्। उद्देशश्च नियोगविकल्पसमुच्चयैः समानः। तत्र नियोगः—एकैकगुणत्वम्, विकल्पः—कस्यचिदेकः कस्यचिद् द्वावित्येवमादिः, समुच्चयः—सर्वः सर्वत्र। अतो विशेषणार्थम्—

गन्ध-रस-रूप-स्पर्श-शब्दानां स्पर्शपर्यन्ताः पृथिव्याः।

अप्-तेजोवायूनां पूर्वं पूर्वमपोह्याऽऽकाशस्योत्तरः। नियमार्थं सूत्रे। चत्वारः पृथिव्याम्, एकैकशोऽपकर्ष उत्तरेषु स्पर्शपर्यन्तानामिति विभक्तिविपरिणामः। तेन किं कृतं भवति? स्पर्शपर्यन्तानां विनियुक्तानां य उत्तरः स आकाशस्येति आकाशस्योत्तरः शब्दः।

## न्यायवार्त्तिकतात्पर्यटीका

क्रमप्राप्तमर्थलक्षणं परीचिक्षिषमाणोऽर्थलक्षणं (अ१, आ१, सू१४) स्मारयति—गन्धादयः पृथिव्यादिगुणा इत्युद्दिष्टमिति। लक्षितमिति वक्तव्ये संमुग्धाभिधानं सामान्यादुद्दिष्टमित्युक्तम्। तत्र परीक्षामुखं संशयमाह—उद्देशश्च नियोगेति। नियोगादीनां रूपमाह—तत्र नियोग इति। तदेवं विमृश्य नियोगसमुच्चयौ परित्यज्य विकल्पमालम्बते सूत्राभ्याम्—अतो विशेषणार्थमिति—

गन्ध—व्याः (सू० ६२)॥ अप्ते—रः (६३)। विशेषणार्थमिति सूत्रयोस्तात्पर्यमुक्तम्, तदेव स्फुटयति—नियमार्थं इति। उत्तरेष्वबादिष्वेकैकशोऽपकर्षौ गन्धादीनां

## वृत्तिः

क्रमप्राप्तार्थपरीक्षणाय सिद्धान्तसूत्रम्—(गन्ध-रस रूप-स्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः अप्-तेजो-वायूनां पूर्वं पूर्वमपोह्याऽऽकाशस्योत्तरः) (ख)

---

(१) 'इत्युपदिष्टम्' इति ज-ग०। (२) 'च' इति ख-ग-ज-झ-फ-पुस्तकेषु नास्ति, वि-टि पुस्तकयोरुपलभ्यते।

(क) ६२तम-सूत्रात् स्पर्शपर्यन्तेति पदं षष्ठ्यन्ततया ६३तम-सूत्रे अनुवर्त्तनीयमिति भावः।

(ख) 'सिद्धान्तसूत्र'मित्येकवचननिर्देशेन स्वतन्त्रव्याख्यानादर्शनेन च 'गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्या अप्-तेजोवायूनां पूर्वपूर्वमपोह्याऽऽकाशस्योत्तरः' इत्याकारकमेकमेव सूत्रं वृत्तिकृत्सम्मतमिति सम्भाव्यते। ततश्च वृत्तौ पुनः सूत्रसंख्याह्रासः। ज-पुस्तके तथैव मुद्रितम्।

## न्यायभाष्यम्

इति। कथं (१)तर्हि तरब्निर्देशः? स्वतन्त्रविनियोगसामर्थ्यात्। तेनोत्तरशब्दस्य परार्थाभिधानं विज्ञायते। उद्देशसूत्रे (अ१, आ१, सू१४) हि स्पर्शपर्यन्तेभ्यः परः शब्द इति। (क) तन्त्रं वा स्पर्शस्य विवक्षितत्वात्—स्पर्शपर्यन्तेषु नियुक्तेषु (ख) योऽन्यस्तदुत्तरः शब्द इति॥ ६२-६३॥

## न्यायवार्त्तिकम्

उत्तरं इत्यर्थं तरब्निर्देशो न युक्तः द्वयोर्दृष्टत्वात् इह पुनः प्रकृष्टवाचित्वे सत्युत्तम इति स्यात्? (ग) नायं नस्तरब्निर्देशः, अपि तु पराभिधानमेतत्—यदुक्तं भवति पर इति तदुक्तं भवत्युत्तर इति। (घ)तन्त्रं वा स्पर्शस्य विवक्षितत्वात्—भवतु वा तरब्निर्देशः। नन्वुक्तमुत्तम इति प्राप्नोति? न स्पर्शस्य विवक्षितत्वात्—गन्धादिभ्यः परः स्पर्शः स्पर्शादयं पर इति यावदुक्तं भवति तावदुक्तं भवत्युत्तर इति॥ ६२-६३॥

## न्यायवार्त्तिकतात्पर्यटीका

स्पर्शपर्यन्तानाम्। तथा हि चतुर्षु गन्धापकर्षः अपकृष्टस्य गन्धस्य पुनरुद्भवो नास्तीति अद्भ्य उत्तरे तेजसि रसस्यापकर्षः। एवमपकृष्टयोश्च गन्धरसयोः पुनरुद्भवो नास्तीति तेजउत्तरे वायौ रूपापकर्ष इति। एवमपकृष्टानां गन्ध-रस-रूपाणां पुनरुद्भवो नास्तीति वायोरुत्तरस्मिन्नाकाशे स्पर्शस्यापकर्षः। तदिदमुक्तम्—एकैकश इति। अव्युत्पन्नोऽयमुत्तर-शब्दोऽनन्तरवचनः तेन बहूनां निर्धारणेऽप्युपपन्नार्थ इति। भवतु वा तरब्निर्देशः तथाऽपि न दोष इत्याह—भवत्विति। (ङ) क्वचित्पाठस्तन्त्रं वेति यथाभाष्यं स्फुटार्थ एव॥ ६२-६३॥

## वृत्तिः

स्पर्शपर्यन्तेषु मध्ये पूर्वं पूर्वं त्यक्त्वा अप्तेजोवायूनां गुणा ज्ञातव्याः, उत्तरः शब्द आकाशस्य गुणः, तथा च स्पर्शपर्यन्ताः पृथिव्याः, रस-रूप-स्पर्शा जलस्य, रूप-स्पर्शौ तेजसः, स्पर्शो वायोः, शब्द आकाशस्य॥ ६०॥

---

(१) 'तर्हि' इति वि-टि पु॰ नास्ति।

(क) तन्त्रं वेति। 'एकयोक्त्या बोधनं तन्त्र'मिति भाष्यचन्द्रे रघूत्तमः। 'तरब् वा' इति तु युक्तः पाठः, तद्बीजं (ङ)टिप्पन्यां द्रष्टव्यम्। (ख) 'योऽन्यः' इति क-पु॰ पाठः साधीयान्। (ग) 'नायं (नो) तरब्-निर्देशः' इति क-वार्त्तिके, 'नायं नौस्तरब्निर्देशः' इति च ख-वार्त्तिके मुद्रितम्। समीचीनत्वानुरोधेन तु एवं गृहीतम्। (घ) 'तरब् वा' इति पाठो युक्तः। (ङ) भाष्य-वार्त्तिक-तात्पर्यटीकासु सर्वत्र 'तन्त्रं वा' इति गड्डलिकाप्रवाहन्यायेन लिपिकृत्प्रमादादागतम्। 'तरब् वा' इत्येव पाठः। अत्र टीकाकृतां 'क्वचित् पाठः' इत्युक्तेस्तु 'तरब् वा स्पर्शस्य विवक्षितत्वात्' इति भाष्यग्रन्थमधृत्वैव वार्त्तिककृता भवतु वा तरब्निर्देशः इत्युक्तम्, पुस्तकान्तरे तु तरब्वेत्यादिभाष्यमपि दृश्यत इत्यभिप्रायः। एवमेव 'स्फुटार्थः' इत्यपि सङ्गच्छते। तन्त्रं कुटुम्बकृत्ये स्यात् सिद्धान्ते चौषधोत्तमे। प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे। श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके। इतिकर्त्तव्यतायां च' इति कोषानुसारेण सिद्धान्तार्थमाश्रित्य 'तरब्विधायकव्याकरण-सिद्धान्तो वा' इति व्याख्यया 'तन्त्रं वा' इति यथाश्रुतपरिरक्षणे तु 'स्फुटार्थः' इत्यसङ्गतमिति ध्येयम्।

## (सू०)—न सर्वगुणानुपलब्धेः ॥ ६४ ॥

### न्यायभाष्यम्

नायं गुणनियोगः साधुः। कस्मात्? यस्य भूतस्य ये गुणा न ते तदात्मकेनेन्द्रियेण सर्वे उपलभ्यन्ते। पार्थिवेन हि घ्राणेन स्पर्शपर्यन्ता न गृह्यन्ते (१)गन्ध एव एको गृह्यते(१*) एवं शेषेष्वपीति ॥ ६४ ॥

कथं तर्हीमे गुणा विनियोक्तव्या इति?

## (सू०)—(२)एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः ॥ ६५ ॥

(क)गन्धादीनामेकैको यथाक्रमं पृथिव्यादीनामेकैकस्य गुणः, अतः 'तदनुपलब्धिः'

### न्यायवार्त्तिकम्

न सर्वगुणानुपलब्धेः। नायं गुणेषु विनियोगः साधुः। कस्मात्? पार्थिवेन घ्राणेन पार्थिवानां गन्धादीनामुपलम्भप्रसङ्गात्। एवमाप्येन रसनेन त्रयाणाम्, तैजसेन चक्षुषा द्वयोरिति ॥ ६४ ॥

### न्यायवार्त्तिकतात्पर्यटीका

पूर्वपक्षी नियोगपक्षमुत्थापयति—

न स—ब्धेः ( सू० ६४ )॥ पृथिव्यादिप्रकृतीनां घ्राणादीनां गन्धादिप्रतिव्यक्तिनियम एवमुपपद्यते यदि गन्धमात्रगुणा पृथिवी रसमात्रगुणा आप इत्यादि, न त्वन्यथा। अन्यथा तु पार्थिवेन घ्राणेन गन्धवद् रस-रूप-स्पर्शा अपि व्यज्येरन् अविशेषादित्यर्थः ॥ ६४ ॥

### वृत्तिः

आक्षिपति—( न सर्वगुणानुपलब्धेः )

उक्तो गुणनियमो न युक्तः, पृथिव्यादिगुणत्वेनाभिमतानां सर्वेषां घ्राणादिग्राह्यत्वाभावान्न पार्थिवत्वादिकम्, घ्राणेन पृथिव्या रसाद्यग्रहणात्। बहिरिन्द्रियाणां स्वप्रकृतिवृत्तियोग्याशेषविशेषगुणग्राहकत्वनियमो भज्येतेति भावः ॥ ६१ ॥

(१) अयं भागः वि-पु० नास्ति। (२) 'एककश्येनोत्त-'—इति टि०। एकैकस्यैवोत्त'—इति ज०।

(क) आकाशादीनामेकैकगुणत्वमुक्तं महाभारते शान्तिपर्वणि मोक्षधर्मानुपर्वणि २४७तमे अध्याये—

शब्दः श्रोत्रं तथा खानि त्रयमाकाशसम्भवम्। प्राणश्चेष्टा तथा स्पर्श एते वायुगुणास्त्रयः ॥

रूपं चक्षुर्विपाकश्च त्रिधा ज्योतिर्विधीयते। रसोऽथ रसनं स्नेहो गुणास्त्वेते त्रयोऽम्भसः ॥

घ्रेयं घ्राणं शरीरं च भूमेरेते गुणास्त्रयः। एतेषामिन्द्रियग्रामैर्व्याख्यातः पाञ्चभौतिकः ॥

वायोः स्पर्शो रसोऽद्भ्यश्च ज्योतिषो रूपमुच्यते। आकाशप्रभवः शब्दो गन्धो भूमिगुणः स्मृतः ॥ इति।

## न्यायभाष्यम्

तेषां तयोः तस्य चानुपलब्धिः—घ्राणेन रस-रूप-स्पर्शानां रसनेन रूप-स्पर्शयोः चक्षुषा स्पर्शस्येति।

कथं तर्ह्यनेकगुणानि भूतानि गृह्यन्त इति ?

(क)संसर्गाच्चानेकगुणग्रहणम्। अबादिसंसर्गाच्च पृथिव्यां रसादयो गृह्यन्ते एवं शेषेष्वपीति ॥ ६५ ॥

## न्यायवार्त्तिकम्

कथं तर्हीमे गुणा विनियोक्तव्याः ?

एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः। यस्मादेकैकगुणानि भूतानि (१) तस्मादेकगुणग्रहणमिति। एकैकश्येनेति सौत्रो निर्देशः।

कथं तर्ह्यनेकगुणानि भूतानि गृह्यन्त इति। संसर्गात्त्वनेकगुणग्रहणमिति। संसृष्टाऽबादिभिः पृथिवी तस्माद् (२)अनेकगुणा गृह्यत इति। एवं शेषेषु ॥ ६९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

एकै—ब्धिः ( सू० ६५ ) ॥ (ख)

## वृत्तिः

इत्थं च पृथिव्यादावुपलभ्यमानानां रसादीनां का गतिरित्यत्र (ग)स्वमतमाह—

( (३)एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः )

उत्तरोत्तराणाम् अबादीनाम्, (४)एकैकश्येन एकैकक्रमेण, उत्तरोत्तरगुणसद्भावात् रसादिगुणसद्भावात्, तदनुपलब्धिः, तेषां रसादीनां घ्राणादिनाऽनुपलब्धिरित्यर्थः ॥६२॥

---

(१) 'तस्मादेकैकगुणग्रहणमिति' इति क-ख-धृतपाठान्तरम्। (२) 'अनेकगुणानि गृह्यन्ते' इति क-ख-धृतपाठान्तरम्। (३) 'एकैकस्यैवो-' इति भ०। (४) एकैकस्यैव इति भ०।

(क) 'संसर्गाच्चानेकगुणग्रहणम्' इति वाक्यं ज-ग-पुस्तकयोः पारमर्षसूत्ररूपेण मुद्रितमपि न्यायसूचीनिबन्धे अगृहीतत्वाद् वृत्तिकारादिभिरव्याख्यातत्वाच्च भाष्यकारवाक्यतयैव गृहीतम्। यत्तु नेति विसूत्रीं प्रत्याचष्ट उत्तरभाष्यग्रन्थदर्शनेन 'न सर्वगुणोपलब्धेः' एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः 'विष्टं ह्यपरं परेण' इति सूत्रत्रयस्यैव निरसनीयतया अन्तराले 'संसर्गाच्चानेकगुणग्रहणम्' इत्यस्य महर्षिसूत्रत्वस्वीकारे 'विसूत्री'मित्यत्र चतुःसूत्रीमित्येव भाष्यकृता वक्तुमुचितं स्यादिति संसर्गाच्चानेकगुणग्रहणम् इत्येतद् भाष्यवाक्यमेवेति मतं तन्न शोभनं भूतानामेकैकविशेषगुणवाददूषणपरेण 'न पार्थिवाप्ययोः प्रत्यक्षत्वात्' इति सूत्रेण 'न सर्वगुणानुपलब्धेः' इति सूत्रोक्तापत्तेर्निरसितुमशक्यत्वात्, प्रत्युत तत्परित्यागेन निरसनीयसूत्रत्रयानुसन्धाने अगतिकतया 'संसर्गाच्चानेकगुणग्रहणम्' इत्यस्यैव महर्षिसूत्रत्वाभ्युपगमावश्यकत्वाच्च। 'न सर्वगुणानुपलब्धेः' इत्युक्तापत्तिश्च 'पूर्वं पूर्वं' इत्यादिसूत्रेण महर्षिणा स्वयमेव समाहितेति तदवतरणिकायां भाष्यकृता स्पष्टमुक्तं ततस्त्रिसूत्र्यां तदन्तर्भावोऽपि न भाष्यकारसम्मत इति सर्वं चतुरस्रम्।

(ख) ६५तम-सूत्रे तात्पर्यटीका नोपलभ्यते।

(ग) स्वमतमिति पूर्वपक्ष्येकदेशिमतमित्यर्थः एतन्मतस्य 'न पार्थिवाप्ययो'रित्यादिसिद्धान्तसूत्रेण निरसनीयत्वादिति बोध्यम्।

## न्यायभाष्यम्

नियमस्तर्हि न प्राप्नोति संसर्गस्यानियमात् (क)चतुर्गुणा पृथिवी त्रिगुणा आपो द्विगुणं तेज एकगुणो वायुरिति। नियमश्चोपपद्यते। कथम् ?

### (सू०)—विष्टं ह्यपरं परेण ॥ ६६ ॥

पृथिव्यादीनां पूर्वपूर्वम्(१)उत्तरेणोत्तरेण (२)विष्टमतः (३)संसर्गनियम इति। (ख)तच्चैतद् भूतसृष्टौ वेदितव्यं नैतर्हीति ॥ ६६ ॥

## न्यायवार्त्तिकम्

संसर्गस्त्वप्रतिषिद्धो मिथः पञ्चानां चेति। नियमस्तर्हि न प्राप्नोति पृथिव्यां चत्वारो नेतरेषु संसर्गस्यानियमादिति ? न न प्राप्नोति। (४) कस्मात् ?—

विष्टं ह्यपरं परेण। विष्टमबादिना परेणापरम्, (ग)नापरेण पृथिव्यादिना परमबादि। विष्टत्वं संयोगविशेषः ॥ ६६ ॥

## न्यायवार्त्तिकतात्पर्यटीका

विष्टं—ण ( सू० ६६ )॥ संसर्गस्य द्व्याश्रयत्वेऽपि न द्वये समानत्वम्, यथाऽग्निधूमयोः संबन्धोऽन्यथाऽग्नेः, स हि व्यापकः ; धूमे धूमध्वजस्य भाव एव नाभावः। धूमस्तु व्याप्यः तस्य वह्नावेव भावो नान्यत्रेति। एवम् अपरं पृथिव्यादि परेण अबादिना विष्टं व्याप्तम् नाबादिमन्तरेणास्ति पृथिवी। अतेन पृथिव्यामबादिगुणानां रसादीनां नियमेनोपलम्भो न त्वबादिषु पृथिवीगुणानाम्। एवमप्स्वनलादिगुणो व्याख्यातः। विष्टत्वं संयोगविशेषो व्याप्तिरित्यर्थः। भाष्यम्—तच्चैतद्भूतसृष्टाविति। भूतसृष्टिप्रतिपादकेषु पुराणेषु। नैतर्हीति। नेदानीमननुभवादित्यर्थः ॥ ६६ ॥

---

(१) 'उत्तरोत्तरेण' इति फ०। (२) 'आविष्टम्' इति नि०। (३) 'संसर्गान्नियमः' इति भा०, 'संसर्गानियमः' इति ज-ग०। (४) 'कथं यस्मात्' इति क-ख-धृतपाठान्तरम्।

(क) कीदृशो नियमः यस्याप्राप्तिराशङ्क्यते इत्याह चतुरित्यादि।

(ख) तच्चैतदिति। 'तत् पृथिव्यादीनां पूर्वपूर्वस्य उत्तरोत्तरेण वेष्टनम् अनुप्रवेश इति यावत् भूतसृष्टौ भूतानामाद्यसृष्टिकाल एव संवृत्तम्, नैतर्हि नेदानीं तथाऽननुभवादित्यपि व्याख्यानं सम्भवति। तात्पर्यटीकाकृता तु भूतसृष्टिप्रतिपादकेषु पुराणेष्विति व्याख्यातम्। तादृशपुराणवचनं तु यत्नेनानुसन्धेयम् ॥

(ग) नापरेणेति। एतेन—

द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते ॥

इत्युक्तदिशा वेदान्तोक्तपञ्चीकरणमेव सूत्रकृता उपन्यस्तमिति भ्रमो दूरापेतः।

## (सू०)—न पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६७ ॥

### न्यायभाष्यम्

नेति (क) त्रिसूत्रीं प्रत्याचष्टे। कस्मात्? पार्थिवस्य द्रव्यस्याऽऽप्यस्य च प्रत्यक्षत्वात्। (१)महत्त्वानेकद्रव्यत्वाद्रूपाच्चोपलब्धिरिति तैजसमेव द्रव्यं प्रत्यक्षं स्यात् न पार्थिवमाप्यं वा रूपाभावात्। तैजसवत्तु पार्थिवाप्ययोः प्रत्यक्षत्वात् न संसर्गादनेकगुणग्रहणं भूतानामिति। (२)भूतान्तररूपकृतं च पार्थिवाप्ययोः प्रत्यक्षत्वं ब्रुवतः प्रत्यक्षो वायुः प्रसज्यते नियमे वा कारणमुच्यतामिति।

### न्यायवार्त्तिकम्

न पार्थिवाप्ययोः (३)प्रत्यक्षत्वात् इति।

नेति त्रिसूत्रीमनन्तरोक्तामनेन प्रत्याचष्टे। यस्यैकैकगुणानि भूतानि तस्य तैजसमेव द्रव्यं

### न्यायवार्त्तिकतात्पर्यटीका

सिद्धान्ती विकल्पबाधेतद् दूषयति—

न पा—त्वात् ( सू० ६७ ) ॥ त्रिविधं हि द्रव्यं चाक्षुषमिष्यते पार्थिवमाप्यं तैजसं च। तत्र रूपवत्त्वेन तैजसमेव चाक्षुषं स्याद् (ख) नेतरदरूपवत्त्वात्। न च रूपिद्रव्यसंसर्गाच्चाक्षुषत्वमरूपयोरपि पार्थिवाप्ययोरिति वाच्यं नभोनभस्वतोरपि चाक्षुषत्वप्रसङ्गात्। अस्ति हि रूपवता तेजसा तयोः संयोग इति।

### वृत्तिः

तर्हि कथं पृथिव्यादौ रसादिग्रहणम्? तत्राऽऽह—( विष्टं ह्यपरं परेण )

अपरं पृथिव्यादि, परेण जलादिना, हि यस्मात्, विष्टं सम्बद्धम्। तथा च पृथिव्याद्यवच्छिन्नजलादिना रसनासंयोगाद्रसादिग्रह इति भावः ॥ ६३ ॥

सिद्धान्तसूत्रम्—( न पार्थिवाप्ययोः प्रत्यक्षत्वात् )

उक्तो गुणनियमो न युक्तः। कुतः? पार्थिवस्याऽऽप्यस्य च द्रव्यस्य प्रत्यक्षत्वाद् रूपस्पर्शसिद्धेः, तस्य रूपस्पर्शशून्यत्वे चक्षुषा त्वचा च ग्रहणं न स्यात्, रूपादेश्च क्वचित्साक्षात्सम्बन्धेन क्वचिच्च परम्परया हेतुत्वे गौरवमिति भावः ॥ ६४ ॥

---

(१) 'महत्त्वानेकद्रव्यवत्त्वाद्' क०। (२) 'भूतान्तरकृतम्' क०। (३) 'प्रत्यक्षसिद्धत्वात्' इति क-ख-धृतपाठान्तरम्।

(क) नेति त्रिसूत्रीमिति, नेतीत्यादिना सूत्रद्वयेनेत्यर्थः, त्रिसूत्रीमिति 'न सर्वगुणानुपलब्धेरि'त्यादि सूत्रत्रयम्। तत्र अव्यवहितं सूत्रद्वयं 'न पार्थिवे'त्यादिसूत्रेण निराकृतम्, न सर्वगुणानुपलब्धेरित्येतत्तु परसूत्रेण निराकरिष्यते। व्यक्तीभविष्यति चेदं भाष्ये। ईदृशव्याख्यायां बीजं 'संसर्गाच्चानेकगुणग्रहणमित्यत्र' द्रष्टव्यम्। एवं वार्त्तिके 'अनेने'त्यस्यापि सूत्रद्वयेनेत्यर्थः कथञ्चित् करणीयः। वस्तुतः 'संसर्गाच्चानेकगुणग्रहण'मित्यस्य महर्षिसूत्रत्वाभ्युपगमो युक्तः, तथाच न क्वाप्यनुपपत्तिः। तत्पक्षस्तु न्यायसूचीनिबन्धाप्रामाण्यभिया अस्माभिर्ग्रहीतुं न शक्यते इत्यसकृदावेद्यते।

(ख) 'नेतरद् रूपवत्त्वात्' इति क-ख-तात्पर्यमुद्रितः पाठः प्रामादिकः।

## न्यायभाष्यम्

रसयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात्—पार्थिवो रसः षड्विधः, आप्यो मधुर एव ; न चैतत्संसर्गाद्भवितुमर्हति। रूपयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात् तैजसरूपानुगृहीतयोः, संसर्गे हि व्यञ्जकमेव रूपं न व्यङ्ग्यमस्तीति। एकानेकविधत्वे च पार्थिवाप्ययोः प्रत्यक्षत्वाद् रूपयोः। पार्थिवं हरित-लोहित-पीताद्यनेकविधं रूपम्, आप्यं तु शुक्लम-प्रकाशकम्, न चैतदेकगुणानां संसर्गे (१)सत्युपपद्यते इति। उदाहरणमात्रं चैतत्, अतः परं प्रपञ्चः।

स्पर्शयोर्वा पार्थिवतैजसयोः प्रत्यक्षत्वात्। पार्थिवोऽनुष्णाशीतः स्पर्शः, उष्ण-स्तैजसः प्रत्यक्षः, न चैतदेकगुणानामनुष्णाशीतस्पर्शेन वायुना संसर्गेणोपपद्यते इति।

अथवा पार्थिवाप्ययोर्द्रव्ययोर्व्यवस्थितगुणयोः प्रत्यक्षत्वात्। चतुर्गुणं पार्थिवं द्रव्यं त्रिगुणमाप्यं प्रत्यक्षम्, तेन तत्कारणमनुमीयते (२) तथाभूतमिति। तस्य कार्यं लिङ्गं कारणभावाद्धि कार्यभाव इति। एवं (क) तैजसवायव्ययोर्द्रव्ययोः प्रत्यक्षत्वाद् गुणव्यवस्थायाः तत्कारणे द्रव्ये व्यवस्थानुमानमिति।

दृष्टश्च विवेकः पार्थिवाप्ययोः प्रत्यक्षत्वात्। पार्थिवं द्रव्यमबादिभिर्वियुक्तं प्रत्यक्षतो

## न्यायवार्त्तिकम्

रूपवत्त्वात् प्रत्यक्षं प्राप्नोति न पार्थिवमाप्यं वा अरूपत्वात्। अस्य सूत्रस्य विकल्पतोऽनेकः सूत्रार्थः कल्प्यत इति भाष्ये वर्णितम् ॥ ६७ ॥

## न्यायवार्त्तिकतात्पर्यटीका

अथ वा पार्थिवाप्यसंबन्धिनो रसभेदस्य रूपभेदस्य चैकानेकविधत्वेन प्रत्यक्षत्वादित्याह भाष्यकारः—रसयोर्वेत्यादिना उपपद्यत इत्यन्तेन।

पुनरस्यैव व्याख्यानान्तरमाह—स्पर्शयोरिति। पार्थिवाप्ययोरित्यस्योदाहरणमात्रार्थत्वात् पार्थिवतैजसयोरित्यपि व्याख्यानमुक्तम्।

व्याख्यानान्तरमाह—अथवेति। कार्यस्य व्यवस्थितगुणस्य दर्शनात् कारणमपि व्यवस्थितगुणमनुमीयते। न च सर्वत्र संसर्गो येनान्यस्य गुणोऽन्यत्रोपलभ्यते विवेकस्या-संसर्गस्य दर्शनात्।

व्याख्यानान्तरमाह—दृष्टश्चेति। चो विकल्पार्थः।

---

(१) 'सत्युपलभ्यते' इति ख-ग-ज-झा०। (२) 'तथागुणम्' इति झा०, 'तथागुणम्' इति वि०।

(क) तैजसवायव्ययोरिति तेजसि वायौ च तद्गुणयो रूपस्पर्शयोः प्रत्यक्षत्वादित्यर्थः। तेन न 'अनुद्भूतरूपस्पर्शस्य द्रव्यस्य प्रत्यक्षतोऽनुपलब्धिः' (अ० ३ आ० १ सू० ४० भाष्यम् पृ० ७६९) इति स्वोक्तेन न वा वैशेषिकमतेन विरोधः। तार्किकरक्षाकृद्दीधितिकारौ तु वायोस्त्वचा प्रत्यक्षमङ्गीकुरुतः। जगदीशप्रभृतयस्तु नव्याः प्राचीनं वायोरतीन्द्रियत्वमतमेव स्वीकुर्वन्ति।

न्यायभाष्यम्

गृह्यते, आप्यं च पराभ्याम्, तैजसं च वायुना, न चैकैकगुणं गृह्यत इति। निरनुमानं तु 'विष्टं ह्यपरं परेणे'त्येतदिति। नात्र लिङ्गमनुमापकं गृह्यत इति येनैतदेवं प्रतिपद्येमहि।

यच्चोक्तं विष्टं ह्यपरं परेणेति भूतसृष्टौ वेदितव्यं न साम्प्रतमिति नियमकारणाभावादयुक्तम्। दृष्टं च साम्प्रतमपरं परेण विष्टमिति, वायुना च विष्टं तेज इति। विष्टत्वं संयोगः, स च द्वयोः समानः, वायुना च विष्टत्वात् स्पर्शवत्तेजो न तु तेजसा विष्टत्वाद् रूपवान् वायुरिति नियमकारणं नास्तीति। दृष्टं च तैजसेन स्पर्शेन वायव्यस्य स्पर्शस्याभिभवादग्रहणमिति, न च तेनैव तस्याभिभव इति॥ ६७॥

तदेवं न्यायविरुद्धं प्रवादं प्रतिषिध्य 'न सर्वगुणानुपलब्धे'रिति चोदितं समाधीयते—

## (सू०)—पूर्वपूर्वगुणोत्कर्षात् तत्तत् प्रधानम् (क)॥ ६८॥

तस्मान्न सर्वगुणोपलब्धिः, घ्राणादीनां पूर्वं पूर्वं गन्धादेर्गुणस्योत्कर्षात् तत्तत्प्रधानम्। का प्रधानता? विषयग्राहकत्वम्। को गुणोत्कर्षः? अभिव्यक्तौ समर्थत्वम्। यथा

न्यायवार्त्तिकम्

तदेवं न्यायविरुद्धं प्रवादं प्रतिषिध्य न सर्वगुणानुपलब्धेरिति यद् देशितं तत्समाधीयते—

पूर्वपूर्वगुणोत्कर्षात् तत्तत् प्रधानम्। तस्मान्न सर्वगुणोपलब्धिः—घ्राणादीना-

न्यायवार्त्तिकतात्पर्यटीका

नियोगस्तु निरनुमान इत्याह—निरनुमानं तु विष्टं ह्यपरं परेणेत्येतदिति।

(ख) यच्चोक्तं भूतसृष्टौ वेदितव्यं नैतर्हीति। तद् दूषयति—नियमकारणाभावादिति। नियमो गन्ध एव पृथिव्यामित्येवमादिः। तस्य कारणं प्रमाणं नास्ति तद्बाधकस्यैव प्रमाणस्योक्तत्वात्। तस्माद्भूतसृष्टिः कथंचिदुपचारतो व्याख्येयेति। विष्टत्वं संयोगः। स च द्वयोः समान इति, अन्यगुणो यदन्यत्रोपलभ्यते तत् किं संयोगाद् आहोस्विद् व्याप्तेः? यदि व्याप्तेः, नायोगोलके वह्निसंपृक्ते वह्निगुणा गृह्येरन् तयोर्व्याप्यव्यापकभावाभावात्, धूमे च गगनतलावलम्बिनि भूमिष्ठेन वह्निना व्याप्तेरग्नेर्गुणा गृह्येरन् तयोर्व्याप्यव्यापकभावात्; तस्मादन्यसंयोगो हेतुः, स चोभयोरविशिष्ट इति तेजसा संयुक्तस्य वायोरपि रूपवत्त्वेन चाक्षुषत्वप्रसङ्ग इति॥ ६७॥

पूर्व—नम् (सू० ६८)॥ प्रधानतापदार्थं व्याचष्टे भाष्यकारः—विषयग्राहकत्वम्, गन्धादिर्विषयः। तदेव विषयग्राहकत्वं कुतस्तत्राऽऽह—गुणोत्कर्षात् तदभिव्यक्तिसामर्थ्यात्।

(क) 'पूर्वं पूर्वं गुणोत्कर्षात्' फ-पुस्तके पाठः। तत्पाठग्रहणबीजं तत्रैव द्रष्टव्यम्।
(ख) भाष्ये पञ्चरगतौ विसंवादी न लयंगतोऽपीति द्रष्टव्यम्।

### न्यायभाष्यम्

बाह्यानां पार्थिवाप्यतैजसानां द्रव्याणां चतुर्गुण-त्रिगुण-द्विगुणानां न सर्वगुणव्यञ्जकत्वं गन्ध-रस-रूपोत्कर्षात्तु यथाक्रमं गन्ध-रस-रूपव्यञ्जकत्वम्, एवं घ्राण-रसन-चक्षुषां चतुर्गुणत्रिगुण-द्विगुणानां न सर्वगुणग्राहकत्वम्, गन्ध-रस-रूपोत्कर्षात्तु यथाक्रमं गन्ध-रस-रूपग्राहकत्वम्। तस्माद् घ्राणादिभिर्न सर्वेषां गुणानामुपलब्धिरिति।

यस्तु प्रतिजानीते गन्धगुणत्वाद् घ्राणं गन्धस्य ग्राहकमेवं रसनादिष्वपीति, तस्य यथागुणयोगं घ्राणादिभिर्गुणग्रहणं प्रसज्यत इति ॥ ६८ ॥

### न्यायवार्त्तिकम्

मिन्द्रियाणां पूर्वं पूर्वमिन्द्रियं (१) परस्मात् प्रधानम्। का प्रधानता ? चतुर्गुणत्वादिः। को गुणोत्कर्षः ? स्वगुणाभिव्यक्तिसामर्थ्यम्—येन गुणेन यद्द्रव्यमुत्कृष्यते स तज्जातीयाभिव्यञ्जकत्वादुत्कृष्टो भवति, यथा बाह्यानां द्रव्याणामिति। अस्ति चेन्द्रियाणामपि स्वगुणाभिव्यक्ति-

### न्यायवार्त्तिकतात्पर्यटीका

विषयग्राहकत्वं चेत्प्राधान्यम्, तत् सर्वेषामेवेन्द्रियाणां विषयग्राहकत्वादित्याशयवान् वार्त्तिककारो भाष्यकारीयं व्याख्यानमसृष्यमाणः पृच्छति—का प्रधानता। स्वमतेनोत्तरमाह—चतुर्गुणत्वादिरिति। एतदुक्तं भवति—यस्माच्चतुर्गुणत्वेन पार्थिवं घ्राणं रसनादिभ्य आप्यादिभ्यः प्रधानं तस्मादस्यागन्धवत्त्वं नास्ति येन गन्धं न गृह्णीयात्। नन्वेवं रसवत्त्वादिकमप्यस्ति घ्राणस्येति रसादिकमपि गृह्णीयादत उक्तम्—गुणोत्कर्षादिति। सर्वेषां समवायाविशेषेऽपि गन्धस्यैव घ्राण उत्कर्ष इति गन्धमेव गृह्णाति, तेनागन्धवत्त्वनिषेधपरं प्राधान्याभिधानं न पुनर्गन्धग्रहणे गन्धवत्त्वं प्रयोजकमपि तु गन्धस्योत्कर्ष इति सिद्धम्। तत्रोत्कर्षपदार्थं पृच्छति वार्त्तिककारः—को गुणोत्कर्षः। उत्तरम्—स्वगुणाभिव्यक्तिसामर्थ्यम्, स्वो गुणो घ्राणस्य गन्धः तज्जातीयश्चन्दनादिसमवेतोऽपि गन्धः स्व इत्युच्यते ; न पुनः स्वगुणमेवाभिव्यनक्ति घ्राणम्, घ्राणसमवेतस्य हि गन्धस्यादृष्टवशात्तादृशो निर्माणभेदो येन सजातीयं चन्दनादिसमवेतं गन्धमभिव्यनक्ति यथा मृगमदादिगन्धं पार्थिवद्रव्यान्तरसमवेतो गन्ध इति। अत एवाऽऽह—येन गुणेन यद् द्रव्यमुत्कृष्यते स तज्जातीयाभिव्यञ्जकत्वादुत्कृष्टो भवति। तस्मिन् द्रव्य इति

### वृत्तिः

रसादेः पृथिव्यादिगुणत्वे घ्राणादिनाऽपि तद्ग्रहणप्रसङ्ग इत्यत्र नियामकमाह—

( पूर्वपूर्वगुणोत्कर्षात्तत्तत्प्रधानम् )

पूर्वपूर्वं घ्राणादि तत्तत्प्रधानं गन्धादिप्रधानम्। प्राधान्ये बीजमाह—गुणोत्कर्षात्,

(१) 'परस्मात् परस्मात्' इति ख०।

### न्यायभाष्यम्

किंकृतं पुनर्व्यवस्थानम्—किञ्चित् पार्थिवमिन्द्रियं न सर्वाणि, कानिचिदाप्य-तैजसवायव्यानि इन्द्रियाणि न सर्वाणीति ?

## (सू०)—तद्व्यवस्थानं तु भूयस्त्वात् ॥ ६९ ॥

अर्थनिर्वृत्तिसमर्थस्य प्रविभक्तस्य द्रव्यस्य संसर्गः पुरुषसंस्कारकारितो भूयस्त्वम्। दृष्टो हि प्रकर्षे भूयस्त्वशब्दः, यथा प्रकृष्टो विषयो भूयानित्युच्यते। यथा पृथगर्थ-क्रियासमर्थानि पुरुषसंस्कारवशाद् विषौषधि-मणिप्रभृतीनि द्रव्याणि निर्वर्त्यन्ते, न सर्वं सर्वार्थम्; एवं पृथग्विषयग्रहणसमर्थानि घ्राणादीनि निर्वर्त्यन्ते न सर्वविषयग्रहण-समर्थानीति ॥ ६९ ॥

### न्यायवार्त्तिकम्

नियमः। तस्मान्न (१) सर्वगुणोपलब्धिः। यः पुनर्गन्धगुणत्वाद् घ्राणं गन्धग्राहकमिति प्रति-जानीते तस्य सर्वगुणोपलब्धिप्रसङ्गः ॥ ६८ ॥

कस्मात् पुनर्न सर्वं पार्थिवं घ्राणमिति ?

तद्व्यवस्थानं तु भूयस्त्वात्। व्यवस्थानियमज्ञापनार्थम् 'तद्व्यवस्थानं तु भूयस्त्वा-' दिति सूत्रम्। किं पुनरिदं भूयस्त्वम् ? अर्थनिर्वृत्तिसमर्थस्य प्रविभक्तस्य द्रव्यस्य संसर्गः पुरुष-संस्कारकारितो भूयस्त्वम्, दृष्टो हि (२)प्रकर्षे भूयस्त्वशब्दः, यथा लोके प्रकृष्टो विषयो भूयानित्युच्यते। यथा च पृथगर्थक्रियासमर्थानि पुरुषसंस्कारोपग्रहाद् विषौषधिमणिप्रभृतीनि द्रव्याणि निर्वर्त्यन्त इति ॥ ६९ ॥

### न्यायवार्त्तिकतात्पर्यटीका

शेषः। यः पुनर्गन्धगुणत्वादिति, गन्धमात्रगुणत्वादेव घ्राणं गन्धस्य व्यञ्जकं न तु गन्धस्योत्-कर्षादित्यर्थः। तस्य वादिनः सर्वेषामेव पार्थिवानां गुणानामुपलब्धिप्रसङ्गः घ्राणग्राह्यत्व-प्रसङ्ग इत्यर्थः ॥ ६८ ॥

ननु भवतोऽपि कुतो व्यवस्थितिरिति सूत्रमवतारयितुं पृच्छति—कस्मात्पुनरिति—

तद्व्य—स्त्वात् ( सू० ६९ )॥ अर्थनिर्वृत्तीति, अर्थः पुरुषार्थः। प्रविभक्तस्येति, इतरेभ्यो विशिष्टस्य। संस्कारकारित इति, अदृष्टकारित इति ॥ ६९ ॥

### वृत्तिः

गुणस्य गन्धादेरुत्कर्षात् तद्व्यवस्थापकत्वात्। तथा च गन्धादिषु मध्ये स्वव्यव-स्थापकगुणस्यैव ग्राहकत्वं घ्राणादीनामिति ॥ ६५ ॥

(१) 'सर्वगुणोपलब्धिप्रसङ्गः' इति क-ख-धृतपाठान्तरम्।
(२) 'भूयस्त्वं प्रकर्षशब्दः' इति क-ख-धृतपाठान्तरम्।

## न्यायभाष्यम्

स्वगुणान्नोपलभन्ते इन्द्रियाणि। कस्मादिति चेत्?

## (सू०)—सगुणानामिन्द्रियभावात् ॥ ७० ॥

स्वान् गन्धादीन् नोपलभन्ते घ्राणादीनि। केन कारणेनेति चेत्? (१) स्वगुणैः सह घ्राणादीनामिन्द्रियभावात्। घ्राणं स्वेन गन्धेन समानार्थकारिणा सह बाह्यं गन्धं गृह्णाति तस्य स्वगन्धग्रहणं सहकारिवैकल्यान्न भवति, एवं शेषाणामपि ॥ ७० ॥

यदि पुनर्गन्धः सहकारी च स्याद् घ्राणस्य (२)ग्राह्यश्चेत्यत आह—

## (सू०)—तेनैव तस्याग्रहणाच्च ॥ ७१ ॥

## न्यायवार्त्तिकम्

स्वगुणान्नोपलभन्त इन्द्रियाणि। कस्मादिति चेत्—केन कारणेन स्वानि गन्धादीनि इन्द्रियाणि नोपलभन्त इति?

सगुणानामिन्द्रियभावात्। सह गुणेनेन्द्रियं भवति, निर्गुणं तु नेन्द्रियमतो न गृह्णाति ॥ ७० ॥

यदि पुनरिन्द्रियस्य सहकारी च गन्धः स्याद् ग्राह्यश्चेति?

तेनैव तस्याग्रहणाच्च। यदीन्द्रियं स्वगन्धं गृह्णीयात् ते, नासाविन्द्रियगन्धः। अथेन्द्रियगन्धः? नेन्द्रियग्राह्यः स्यात्। गन्धश्च गृह्णदिन्द्रियमात्मानं गृह्णीयात् आत्मा ह्यस्य

## न्यायवार्त्तिकतात्पर्यटीका

सगु—वात् ( सू० ७० ) ॥ (क)

शङ्कते—यदि पुनरिन्द्रियस्य गन्ध इति। निराकरोति—तेनैव तस्येति।

तेनै—च (सू० ७१ ) ॥ तदेतद्ग्रहणकवाक्यं सोपस्कारं व्याचष्टे—यदीन्द्रियं स्वगन्धं गृह्णीयात् ते तव दर्शने नासाविन्द्रियगन्धः। अथेन्द्रियगन्धः ततो नेन्द्रियग्राह्यः स्यात्।

## वृत्तिः

ननु पृथिव्यन्तरस्यापि गन्धप्राधान्यात् किमिन्द्रियं किमनिन्द्रियमित्यतऽऽह—( तद्व्यवस्थानं तु भूयस्त्वात् )

भूयस्त्वात् जलाद्यविशिष्टपृथिव्याद्यारब्धत्वात् तद्व्यवस्थानं घ्राणादीन्द्रियत्वव्यवस्थितिः ॥ ६६ ॥

घ्राणादीनां गन्धादिगुणवत्त्वे मानमाह—( सगुणानामिन्द्रियभावात् )

सगुणानां गन्धादिविशिष्टानां घ्राणादीनाम्, इन्द्रियभावात् गन्धादिसाक्षात्कारकारणत्वात्, कुङ्कुमगन्धाभिव्यञ्जकघृतादौ तथैव दर्शनात् ॥ ६७ ॥

(१) 'सह गुणैर्घ्राणादीनाम्'—इति वि०। (२) 'ग्राह्यश्चेत्यत' इति ग०।

(क) ७०तम-सूत्रे तात्पर्यटीका नोपलभ्यते।

## न्यायभाष्यम्

न (१)गुणोपलब्धिरिन्द्रियाणाम्। यो ब्रूते—यथा बाह्यं द्रव्यं चक्षुषा गृह्यते तथा तेनैव चक्षुषा तदेव चक्षुर्गृह्यतामिति, तादृगिदम्; तुल्यो ह्युभयत्र (२)प्रतिपत्तिहेत्वभाव इति ॥ ७१ ॥

## (सू०)—न शब्दगुणोपलब्धेः ॥ ७२ ॥

स्वगुणान्नोपलभन्त इन्द्रियाणीति एतन्न भवति। उपलभ्यते हि स्वगुणः शब्दः श्रोत्रेणेति ॥ ७२ ॥

## न्यायवार्त्तिकम्

गन्ध इति। न चाऽऽत्मसाधनं करणमस्तीति दृष्टान्तविरोधः। न चैतत् प्रत्यक्षं यद् घ्राणगन्धो घ्राणग्राह्य इति। कस्मात् पुनरिदं न देश्यते घ्राणेन घ्राणं कस्मान्न गृह्यत इति? न देश्यतेऽदृष्टत्वात्—न दृष्टं घ्राणेन घ्राणस्य ग्रहणमित्यतो न देश्यत इति। तुल्यं घ्राणेन स्वस्य गन्धस्याग्रहणमिति एतदपि अदेशनीयम्—स्वगुणान्नोपलभन्त इन्द्रियाणि कस्मादिति? तुल्यो ह्युभयत्र हेत्वभावः ॥ ७१ ॥

न शब्दगुणोपलब्धेः। स्वगुणान्नोपलभन्त इन्द्रियाणीत्येतदयुक्तम्। स्वगुण उपलभ्यते आकाशेन शब्द इति ॥ ७२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

कस्मान्नेन्द्रियग्राह्य इन्द्रियगन्ध इत्यत आह—गन्धं च गृह्णदिति। चो हेत्वर्थे। न चाऽऽत्मसाधनं करणमस्तीति मनस्तु लिङ्गवदात्मनि करणं न केवलमित्युक्तम्। तुल्यत्वमापादयितुं सिद्धान्ती पूर्वपक्षिणमनुयुङ्क्ते—कस्मात्पुनरिदं न (३)देश्यत इति। पूर्वपक्ष्याह—न (४)देश्यत इति। सिद्धान्तवाद्याह—तुल्यं घ्राणेन स्वस्य गन्धस्याग्रहणमिति। तुल्यतामेवाऽऽपादयति—एतदप्यदेशनीयमिति ॥ ७१ ॥

न श—ब्धेः ( सू० ७२ ) ॥ (क)

## वृत्तिः

इत्थं च गन्धादिसिद्धावप्रत्यक्षत्वादनुद्भूतत्वकल्पनमित्याशयेनाऽऽह—

( तेनैव तस्याग्रहणाच्च )

तेन इन्द्रियेण तस्य सगुणस्येन्द्रियस्य अग्रहणाद् अनुद्भूतत्वकल्पनमिति ॥ ६८ ॥

---

(१) 'स्वगुणोप-' फ०। (२) 'प्रतिपत्तिहेतुभावः' इति वि-टि०। (३-४) 'चोद्यते' इति क-ख०।
(क) ७२तम-सूत्रे तात्पर्यटीका नोपलभ्यते।

## (सू०)—तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥ ७३ ॥

### न्यायभाष्यम्

न शब्देन गुणेन सगुणमाकाशमिन्द्रियं भवति। न शब्दः शब्दस्य व्यञ्जकः, न च घ्राणादीनां स्वगुणग्रहणं प्रत्यक्षम्, नाप्यनुमीयते। अनुमीयते तु श्रोत्रेणाऽऽकाशेन शब्दस्य ग्रहणम्, शब्दगुणत्वं च आकाशस्येति। परिशेषश्चानुमानं वेदितव्यम्। आत्मा तावत् श्रोता न करणम्, मनसः श्रोत्रत्वे वधिरत्वाभावः, पृथिव्यादीनां घ्राणादिभावे

### न्यायवार्त्तिकम्

न पुनः श्रोत्रं सशब्दमिन्द्रियमिति—यथेतराणि सगुणानीन्द्रियाणि नैवमाकाशमिति। कस्मात्? शब्दस्येतरगुणवैधर्म्यात्--आकाशस्येतरद्रव्यवैधर्म्यात्। अस्यार्थस्य ज्ञापनार्थम्—

तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् इति सूत्रम्। न शब्दः शब्दस्य व्यञ्जको नाऽऽकाशं सगुणमिन्द्रियमिति। किं पुनरिदं श्रोत्रम्? आकाशं परिशेषात्। तत्राऽऽत्मा तावन्न श्रोत्रम्, कर्तृत्वात्—श्रोता आत्मा न श्रोत्रम्। मनः श्रोत्रं भविष्यतीत्यपि न, मनसः श्रोत्रत्वे बधिराद्यभावः। सर्वविषयत्वाच्च मनसः सर्वविषयं च श्रोत्रं प्राप्नोति। पृथिव्याद्यपि न श्रोत्रं घ्राणादिभावेन विनियोगात्—घ्राणादिविनियुक्ताः पृथिव्यादयः, श्रोत्रभावे च घ्राणादीनां तद्वैकल्ये शब्दाद्युपलब्धिप्रसङ्गः। त्वचः श्रोत्रभावे बधिराद्यभावः, सर्वोपघाते च प्रायणम्। दिक्कालयोः श्रोत्रभावे च शब्दस्यान्यगुणत्वादग्रहणप्रसङ्गः। तद्गुणत्वमेवेति चेत् नास्मिन् विवादः—यस्य शब्दो गुणस्तदाकाशम्, भवता संज्ञामात्रं भिद्यते तौ दिक्कालाविति। आकाश-

### न्यायवार्त्तिकतात्पर्यटीका

तदु—र्म्यात् ( सू० ७३ ) ॥ तद्गुणत्वमेव शब्दगुणत्वमेव दिक्कालयोरिति चेद् न।स्मिन् विवादः दिक्कालयोर्हि शब्दगुणत्वे सत्यसाधारणयोगित्वेन न परापरव्यतिकरकारणत्वं पृथिव्यादिवद्भवितुमर्हतीति। तथा च शब्दगुणं (१)परापरप्रत्ययकारणं चाऽऽकाशमेवेति नास्मिन् विवादः।

### वृत्तिः

नन्विन्द्रियगुणानामप्रत्यक्षत्वनियमो नेत्याशङ्कते—( न शब्दगुणोपलब्धेः )

उक्तनियमो न युक्तः शब्दस्य श्रोत्रगुणस्योपलब्धेः ॥ ६९ ॥

समाधत्ते—( तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् )

द्रव्यगुणानां रूपशब्दादीनां परस्परं वैधर्म्याच्छब्दस्योपलब्धिर्न चक्षूरूपादीनाम्,

(१) 'परापरप्रत्ययाकारणं' इति क०।

न्यायभाष्यम्

सामर्थ्यम्, श्रोत्रभावे चासामर्थ्यम्। अस्ति चेदं श्रोत्रम् आकाशं च शिष्यते, परिशेषादाकाशं श्रोत्रमिति ॥ ७३ ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये तृतीयाध्यायस्याऽऽद्यमाह्निकम् ॥

न्यायवार्त्तिकम्

प्रत्याख्यानं वाऽन्यगुणत्वाच्छब्दस्य—यदि शब्दो दिक्कालगुणो भवति आकाशं तर्हि प्रत्याख्यातम्। न हि शब्दमन्तरेणाऽऽकाशास्तित्वे (१)लिङ्गमस्ति यथा दिक्कालयोः (२)परापरादि लिङ्गमिति। न च द्रव्यान्तरं शिष्यते। न च गुणानां श्रोत्रभावो युक्तः, न च कर्मणाम्, न च सामान्य-विशेषसमवायानां सामर्थ्यानुपलब्धेः। न चेदं श्रोत्रं नास्ति शब्दोपलब्धिलिङ्गम्, शिष्यते चाऽऽकाशम्, तस्मादाकाशं श्रोत्रमिति ॥ ७३ ॥

( इति अर्थपरीक्षाप्रकरणम् )

इति औद्द्योतकरे न्यायवार्त्तिके तृतीयस्याध्यायस्याऽऽद्यमाह्निकम्।

न्यायवार्त्तिकतात्पर्यटीका

दिक्कालौ तु परापरव्यतिकरकारणे कल्पनीयौ ततो व्यतिरिक्तावित्यर्थः। अपि वाऽऽकाशमिच्छत आकाशप्रत्याख्यानं (क) वा सामर्थ्यानुपलब्धेरिति, रूपादिसाक्षात्कारे हि इन्द्रियाणा-मिन्द्रियत्वमेव स्वरूपसामर्थ्यं तच्चक्षुरादिद्रव्यस्य दृष्टं न गुणादीनामित्यर्थः ॥ ७३ ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्त्तिकतात्पर्यटीकायां तृतीयाध्यायस्य प्रथममाह्निकम् ॥

वृत्तिः

शब्दाश्रयस्य लाघवेनैक्यसिद्धेरिति भावः ॥ ७० ॥

समासमर्थपरीक्षाप्रकरणम् ॥ ९ ॥

इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ आत्मादिप्रमेयचतुष्टयपरीक्षणं नाम तृतीयाध्यायस्याऽऽद्यमाह्निकम् ॥

---

(१) 'लिङ्गमिति' इति क-ख-धृतपाठान्तरम्। (२) 'परत्वापरत्वे' इति क-ख-धृतपाठान्तरम्।

(क) 'वा' इत्यत्र 'च' इति क-ख-तात्पर्यपुस्तकयोर्मुद्रितम्।

# अथ तृतीयाध्यायस्य

## द्वितीयमाह्निकम्

—:०:—

### न्यायभाष्यम्

परीक्षितानीन्द्रियाण्यर्थाश्च, बुद्धेरिदानीं परीक्षाक्रमः, सा किमनित्या नित्या वेति। कुतः संशयः ?

(सू०)—कर्माकाशसाधर्म्यात् संशयः ॥ १ ॥

अस्पर्शवत्त्वं ताभ्यां समानो धर्म उपलभ्यते बुद्धौ, विशेषश्चोपजनापायधर्मवत्त्वम्, विपर्ययश्च यथास्वमनित्यनित्ययोस्तस्यां बुद्धौ नोपलभ्यते, तेन संशय इति ॥ १ ॥

(१)अनुपपन्नरूपः खल्वयं संशयः। सर्वशरीरिणां हि प्रत्यात्मवेदनीया अनित्या बुद्धिः

### न्यायवार्त्तिकम्

परीक्षितानीन्द्रियाण्यर्थाश्च, बुद्धेरिदानीं परीक्षाक्रमः। सा किमनित्या नित्या वेति धर्मविचारः सत्त्वस्याधिगतत्वात्, तस्यां च संशयमुपपादयति—

कर्माकाशसाधर्म्यात् संशयः। उभाभ्यां साधर्म्यमस्पर्शवत्त्वम्, विशेषः (२) उपजननापायधर्मकत्वं विपर्ययश्च बुद्धौ नोपलभ्यते ततः संशयः ॥ १ ॥

अनुपपन्नरूपः खल्वयं संशयः सर्वशरीरिणां प्रत्यात्मवेदनीयत्वात्—सर्वशरीरिणां प्रत्यात्म-

### न्यायवार्त्तिकतात्पर्यटीका

परीक्षितानीन्द्रियाण्यर्थाश्च, बुद्धेरिदानीं परीक्षाक्रमः। क्रमः स्थानम्। वृत्तवर्तिष्यमाणानुकीर्तनं हेतुहेतुमद्भावज्ञापनार्थम्। अर्थेन्द्रियपरीक्षा च बुद्धिपरीक्षणं प्रति यथोपयुज्यते तथा बुद्धिपरीक्षायामेव स्फुटीभविष्यति।

कर्मा—यः ( सू० १ )॥ संशयमाक्षिपति—अनुपपन्नरूप इति। यद्युपलभ्यमानज्ञानविषयः संशयः, सोऽनुपपन्नः सांख्यानामपि तदनित्यत्वस्याभ्युपगमात्; अथ सांख्याभिमत-

### वृत्तिः

अथ क्रमप्राप्ततया बुद्धेर्मनसश्च परीक्षा सप्तभिः प्रकरणैः तत्परीक्षैव चाऽऽह्निकार्थः। परे तु शरीरावच्छेदव्याप्यभोगानुकूलसम्बन्धवत्प्रमेयपरीक्षा शरीरान्तर्वर्त्तिप्रमेयपरीक्षैवाऽऽह्निकार्थ इति, तदसत्, इन्द्रियपरीक्षायामतिव्याप्तेः।

---

(१) 'अनुपपन्नः' इति ग-ल-भा०।

(२) 'उपजनापायधर्मकत्वं' इति क-ख-धृतपाठान्तरम्।

## न्यायभाष्यम्

सुखादिवत्। भवति च संवित्तिः—ज्ञास्यामि जानामि अज्ञासिषमिति। न चोपजनापायावन्तरेण त्रैकाल्यव्यक्तिः, ततश्च त्रैकाल्यव्यक्तेरनित्या बुद्धिरित्येतत् सिद्धम्। प्रमाणसिद्धं चेदं शास्त्रेऽप्युक्तम्—'इन्द्रियार्थसन्निकर्षोत्पन्नम्', 'युगपज् ज्ञानानुत्पत्तिर्मनसो लिङ्ग'मित्येवमादि। तस्मात् संशयप्रक्रियानुपपत्तिरिति।

दृष्टिप्रवादोपालम्भार्थन्तु प्रकरणम्। एवं हि पश्यन्तः प्रवदन्ति साङ्ख्याः—पुरुषस्यान्तःकरणभूता नित्या बुद्धिरिति। साधनं च प्रचक्षते—

## न्यायवार्त्तिकम्

वेदनीयमेतत् (१)यदुतानित्या बुद्धिरिति। त्रैकाल्यव्यक्तेश्च—बुद्धौ त्रैकाल्यं व्यज्यमानं दृष्टम्—जानामि ज्ञास्याम्यज्ञासिषमिति। न चोपजननापायावन्तरेण त्रैकाल्यव्यक्तिः। न ह्यनुपजननापायधर्मेषु आकाशादिषु त्रैकाल्यं व्यज्यते। न च विशेषदर्शने सति युक्तः संशयः। तस्मात् संशयप्रक्रियानुपपत्तिरिति। शेषं भाष्ये।

दृष्टिप्रवादोपालम्भार्थं प्रकरणम्—न च बुद्धेरनित्यत्वं प्रतिपाद्यमपि तु परस्य दर्शनं निवर्त्तनीयमिति। एवं हि पश्यन्तः प्रवदन्ति साङ्ख्या नित्या बुद्धिरिति। साधनं च प्रचक्षते—

## न्यायवार्त्तिकतात्पर्यटीका

महत्तत्त्वविषयः, तस्य सत्त्व एव विप्रतिपत्तिरिति कुतस्तद्गतधर्मविचारः, सति धर्मिणि धर्माश्चिन्त्यन्ते न सन्दिग्धसत्त्व इति भावः।

समाधत्ते—दृष्टिप्रवादेति। सांख्यानां हि दर्शने प्रवादो महदन्तःकरणं बुद्धिरिति 'तदुपालम्भार्थम्' दूषणार्थं प्रकरणमिति। अयमभिप्रायः—नेह नित्यानित्यविचारः, अपि त्वनया द्वारा वृत्तेरतिरिक्ता सांख्याभिमता बुद्धिर्निराक्रियते, सामान्यतो बुद्धिमात्रस्य नित्यानित्यत्वविचारेण। यदि हि नित्या बुद्धिः स्यात् ततो वृत्तिभ्य उदयव्ययवतीभ्योऽतिरिक्तं महत्तत्त्वमन्तःकरणं स्यात्। अथ तु नित्यत्वसाधनानि प्रतिसन्धानादीनि न बुद्धिनित्यत्वस्येशते ततो वृत्तय एव बुद्धयो न तु तदतिरिक्तं बुद्धितत्त्वं सिध्यतीति सिध्यति 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्' इति बुद्धेर्लक्षणम्। तथा चास्य लक्षणे सङ्गतिः, इतरथा तु प्रधानतो नित्यानित्यत्वविचारो न लक्षणेन सङ्गच्छत इति।

## वृत्तिः

तत्र च बुद्धिपरीक्षा पञ्चभिः प्रकरणैः। तत्राऽऽदौ बुद्ध्यनित्यताप्रकरणम्, तत्र संशयप्रदर्शनाय सूत्रम्—( कर्माकाशसाधर्म्यात् संशयः )

(१) 'यद्वता' इति क-ख-धृतपाठान्तरम्।

## (सू०)—विषयप्रत्यभिज्ञानात् ॥ २ ॥

### न्यायभाष्यम्

किं पुनरिदं प्रत्यभिज्ञानम् ? यं पूर्वमज्ञासिषमर्थं तमिमं जानामीति ज्ञानयोः समानेऽर्थे प्रतिसन्धिज्ञानं प्रत्यभिज्ञानम्, एतच्चावस्थिताया बुद्धेरुपपन्नम्। नानात्वे तु बुद्धिभेदेषूत्पन्नापवर्गिषु प्रत्यभिज्ञानानुपपत्तिः नान्यज्ञातमन्यः प्रत्यभिजानातीति ॥ २ ॥

## (सू०)—साध्यसमत्वादहेतुः ॥ ३ ॥

यथा खलु नित्यत्वं बुद्धेः साध्यमेवं प्रत्यभिज्ञानमपीति। किं कारणम् ? चेतनधर्मस्य करणेऽनुपपत्तिः। पुरुषधर्मः खल्वयं ज्ञानं दर्शनमुपलब्धिर्बोधः प्रत्ययः

### न्यायवार्त्तिकम्

विषयप्रत्यभिज्ञानात् इति। यं पूर्वमज्ञासिपं तमिमं जानामीति ज्ञानयोः समानेऽर्थे प्रतिसन्धानमवस्थिताया बुद्धेरुपपन्नम्—बुद्धिनानात्वे प्रत्यभिज्ञानानुपपत्तिः यथा पुरुषान्तरबुद्धिषु ॥ २ ॥

साध्यसमत्वादहेतुः। यथैव बुद्धेर्नित्यत्वं साध्यं तथैव बुद्धौ प्रत्यभिज्ञानमपि साध्यम्। कस्मात् ? चेतनधर्मस्य करणेऽनुपपत्तेः—पुरुषधर्मः खल्वयं ज्ञानं दर्शनमुपलब्धिर्बोध इति। चेतनो हि पूर्वज्ञातमर्थं प्रत्यभिजानातीति तस्यैव तस्माद्धेतोर्नित्यत्वं युक्तम्।

### न्यायवार्त्तिकतात्पर्यटीका

साधनं च प्रवर्त्तते—

वि—नात् ( सू० २ ) इति॥ वृत्तिमान् किञ्च विषयं प्रत्यभिजानन्नात्मानमपि प्रत्यभिजानाति। न च चेतनो वृत्तिमान् तस्य कूटस्थनित्यत्वात् अन्यथा पूर्वापरावस्थाभेदवान् न कूटस्थनित्यः स्यात्। परिणामिनित्या तु बुद्धिरुदयव्ययवदनेकवृत्तिमती युज्यत इति भावः ॥ २ ॥

सिद्धान्त्याह—

सा—तुः ( सू० ३ ) इति॥ वृत्तयो हि वृत्तिमतो भिन्नास्तेन (क)तासामनित्यत्वेऽपि न वृत्तिमान् कौटस्थ्याच् च्यवते। तथा च प्रत्यभिज्ञातात्मैव प्रत्यभिज्ञानान्नित्यः स्यान्न त्वन्तःकरणं बुद्धिसंज्ञकम्, न हि तत्प्रत्यभिज्ञाने प्रकाशत इत्यर्थः।

### वृत्तिः

कर्मण आकाशस्य च साधर्म्यान्निःस्पर्शत्वाद् बुद्धिपदार्थे नित्यत्वसंशयः। बुद्धिपदं नित्यशक्तं न वेति संशयः पर्यवसन्नः ॥ १ ॥

---

(क) 'तासां नित्यत्वेऽपि' इति क-ख-पुस्तकयोर्मुद्रितम्।

न्यायभाष्यम्

अध्यवसाय इति। चेतनो हि पूर्वज्ञातमर्थं प्रत्यभिजानाति, तस्यैतस्माद्धेतोर्नित्यत्वं युक्तमिति। करणचैतन्याभ्युपगमे तु चेतनस्वरूपं वचनीयं नानिर्दिष्टस्वरूपमात्मान्तरं शक्यमस्तीति प्रतिपत्तुम्। ज्ञानं चेद् (१)बुद्धेरन्तःकरणस्याभ्युपगम्यते चेतनस्येदानीं किं स्वरूपं को धर्मः किं तत्त्वम्? ज्ञानेन च बुद्धौ वर्तमानेनायं चेतनः किं करोतीति?

चेतयते इति चेत् न, ज्ञानादर्थान्तरवचनम्—पुरुषश्चेतयते बुद्धिर्जानातीति नेदं ज्ञानादर्थान्तरमुच्यते, चेतयते जानीते बुध्यते पश्यति उपलभते इत्येकोऽयमर्थ इति। बुद्धिर्ज्ञापयतीति चेत् अद्धा—जानीते पुरुषो बुद्धिर्ज्ञापयतीति सत्यमेतत्। एवं चाभ्युपगमे ज्ञानं पुरुषस्येति सिद्धं भवति न बुद्धेरन्तःकरणस्येति।

न्यायवार्त्तिकम्

क्रियानाधारत्वाच्च करणस्य—न हि करणं क्रियाया आधारो भवति, उपलब्धिश्च क्रिया सा च न करणे वर्त्तितुमर्हतीति। स्वक्रियाधारत्वादयुक्तमिति चेत्—अथ मन्यसे सर्वं कारकं स्वक्रियाया आधारो भवतीत्यतोऽयुक्तं क्रियानाधार इति? सत्यम्, भवति स्वक्रियाधारः, न पुनः स्वक्रियातः करणव्यपदेशः। स्वक्रियाह्य सर्वं कारकं कर्तृ भवति, करणभावं चाऽऽश्रित्य बुद्धौ विचारः, तस्मादयुक्तमेतत्। सर्वकर्तृत्वप्रसङ्ग इति चेत्—यदि पुनः स्वक्रियानिमित्तकः कर्तृव्यपदेशः सर्वं कारकं कर्तृ प्राप्तम्? सत्यमेतत् नाभ्युपगमा एव दोषत्वेन देश्यन्त इति। कर्तृकरणादिव्यपदेशश्च कथम्? प्रधानक्रियापेक्षः कर्तृकरणादिव्यपदेशः—यदर्थं (२)करणमुपादीयते सा प्रधानक्रिया, तस्यां च साधनभावे विवक्षिते भेदे वाऽविवक्षिते कारकमित्यनेन

न्यायवार्त्तिकतात्पर्यटीका

क्रियानाधारत्वाच्च करणस्येति। प्रधानक्रियानाधारः करणम्। प्रधानक्रिया चेयमुपलब्धिः स्वतो यदाधारा प्रतीयते स कर्त्ता, न करणम्। तथा च प्रत्यभिज्ञानाद्युपलब्ध्या तदाधारः कर्त्ता आत्मा सिध्यति नित्यो न तु करणमित्यर्थः। क्रियामात्राभिधानेन शङ्कते—स्वक्रियेति। प्रधानक्रियामालम्ब्य निराकरोति—सत्यं भवतीति। ननु यदि भेदविवक्षया कर्त्रादिशब्द-

वृत्तिः

तत्र बुद्धिनित्यत्वं साङ्ख्यः साधयति—( विषयप्रत्यभिज्ञानात् )

बुद्धिर्नित्येति शेषः। योऽहं घटमद्राक्षं सोऽहं घटं स्पृशामीति प्रत्यभिज्ञानमेकं वृत्तिमन्तं विषयीकरोति। न चाऽऽत्मा तथा तस्य जन्यधर्मानधिकरणस्य कूटस्थत्वात्, तस्माद् वृत्तिमती बुद्धिरेव, वृत्तिस्तु तस्याः परिणामः, बुद्धेरप्याविर्भावतिरोभावावेव न तूत्पादविनाशाविति ॥ २ ॥

(१) 'बुद्धे'रिति प्र-पु० नास्ति। (२) 'कारकमुपा-' इति क-ख-धृतपाठान्तरम्।

## न्यायभाष्यम्

प्रतिपुरुषं च शब्दान्तरव्यवस्थाप्रतिज्ञाने प्रतिषेधहेतुवचनम्। यश्च प्रतिजानीते—कश्चित्पुरुषश्चेतयते, कश्चिद् बुध्यते, कश्चिदुपलभते, कश्चित्पश्यतीति ; पुरुषान्तराणि खल्विमानि चेतनो बोद्धोपलब्धा द्रष्टेति नैकस्यैते धर्मा इति अत्र कः प्रतिषेधहेतुरिति ?

अर्थस्याभेद इति चेत् समानम्। अभिन्नार्था एते शब्दा इति तत्र व्यवस्थानुपपत्तिरित्येवं चेन्मन्यसे, समानं भवति—पुरुषश्चेतयते बुद्धिर्जानीते इत्यत्राप्यर्थो न भिद्यते तत्रोभयोश्चेतनत्वादन्यतरलोप इति। यदि पुनर्बुध्यतेऽनयेति बोधनं बुद्धिः मन

## न्यायवार्त्तिकम्

शब्देनाभिलप्यन्ते कर्त्रादयः, यदा तु भेदो विवक्षितस्तदा कर्तृ-करण-कर्मशब्दवाच्यानीति। कारकशब्देनापि सामान्येनाभिधीयमानेषु कारकेषु यः स्वगतो विशेषः इतरेतरव्यावृत्तः सोऽभिधीयते अन्यस्याभावात्, प्रधानक्रियापेक्षं तु कारकाणां कर्त्राद्यभिधानमिति। तत्र यदितराप्रयोज्यमितरकारकप्रयोक्तृ च तत् कर्तृ, एवं शेषेषु कारकशब्दाः (१)पूर्ववद्वक्तव्याः। यद्यन्यकारकाप्रयोज्यत्वं कर्तृत्वं नन्वयमपि कारकोपादानेन प्रयुज्यते ? न प्रयुज्यते फलस्य प्रयोजकत्वात्—फलं कर्तारं प्रयोजयति, न कारकं करणादि, न च फलं कारकमिति तेषां तन्नान्तरीयकमुपादानम्। न हि करणादिकारकोपादानमन्तरेण क्रिया सम्भवतीति तन्नान्तरीयकत्वात् कारकाण्युपादीयन्त इति। तस्माच्चेतनधर्मः करणे न सम्भवतीति।

## न्यायवार्त्तिकतात्पर्यटीका

प्रवृत्तिरभेदविवक्षायां च कारकशब्दप्रवृत्तिः कथं तर्हि कर्ता कारकं करणं कारकमित्यादिसामानाधिकरण्यं भेदाभेदविवक्षयोर्विरुद्धार्थत्वादित्यत आह—कारकशब्देनापीति। नाभेदविवक्षा विशेषाणां किन्तु सामान्यविवक्षा, भिद्यत इति भेदः न भेदोऽभेद इति सामान्यस्याभिधानात्। तथा च सामान्यविवक्षया प्रवृत्तः शब्दस्तद्भेदाभिधानाद्भेदवाचिना सामानाधिकरण्यं प्रतिपद्यमान इतरेतरव्यावृत्ते विशेषेऽपादानादौ प्रवर्त्तते अन्यस्य कारकविशेषस्य कारकशब्देन सामानाधिकरण्यासंभवात्। पूर्ववदिति (क)द्वितीयाध्यायोक्तं कारकविशेषस्य लक्षणं स्मारयति। चोदयति—यद्यन्यकारकेति। कारकाणामुपादानेन खलु प्रवर्त्तितः कर्त्ता कारकाण्युपादत्ते, तस्मादितराप्रयोज्यत्वमस्यासिद्धमित्यर्थः। परिहरति—न प्रयुज्यते फलस्य प्रयोजकत्वादिति। नाप्रयुज्यमानं कर्त्तारं ब्रूमः अपि तु कारकाप्रयोज्यम्, न च फलं कारकमित्यर्थः।

(१) 'पूर्ववत् प्रयोक्तव्याः' इति क-ख-धृतपाठान्तरम्।

(क) द्वितीयाध्याये प्रथमाह्निके १६-श-सूत्रस्य भाष्य-वार्त्तिक-तात्पर्यटीका द्रष्टव्याः (४३४—४३८ पत्राङ्कः)।

## न्यायभाष्यम्

एवोच्यते तच्च नित्यम्, (१)अस्त्वेतदेवम्, न तु मनसो विषयप्रत्यभिज्ञानान्नित्यत्वम्। दृष्टं हि करणभेदे ज्ञातुरेकत्वात् प्रत्यभिज्ञानं 'सव्यदृष्टस्येतरेण प्रत्यभिज्ञाना'दिति

## न्यायवार्त्तिकम्

उपेत्य प्रत्यभिज्ञानमन्तःकरणे तस्यैकानेकव्यावृत्तेरसाधारणता। न हि प्रत्यभिज्ञानमेकत्वे दृष्टं न नानात्व इति (२)प्रत्यभिज्ञानस्वरूपावधारणे च सति विरुद्धः। यदा चेदं प्रत्यभिज्ञानं निरूप्यते तदा बुद्धिभेदं प्रतिपादयति। प्रत्यभिज्ञानं हि नामाद्यप्रत्यक्षनिरोधे द्वितीयदर्शने प्रागाहितसंस्काराभिव्यक्तौ स्मृतिपूर्वं तृतीयं दर्शनम्। न च बुद्ध्यभेदवादिनो द्वितीयमपि तावद्दर्शनमस्ति कुतस्तृतीयमिति। प्रत्ययभेद इति चेत्—अथ मन्यसे अवस्थिताया बुद्धेः प्रत्ययास्तिरोभवन्ति व्यज्यन्ते च, तत्राऽऽद्यदर्शनतिरोभावे प्रत्ययान्तराविर्भावे च प्रत्यभिज्ञानमिति? तन्न युक्तं तद्व्यतिरेकेण बुद्धिस्वभावानवधारणात्—यां तां प्रत्ययव्यतिरिक्तां बुद्धिं भवन्तः कल्पयन्ति तस्याः कः स्वभाव इति वक्तव्यम्। अस्माकं तु प्रत्ययमात्रं बुद्धिः—अर्थग्रहणं हि बुद्धिरिति। दर्शनदृष्टस्य स्पर्शनेन प्रत्यभिज्ञानान्नानात्वे प्रत्यभिज्ञानमिति विरुद्धः प्रदीपान्तरदृष्टस्य प्रदीपान्तरेणेति।

यदि बुद्धिरध्यवस्यति, अथ बुद्धौ वर्तमानेन ज्ञानेन चेतनः किं करोति? चेतयत इति? कश्चेतयते? यदि यस्याध्यवसायः स चेतयते विरुद्धमेतत्। अथाऽऽत्मा चेतयते? कथं बुद्धौ वर्तमानेन प्रत्ययेनाऽऽत्मा चेतयते? न ह्यन्यत्र वर्तमानया क्रियया अन्यस्य तद्वत्ता भवति। अथ पुरुष-

## न्यायवार्त्तिकतात्पर्यटीका

उपेत्य प्रत्यभिज्ञानमन्तःकरणे तस्येति। प्रत्यक्षं चेत् प्रत्यभिज्ञानं नैकत्वे किं त्वनुमानम्, ततो यद् यत् प्रत्यभिज्ञायते तत्तदेकमिति न निदर्शनमस्ति; न हि तस्यैकत्वमन्यतो निश्चितमतः प्रत्यभिज्ञानात्। नाप्यनेकत्वं दृष्टम्, तथा चासाधारणतया हेत्वाभास इत्यर्थः। प्रत्यभिज्ञानस्वरूपावधारणे च सति विरुद्धः हेत्वाभासो बुद्ध्यनित्यत्वसाधनादिति। शेषं निगदेनैव व्याख्यातम्। चेतनाध्यवसायाभेदो बुद्धिलक्षणेऽस्माभिर्विचारितः॥ ३॥

## वृत्तिः

परिहरति—( साध्यसमत्वादहेतुः )

साध्यसमत्वात् असिद्धत्वात् प्रतिसन्धातृत्वं न हेतुः, अहं जानामीत्यादिना आत्मन एव प्रतिसन्धातृत्वप्रत्ययात्। अनादिनिधनत्वमेव तस्य कौटस्थ्यम्, अन्यादृशं त्वसिद्धमिति भावः॥ ३॥

---

(१) 'अस्त्वेतदेवम्' ज-आ०।
(२) 'प्रत्यभिज्ञानेन स्वरूपा—' इति क-ख०।

## न्यायभाष्यम्

चक्षुर्वत् प्रदीपवच्च ; प्रदीपान्तरदृष्टस्य प्रदीपान्तरेण प्रत्यभिज्ञानमिति। तस्माज् ज्ञातुरयं नित्यत्वे हेतुरिति ॥ ३ ॥

यच्च मन्यते बुद्धेरवस्थितताया यथाविषयं वृत्तयो ज्ञानानि निश्चरन्ति वृत्तिश्च वृत्तिमतो नान्येति, तच्च—

## (सू०)—न, युगपदग्रहणात् ॥४॥

वृत्तिवृत्तिमतोरनन्यत्वे वृत्तिमतोऽवस्थानाद्द वृत्तीनामवस्थानमिति यानीमानि विषयग्रहणानि तान्यवतिष्ठन्त इति युगपद्द विषयाणां ग्रहणं प्रसज्यत इति ॥ ४ ॥

## न्यायवार्त्तिकम्

श्चेतयते बुद्धिर्जानीत इति ? नेदं ज्ञानादर्थान्तरमुच्यते, यावदुक्तं भवति चेतयते तावदुक्तं भवति (१)जानीत इति। बुद्धिर्ज्ञापयतीति चेत्—अथ मन्यसे बुद्धिर्ज्ञापयत्यात्मा जानीते इति ? अद्धा जानीते च पुरुषो बुद्धिर्ज्ञापयतीति। अध्यवसायचेतनयोश्च स्वभावभेदो वक्तव्यः। भवताऽप्येकत्वं वक्तव्यम्, देशकालस्वभावाभेदात्—यस्मादविदेशमविकालं च बुद्ध्याऽध्यवसितमात्माऽप्यध्यवस्यति। स्वभावाभेदोऽसिद्ध इति चेत्—अथ मन्यसे सत्यमभिन्नकालमभिन्नदेशं च बुद्ध्याऽध्यवसितमात्माऽप्यध्यवस्यति (२)न पुनरचेतनात्मैवाध्यवसाय इति ? न प्रतिशरीरमनेकपुरुषप्रसङ्गाद्द यद्यन्यश्चेतयिता अन्यश्चाध्यवसाता भवति, अन्यः प्रतिजानीते अन्यः पश्यत्यन्यः शृणोति मन्तेत्येवमादिषु पुरुषान्तराणि खल्विमानि द्रष्टा श्रोता मन्तेति, नैकस्यैते धर्मा इति। अत्र भवता किं वक्तव्यम् ? अभिन्नार्था एते शब्दा इत्येतद्वक्तव्यम्—अभिन्नार्थास्तदेते शब्दा भवन्ति, नन्वत्राप्यर्थो न भिद्यते चेतनोऽध्यवसाता मन्ता बोद्धेति तस्मादयुक्तमेतद्द बुद्धिरध्यवस्यत्यात्मा चेतयत इति। यदि पुनरिदं प्रत्यभिज्ञानं मनसोऽनित्यत्वसाधकं स्यात् ? न युक्तमेवं भवितुं मनसो नित्यत्वाभ्युपगमात् अभ्युपगम्यते मनसो नित्यत्वमिति तत्र साधनमनर्थकम्। अनेकान्ताच्च न प्रत्यभिज्ञानात् करणैकत्वं सिध्यति दृष्टं करणभेदेऽपि प्रत्यभिज्ञानं ज्ञातुरेकत्वात् दर्शनदृष्टस्य स्पर्शनेन प्रत्यभिज्ञानात् प्रदीपदृष्टस्य प्रदीपान्तरेणेति ॥ ३ ॥

यत्त्विदं मन्यते बुद्धेरवस्थितताया यथाविषयं वृत्तयः प्रादुर्भवन्ति वृत्तिश्च वृत्तिमतो नान्येति तच्च—

न, युगपदग्रहणात्। वृत्तिमतोऽवस्थानाद्द वृत्त्यवस्थानमिति सूत्रार्थः ॥ ४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

न, यु—णात् ( सू० ४ ) ॥ वृत्तिमतोऽवस्थानाद्वृत्त्यवस्थानप्रसङ्ग इति सूत्रार्थः ॥ ४ ॥

(१) 'जानातीति' इति क-ख-धृतपाठान्तरम्।

(२) 'न पुनर्यैरचेतना'—इति क-ख-पुस्तके मुद्रितम्।

## (सू०)—अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ॥५॥

### न्यायभाष्यम्

अतीते च प्रत्यभिज्ञाने वृत्तिमानप्यतीत इत्यन्तःकरणस्य विनाशः प्रसज्यते, विपर्यये च नानात्वमिति ॥ ५ ॥

अविभु चैकं मनः पर्यायेणेन्द्रियैः संयुज्यत इति—

## (सू०)—क्रमवृत्तित्वादयुगपद् ग्रहणम् ॥ ६ ॥

इन्द्रियार्थानाम्, वृत्तिवृत्तिमतो(१)र्नानात्वमिति। एकत्वे च प्रादुर्भावतिरोभावयोरभाव इति ॥ ६ ॥

### न्यायवार्त्तिकम्

अप्रत्यभिज्ञाने च विनाशप्रसङ्गः। वृत्तीनामपगमे वृत्तिमतोऽप्यपगम इति सूत्रार्थः ॥ ५ ॥

अविभु चैकं मनः पर्यायेणेन्द्रियैः सम्बध्यत इति—

क्रमवृत्तित्वादयुगपद् ग्रहणम्। वृत्तिवृत्तिमतोर्नानात्वादिति सूत्रार्थः। वृत्तिवृत्तिमतोरेकत्वे प्रादुर्भावतिरोभावयोरभाव इति ॥६॥

### न्यायवार्त्तिकतात्पर्यटीका

अप्र—ङ्गः ( सू० ५ ) ॥(क)

क्रम—णम् (सू० ६) ॥(ख)

### वृत्तिः

बुद्धेरवस्थायिन्या यथाविषयं ज्ञानात्मिका वृत्तयो वृत्तिमदभिन्ना वह्नेरिव स्फुलिङ्गा निस्सरन्तीति साङ्ख्यमतं निरस्यति—( न युगपदग्रहणात् )

वृत्तिवृत्तिमतोरभेदे वृत्तिमदवस्थित्या वृत्तेरप्यवस्थितिर्वाच्या। तथा च सर्वपदार्थग्रहणं युगपत् स्यात्, न चैवम्; तस्मान्नाभेद इति ॥ ४ ॥

अथ वृत्तीनामनवस्थायित्वमुच्यते तत्राऽऽह—( अप्रत्यभिज्ञाने च विनाशप्रसङ्गः )

अप्रत्यभिज्ञाने प्रत्यभिज्ञानस्य अभावे विनाशे, वृत्तिमतोऽपि विनाशः स्यादतो न द्वयोरैक्यम् ॥ ५ ॥

अयुगपद्ग्रहणं स्वमते व्युत्पादयति—( क्रमवृत्तित्वादयुगपद् ग्रहणम् इति )

मनस इत्यादिः। मनसोऽणुत्वादिन्द्रियैः सह क्रमेण सम्बन्धाज् ज्ञानानां क्रमिकत्वम्, तथा च 'अविभु चैकं मनः पर्यायेणेन्द्रियैः सम्बध्यते' इत्यवतारभाष्यम्। तत्तदिन्द्रियमनःसंयोगे सति ज्ञानमुपपद्यते ॥ ६ ॥

(१) 'र्नानात्वादिति' इति फ०।

(क-ख) ५म-६ष्ठ-सूत्रयोस्तात्पर्यटीका नोपलभ्यते।

## (सू०)—अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ॥ ७ ॥

### न्यायभाष्यम्

अप्रत्यभिज्ञानम् अनुपलब्धिः। अनुपलब्धिश्च कस्यचिदर्थस्य विषयान्तरव्यासक्ते मनस्युपपद्यते वृत्तिवृत्तिमतोर्नानात्वात्, एकत्वे हि अनर्थको व्यासङ्ग इति ॥ ७ ॥

(क)विभुत्वे चान्तःकरणस्य (१)पर्यायेणेन्द्रियैः संयोगः—

## (सू०)—न, गत्यभावात् ॥ ८ ॥

प्राप्तानीन्द्रियाण्यन्तःकरणेनेति प्राप्त्यर्थस्य गमनस्याभावः। तत्र क्रमवृत्तित्वाभावादयुगपद् ग्रहणानुपपत्तिरिति।

### न्यायवार्त्तिकम्

अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात्। अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गादिति वृत्तिवृत्तिमतोर्भेदे सत्युपपद्यत इति, एकत्वे त्वनर्थको व्यासङ्ग इति ॥ ७ ॥

विभुत्वे चान्तःकरणस्य पर्यायेणेन्द्रियैः संयोगः—

न, गत्यभावात्। प्राप्तान्यन्तःकरणेनेन्द्रियाणीति सूत्रार्थः। व्यापित्वे च युगपदनेकेन्द्रियसम्बन्धाद् युगपद्ग्रहणप्रसङ्गश्च दोषः।

अणावपि मनस्येकेन्द्रियग्राह्येषु युगपदुपलब्धिप्रसङ्ग इति चेत्? करणत्वान्न युगपद्ग्रहणम्।

### न्यायवार्त्तिकतात्पर्यटीका

अप्र—ङ्गात् (सू० ७) ॥ (ख)

### वृत्तिः

तद्व्यतिरेके ज्ञानाभावं सम्पादयति—( अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् )

अप्रत्यभिज्ञानं तत्तदिन्द्रियजज्ञानाभावः विषयान्तरेण मनसः सम्बन्धादित्यर्थः ॥७॥

त्वन्मते चेदं नोपपद्यत इत्याह—( न, गत्यभावात् )

त्वन्मते मनसः क्रमेणेन्द्रियसम्बन्धो न, मनसो विभुत्वेन गत्यभावात्।

परे तु नकारो न सूत्रान्तर्गतः, किं तु 'विभुत्वे चान्तःकरणस्य पर्यायेणेन्द्रियैः संयोगो न' इति भाष्यावतरणिकायाम् इत्याहुः ॥ ८ ॥

---

(१) 'पर्यायेणेन्द्रियेण' इति फ०।

(क) 'वृत्तिरेवास्य विभुनः सङ्कोचविकासिनीत्याचार्यः' इति व्यासभाष्यम् ( पातञ्जलसूत्रम् १०, कैवल्यपादः )। (ख) ७म-सूत्रे तात्पर्यटीका नोपलभ्यते।

## न्यायभाष्यम्

गत्यभावाच्च प्रतिषिद्धं विभुनोऽन्तःकरणस्यायुगपद्ग्रहणं(क) न लिङ्गान्तरेणानुमीयते इति। यथा चक्षुषो गतिः प्रतिषिद्धा सन्निकृष्टविप्रकृष्टयोस्तुल्यकालग्रहणात् पाणिचन्द्रमसो(१)र्व्यवधानेन प्रतीघाते सोऽनुमीयत(१*) इति सोऽयं नान्तः-

## न्यायवार्त्तिकम्

समाप्येवं कस्मान्न परिहारः? न (२)कारणभेदे दृष्टत्वात्—यानि (३) खलु भिन्नानि (४)कारणानि तान्येकेनैवाधिष्ठायकेनाधिष्ठितानि युगपत्प्रवर्तमानानि दृष्टानि। यथोभयहस्ताधिष्ठिते (ख)वास्यौ प्रवर्तेते तथेन्द्रियाणि व्यापकेनान्तःकरणेनाधिष्ठीयन्त इति युगपत्प्रवृत्तिः प्रसक्ता, तत्प्रसक्तौ च युगपद्ग्रहणप्रसङ्ग इति। 'गत्यभावाच्च विभुनोऽन्तःकरणस्य' प्राप्त्यर्थस्य गमनस्याभावात्। (ग)न वा युगपत्प्रत्ययोत्पत्तौ प्रमाणमस्ति येन प्रमाणेन (घ)प्रतिषिद्धमपि (ङ)प्रत्यययौगपद्यं प्रतिपद्येत। यथा (५) किञ्चित्प्रतिषिद्धमपि प्रतिपद्यते यथा चक्षुषो गतिः प्रतिषिद्धा केनचित् सन्निकर्षविप्रकर्षयोस्तुल्यकालग्रहणात्—यस्मात् सन्निकृष्टं पाणिं विप्रकृष्टं चन्द्रमसमेकस्मिन् काले चक्षुषा प्रतिपद्यते तस्माच्च गतिमच्चक्षुरिति विप्रतिषिद्धाऽपि सती

## न्यायवार्त्तिकतात्पर्यटीका

न, ग—वात् (सू० ८)॥ आक्षेप्तुर्वचनम्—समाप्येवं कस्मान्नेति।

समाधातुर्वचनम्—न कारणभेदे दृष्टत्वादिति। कारणभेदे हि सति एकस्य कर्त्तुर्युगपदनेकं कार्यं दृष्टम्। सांख्यानां चान्तःकरणं कर्तृ व्यापकं चेति सर्वव्यापकेनान्तःकरणेनाधिष्ठितानीन्द्रियाणि युगपदेव कार्याणि कुर्युः। अस्माकं त्वन्तःकरणस्य करणत्वादेकेन्द्रियग्राह्येऽपि न युगपत्कार्योत्पाद इति विशेषः।

गत्यभावाच्च प्रतिषिद्धं विभुनोऽन्तःकरणस्यायुगपद्ग्रहणं न लिङ्गान्तरेणानुमीयत इति भाष्यस्य, गत्यभावाच्च विभुनोऽन्तःकरणस्येति प्रतीकमनूद्य तस्यार्थमाह—प्राप्त्यर्थस्य गमनस्याभावादिति। न वा युगपत्प्रत्ययोत्पत्तौ प्रमाणमस्ति येन प्रमाणेन प्रतिषिद्धमपि (च)प्रत्यययौगपद्यं प्रतिपद्येत। तस्माद्विभुन्यन्तःकरणेऽवश्यंभावि प्रत्यययौगपद्यम्, न चैतद्दृष्टम्; तस्मादन्तःकरणमण्वित्यर्थः। ननु दीर्घां शष्कुलीं भक्षयतः पञ्चानामपि

---

(१) 'व्यवधानप्रतिघातेनानुमीयते' इति ज०। (२) 'कारणभेदे' इति ख०। (३) 'खल्वभिन्नानि' इति ख०। (४) 'करणानि' इति ख०। (५) 'कथञ्चित्' इति क-ख-धृतपाठान्तरम्।

(क) अयुगपद्ग्रहणमित्यस्य न क्रमिकज्ञानोत्पाद इत्यर्थस्तस्य सम्मतत्वेन प्रतिषिद्धत्वासम्भवात्, किन्तु क्रमेण प्रत्यर्थानामिन्द्रियेषु सम्बन्ध इत्यर्थः। ग्रहणं प्राप्तिः संयोग इति यावत्। (ख) 'वासी' अस्त्रविशेषः। (ग) 'न चायुगपत्' इति क-ख-पु० प्रमादकृतम्। (घ) बृहदारण्यके 'कामः संकल्पो विचिकित्सा' इति प्रक्रम्य पठ्यते 'अन्यत्रमना अभूवमिति नाश्रौषम् अन्यत्रमना अभूवमिति नाद्राक्षमि'ति। अनया श्रुत्या प्रत्यययौगपद्यं प्रतिषिद्धं द्रष्टव्यम्। (ङ) 'प्रत्ययायौगपद्यम्' इति क-ख पु० प्रमादान्मुद्रितम्। (च) 'प्रत्ययायौगपद्यम्' इति क-ख पु० प्रामादिकम्।

## न्यायभाष्यम्

करणे विवादो न तस्य नित्यत्वे। सिद्धं हि मनोऽन्तःकरणं नित्यं चेति। क्व तर्हि विवादः? तस्य विभुत्वे, तच्च प्रमाणतोऽनुपलब्धेः प्रतिषिद्धमिति। एकं चान्तः-करणं नाना चैता ज्ञानात्मिका वृत्तयः, चक्षुर्विज्ञानं घ्राणविज्ञानं रूपविज्ञानं गन्ध-विज्ञानम्। एतच्च वृत्तिवृत्तिमतोरेकत्वेऽनुपपन्नमिति। (१)पुरुषो जानीते नान्तः-करणमिति(१*)। एतेन विषयान्तरव्यासङ्गः प्रत्युक्तः। विषयान्तरग्रहणलक्षणो विषयान्तरव्यासङ्गः पुरुषस्य नान्तःकरणस्येति, (२)केनचिदिन्द्रियेण(२*) सन्निधिः (३)केनचिदसन्निधिरित्ययं तु व्यासङ्गोऽनुज्ञायते मनस इति॥ ८॥

## न्यायवार्त्तिकम्

गति(क)र्व्यवधानप्रतिघातेनानुमीयत इति। (ख) न च युगपत्प्रत्ययोत्पत्तौ प्रमाणमस्ति।

सोऽयं नान्तःकरणे विवादो न तस्य नित्यत्वे। कुतस्तर्हि विवादः? तस्य विभुत्वे। तच्च प्रमाणतोऽनुपलब्धेर्नास्ति। न ह्यन्तःकरणस्य विभुत्वप्रतिपादकं प्रमाणमस्ति, एकमन्तः-करणं नाना चेमाश्चक्षुर्विज्ञानाद्यात्मिका वृत्तय इति एतच्च वृत्तिवृत्तिमतोरेकत्वेऽनुपपन्नम्। यस्य पुनर्वृत्तिवृत्तिमतोर्नानात्वं तस्यान्तःकरणसाधनश्चक्षुरादिसाधनश्चाऽऽत्मा अर्थानुपलभत इति युक्तम्। 'एतेन विषयान्तरव्यासङ्गः प्रत्युक्तः पुरुषो जानीते नान्तःकरणमिति'। कः पुनरयं व्यासङ्गः?

## न्यायवार्त्तिकतात्पर्यटीका

ज्ञानानां युगपदुत्पादो दृष्ट इति कोऽयं प्रसङ्गः अन्तःकरणस्य विभुत्वे युगपदुत्पादः प्रसज्येतेत्यत आह—न च युगपत्प्रत्ययोत्पत्ताविति। अतिशीघ्रतया युगपदुत्पादाभिमानो न तु तत्र यौगपद्यं भाविकमित्यर्थः।

पुरुषो जानीते नान्तःकरणमिति स्वमतसमाधानपरं भाष्यं व्याचष्टे—यस्य पुनर्वृत्ति-वृत्तिमतोरिति। यदपि सांख्या आचख्युर्विषयान्तरव्यासक्तेऽन्तःकरणे चक्षुरादिसंबन्धस्याप्य-ज्ञानादन्तःकरणवृत्तिर्ज्ञानमिति तन्निराकरणपरं भाष्यम्—एतेन विषयान्तरव्यासङ्ग इति। तदनुभाष्य वार्त्तिककारो व्याचष्टे—एतेनेति। (ग)तत्रेति। नेत्यस्योपजीव्यमाह—पुरुषो जानीते नान्तःकरणमिति हेतुना विषयान्तरव्यासङ्गः अन्तःकरणस्य प्रत्युक्तः। व्यासक्तो हि स भवति यो जानीते। न चान्तःकरणं जानीते किन्तु पुरुष इति तस्येदृशव्यासङ्गो नान्तःकरणस्य,

---

(१) 'पुरुषो जानीते नान्तःकरणमिति' इति ज-पु० नास्ति। (२) 'केन क्वचिदिन्द्रियेण' इति ग०। (३) 'केन क्वचिदसन्निधिः' इति ग०।

(क) व्यवधानपदमत्र व्यवधायकद्रव्यपरं बोध्यम्। (ख) 'न चायुगपत्'—इति क-पुस्तके प्रमादान्मुद्रितम्। (ग) यथादर्शनमिदं मुद्रितम्। वार्त्तिके 'तत्र'पदस्यादर्शनात् 'तत्रेतेनेत्यस्योपजीव्यमाह' इति समीचीनः पाठः सम्भाव्यते।

## न्यायभाष्यम्

एकमन्तःकरणं नाना वृत्तय इति। सत्यभेदे वृत्तेरिदमुच्यते—

**( सू० )—स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः ॥९॥**

तस्यां वृत्तौ नानात्वाभिमानः, यथा (१)द्रव्यान्तरोपहिते स्फटिके अन्यत्वाभिमानो नीलो लोहित इति ; एवं विषयान्तरोपधानादिति।

## न्यायवार्त्तिकम्

अभीष्टविषयोऽनेकविज्ञानोत्पादः, स च पुरुषस्य नान्तःकरणस्य। यः पुनरयं सन्निधानासन्निधानलक्षणोऽन्तःकरणस्य व्यासङ्गः सोऽनुज्ञात इति ॥ ८ ॥

एकमन्तःकरणं नाना वृत्तय इति नैतत् न्यायवित्सञ्चक्षाणकः प्रतिपत्तुमर्हति यथैवान्तःकरणमेकं तथा वृत्तिरिति। दृष्टविरोध इति चेत्—अथ मन्यसे यदि चान्तःकरणान्न वृत्तिर्भिद्यते ननु दृष्टं विरुध्यते रूपं रसो गन्धः स्पर्श इति दृष्टः प्रत्ययभेदो न स्यात्? न न स्यात्, विषयभेदानुविधानात्—वृत्तिरभिन्नाऽपि विषयभेदमनुविधीयमाना भिन्नेव ख्याति यथोपधानभेदमनुविधीयमानं स्फटिकादिद्रव्यं भिन्नमिव प्रकाशते। अस्य चार्थस्य ज्ञापनार्थम्—

स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमानः इति सूत्रम्। नानेकान्तात्—उभयथा खल्वयं नानात्वाभिमानो दृष्टः नानाभूतेषु, गन्धादिषु, अभिन्ने च स्फटिक इति।

## न्यायवार्त्तिकतात्पर्यटीका

अन्यादृशस्त्वन्तःकरणस्य व्यासङ्गो न निषिध्यत इत्यर्थः ॥ ८ ॥

चोद्यभाष्यम्—एकमन्तःकरणं नाना वृत्तय इति, तद्व्याचष्टे—एकमन्तःकरणं नाना वृत्तय इति नैतदिति। सम्यगाचष्टे जानीते संचक्षाणकः सांख्यः। संख्या हि समीचीना बुद्धिस्तया वर्त्तत इति साङ्ख्यः। एतदुक्तं भवति—यद्यपि वृत्तयो नाना प्रतिभान्ति तथाऽपि भ्रान्तिरियमन्तःकरणादेकस्मादभिन्नानां नानात्वानुपपत्तेः। तस्मात् स्फटिकस्य यथैकस्यापि (क)तापिच्छजपा-कर्णिकारादिकुसुमोपधानभेदाद्भेद औपाधिक एवमन्तःकरणमणेरपि स्वच्छस्येन्द्रियप्रणाडिकया तत्तदर्थोपरक्तस्यौपाधिकं नानात्वम्, वृत्तिरिति च प्रत्यय इति ज्ञानमिति चाऽऽख्यायत इत्यर्थः। तदेतद् दूषयति—

स्फटि—नः ( सू० ९ ) ॥ नानेकान्तादिति। योऽपि वृत्तीनामौपाधिकभेदमाह—तेनाप्युपाधयोऽर्था आजानतो भिन्ना वक्तव्याः। तथा च भेदस्य द्विधा दर्शनादनेकान्तो दृष्टान्तो नैकार्थस्य साधकः।

---

(१) 'द्रव्यान्तरोपहितस्फटिकद्रव्ये' इति भा०।

(क) तापिच्छं तमालपुष्पम्, जपा रक्तवर्णा प्रसिद्धा, कर्णिकारम् आरग्वधतरुपुष्पम् सोन्दाल इति वङ्गेषु प्रसिद्धम्।

## न्यायभाष्यम्

न हेत्वभावात्। स्फटिकान्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमानो गौणो न पुनर्गन्धाद्यन्यत्वाभिमानवदिति हेतुर्नास्ति हेत्वभावादनुपपन्न इति। समानो हेत्वभाव इति चेत् न ज्ञानानां क्रमेणोपजनापायदर्शनात्—क्रमेण हीन्द्रियार्थेषु ज्ञानान्युपजायन्ते

## न्यायवार्त्तिकम्

यथाश्रुति सूत्रे हेत्वभावो दृष्टान्तमात्रत्वात्—दृष्टान्तमात्रमेतत् नात्र हेतुरस्तीति। विकल्पानुपपत्तेश्च—योऽयं दृष्टान्तः स्फटिकवदिति, विकल्पोऽत्र—किमयं स्फटिक उपधानभेदेन भिद्यते उत न। किं चातः? यदि भिद्यते, न दृष्टान्तः। अथ न भिद्यते, नानात्वाभिमानः कथम्? यद्युपधानभेदात्, भिन्नमुपधानमिति कथं प्रतिपद्यसे? यदि प्रत्ययभेदात्, व्याघातः—अभिन्ना वृत्तिः प्रत्ययश्च भिन्न इति व्याघातः प्रत्ययपर्यायत्वाद् वृत्तेः। अथ भवतां वृत्तीनां भेदे किं प्रमाणम्? ज्ञानानां क्रमेणोपजनापायदर्शनम्—क्रमेण ज्ञानान्युपजायन्ते अपयन्ति चेति दृश्यते। एकानेकविषयत्वाच्च प्रत्ययनानात्वाभिमानस्य एकानेकविषयाधिगतिः कथम्? एकस्मिंश्च

## न्यायवार्त्तिकतात्पर्यटीका

न हेत्वभावादिति भाष्यं व्याचष्टे—यथाश्रुति सूत्र इति। न केवलं साधकाभावः, बाधकं चात्रास्तीत्याह—विकल्पानुपपत्तेश्चेति। न परपक्षस्य प्रतिषेधमात्रेण स्वपक्षसिद्धिरस्तीत्याशयवान् पृच्छति—अथ भवतामिति। उत्तरम्—ज्ञानानां क्रमेणेति। स्यादेतत्—प्रत्ययनानात्वाभिमानो भविष्यति हेतुरेकत्वे वृत्तीनाम् (क)एकत्वं वृत्तीनां नानात्वाभिमानविषयत्वात् स्फटिकवदिति; तस्मान्न हेत्वभाव इति अत आह—एकानेकविषयत्वाच्च प्रत्ययनानात्वा-

## वृत्तिः

वृत्तिवृत्तिमतोर्वस्तुतोऽभेदेऽपि भेदप्रत्ययप्रतिपादनाय शङ्कते—( स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमानः )

यथा जपाकुसुमादिसन्निधानादेकस्यापि स्फटिकस्य तत्तद्रूपाभिमानस्तथा वृत्तिमदभिन्नाऽपि वृत्तिस्तत्तद्विषयसन्निकर्षवशान्नानेव प्रतिभासत इति ॥ ९ ॥

दूषयति—( न हेत्वभावात् )

भ्रमत्वे साधकाभावान्नोक्तं युक्तमित्यर्थः।

केचित्तु "न हेत्वभावात्' इति भाष्यम्" इति टीकादर्शनान्नेदं सूत्रम्, किं तु तुच्छतया सूत्रकृताऽदूषणान्न्यूनतापरिहाराय भाष्यकृता तदुक्तमिति मन्यन्ते ॥ ९ क ॥ (ख)

समाप्तं बुद्ध्यनित्यताप्रकरणम् ॥ १ ॥

---

(क) अत्र प्रयोगमाह—एकत्वमिति। (ख) वृत्तिकृन्मते 'न हेत्वभावा'दिति सूत्रम्। ततश्च टीकादिसम्मतसूत्रसंख्यासंवादरक्षार्थम् अस्य '९ क' इति रूपेण निर्देशः।

## न्यायभाष्यम्

चापयन्ति चेति दृश्यते। तस्माद् गन्धाद्यन्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमान इति ॥ ९ ॥

## न्यायवार्त्तिकम्

विषये नानात्वाभिमानः स्फटिके (१)दृष्टः नानाभूतेषु च गन्धादिषु नानात्वाभिमानो दृष्टः तेन नानात्वाभिमानस्योभयथा दृष्टत्वादिदमेकमिदमनेकमिति न युक्तः प्रत्यय इति। यश्चायमभिन्ने स्फटिके भेदप्रत्ययः सोऽपि प्रत्ययभेदमन्तरेण न युक्तः। न हि प्रत्ययाभेदवादिनः स्फटिके नीलादिप्रत्ययभेदो युक्त इति। स्फटिके नीलादिप्रत्ययोऽसम्बन्धान्न युक्तः, न हि नीलं द्रव्यं चक्षुःसन्निकृष्टमिति। अथ सन्निकृष्टम्, तदेव नीलं न स्फटिक इति स्फटिकसमानाधिकरणः स्फटिके नीलप्रत्ययो न युक्तः। न नैरन्तर्यदर्शनात्—नैरन्तर्येणावस्थिते स्फटिकनीलद्रव्ये चक्षुषा सन्निकृष्येते तत्सन्निकर्षान्नीलगुणाध्यारोपेण स्फटिके मिथ्याप्रत्ययो नील इति यथा सान्तरेष्वन्तरालादर्शनात् संयुक्तप्रत्यय इति। यस्य च प्रत्ययो न भिद्यते तस्य त्रीणि प्रमाणानीति शास्त्रं व्याहन्यते। न हि प्रत्ययाभेदे प्रमाणभेदः सम्भवति। विषयभेदात् त्रित्वमिति चेत्—अथ मन्यसे विषयस्त्रेधा भिन्नस्तेनानुरञ्जितः प्रत्ययस्त्रेधैव भवति? तन्न युक्तम्, प्रमाणा-

## न्यायवार्त्तिकतात्पर्यटीका

भिमानस्य एकानेकविषयाधिगतिः कथमिति। नानात्वाभिमानोऽपि दृष्टान्तवदसाधकः नैकान्तिकत्वात्। तदेवमन्तरा परकीयामाशङ्कां निराकृत्य पुनरपि वृत्तिभेदं साधयति—यश्चायमभिन्न इति। यद्यर्थोपधानभेदात् प्रत्ययेषु भेदो नाजानतस्तत एकस्मिन्नर्थे न प्रत्ययभेदः प्रत्ययोपधानभेदाभावादित्यर्थः। कश्चिद्देशयति—स्फटिक इति। परिहरति—न नैरन्तर्यदर्शनादिति। नीलीद्रव्यलेपस्यापि सान्तरत्वं नीलः स्फटिक इति साक्षात्कारानुमेयमिति भावः। इतोऽपि प्रत्ययभेद इत्याह—(क)यस्य च प्रत्ययाभेद इति। प्रमाणस्य भेदः प्रत्ययलक्षणकार्यभेदोन्नेयो नासति प्रत्ययभेदे भवितुमर्हति। शङ्कते—विषयभेदादिति। एतदुक्तं भवति—प्रातिस्विकोऽपि भेदो विषयाणां यदि प्रमाणभेदहेतुः हन्तैतस्याऽऽनन्त्येन प्रमाणानामनन्तो भेदः स्याद् न तु त्रित्वम्; तस्मादवान्तरसामान्यं विषयाणामास्थेयम्, न च तदपि स्वरूपमात्रनिष्ठं विषयाणां संभवति एकस्मिन्नपि प्रमाणानां (२)संप्लवात्। तस्मात् प्रत्ययभेदोपहितसामान्या विषयास्त्रित्वे व्यवतिष्ठमानाः प्रमाणमपि त्रित्वे व्यवस्थापयन्ति। सामग्रीत्रयान्वयव्यतिरेकानुविधायिनश्च प्रत्ययास्त्रयो भवन्ति। तथा च त्रिविषयत्वात् प्रमाणानि त्रीणि। तदिदमुक्तम्—विषयभेदादिति। निराकरोति—तन्नेति। प्रमाणाभेदे सामग्रीत्रयाभेदे तदनुविधायिनां

(१) 'दृष्टान्तः'—इति क-ख-धृतपाठान्तरम्। (२) 'संभवादिति' क-तात्पर्यधृतपाठान्तरम्।
(क) 'यस्य च प्रत्ययो न भिद्यते' इति वार्त्तिकमर्थतोऽत्र धृतमिति बोध्यम्।

## न्यायभाष्यम्

स्फटिकान्यत्वाभिमानवदित्येतदमृष्यमाणः क्षणिकवाद्याह—

(सू०)—स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद् व्यक्तीनामहेतुः ॥ १० ॥

## न्यायवार्त्तिकम्

भेदे विषयभेदानधिगतेः—न हि प्रमाणभेदमन्तरेण विषयभेदोऽधिगन्तुं शक्यते इति। विषयतादात्म्यादिति चेत्—अथ मन्यसे विषय एवासौ तथा व्यवस्थितस्तादात्म्यात् तथा ख्यातीति ? तन्न,(१)प्रमाणवैयर्थ्यात्—एवं सति व्यर्थं प्रमाणम्, न विषयभेदं प्रमाणभेदोऽवगमयति विषयस्तु तादात्म्यात् तथा व्यवतिष्ठते इति। यथाऽध्यवस्यति तथा चेतयत इति च व्याघातः अप्रकारवत्त्वात्—प्रकारवत्येतद्युक्तम्, अप्रकारे न युक्तम्। बुद्धिस्तं प्रत्ययमुपलभत इति च विरोधोऽधिकरणाधेययोरभेदात्—यः प्रत्ययः स बुद्धिर्धीरित्यधिकरणाधेययोरभेदः। एवं च सति बुद्धिस्तं प्रत्ययमुपलभत इति व्याहतम् ॥ ९ ॥

( इति बुद्ध्यनित्यताप्रकरणम् )

स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमान इत्येतदमृष्यमाणः क्षणिकवाद्याह—

स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद् व्यक्तीनामहेतुः। स्फटिकस्याभेदेनावस्थितस्याहेतुः ... स्फटिकस्याभेदेनावस्थितस्या-

## न्यायवार्त्तिकतात्पर्यटीका

प्रत्ययानामभेदात्। न हि प्रत्ययभेदमन्तरेण सामग्रीभेदः शक्यो विज्ञातुम्। तस्मात् प्रत्ययसामग्र्यभेदेऽपि विषयभेदानधिगतेर्न विषयभेदज्ञित्वाधिगमो वा प्रत्ययभेदमन्तरेणेति। शङ्कते—विषयतादात्म्यादिति चेत्। प्रत्ययप्रत्येतव्ययोरभेदादुपपन्नः प्रत्ययभेद इत्यर्थः। निराकरोति—तन्नेति। अपि च प्रत्ययाभेदे प्रकारवत्त्वाभावाद् यथाऽध्यवस्यति बुद्धिः तथा चेतयते पुरुष इति व्याघातः। कुतः—अप्रकारवत्त्वात्। भिन्नो हि प्रकारवान् भवति नाभिन्न इत्यर्थः। अन्तःकरणस्य बुद्धेः प्रत्ययानामभेदे बुद्धिस्तं प्रत्ययमुपलभते इति विरोध इति ॥ ९ ॥

तदेवं स्वमतेन साङ्ख्यपक्षं दूषयित्वा बौद्धैर्यत्साङ्ख्यराद्धान्ते दूषणमुक्तं तद् दूषयितुं बौद्धमतमुपन्यस्यति—स्फटिकान्यत्वाभिमान (क) इतीदममृष्यमाणः क्षणिकवाद्याहेति।

स्फटि—तुः ( सू० १० )॥ यत् सत् तत्सर्वं क्षणिकं यथा शरीरं तथा च स्फटिक इति

(१) 'प्रमाणवैयर्थ्यप्रसङ्गात्' इति क-ख-धृतपाठान्तरम्।

(क) वार्त्तिके 'इदम्' इत्यत्र 'एतदि'ति विशेषः।

## न्यायभाष्यम्

स्फटिकस्याभेदेनावस्थितस्योपधाननभेदान्नानात्वाभिमान इत्ययमविद्यमानहेतुकः पक्षः। कस्मात्? स्फटिकेऽप्यपरापरोत्पत्तेः। स्फटिकेऽपि अन्या व्यक्तय उत्पद्यन्ते अन्या निरुध्यन्त इति। कथम्? क्षणिकत्वाद् व्यक्तीनाम्। क्षणश्चाल्पीयान् कालः क्षणस्थितिकाः क्षणिकाः। कथं पुनर्गम्यते क्षणिका व्यक्तय इति? उपचयापचय-प्रबन्धदर्शनाच्छरीरादिषु। पक्तिनिर्वृत्तस्याऽऽहाररसस्य शरीरे रुधिरादिभावेनोपचयोऽपचयश्च प्रबन्धेन प्रवर्त्तते। उपचयाद् व्यक्तीनामुत्पादः, अपचयाद् व्यक्तिनिरोधः। एवं च सत्यवयवपरिणामभेदेन वृद्धिः शरीरस्य कालान्तरे गृह्यते इति सोऽयं (१)व्यक्तिविशेषधर्मो (१*) व्यक्तिमात्रे वेदितव्य इति ॥ १० ॥

## न्यायवार्त्तिकम्

न्यत्वाभिमान इत्ययुक्तं क्षणिकत्वाद् व्यक्तीनाम्। क्षणिकत्वमुपचयापचयप्रबन्धदर्शनात्—यस्माच्छरीरादिषु पक्तिनिर्वृत्तं रसद्रव्यं प्रतिक्षणमुपचीयते चापचीयते च, उपचयाद् व्यक्तीनामुत्पादः अपचयाद् व्यक्तिनिरोधः, तौ चोत्पादनिरोधौ तस्य कालान्तरेण दृष्टौ, अतोऽवगम्यते प्रतिक्षणमुपचीयते चापचीयते च शरीरमिति। यस्य खलु प्रतिक्षणमुपचयापचयौ न दृष्टौ तस्य कालान्तरेणापि न भवतो यथा भूमेरपच्यमानायाः पाकजानामिति। पच्यमानभूमिपाकजवच्च प्रतिक्षणं विशेष इति। अस्य प्रयोगः—प्रतिक्षणं शरीरमन्यच्चान्यच्च भवति बाह्यप्रत्ययाभेदे सत्यन्ते विशेषदर्शनात् पच्यमानभूमिपाकजवत् अपच्यमानभूमिपाकजवच्चेति ॥ १० ॥

## न्यायवार्त्तिकतात्पर्यटीका

जरन्तो बौद्धाः। शरीरस्य च कालपरिपाकवशेन स्थौल्यस्य ह्रासस्य च दर्शनात् प्रतिक्षणं सूक्ष्मः परिणतिभेदोऽनुमीयते स चान्तरा विनाश एवेति। यस्यापि स्फटिकादेस्तादृशं स्थौल्यं ह्रासो वा न दृश्यते तस्यापि सत्त्वेन शरीरवदेव प्रतिक्षणं विनाशोत्पादावनुमीयेते इति। स्यादेतत्—यदैवोपचयापचयौ शरीरस्य दृश्येते तदैवोत्पादविनाशौ भविष्यतः पूर्वं तु तत्प्रबन्धकल्पनायां किं प्रमाणमित्यत आह—यस्य खलु प्रतिक्षणमिति। अस्य प्रयोगः—प्रतिक्षणम् (क) अन्यच्चान्यच्चेति। पटस्य कुङ्कुमादिद्रव्यसंयोगे सत्यन्तेऽरुणिमलक्षणो विशेषो दृश्यते न चास्यारुणिमा प्रतिक्षणभावीत्यत उक्तम्—बाह्यप्रत्ययाभेदे सतीति। अभिन्नो हि शरीरोपचयहेतुः प्रतिदिनमुपयुज्यमानोऽन्नपानप्रचयो यथा पाकजोत्पत्तावौष्ण्यापेक्षो वह्निसंयोगः; बाह्यः प्रत्ययः कारणम्, पटे तु रागोत्पत्तौ कुङ्कुमद्रव्यसंयोगः सांप्रतिको विशिष्ट इत्यर्थः ॥ १० ॥

(१) 'व्यक्तिविशेषधर्मः' इति ज-पु० नास्ति।

(क) वार्तिकगतं 'शरीरं'मिति न गृहीतम्।

## ( सू० )—नियमहेत्वभावाद् यथादर्शनमभ्यनुज्ञा ॥ ११ ॥

### न्यायभाष्यम्

(१)सर्वासु व्यक्तिषु उपचयापचयप्रबन्धः शरीरवदिति नायं नियमः। कस्मात् ? हेत्वभावात्। नात्र प्रत्यक्षमनुमानं वा प्रतिपादकमस्तीति। (२)तस्माद् यथादर्शनमभ्यनुज्ञा। यत्र यत्रोपचयापचयप्रबन्धो दृश्यते, तत्र तत्र व्यक्तीनामपरापरोत्पत्तिः

### न्यायवार्त्तिकम्

नियमहेत्वभावाद् यथादर्शनमभ्यनुज्ञा। तदिदमुपचयापचयप्रबन्धदर्शनं शरीरे दृष्ट्वाच्छरीरस्यान्यत्वं साधयतु, न पुनरनुपलभ्यमानोपचयापचयविशेषाणां स्फटिकादीनामेतस्मादन्यत्वं सिध्यतीत्यहेतुः। यत्रोपलब्धिस्तस्यान्यत्वमिति चेत्—अथ मन्यसे नैवास्माभिरुपचयापचयप्रबन्धदर्शनेन सर्वभावानां क्षणिकत्वं साध्यते अपि तु यत्र तदस्ति तस्मिन् क्षणिकत्वमिति ? सत्यम्, यस्य यस्योपचयापचयप्रबन्ध उपलभ्यते तस्य तस्यान्यत्वमिति, न तु क्षणिकत्वम्, उपचयापचयप्रबन्धदर्शनं चान्यथाभवदहेतुः क्षणिकत्वे। कथमन्यथा (३)पूर्वावयवा आहारा-

### न्यायवार्त्तिकतात्पर्यटीका

सिद्धान्तसूत्रम्—

निय—ज्ञा (सू० ११)॥ तदेतद् व्याचष्टे—तदिदमुपचयापचयेति। न हि धूमदर्शनानुमितो वह्निः क्वचित् प्रवर्तत इत्यदृश्यमानेऽपि धूमे पर्वतत्वमात्रेण पर्वतान्तरेऽपि वह्निमनुमिन्वते अनुमातार इत्यर्थः। शङ्कते—यत्रोपलब्धिरिति। क्षणिकत्वं पूर्वापरभागविकलकालकलामात्रावस्थायित्वम्। न च तादृशं क्षणिकत्वं नैयायिकानां क्वचिदपि संमतमिति न सिद्धसाधनमित्यर्थः। निराकरोति—सत्यमिति। कस्मात् पुनरस्मदभिमतैव क्षणिकता न सिध्यत्युपचयापचयप्रबन्धदर्शनादित्यत आह—उपचयापचयप्रबन्धदर्शनं चान्यथाभवदिति। चो

### वृत्तिः

स्फटिके नानात्वभ्रम इत्यसहमानः सौगतः शङ्कते—( स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद् व्यक्तीनामहेतुः )

स्फटिकान्यत्वाभिमानवदित्यहेतुः। कुतः? स्फटिकेऽप्यपरापरोत्पत्तेः अत्यन्तविलक्षणस्फटिकोत्पत्तेः। तत्र मानमाह—व्यक्तीनां भावानां क्षणिकत्वात्। तत्साधनाय भाष्यम्—

'उपचयापचयप्रबन्धदर्शनाच्छरीरादिषु' प्रतिक्षणं शरीरेषूपचयापचयदर्शनान्नानात्वम्, न ह्येकस्मिन्नवयविनि परिमाणद्वयसमावेश इति भावः।

इदं सूत्रमेवेति केचित् ॥ १० ॥

---

(१) 'पदार्थानां सर्वासु' इति ज-पु० पा०।

(२) 'कस्मात्' इति टि०।

(३) 'पूर्वशरीरावयवा:'—इति क-ख-धृतपाठान्तरम्।

## न्यायभाष्यम्

रुपचयापचयप्रबन्धदर्शनेनाभ्यनुज्ञायते, यथा शरीरादिषु। यत्र यत्र न दृश्यते तत्र तत्र प्रत्याख्यायते यथा ग्रावप्रभृतिषु। स्फटिकेऽप्युपचयापचयप्रबन्धो न दृश्यते, तस्मादयुक्तं स्फटिकेऽप्यपरापरोत्पत्तिरिति। यथा चार्कस्य कटुकिम्ना सर्वद्रव्याणां कटुकिमानमापादयेत् तादृगेतदिति ॥ ११ ॥

यश्चाशेषनिरोधेनापूर्वोत्पादं निरन्वयं द्रव्यसन्ताने (१)क्षणिकतां मन्यते तस्यैतत्—

## ( सू० )—नोत्पत्तिविनाशकारणोपलब्धेः ॥ १२ ॥

उत्पत्तिकारणं तावदुपलभ्यते अवयवोपचयो वल्मीकादीनाम्, विनाशकारणं चोप-

## न्यायवार्त्तिकम्

वयवसहिताः पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यमानाः शरीरान्तरमुत्पादयन्तीति युक्तो भेद इत्यहेतुरेषः। तुल्यं पक्षप्रतिज्ञानमिति चेत्—अथ मन्यसे (२)पूर्वाहारावयवोपचययोगे सति शरीरावयवाः शरीरान्तरमारभन्ते पूर्वव्यूहपरित्यागेन, न पुनः क्षणिकत्वादन्यज्जातमिति अत्र को हेतुरिति? नासाधनात्—न मयाहारोपचयापचययोगाच्छरीरस्यान्यता साध्यते, अपि तु भवता विशेषदर्शनाच्छरीरस्यान्यत्वमभ्यधायि ततश्च क्षणिकत्वमिति विशेषदर्शनं क्षणिकत्वसाधनम्, तदस्माभिर्विशेषदर्शनमन्यथाभवत् क्षणिकत्वे न साधनमित्येतावन्मात्रमुच्यते न साधनमभिधीयत इति ॥ ११ ॥

## न्यायवार्त्तिकतात्पर्यटीका

हेत्वर्थः। शङ्कते—तुल्यमिति। निराकरोति—नासाधनादिति। एकान्तनिश्चयं विना न साधनं दूषणं तु सन्देहापादनेनापीति सोऽयं साधनदूषणयोर्विशेष इत्यर्थः ॥ ११ ॥

## वृत्तिः

सिद्धान्तसूत्रम्—( नियमहेत्वभावाद् यथादर्शनमभ्यनुज्ञा )

पदार्थानां विनाशसामग्रीवैशिष्ट्यनियमे मानाभावात्। अभ्युपेत्याऽऽह यथादर्शनमिति। यदि कस्यचिद्विनाशसामग्रीवैशिष्ट्ये प्रमाणं स्यात् तदा क्षणिकत्वं तस्याभ्यनुज्ञायत एव, यथाऽन्त्यशब्द इति ॥ ११ ॥

---

(१) 'क्षणिकानाम्'-इति वि- टि०।

(२) 'पूर्वापरावयवोपचययोगे'—इति क-ख-धृतपाठान्तरम्।

## न्यायभाष्यम्

लभ्यते घटादीनामवयवविभागः। यस्य त्वनपचितावयवं निरुध्यते अनुपचितावयवं चोत्पद्यते (१)तस्याशेषनिरोधे निरन्वये (२)वाऽपूर्वोत्पादे न कारणमुभयत्राप्युपलभ्यते इति ॥ १२ ॥

## न्यायवार्त्तिकम्

अथावश्यं साधनं वक्तव्यम्, इदं ब्रूमः—

नोत्पत्तिविनाशकारणोपलब्धेः। उत्पत्तिकारणं विनाशकारणं चोपचयापचयौ वल्मीकघटादीनां दृष्टाविति तदुभयं क्षणिकत्वे न स्यात्। उपचय इति च वृद्धिः उपचितो गौरिति, अपचय इति ह्रासः अपचितो गौरिति, उभयं चैतदवस्थितवस्तुविषयम्। न ह्यपूर्वं जायमानं वर्धत इत्युच्यते, नापि विनश्यदपचितमित्युच्यते। उपचयापचयोत्पत्तिविनाशकारणोपलब्धेरिति (क) सूत्रार्थः।

अथवा कारणमित्याधारोऽभिधीयते कार्यमित्याधेयम्। न च क्षणिकत्वे आधाराधेयभावः सम्भवति न चाधाराधेयभावमन्तरेण कार्यकारणभावः, तस्मात् कार्यकारणभावोपलब्धेरक्षणिकत्वमिति। अस्य प्रयोगः—कार्यकारणे एककालानुभाविनी आधाराधेयभावात् क्षीरकुण्डवदिति। क्षीरं कुण्डे वर्तते तच्च कुण्डकालमनुभवति तथा च कार्यं कारणे वर्त्तते तस्मात् तदपि कारणकालमनुभवति। नाऽऽधाराधेयभावस्यासिद्धत्वादिति चेत्—अथ मन्यसे असिद्धः कार्यकारणयोराधाराधेयभावः कार्यस्यानाधारत्वात्; नैव हि नः किञ्चित् कार्यमाधारवद् दृष्टमिति? नानेकान्तात्—नायमेकान्तः सर्वं कार्यमनाधारमिति, यथोभयपक्षसम्प्रतिपत्त्या रूपं कार्यं चाऽऽधारवच्च।

## न्यायवार्त्तिकतात्पर्यटीका

उत्तरसूत्रमवतारयति—अथावश्यं साधनं वक्तव्यमिति।

नोत्प—ब्धेः (सू० १२)॥ उत्पत्तिविनाशकारणं ज्ञापकम्, अवयवोपचयापचयौ न क्षणिकपक्षे युज्येते निरन्वयोत्पादविनाशयोरुपचयापचयप्रत्ययाभावादिति। उपचयापचयोत्पत्तिविनाशकारणोपलब्धेरिति। उपचयापचयौ च तावुत्पत्तिविनाशकारणे चेति कर्मधारयः।

उत्पत्तिविनाशकारणोपलब्धेरित्यस्य व्याख्यानान्तरमाह—अथ वा कारणमिति। समवायिकारणं हि कार्यात् पूर्वं च कार्यकाले चेति लोकसिद्धम्, तच्चैतत्क्षणिकत्वेऽनुपपन्नमित्यर्थः। एककालानुभाविनी, अनुभवः प्राप्तिः एककालप्राप्ते इत्यर्थः। भिन्नलोकमर्यादः शङ्कते—आधाराधेयभावस्येति। निराकरोति—नानेकान्तात्। भवतामपि राद्धान्ते रूपं सप्रतिघं कार्य-

(१) 'तस्याविशेषनिरोधे' इति वि०।

(२) 'वा पूर्वोत्पादे' इति ज०, 'चापूर्वोत्पादे' इति वि-टि०।

(क) उत्पत्तिविनाशेत्यादिसूत्रभागार्थः इति यावत्।

## न्यायवार्त्तिकम्

(क)स्पर्शस्तदाश्रय इति च व्याघातः—यदि च रूपमनाश्रितं भवति स्पर्शस्तदाश्रय इति व्याहतम्। अनेन च रूपदृष्टान्तेन यावद् यावत् समानकालतया साध्यते सर्वं तदेककालानुभावि भवतीति सिद्धः कार्यकारणभावः क्षणिकेष्वपि। नाशोत्पादयोरेककालत्वात् तुलान्तयोरुन्नमनावनमनवदिति चेत्—अथ मन्यसे कार्यकारणभावः क्षणिकेष्वपि सम्भवतीति कारणविनाशसमकालं कार्यभावात्—यदा कारणं विनश्यति तदा कार्यमुत्पद्यते विनश्यच्च कारणमस्ति कारणविनाशेनाभिन्नकालः कार्योत्पादः यथा तुलान्तयोर्नामोन्नामाविति ? न हेत्वर्थापरिज्ञानात्—न ब्रूमः (१)क्षणिकत्वे कार्यकारणभावो नास्ति, अपि त्वाधाराधेयभावो भिन्नकालत्वात् कार्यकारणयोर्न युक्त इति। कार्यं चानाधारमिति न दृष्टान्तोऽस्ति, अस्मत्पक्षे तु कार्यमाधारवदित्यस्ति दृष्टान्तो रूपादिरिति। तुलाधारस्य च (२)व्यापारे नामोन्नाम (३)भावानभ्युपगमाद् (४)युगपद्भावानुपपत्तिरेकत्वात्—यदि तुलामधिकृत्य ब्रवीषि तदैकं कर्म भ्रमणाख्यम् एकत्वाद् युगपद्भावो न युक्तः ; न

## न्यायवार्त्तिकतात्पर्यटीका

माधारवच्च(ख)। यदि तु रूपमप्यनाधारं मनुषे ततस्ते स्वसिद्धान्तव्याकोप इत्याह—स्पर्शस्तदाश्रय इति च व्याघात इति। सर्वं तदेककालानुभावि सिद्धं भवतीति। शङ्कते—सिद्धः कार्यकारणभावः क्षणिकेष्वपीति कार्यस्यानाधारत्वप्रसङ्गेन। न हि क्षणिकत्वे कार्यकारणभावो न सिध्यति। स तु सिद्धः क्षणिकत्वपक्षेऽपीति कारणविनाशसमकालत्वेन कार्योत्पादस्य कार्यकारणयोः समानकालत्वादित्यर्थः। निराकरोति—न हेत्वर्थापरिज्ञानादिति। एतावता प्रयासेन त्वया कार्यकारणभावः क्षणिकानां समर्थ्यते न चायमक्षणिकत्वे हेतुः अपि त्वाधाराधेयभावः स चाशक्यसाधनः। को नु खल्वयं कारणविनाशः—कारणाभावो वा विनाशकारणसान्निध्यं वा ? पूर्वस्मिन् पक्षे कार्यकारणयोः कुतः समानकालता, उत्तरस्मिन्नप्युत्पन्नस्य पश्चाद्विनाशकारणसान्निध्येऽपि कुतः सतः क्षणिकता। न चोत्पद्यमानताविनश्यत्तयोस्तुल्यकालत्वमनुभवविरोधात्; कार्यस्य च तदैवोत्पद्यमानत्वे कार्यकारणभावाभावः सव्यदक्षिणशृङ्गवदिति भावः। अपि च दृष्टान्तोऽपि साध्यविकल इत्याह—तुलाधारस्येति। ये अवयवकर्मणी

## वृत्तिः

युक्त्यन्तरमाह—( नोत्पत्तिविनाशकारणोपलब्धेः )

न स्फटिकादेः क्षणिकत्वं, यत उत्पत्तिविनाशकारणान्युपलब्ध्या निर्णीतान्यवयवोपचयादीनि, न च स्फटिके विनाशकारणमुपलभ्यते येन पूर्वविनाशोऽपरोत्पत्तिश्च स्यादिति भावः ॥ १२ ॥

---

(१) 'क्षणिके'—इति क-ख-धृतपाठान्तरम्। (२) 'कर्मणः'—इति क-ख-धृतपाठान्तरम्। (३) '-भावेनानभ्युपगमात्'—इति क-ख-धृतपाठान्तरम्। (४) 'युगपद्भावानुत्पत्ति'—इति क-ख-धृतपाठान्तरम्।

(क) स्पर्शाः षट् सन्निपातजाः। पञ्च प्रतिघसंस्पर्शाः षष्ठोधिवचनाह्वयः॥ इति। (अभिधर्मकोशः ३।३०)। 'इन्द्रियविषयतद्विज्ञानसन्निपातावस्थाः स्पर्शाः' इत्यभिधर्मकोशस्य २।२४सूत्रटीकायां राहुलः।

(ख) तदुक्तमाचार्यवसुबन्धुना 'सप्रतिघा दशरूपिणः' इति। तदेतद् व्याख्यातं राहुलेन 'आवरणप्रतिघातेन दश सप्रतिघा धातवः ते च रूपिण एवे'ति। अभिधर्मकोशः १।२९ )।

(सू० )—क्षीर(१)विनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च (२)तदुपपत्तिः ॥ १३ ॥

## न्यायभाष्यम्

यथाऽनुपलभ्यमानं क्षीरविनाशकारणं दध्युत्पत्तिकारणं चाभ्यनुज्ञायते तथा स्फटिके परापरासु व्यक्तिषु विनाशकारणमुत्पादकारणं चाभ्यनुज्ञेयमिति ॥ १३ ॥

## न्यायवार्त्तिकम्

ह्येकं युगपद्भवतीति। अथावयवकर्मणी, तयोरपि कार्यकारणभावेनानभ्युपगमात् किं केन सम्बध्यते। अथ युगपद्भावमात्रं विवक्षितमिति ? युगपद्भावः कारणयौगपद्यात्—यावतामर्थानां कारणानि युगपद्भवन्ति तावतामेकस्मिन् काले भाव इति नामोन्नामावसम्बद्धौ, कारणयौगपद्यं तु—गुरुत्वप्रयत्नसंयोगा उन्नतेः, अवनतेरपि गुरुत्ववद्द्रव्यसंयोगानुगृहीतो रज्जुतुलासंयोगः। अथापि न कर्मार्थान्तरं संयोगं वा परः प्रतिपद्यते ? तस्याप्युक्तमुत्तरं संयोगोऽप्यर्थान्तरमिति संयोगकारणत्वेन च कर्माप्यर्थान्तरमिति। यथा च भावानामुत्पत्तिविनाशकारणमुपलभ्यते नैवं स्फटिकस्य, न चानुपलभ्यमानं शक्यमभ्यनुज्ञातुमिति ॥ १२ ॥

(३)क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुपपत्तिः। यथा क्षीरस्य विनाशकारणमनुपलभ्यमानमभ्यनुज्ञायते दध्नश्चोत्पत्तिकारणमेवं (४)स्फटिकादिव्यक्तीनामनुपलभ्यमाने उत्पत्तिविनाशकारणे अभ्यनुज्ञेये इति ॥ १३ ॥

## न्यायवार्त्तिकतात्पर्यटीका

(क)नामोन्नामौ न तयोः कार्यकारणभावः, यस्त्ववयविकर्म न तत्र यौगपद्यं नापि कार्यकारणभाव एकत्वादित्यर्थः। गुरुत्वप्रयत्नसंयोगा उन्नतेरिति। विधारकः प्रयत्नस्तुलाधारस्य तदपेक्षः संयोगः संयुक्तसंयोगः 'गुरुत्वं च तत्संयुक्तावयवान्तरवर्त्ति'कारणमुन्नतेस्तुलावयवस्य, अवनतेरपि द्रव्यं गुरुत्ववत्सुवर्णादि परिमीयमाणं तत्संयोगानुगृहीतो रज्जुतुलासंयोगः कारणम् ॥ १२ ॥

क्षीर—त्तिः ( सू० १३, ख ) ॥

## वृत्तिः

आक्षिपति—( क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुपपत्तिः )

दध्युत्पत्तिवद् दध्युत्पत्तिकारणानुपलब्धिवत् तदुपपत्तिः पूर्वस्फटिकविनाशकारणानुपलब्धेरुत्तरस्फटिकोत्पत्तिकारणानुपलब्धेश्चोपपत्तिः स्यादिति भावः ॥ १३ ॥

(१) '-विनाशकारणा-' इति टि०।
(२) 'तदुत्पत्तिरिति' ख-ग-ज-भा०।
(३) 'क्षीरविनाशकारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुत्पत्तिः'—इति क-ख-धृतपाठान्तरम्
(४) 'स्फटिकादीनां'—इति क-ख-धृतपाठान्तरम्।
(क) क-ख-पुस्तकयोः 'नामोन्नामौ' इति प्रमादकृतम्।
(ख १३श-सूत्रे तात्पर्यटीका नोपलभ्यते।

# ( सू० )—लिङ्गतो ग्रहणान्नानुपलब्धिः ॥ १४ ॥

## न्यायभाष्यम्

क्षीरविनाशलिङ्गं क्षीरविनाशकारणं दध्युत्पत्तिलिङ्गं दध्युत्पत्तिकारणं च गृह्यतेऽतो नानुपलब्धिः, विपर्ययस्तु स्फटिकादिषु द्रव्येषु (१)अपरापरोत्पत्तौ व्यक्तीनां न लिङ्गमस्तीत्यनुत्पत्तिरेवेति ॥ १४ ॥

## न्यायवार्त्तिकम्

लिङ्गतो ग्रहणान्नानुपलब्धिः। यल्लिङ्गत उपलभ्यते न तन्नास्तीति। विपर्ययश्च स्फटिकादौ, न हि स्फटिकादिव्यक्तीनामपरापरोत्पत्तौ लिङ्गमस्तीति।

न नास्ति शीतोष्णस्पर्शभेदस्य नानात्वे (२)साधनत्वात्—शीतोष्णस्पर्शभेदो नानात्वे दृष्टो यथाऽग्नौ उदके च, अस्त्ययं शीतोष्णस्पर्शभेदः स्फटिके। सत्यमस्ति स तु निमित्तान्तराद्भवति। किं पुनर्निमित्तम्? (क)अप्तेजोऽवयवानुप्रवेशाच्छीतः तेजोऽवयवानुप्रवेशाचोष्ण इति। अप्तेजोऽवयवानुप्रवेशो न युक्तः अल्पतरबहुतरानुप्रवेशे हेत्वभावात्—हेमन्ते ह्याकाशे पर्युषितानां काष्ठ-भूम्यश्मलोहानां शैत्यस्योत्तरोत्तरो विशेषो दृष्टः; तथा पुनर्ग्रीष्मातपसन्तापितानां तेषामेवौष्ण्यस्य, न हि तेष्वल्पतरबहुतरप्रवेशे कारणं पश्यामः; तस्मात् स्वगतमहाभूतविशेषापेक्षाण्यासादित-बाह्यनिमित्तानि भूतान्येव तथा तथोत्पद्यन्त इति युक्तम्? न युक्तम्—न ह्यप्तेजोऽवयवानुप्रवेशेन

## न्यायवार्त्तिकतात्पर्यटीका

लिङ्ग—ब्धिः ( सू० १४ )॥ चोदयति—न नास्ति शीतोष्णस्पर्शभेदस्येति। परिहरति—स तु निमित्तान्तरादिति। पुनश्चोदयति—अप्तेजोऽवयवानुप्रवेशो न युक्त इति। स्वगता महाभूतविशेषाः तदवयवाः पृथिव्यादयः, ते हि परस्परतो विशिष्यन्त इति विशेषाः। परिहरति—न युक्तमिति। यदि प्रतिक्षणमन्यत्वमात्रेण विशेषस्ततः काष्ठक्षणानामपि भूम्यश्मलोहवद्विशेषोपलम्भः स्यात्। यथा हि काष्ठक्षणादकस्माल्लोहक्षणा भिद्यन्ते एवं काष्ठक्षणान्तराण्यपीति। तस्मात् पार्थिवत्वेऽपि स्वतो विशेषावास्थेयौ यतो भूम्यश्मादिभ्यो व्यावर्त्तन्ते न व्यावर्त्तन्ते च काष्ठक्षणान्तरेभ्यः काष्ठक्षणाः, तस्मादेव विशेषादक्षणिकत्वेऽपि काष्ठ-भूम्यश्म-लोहानामुपपन्न उत्तरोत्तरो विशेष इति वृथा क्षणिकत्वकल्पनेति।

## वृत्तिः

सिद्धान्तसूत्रम्—( लिङ्गतो ग्रहणान्नानुपलब्धिः )

दध्नः क्षीरविनाशस्य च प्रत्यक्षसिद्धत्वात् तत्कारणं कल्प्यते, न त्वेवं स्फटिक-विनाशोत्पादावुपलभ्येते येन तत्कारणकल्पनम् ॥ १४ ॥

---

(१) 'अपरापरोत्पत्तीनाम्' इति ख-ग-भा०। (२) 'साधनात्'—इति क-ख-घृतपाठान्तरम्।

(क) 'अप्तेजोऽवयवानुप्रवेशाच्छीत' इत्यत्र 'अप्तेजोऽवयवानुप्रवेशः—अबवयवानुप्रवेशात् शीत' इत्येव समीचीनतया प्रतिभाति।

## न्यायवार्त्तिकम्

भूतस्वभावो निवार्यत इति भूतस्वभावस्योभयपक्षसाम्यादसाधनं भूतस्वभाव इति। विरुद्धश्चायं (१)हेतुः—यद्यवयवानुप्रवेशं न प्रतिपद्यसे (क)खरस्नेहोष्णेरणात्मकानि भूतानीति व्याहन्यते। कथमिति? यत् कठिनं तदेकस्मिन् काले उष्णमपि भवतीति, यच्चोष्णं तत् कठिनं गच्छतीति, तदेकस्वभावकं वस्तु द्विस्वभावकं त्रिस्वभावकं च प्राप्नोति। यस्य पुनरवयवानुप्रवेशस्तस्यैष दोषो नास्ति अन्यत्रावस्थितस्य संयुक्तसमवेतस्य औष्ण्यस्य ग्रहणादिति। विरुद्धश्चायं हेतुः। कथम्? एकस्य (२) विशेषाभ्युपगमात्—एकं वस्त्वेकस्मिन् काले कठिनमुष्णं गच्छति चेति त्रिस्वभावकम्, ततश्च विशेषदर्शनादित्ययं हेतुः 'सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः' इति विरुद्धो भवति। अथ मन्यसे न विशेषमात्रं नानात्वं प्रतिपादयत्यपि तु विरोधी विशेषो नानात्वे साधनमिति? नाभिप्रायापरिज्ञानात्—वयमपि न ब्रूमो विशेषमात्रं नानात्वसाधनम्, अपि तु विरोधी विशेष इतरेतरव्यावृत्तो लक्षणत्वेनोपपन्नः, स विरुद्धः यद्यविरुद्धः स्यान्न लक्षणं स्यात्। एकवृत्तित्वे वा लक्षणत्रयस्य तत्तद्वस्तु किमभिधीयते? यदि तावत् पृथिवी, तन्न युक्तमौष्ण्यस्य दर्शनात्। अथ तेजः, तदपि न युक्तं काठिन्यदर्शनात्। एतेन वायुर्व्याख्यातः। सोऽयं

## न्यायवार्त्तिकतात्पर्यटीका

असाधनं भूतस्वभावः क्षणिकत्वसिद्धावित्यर्थः। दूषणान्तरमाह—विरुद्धश्चायं हेतुः उत्तरोत्तरविशेषदर्शनादिति। भवतां किल भूतानामन्योन्यव्यावर्त्तकं लक्षणं खरस्नेहोष्णेरणात्मकानि भूतानीति। खरा पृथिवी स्नेह उदकम् उष्णं तेजः ईरणं समीरणो गतिमानिति यावत्। तथोत्पादे तु काष्ठ-मृन्यश्म-लोहानामङ्गीक्रियमाणे एकमेव खरोष्णं खरोष्णेरणात्मकं (ख) स्यादिति संकीर्णत्वाद्भूतलक्षणव्याघात इति। कठिनमिति खरां पृथिवीमुपलक्षयति। अस्मत्पक्षे तु न व्याघात इत्याह—यस्य पुनरिति। न केवलं पृथिव्यादिलक्षणेन विरुध्यते अपि तु शीतोष्णस्पर्शभेदेन नानात्वस्य साधनेन पूर्वोक्तेनापीत्याह—विरुद्धश्चायमिति। पृच्छति—कथम्। उत्तरम्—एकस्य विशेषाभ्युपगमात्। येनैव विशेषेण पूर्वस्मान्नानात्वमभ्युपगतं शीतोष्णादिना भेदेन तेनैव (ग) सम्प्रत्येकत्वाभ्युपगमादित्यर्थः। सिद्धान्तमभ्युपेत्येति पूर्वेण हेतुना योऽभ्युपगतोऽर्थः तद्विरोधितया विरुद्ध इत्यर्थः। शङ्कते—अथ मन्यसे न विशेषमात्रमिति। मा भूद्रूपं सप्रतिघमुपादानमिति रूपस्यैकस्य नानात्वमिति भावः। निराकरोति—नाभिप्रायेति। यस्त्ववयवानुप्रवेशो

---

(१) 'स्वभावहेतुः' इति क-ख-धृतपाठान्तरम्। (२) 'विशेषस्याभ्युपगमात्' इति ख०।

(क) तथाच वसुबन्धुः—

भूतानि पृथिवीधातुरप्तेजोवायुधातवः।
धृत्यादिकर्मसंसिद्धाः खरस्नेहोष्णेरणाः॥ (अभिधर्मकोशः १।१२)

ब्रह्मसूत्रशारीरकमीमांसाभाष्ये तन्नामत्वा च (अ० २, आ० २, सू० १८) अयमर्थः स्पष्टः। (ख) वार्त्तिकगतत्रिस्वभावकञ्चेति चकार इहापि योजनीयः। (ग) क-ख-पुस्तकयोः 'सम्प्रत्येकत्वादित्यर्थः' इति मुद्रितम्।

## न्यायवार्त्तिकम्

हेतुर्भूतलक्षणं बाधते नानात्वसाधनं वा न भवति। एतेन जले तापग्रहणं प्रत्युक्तम्। (क)तन्नाप्यौष्ण्यस्निग्धतेरणता च युगपद्भवतीति, जलेऽग्निरूपग्रहणप्रसङ्गस्तु न युक्तोऽभिभवात्। तन्न, सिद्धान्तापरिज्ञानात्—नायं सिद्धान्तो जलरूपेणाग्निरूपमभिभूयत इति, अपि तु तेजसश्चातुर्विध्यात् तत्र न रूपग्रहणम्—चतुर्विधं तेज इत्येतत् (१)प्रसाधितमिन्द्रियप्रकरण (ख)इति।

या चेयं प्रतिज्ञा अन्यश्चान्यश्च स्फटिक इति, अस्याश्च कोऽर्थः? यदि तावदन्यत्वमात्रं तदा सिद्धसाधनं भवति (२)कुम्भादिभ्योऽन्यः स्फटिक इति। अथ स्फटिकान्तरादन्य इति, तदपि तादृगेव। अथ पूर्वस्फटिकादन्य इति, कतमोऽसौ पूर्वस्फटिको यतोऽयमन्य इति। व्यवच्छेदस्याशक्यत्वादनभिधानम्—यथोभयपक्षसम्प्रतिपन्ना रूपादयः (३)तेभ्योऽन्यानन्यविचारो घटादेर्युक्तः, न पुनरिह पूर्वस्फटिकान्तरमुभयपक्षसम्प्रतिपन्नं यतो वर्तमानमन्यत्वेन साध्यते। अथोभयपक्षसम्प्रतिपन्नं पूर्वस्फटिकान्तरम्? व्यर्थं साधनम्। अथ वर्तमानं स्फटिकमभ्युपगम्य यदतीतं स्फटिकान्तरं तदन्यदिति साध्यते? एवं सति शीतोष्णस्पर्शभेदो न तद्धर्मः वर्तमानस्फटिकधर्मत्वात्। वर्तमानाच्च स्फटिकादन्यदतीतमिति केनैतन्न प्रतिपन्नम्। अथ तदेवान्यदिति? व्याघातः तदेवान्यच्चेति। एवं यथा यथाऽन्यत्वं विचार्यते तथा तथा सिद्धसाधनं भवति सिद्धान्तं च बाधते।

## न्यायवार्त्तिकतात्पर्यटीका

देशयेदुष्णजले वह्निस्पर्शवद्रूपग्रहोऽपि स्यादयोगोलक इवेति तं प्रत्येकदेशिमतेन परिहारमाह—जलेऽग्निरूपग्रहणप्रसङ्गस्त्विवति। तद् दूषयति—तन्नेति। युक्तं मध्यन्दिने सवितृप्रकाशेनोल्वणेन मन्द उल्काप्रकाशोऽभिभूयते सजातीयत्वे सत्युल्वणत्वात्; तोयरूपं तु नोल्वणं न च सजातीयमभास्वरत्वात्, तेजस्तु भास्वरं तस्मान्नाभिभव इत्यर्थः। परमार्थपरिहारमाह—अपि तु तेजसश्चातुर्विध्यात्। किंचिदुद्भूतरूपस्पर्शं तेजो भवति यथा सवितृप्रकाशः शरदि दिवा, किंचिदनुद्भूतरूपस्पर्शं यथा चाक्षुषं तेजः, किञ्चिदुद्भूतरूपमनुद्भूतस्पर्शं च यथा प्रदीपप्रभायां तेजः, किञ्चिदनुद्भूतरूपमुद्भूतस्पर्शं यथा तोयगतं तेजः; यथा वा निशीथे निदाघसमये तेजः यतो मेदस्विनः स्विद्यन्तीति।

प्रतिज्ञार्थं यथासम्भवं विकल्प्य दूषयति—या चेयं प्रतिज्ञेति। अथ वर्तमानं स्फटिकमभ्युपगम्य यदतीतं स्फटिकान्तरं तत्पक्षीकृत्य वर्तमानात् तदन्यदिति साध्यते। निराकरोति—एवं सतीति। यदि लिङ्गं स्वसत्ताज्ञानाभ्यां गमकं तदा सत्यपि ज्ञाने अतीतधर्मस्य सत्ता नास्तीति न गमक इति भावः। यदि पुनः स्वज्ञानमात्रेण गमकं लिङ्गमुच्येत तदा दूषणान्तरमाह—वर्तमानाच्चेति।

(१) 'प्रतिपादितम्'—इति क-ख-धृतपाठान्तरम्। (२) 'स्तम्भादिभ्योऽन्यः'—इति क-ख-धृतपाठान्तरम्। (३) 'तेभ्योऽन्योनन्यविचार' इति ख०।

(क) पुनश्चोदयति तत्रापीति 'तत्राप्यौष्ण्य' स्निग्धता' इति पाठः सम्भाव्यते। (ख) ७६७ अङ्कितपत्रे भाष्यवार्त्तिके द्रष्टव्ये।

## न्यायवार्त्तिकम्

अथायुगपत्कालप्रत्ययानामालम्बनं स्फटिको न भवतीति प्रतिज्ञार्थः ? एतस्मिन्नपि प्रतिज्ञार्थे न दृष्टान्तोऽस्ति। प्रदीपो दृष्टान्तः—प्रदीपोऽयुगपत्कालप्रत्ययानामनालम्बनं सदादिधर्मा चेति विद्यते दृष्टान्तः ? नासिद्धत्वात्। असिद्धमेतत् अयुगपत्कालप्रत्ययानालम्बनाः प्रदीपादयः तेषामनेकक्षणावस्थानात्—प्रदीपस्य तावत् स्वकारणसत्तासम्बन्धकालः सामान्याभिव्यक्तिकालः अवयवकर्मकालः तदनन्तरं विभागकालः तदनन्तरं तत्संयोगविनाशकालः ततो द्रव्यनाश इति। यथा प्रदीप एवं सर्वे भावाः स्वकारणसत्तासम्बन्धाभिव्यक्तितद्विरोध्याश्रयविनाशानुविधानेन विनश्यन्ति, अकारणस्य विनाशानभ्युपगमात्। न हि नः किञ्चिन्निष्कारणं विनश्यति। विनश्यदवस्थद्रव्यकर्मवदेतत् स्यात् ? न कर्मणोऽभ्युपगमे विरोधात् अनभ्युपगमाच्च। विनाशहेत्वभावादिति चेत्—अथ मन्यसे न विनाशकारणमस्ति

## न्यायवार्त्तिकतात्पर्यटीका

तद्विरोध्याश्रयविनाशानुविधानेन विनश्यन्तीति। विरोधीति गुणाभिप्रायम्। गुणो हि विरोधिना गुणान्तरेण नाश्यते आश्रयनाशेन चेति सर्वसाधारणम्। आश्रयग्रहणं चोपलक्षणम्, तेनासमवायिकारणनिमित्तकारणविनाशेनापि यथासम्भवमुन्नेतव्यमिति। शङ्कते—विनश्यदवस्थेति। मा भूत् प्रदीपो दृष्टान्तः, विनश्यदवस्थे तु द्रव्ये कर्मोत्पन्नमुत्पत्त्यनन्तरमेवापवृज्यते अत ईदृशं कर्म दृष्टान्तो भविष्यतीत्यर्थः। निराकरोति—न कर्मण इति। कर्मापलापनिबन्धनो ह्ययं क्षणिकवादस्तदभ्युपगमे न भवितुमर्हति। स्थिराद् द्रव्यादागन्तुककर्मसहितादेव कार्योत्पादोपपत्तेरिति। निराकरणान्तरमाह—अनभ्युपगमाच्चेति तादृशस्यापि कर्मणः क्षणिकत्वस्यास्माभिः। तथा हि द्रव्यस्य विनश्यत्ता कर्मोत्पाद इत्येकः कालः। अथ द्रव्यस्य विनाशः, न च कारणोत्पादसमये कार्योत्पाद इति द्रव्यविनाशानन्तरं कर्मनाश इति सिद्धं क्षणद्वयावस्थानं कर्मण इति। शङ्कते—विनाशहेत्वभावादिति चेत्। अयमभिसन्धिः—स्वकारणादयं भावो विनश्वरो जायतेऽविनश्वरो वा ? विनश्वरश्चेद् विनाशं प्रति न हेतुमपेक्षेत। न हि नीलं स्वकारणादुत्पन्नं नीलत्वे हेतुमपेक्षते तस्यैव ताद्रूप्यात्। अविनश्वरश्चेत् तथाऽपि नास्य हेतुशतैरपि शक्यो विनाशः कर्तुम्। न हि नीलमुत्पन्नं पीतं शिल्पिशतेनापि शक्यं कर्तुम्। अपि चायं विनाशो भावस्य कारणैराधीयमानो भावाद्भिन्नोऽभिन्नो वा जायते। अभिन्नत्वे भाव एवासाविति विनष्टो भावः प्राग्वदुपलब्ध्यर्थक्रिये कुर्यात्। न च भावाभावयोः कारणभेदे सति सम्भवत्यभेदः। तन्तुसंयोगभेदेभ्यो हि पटो जायते तन्तुविभागाद्वा तन्तुविनाशाद्वा पटाभाव इति कारणभेदः। भावाद्भिन्नत्वे तु जायतामभावो भावस्य किमायातम् ? न हि क्रमेलकोत्पादने पीलवो निवर्तन्ते। अभावेन भावस्तिरोधीयत इति चेत्, न; तिरोधानस्यापि भावादभेदे पूर्ववदुपलब्ध्यादिप्रसङ्गः। भेदेऽपि तिरोधानस्यान्यस्योत्पादे अन्यस्य

## न्यायवार्त्तिकम्

तस्मादुत्पन्नमात्र एवायं भावो विनश्यतीति ? न विकल्पानुपपत्तेः—विनाशहेतुर्नास्तीति

## न्यायवार्त्तिकतात्पर्यटीका

न किञ्चिदुत्पन्नं विनष्टं चेति भावतादवस्थ्यादुपलब्ध्यादिप्रसङ्गः। अपि च यद्‌ येषां ध्रुवभावि न तत्र तेषां हेत्वन्तरापेक्षा यथा कृपाणस्यायोमयत्वे। ध्रुवभावी च कृतकानां भावानां नाश इति विरुद्धव्याप्तोपलब्धिः। ध्रुवभाविता हि प्रतिषिध्यमानहेत्वन्तरापेक्षत्वविरुद्धतन्निरपेक्षत्वव्याप्तोपलब्धा, सेह प्रतीयमाना निरपेक्षत्वमुपस्थापयन्ती हेत्वन्तरापेक्षतां प्रतिक्षिपति। ये हि हेत्वन्तरापेक्षा न ते ध्रुवभाविनो यथा वाससि रागादयः कुसुम्भादिसंयोगसापेक्षा नावश्यंभाविन इति। तस्मादभावस्य सर्वोपाख्यारहितस्य कल्पितस्य क्रियाऽनुपपन्नेति। अभावं करोतीति क्रियाया अभावेन सम्बन्धानुपपत्तेर्नञ्सम्बन्धो (१)भावं न करोतीति। यथाह—

'न तस्य किञ्चिद्भवति न भवत्येव केवलम्' इति।

तस्माद्विनाशकारणाभावादुत्पन्न एवाभावो विनश्यतीति सिद्धः क्षणभङ्ग इति। तदेतन्निराकरोति—न विकल्पानुपपत्तेः। अयमभिसन्धिः—यत्तावद्विकल्पितं स्वहेतुभ्यो भावा विनश्वरा अविनश्वरा वा जायन्त इति। तत्र ब्रूमः किं पुनरिदं विनश्वरत्वं भावानामभिमतमायुष्मतः किं विनाशस्वभावत्वम् आहो विनाशार्हत्वं नित्येभ्यो व्यावृत्तम्। न तावत्पूर्वः कल्पः परस्परपरिहारवतोर्भावतन्नाशयोस्तादात्म्यानुपपत्तेः। तादात्म्ये च विनाशवद्भावोऽपि द्वितीयादिक्षणेषु वर्तेतेति साधु क्षणिकत्वं समर्थितमत्रभवता भावानां नित्यत्वमुपपादयता। भावसमये वा विनाशोऽपि भावात्माऽस्तीत्यत्यन्ताभावो भावस्य भवेदिति सुष्ठुवदातं तत्त्वं भावानाम्। न च भाव एकक्षणस्थितिधर्मा नाशो द्वितीयादिक्षणेष्विति साम्प्रतम् प्रथमद्वितीयक्षणावच्छेदलक्षणविरुद्धधर्मसंसर्गेण भेदात्। द्वितीयं तु कल्पमनुमन्यामहे। नन्वेवं विनाशार्हाश्चेद्भावाः स्वकारणादुत्पन्नाः हन्तोदयानन्तरमेवापवृज्येरन् ? नापवृज्यन्ते, विनाशार्हा अपि पटादयस्तन्तुविनाशाद्वा तन्तुविभागाद्वा स्वकारणाधीनजन्मनो विनङ्क्ष्यन्ति। न हि तण्डुलाः पचेलिमा इति विनैव दहनसलिलसंयोगप्रचयभेदं विक्लिद्यन्ति। काष्ठानि वा भिदेलिमानीति कुठाराभिघातमन्तरेण दलन्ति। यो मन्यते त एव तण्डुलाः पचेलिमाः ये समर्थदहनोदकपिठरसहभुवः तदनन्तरं हि (क) पुलाकाः प्रादुर्भवन्ति, यदनन्तरं न प्रादुर्भवन्ति न ते पचेलिमा इति ; तस्योत्तरम् अक्षणिकार्थक्रियामुपपादयन्तो वक्ष्यामः। तस्माद्विनश्वराणामुत्पत्तेः (ख)स्वकारणान्न विनाशकारणापेक्षा

(१) 'भावेन' इति क-तात्पर्यपाठः।

(क) 'स्यात् पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके' इत्यमरः।

(ख) 'स्वकारणान्यविनाशकारणापेक्षा' इति समीचीनतया सम्भाव्यते।

## न्यायवार्त्तिकम्

ब्रुवाणः (१)पर्यनुयोक्तव्यः किमकारणत्वाद्विनाशो नास्ति उताकारणत्वान्नित्य इति। भवतां पक्षे अकारणं (२)द्विधा नित्यमसच्च, अस्माकं तु नित्यमेव। यद्यकारणत्वान्नित्यो विनाशः कार्यस्योत्पादो न प्राप्नोति उत्पन्नस्य च भावस्य विनाशेन सहावस्थानमिति च दोषः। ततश्च भावानामभावाविरोधादत्यन्तमवस्थानमिति। अथासन्विनाशः, एवमपि सर्वनित्यत्वं विनाशाभावात्। यदि चासन्विनाशः, विनश्यतीत्यसति विनाशे प्रत्ययो न प्राप्नोति; नासत्यां गतौ गच्छतीति भवति। अथाविनाशित्वादकारणो विनाश इति मन्यसे? विनाशो न विनश्यतीति कुत एतत्। विनष्टानां पुनरनुत्पत्तेरिति चेत्—अथ मन्यसे यदि विनाशो विनश्येत विनष्टः पुनरुत्पद्येत? न युक्तमेतत्—न हि (३)विनाशाभावो (४)यतोऽस्य विनाशाद्भवेत् (४*) अपि तु कारणवान् भावस्तस्य यदा कारणं भवति तदोत्पाद इति। अपि च विनाशः कारणवांश्च

## न्यायवार्त्तिकतात्पर्यटीका

भावानामिति युक्तम्। केवलं (५) भावादन्यदकारणं ब्रुवाणः पर्यनुयोज्यो भवान् किमकारणत्वाद्विनाशस्य नास्तित्वं रोचयते किं वा नित्यताम्? तत्रोक्तं साक्षाद्दूषणं वार्त्तिककृता—भवतां शाक्यानां पक्षे अकारणं द्विधा, नित्यं व्योम शशविषाणादि वा तुच्छम्, अस्माकं तु नित्यमेव। भवदभिमतस्य तस्य तुच्छस्याभावस्यानङ्गीकारादस्मदभिमतस्य भवद्भिरनङ्गीकृतत्वेन नास्तीत्यध्यारोप्य राशिरेक उक्तः। उत्पन्नस्य विनाश इति सर्वजनीनं तद्विपरीतं भवत्पक्षे प्राप्नोति। नन्वस्तु भावाभावयोः सहावस्थानं को दोष इत्यत आह—ततश्च भावानामिति। शङ्कते—अथाविनाशित्वादिति। प्रयोजनक्षतिरियं यदकारणत्वे विनाशस्यैष दोष इति न तु दोषभयेन स्फुटतरप्रमाणबाधितं (क)कारणत्वं विनाशस्य शक्यमङ्गीकर्तुमिति भावः। गूढाभिसन्धिः सिद्धान्ती पृच्छति—विनाशो न विनश्यतीति कुत एतत्। चोदक आह—विनष्टानामिति। सिद्धान्ती बौद्धमतमालम्ब्याऽऽह—न हि विनाशाभाव इति। यस्य पटाभाव एव तुच्छस्तस्य तदभावे का कथा तस्य तुच्छादपि तुच्छतरत्वादिति भावः। स्वमतमास्थायाऽऽह—अपि च विनाशः कारणवांश्चेति। शेषं सुबोधम्। यदप्यकारणत्वे कारणमुक्तं भावाद्भिन्नश्चेदभावो जन्येत भावतादवस्थ्यमिति, तत्रोच्यते—नाभावस्योत्पादे भावस्यापरा निवृत्तिः किं स्वभावोत्पाद एव तन्निवृत्तिः। कथमन्यस्योत्पादेऽन्यस्य निवृत्तिः? अत्र स्वभावभेदैरुत्तरं वाच्यं ये परस्परपरिहारावस्थितयः ते

---

(१) 'पर्यनुयोज्यः' इति क-खधृतपाठान्तरम्। (२) 'द्वेधा' इति क-ख०। (३) 'विनाशा-(भावा)भावो' इति क-पुस्तके मुद्रितम्। 'विनाशाभावाभावो' इति ख०। (४) 'यतो विनाशविनाशाद्भवेत्' इति क-ख-धृतपाठान्तरम्। (५) 'भावादन्यस्याकारणत्वं ब्रुवाणः' इति ख०।

(क) 'कारणवत्त्व'' इति पाठः सम्भाव्यते।

## न्यायवार्त्तिकम्

न विनश्यत्यभावत्वात्, भावधर्म (१) एषः यत् कारणवत् तद्विनश्यतीति, अभावस्त्वकारणोऽपि विनश्यतीति यथा प्रागभावः, कारणवानपि न विनश्यति यथा प्रध्वंसाभावः। यदि कारणवान् विनाशो ननु जनकं विनाशकं प्राप्नोति—य एवाग्निसंयोगः पाकजानामुत्पादयिता स एव पाकजान्तरोत्पादे पूर्वपाकजानुच्छिनत्तीति जनकं विनाशकं प्राप्तम् ? (२)नानवरोधात्—नेदं भवता काश्यपीयं दर्शनं व्यज्ञायि, न हि नो य एवाग्निसंयोगः पाकजानुत्पादयति स एवोच्छिनत्ति, अपि त्वग्निसंयोगान्तरं पूर्वरूपाद्युच्छिनत्ति (३)समनन्तरकालाद्रूपादीनारभते

## न्यायवार्त्तिकतात्पर्यटीका

स्वहेतुभ्यो जायन्ते। न हि स्वतोऽन्यस्याङ्कुरस्य वह्निर्न (क)कारणमन्यत्वाविशेषा-दात्मनोऽपि न कारणमिति। स्वभावभेदेन तु कार्यकारणभावनियमसमर्थनं परस्परपरिहारस्थिति-नियमेऽपि तुल्यम्। यथा चोत्पादस्य पुरस्तादखिलसामर्थ्यरहितस्याङ्कुरप्रागभावस्योपकारं (ख)किञ्चिदकुर्वन्तोऽपि बीजादयोऽङ्कुरमारभन्ते तदुत्पादस्यैव तत्प्रागभावनिवृत्तिरूपत्वात् एवं तदभावहेतवोऽपि भावरूपे अकिंचित्करा अपि तदभावमादधति, न चेद्भावरूपे किञ्चित्कृतं (४)तदभावहेतुभिः अथ भावः(४*) प्रागिव स्वाभावसमये कस्मान्न स्वरूपोपलम्भार्थक्रिये करोति। (ग)अथोत्पादात् प्रागिवोत्पन्नोऽप्यङ्कुरः कस्मादुपलम्भार्थक्रिये करोति ? उत्पत्तेः प्रागङ्कुरो नाऽऽसीत्तेन नाकार्षीदुत्पन्नस्त्वस्ति तस्मात्करोतीति चेत् हन्त भावोऽपि यदाऽऽसीत्तदाऽकार्षीत् तदानीं तु विनष्ट इति नास्ति तेन न करोति। यथा च भावोत्पाद एव तत्प्रागभावस्य नास्तिता एवमभावोत्पाद एव भावस्य नास्तिता। उपजनापायधर्मतया भावाभेदो विनाशस्य ततो न सदसद्रूपतया द्वैराश्यं विश्वस्येति चेत् कोऽयमुपजनः ? यदि स्वकारणसमवायः सत्ता-समवायो वा, सोऽभावे नास्ति। अथ स्वरूपप्रतिलम्भः, तथाऽपि तावन्मात्रस्य साम्येऽपि अवान्तरभेदेन द्वैराश्योपपत्तिः। तस्माद्य यथा सत्त्वस्य साम्येऽपि द्रव्यगुणकर्माणि तेन तत्त्वे-नान्योन्यं भिद्यन्ते एवं प्रमेयत्वाभिधेयत्वकारणवत्त्वेनाविशेषेऽपि सद्भिः सद्वासतां सत्ता-तद्विरहरूपभेदाद्भेद इति सिद्धम्। याऽपि ध्रुवभाविता विनाशस्य तत्र (५) ब्रूमः ध्रुवभावित्वेन विनाशस्य हेत्वन्तरानपेक्षत्वं ब्रुवाणो नाहेतुकत्वं वक्तुमर्हति हेत्वन्तरनिराकरणेन हेतुना निरा-करणात्, विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वात्। अपि च ध्रुवभावित्वमसिद्धमनैकान्तिकं वा। इदं भवान् पृष्टो व्याचष्टां (घ)किं घटसंतानात्सभागात् कपालसंततिर्ध्रुवभाविनी न वा। न चेद्व न विनाशोऽपि घटस्य ध्रुवभावी, न खलु विसभागक्षणोत्पादमन्तरेण घटविनाशमीक्षामहे

(१) 'एव' इति क-ख-धृतपाठान्तरम्। (२) 'नानवबोधात्' इति क-ख-धृतपाठान्तरं समीचीनं प्रतिभाति। (३) 'समनन्तरकालान् रूपादीनारभते' इति क-ख-धृतपाठान्तरम्। (४) 'तदभावहेतुभि-रप्यभावः' इति क०। (५) 'क्रम' इति क०।

(क) 'कारणम्, इत्यन्यत्वाविशेषात्' इति पाठः सम्भाव्यते। (ख) किञ्चिदित्यव्ययम्, कञ्चिदिति वा पाठः। (ग) 'अथोत्पादात् प्रागप्युत्पन्नइवाङ्कुरः कस्मादुपलम्भार्थक्रिये न करोति' इत्येव पाठ इति प्रतिभाति। (घ) 'न वा' इत्यन्ते दर्शनात् 'किं' शब्दोऽत्र प्रमादादागतः सम्भाव्यते।

## न्यायवार्त्तिकम्

ततस्तान्यप्यन्यस्तान्यप्यन्य इत्येवं जनकस्य विनाशकत्वप्रसङ्गो नास्ति। अथ मन्यसे जनकस्वरूपमपि विनाशकं न भवति? न न भवति—दृष्टो यवादिसंयोगादङ्कुरस्योत्पादः स एवाबादिसंयोगस्तद्विनाशक इति। न हि दृष्टेऽनुपपन्नं नाम। यश्चाकारणविनाशे दोषः सोऽपरिहार्य इत्यत एवमुच्यते जनकस्वरूपं विनाशकमिति।

एवं तावदन्यत्वे साध्ये दोष उक्तः। ये तु क्षणिकत्वं साधयन्ति विशेषदर्शनाद्विनाशहेत्वभावाच्च, तान् प्रतीदमुच्यते—क्षणिकाः संस्कारा इति ब्रुवाणः क्षणिकशब्दार्थं प्रष्टव्यः किमुक्तं भवति क्षणिका इति। यदि विनाशिन इति? सिद्धसाधनम्। अथाऽऽशुविनाशिन इति? तदा विशेषणं सिद्धान्तविरोधि। अथोत्पन्नप्रध्वंसिन इति? एतदपि तादृगेव। उत्पन्नाः प्रध्वंसिन इति? सिद्धसाधनम्। अथोत्पन्नो विनष्ट इत्येकः कालः—उत्पत्तिविनाशावेककालाविति? तेन यथाऽनुत्पन्नस्योत्पत्तिरेवमनुत्पन्नस्य विनाश इति प्राप्तम्। अथोत्पन्नं विनश्यतीति? एतस्मिन्नपि पक्षे उत्पत्तिवद्विनाशः कारणवान्, यथोत्पत्तिः क्रियात्वात् कादाचित्कत्वात् सकारणा (१)तथा विनाशकारणमनुभवति(१*) ततो विनश्यतीति, अकारणे च विनाशे दोष उक्तः। यश्चायं मत्वर्थीयः (२)क्षणिक इति स कथम्? यदि निरुक्तन्यायेन क्षयः क्षण इति क्षणोऽस्यास्तीति क्षणिक इति? तन्न युक्तं कालभेदात्—यदा क्षयो न तदा क्षयीति भिन्नकालयोर्न मत्वर्थीयो दृष्टः। अथ पुनर्भाव एवानन्तरेण विनाशेन विशिष्यमाणः (३)क्षणिक इत्युच्यते तथाऽपि तेनैव तदेव तद्वन्न भवतीति न युक्तो मत्वर्थीयः। अथ क्षणावस्थितिकालाः क्षणिका इति—सर्वान्त्यं कालं क्षणत्वेन प्रतिपद्य तत्र येऽवतिष्ठन्ते ते क्षणिका इति? एतदपि न युक्तम्—

## न्यायवार्त्तिकतात्पर्यटीका

मांसचक्षुषः तथा चासिद्धा ध्रुवभाविता विनाशस्य। अथ ध्रुवभाविनी, तस्यामेव तर्हि विसभागसंततौ ध्रुवभाविन्यां मुद्गरादिहेत्वपेक्षेत्यनैकान्तिकं ध्रुवभावित्वं नानपेक्षत्वव्याप्तमिति न हेत्वन्तरापेक्षित्वं निषेद्धुमर्हतीति। तदेतद् यश्चाकारणविनाशे दोषः स चापरिहार्य इत्यनेन वार्त्तिकेन सूचितम्।

एवं तावदन्यत्वे साध्ये दोष उक्त इति। यद्यपि क्षणिकत्वमपि पूर्वमुक्तं दूषितं च तथाऽपि क्षणिकाभिधानं तदान्यपरमन्यत्वमेव तु तत्र प्रधानम्, इदानीं तु क्षणिकत्वमेव प्रधानतया साध्यमित्येतावता प्रकरणभेद इति। विशेषणं सिद्धान्तविरोधीति। यद्यनाशुविनाशिनोऽपि केचन भावा भवेयुः ततो विशेषणमाशुविनाशिन इति कल्पेत तथा च सिद्धान्तविरोध इत्यर्थः। मत्वर्थीय इति। क्षणिक इति, "अत इनिठना"विति मत्वर्थीयष्ठन्, अनन्तरेण विनाशेन विशिष्यमाण इति, उपलक्ष्यमाणः। सर्वान्त्यं कालमिति, पूर्वापरभागविकलकालकलैका

(१) 'तथा विनाशिन इत्युत्पद्य विनाशकारणमनुभवति' इति क-ख-धृतपाठान्तरम्। 'तथा विनाश इत्युपेत्य विनाशकारणमनुभवति' इति क्वचित् पाठ इति क-ख-वार्त्तिकसम्पादकाः। (२) 'क्षणिका' इति क-ख०। (३) 'तथा इत्यच्यते' इति क-ख-धृतपाठान्तरम्।

## न्यायवार्त्तिकम्

संज्ञामात्रत्वेन कालस्याभ्युपगमात्। पञ्च भिक्षवः संज्ञाभेदमात्रमिति शास्त्रम्। न हि संज्ञामात्रं वस्तुविशेषणत्वेन युक्तम्। क्षणिका इति च प्रतिज्ञां कृत्वा न दृष्टान्तोऽस्तीत्युक्तं प्रदीपादेरसिद्धत्वात्।

येऽपि हेतवोऽन्ते विशेषदर्शनादित्येवमादयस्तेऽप्यसिद्धाः अन्यथासिद्धा विरुद्धा वा भवन्तीति

## न्यायवार्त्तिकतात्पर्यटीका

ज्योतिर्विद्यासिद्धा (१)सर्वान्त्यं कालमिति संज्ञामात्रं न तु वास्तवं वास्तवी च क्षणिकताऽभिमतेति।

पक्षवचनं दूषयित्वा हेतुं दूषयति—येऽपीति। अत्राऽऽदिग्रहणेन सत्त्वकृतकत्वादयः संगृहीता वेदितव्याः। तत्र यत् सत् तत् सर्वं क्षणिकं यथा घटः, संश्च विवादाध्यासितः शब्दादिरिति स्वभावहेतुः सत्तामात्रानुबन्धित्वात् क्षणिकत्वस्य। कथं पुनः सत्तामात्रानुबन्धसिद्धिः क्षणिकतायाः? उच्यते—सत्त्वं नामार्थक्रियाकारित्वं भावानां नान्यत्। न ह्यस्ति सम्भवः संश्च भावो न चार्थक्रियां करोतीति। तथा हि स सर्वज्ञस्य विज्ञानस्याऽऽलम्बनप्रत्ययो भवेन्न वा। न चेद् नास्ति, सर्वज्ञो वा न सर्वज्ञः, तस्यैवाज्ञानात्। आलम्बनप्रत्ययश्चेत् कथं नार्थक्रियां करोतीति। न च सत्तासामान्यं नास्ति किंचन नापि समवायो यतः सन्नित्युच्यते। तत्सद्भावे वा न भवतां सामान्यविशेषसमवायाः सन्तो भवेयुः तेषां सामान्याधारत्वानभ्युपगमात्। प्रमाणग्राह्यताऽपि प्रमाणविषयता प्रमाणं प्रत्यालम्बनप्रत्ययत्वमेव, तच्चार्थक्रियाकारित्वान्नान्यदिति सिद्धमर्थक्रियाकारित्वमेव सत्त्वमिति। तच्च क्रमाक्रमाभ्यां व्याप्तं तृतीयप्रकारविरहात्। तथा हि भावानां तासु तास्वर्थक्रियासु क्रमाक्रमौ परस्परपरिहारवन्तौ चकास्तः, तथा च क्रमाक्रमात्मकं प्रकारान्तरमपि यदीदृशाभ्यामेवानुभूतावसिताभ्यां क्रमाक्रमाभ्यां करम्बितमङ्गीक्रियते ततो दृश्यमानयोरपि क्रमाक्रमयोः परस्परसंकरप्रसङ्गः। करम्बितावेव हि क्रमाक्रमाविमावपीति दृश्यमानः क्रमोऽक्रमात्मकः अक्रमश्च क्रमात्मकः प्रतिभासेत। न च तथा प्रतिभासते। एतेन प्रत्यक्षमेव परस्परपरिहारवन्तौ क्रमाक्रमौ परिच्छिन्दत् सर्वत्रैवानयोः संकरं प्रतिक्षिपति। यदि क्वचिदप्यनयोरेतादात्म्यं भवेदिहापि तावेव क्रमाक्रमाविति संकीर्णौ गृह्येयाताम्। तस्मादनयोरिह संकरानुपलम्भ एव देशान्तरे कालान्तरे च संकरं निषेधति। तादात्म्यनिषेधे च दृश्यत्वविशेषणादनुपलब्धेः दृश्यमानस्तम्भतादात्म्येन स्वयमदृश्यानां पिशाचादीनां दृश्यानां च प्लवङ्गादीनामविशेषेण प्रतिषेधात्। यथाह—विशेषणं वावाच्यमिति। अनेवंभूतक्रमयौगपद्यव्यतिरेकवती प्रकारान्तरे क्रमयौगपद्ये एव न भवतः न हि शब्दाभेदेन वस्तुनोऽप्यभेदः। मा भूद्गोशब्दसामानाधिकरण्येन वागादीनामपि विषाणित्वप्रसङ्गः।

स्यादेतत्—मा भूतां क्रमयौगपद्ये अस्त्वन्य एव क्रमाक्रमाभिधानः क्रमयौगपद्याभ्यामन्यः प्रकारो यमास्थाय भावाः स्थिरा अप्यर्थक्रियायामुपयोक्ष्यन्ते, न त्वेषां प्रकारान्तरवदर्थक्रियाऽपि

(१) 'सर्वान्तः कालम्' इति क०।

न्यायवार्त्तिकतात्पर्यटीका

पिशाचायमानैव ; तथा चेत् किं नः छिन्नम् ? दृश्यमानास्त्वनुभूतावसिताः परस्परव्यावृत्तक्रमयौगपद्यरूपप्रकारद्वयसमालिङ्गितरूपा अर्थक्रिया न प्रकारान्तराद्भवितुमीशते। न च प्रकारान्तरमपि। तथा हि यत्र यत्प्रकारप्रतिषेधेन यदितरप्रकारव्यवस्थानियमस्तत्र न प्रकारान्तरसंभवः यथा नीलप्रकारप्रतिषेधेनानीलप्रकारव्यवस्थायां पीते। अस्ति च तयोरन्यतरप्रकारनिषेधेऽन्यतरव्यवस्थानियमो निषिध्यमानप्रकारविपर्यीकृते सर्वत्र कार्यकारणे इति विरुद्धोपलब्धिः। निषिध्यमानप्रकारान्तरसंभवविरुद्धो हि द्वयोरन्यतरनिषेधेनान्यतरव्यवस्थानियम इति प्रकारान्तरासंभवाद्भावानामर्थक्रिया क्रमाक्रमाभ्यां व्याप्ता, तौ च स्थिरान्निवर्तमानावर्थक्रियामपि व्यावर्तयतः वृक्षतेव निवर्तमाना शिंशपात्वमाराद्दृश्यमानादेकशिलामयाद्भूभृत्कटकादिति प्रतिबन्धसिद्धिः। तथा हि न तावदक्षणिकः क्रमेणार्थक्रियां कर्तुमर्हति। स्वेन हि रूपेण भावा अर्थक्रियायामुपयुज्यमाना दृश्यन्ते। यद्वस्तु यत्कार्यान्वयव्यतिरेकानुविहितभावाभावं तद्वस्तु तत्कार्यप्रसवसमर्थम्, रूपं च तस्य कार्येणानुकृतान्वयव्यतिरेकमिति रूपमेव समर्थम्, तच्च द्वितीयादिक्षणेष्विव प्रथमेऽपि क्षणे सदिति द्वितीयादिक्षणजन्यं कार्यकलापं प्रथम एव क्षणे निष्पादयेत् समर्थस्य क्षेपायोगादिति नाक्षणिकस्य क्रमवद्व्यापारता प्रसज्यते। स्यादेतत्—समर्थोऽपि क्रमवत्सहकारियोगात् क्रमेण करोतीति ? तदयुक्तं विकल्पासहत्वात्। किमस्य सहकारिणः कंचिदुपकारमादधति न वा ? आदधाना वा भावाद्भिन्नमभिन्नं वा। तत्र भिन्नोपकाराधाने भावे सत्यनुत्पत्तेरुपकारे च सत्युत्पत्तेः एवं कार्यस्योपकार एव जनको न जनको भावः। न चोपकारसहकारी भाव एव कार्यस्य जनको नोपकारमात्रमिति वाच्यम्, उपकारस्योपकारान्तरजनने अनवस्थानात्, अजनने तु सहकारिभावाभावात्। अभिन्नोपकाराधाने च भाव एव जनयेत् स च प्रागप्यासीदिति सहकारिवैयर्थ्यम्। अनुपकारकत्वे वा सहकारिणो न भावेनापेक्ष्येरन्नित्युत्पन्नमात्र एव भावः कार्यमुत्पादयेत् समर्थस्य क्षेपायोगात्, क्षेपे वा न पश्चादपि कुर्यादविशेषात्। यदि मन्येत अनुपकारका अपि भवन्ति सहकारिणो यतस्तैः सह भावः कार्यं करोति ; न च भावेन नापेक्ष्यन्ते तैर्विना कार्यस्यानुत्पत्तेरिति। ननु स्वरूपेण चेत् कार्यजनको भावः (क)न कस्मान्नेमानन्तरेण जनयति तेभ्यः प्रागपि स्वरूपसद्भावात्। सहकारिरूपेण वा जनकत्वे सहकारिण एव जनका न जनको भावः। न चोभयभावाभावानुविधानादर्थक्रियाभावाभावयोरेकस्माच्च व्यभिचारादुभयाधीनतेति सांप्रतम्, भावे सत्यनुत्पादात् कार्यस्य व्यभिचारेण चरमभाविनिमित्तसहकारिसमवधाने सति भावादेव सहकारिसमवधानस्यैव चरमभाविनोऽव्यभिचारेण कारणत्वावधारणात्। एतेनैतन्निरस्तं यदाहुरेके—

स्वहेतोर्विलम्बकारी भावो जात इति नोत्पन्नमात्रः करोतीति।

सा हि विलम्बकारिता अस्य स्वभावः सहकारिसमवधानकालेऽप्यस्ति न वा ? अस्ति

(क) अत्र एकं नञ्पदं प्रमादादापतितं सम्भाव्यते।

## न्यायवार्त्तिकतात्पर्यटीका

चेत्तदाऽपि न कुर्यात्, नास्ति चेत् कथं स्वभावनाशे भावो न नष्टः। अथास्य विलम्बकारिता न स्वभावः, कथमुत्पन्नमात्रो न कार्यं कुर्यादिति। तस्मान्न क्रमेणार्थक्रिया भावानां नापि यौगपद्येन। तस्माद् यावत्कार्यं तेनाक्षणिकेन प्रथमे क्षणे संपादितं तावत्सर्वं द्वितीयादिक्षणेषु संपादयेत् तावत्कार्यसम्पादनस्वरूपस्य द्वितीयादिष्वपि क्षणेषु भावात्। न च सम्पादितं शक्यसम्पादनमिति यद् द्वितीयादिक्षणेषु सम्पादयति तत् प्रथमक्षणे सम्पादितादन्यदिति क्रमा एवाऽऽवर्त्तन्त इति तत्र चोक्तो दोषः। युगपत्कृतकृत्यस्य वा द्वितीयादिषु कर्त्तव्याभावान्नार्थक्रियासामर्थ्यमस्तीत्यसत्त्वेन क्षणिकत्वापत्तिः। तस्मादक्षणिके सत्त्वे व्यापकयोः क्रमाक्रमयोरनुपलम्भाद् व्यापकानुपलब्ध्या निवर्त्तमानं सत्त्वमक्षणिकात् क्षणिकत्वेन व्याप्यत इति प्रतिबन्धसिद्धिः। नीलमेव चानुभूतावसितं समारोपिताक्षणिकभावमक्षणिकं तादृशनीलस्वरूपोपलम्भ एव तत्राक्षणिके क्रमयौगपद्यानुपलम्भः, यथा भूतलस्वरूपोपलम्भ एव समारोपितदृश्यत्वस्य घटस्यानुपलम्भः। भूतलं च तथोत्पन्नं घटाभावः, न स्वभावो नाम कश्चिद्विग्रहवानस्ति यः प्रतिपत्तिगोचरः स्यात्, अपि तु व्यवहर्त्तव्यः परम्।

स्यादेतत्—क्षणिको भावोऽर्थक्रियाजनकस्वभावो न वा? न चेत् असन्नेव। तज्जनकस्वभावश्चेत् किमस्य सहकारिभिः? उत्पन्नमात्रमेव बीजमङ्कुरं जनयेत्। ननूत्पन्नो बीजक्षणः समर्थो जनयत्येवाङ्कुरम्। कुतः समर्थस्योत्पत्तिः? पूर्वस्माद्बीजक्षणात्। तर्हि तत्सन्तानवर्तिनां सर्वेषां बीजत्वाविशेषादङ्कुरजननसामर्थ्यमिति कुसूमानन्तरलब्धजन्ममात्रमेव बीजमङ्कुरं जनयेत्? मैवम्, पूर्वपूर्वक्षितिबीजपवनादिक्षणसमवधानोत्पन्नातिशयवदुत्तरोत्तरक्षणपरम्परालब्धजन्माऽन्त्यो बीजक्षणः समर्थः समर्थक्षित्यादिलक्षणसहभूरनपेक्ष एवाङ्कुरं जनयति। न चास्य क्षित्यादिसहभुवस्तदनपेक्षस्यापि तैर्विना करणं तदेकसामग्र्यधीनस्य तदभावेऽभावात्। न वा सहकारिता क्षित्यादीनां तैरेव सहाङ्कुरजननात्, तेषामपि कार्यात् पूर्वभावस्य नियमतोऽविशेषात् तन्मात्रत्वादेव च कारणतायाः। न वाऽनपेक्षाणामपि प्रत्येकं कार्यान्तरारम्भणं तन्मात्रस्य तेभ्य उपलब्धेस्तत्रैव सामर्थ्यनियमात्। न च कृतकरणतयेतरेषामक्रिया सहक्रियायां कृतमित्यसम्भवात्। न च स्वकारणलब्धसन्निधयो भावाः प्रेक्षावन्तः शक्यमिदमस्मास्वेकेनापि कर्तुं कृतं नः सर्वेषां सन्निधानेनेत्यालोच्य निवर्तितुमीशते। न च स्वकारणभेदमात्रं कार्यभेदहेतुः अपि तु सामग्रीभेदः, तस्मिन् सति कार्यभेदोपलब्धेः अभिन्ना भेदसामग्रीति न कार्यभेदप्रसङ्गः। परस्परसमवधानं चोपसर्पणप्रत्ययेभ्यः क्षित्यादीनामिति। न च क्षणिकस्यार्थक्रियाविरोधादसाधारणता हेतोः। न च साध्यधर्मिणि दृश्यमाने शब्दादौ व्याप्तिसाधनादेव साध्यसिद्धेरसाधनाङ्गं हेतुवचनम्। न खलु सर्वोपसंहारवती व्याप्तिर्दृश्यमात्रविषया भवितुमर्हति। शक्यं हि शङ्कितुं परेणादृश्यमानानां सत्त्वमक्षणिकाद् न व्यावर्तितं त्वयेति सत्त्वमनैकान्तिकं क्षणिकत्वसाधन इति। तस्माद् यद् दृश्यमदृश्यं वा तत्सर्वं क्षणिकमिति दर्शनीया व्याप्तिः। नन्वेवमपि

## न्यायवार्त्तिकतात्पर्यटीका

शब्दादेर्विवादास्पदीभूतस्य व्याप्तिदर्शनबलादेव सिद्धा क्षणिकतेति तदवस्थमेवासाधनाङ्गत्वं हेतुवचनस्य ? मैवम्, असत्यपि शशविषाणादौ यत् सत् दृश्यमदृश्यं वा तत्सर्वं क्षणिकमिति (क)यथा सर्वोपसंहारवती व्याप्तिः, न च शशविषाणादयोऽपि भवन्ति क्षणिकाः, एवं सत्यपि विवादास्पदीभूते शब्दादौ व्याप्तिसिद्धावपि न सिध्यति क्षणिकता तेनावश्यं दर्शयितव्यमेतेषां क्षणिकत्वसाधनाय सत्त्वमिति नासाधनाङ्गता हेतुवचनस्येति।

अत्रोच्यते। न सत्त्वं क्षणभङ्गसिद्धावङ्गमसाधारणत्वात् सन्दिग्धव्यतिरेकित्वाद्वा। तथा हि क्रमाक्रमाभ्यां व्याप्तं सत्त्वं तदनुपलम्भेनाक्षणिकाद् व्यावर्तत एवं तदेव सापेक्षत्वानपेक्षत्वाभ्यां व्याप्तं तदनुपलम्भेन क्षणिकादपि व्यावर्त्तते तस्माद् गन्धवत्त्ववदसाधारणं सदसाधनाङ्गम्। तथा हि (१)अन्त्यक्षणप्राप्तानि क्षितिपवनपाथस्तेजोबीजानि समर्थानि प्रागभावनियतानि नियतचरमोत्पादानामवनिजलानलाङ्कुराणां कारणं भवद्भिरभ्युपेयन्ते। तान्यमूनि परस्परानपेक्षाणि वा जनयेयुः सापेक्षाणि वा ? ननु निरपेक्षाण्येवान्त्यक्षणप्राप्तानि क्षित्यादीन्युत्तरस्मिन् पुञ्जे जनयितव्य इत्युक्तम्, तत् किमनभ्युपगतविकल्पेन सापेक्षाणि निरपेक्षाणि चेति। तत्किमिदानीं समर्थबीजक्षणजनकोऽपि बीजक्षणोऽनपेक्ष एव। ओमिति चेत्। नन्वेवं सर्व एव बीजक्षणा निरपेक्षाः स्वकार्योपजन इति कृतं सहकारिभिः। ननूक्तं नैते प्रेक्षावन्तः किं तु स्वप्रत्ययाधीननियतसन्निधयो न व्यवधेरीशत इति। तत्किमयं कृषीवलोऽपि न प्रेक्षावान् ? प्रेक्षावान्, यतः प्रयत्नेन कुसूलादवतार्य बीजमावपति भूमौ परिकर्पितायां क्षित्यादिसहभुव एव बीजक्षणस्यातिशयोत्पादपरम्पराया अङ्कुरप्रसवसामर्थ्यात् कुसूलस्थात्तु सहस्रेणापि (ख)वर्षैरङ्कुरानुत्पादे तत्राऽऽवपतीति चेत्। अथ किमयं न स्वसन्तानमात्रप्रभवः समर्थो बीजक्षणः ? तथा चेत्कथं सन्तानान्तरं नापेक्षेत स्वकार्ये। नन्वपेक्षत एव, किन्तु स्वोत्पादे न पुनः स्वकार्ये; तत्र तस्यानपेक्षत्वमुपेयते न तु स्वोत्पादे। ननूपत्तावप्यस्य जागर्त्ति स्वसन्तानवर्त्ती पूर्व एव निरपेक्षः क्षणः, एवं तस्य पूर्वः पूर्वः क्षणः स्वसन्ततिपतित एवानपेक्षो जागर्त्युपजनन इति कुसूलनिहितबीज एव स्यात् कृती कृषीवलः, कृतमस्य कृषिकर्मणा दुःखबहुलेन। तस्मात् परस्परापेक्षाणामेवान्त्यक्षणप्राप्तानां कार्यजनकत्वमकामेनाप्युपेयम्। अपि चान्त्यक्षणप्राप्तं बीजमनपेक्ष्य अङ्कुरावनिपवनपाथस्तेजांसि जनयेत् किं येनैव रूपेणाङ्कुरं जनयति तेनैव तदितराण्यपि किं वा रूपान्तरेण। न तावत्तेनैव, क्षित्यादीनामङ्कुरस्वाभाव्यापत्तेः। न खलु भवतां कारणाभेदे भेदवत्कार्यं भवितुमर्हति कार्यभेदस्याऽऽकस्मिकत्वप्रसङ्गात्। यथोक्तं भवद्भिरेव—अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति। नापि सामग्रीभेदः तस्या अप्यभेदात्, अन्यथा सहभावनियमाभावात्। स्वकारणादासादितः कश्चिदेव स्वभाव-

---

(१) 'अन्तक्षण'—इति क-ख०।
(क) 'यथा'पदं कुत्रान्वेतीत्यनुसन्धेयम्।
(ख) 'वर्षैरङ्कुरानुत्पादेन तत्रावपति' इति युक्तः पाठः।

## न्यायवार्त्तिकतात्पर्यटीका

भेद एकस्तादृशो यस्मान्नानाकार्याणि जायन्ते। तस्मान्नाऽऽकस्मिकत्वं कार्यनानात्वस्य नाप्यतिप्रसङ्गः तादृशस्य तस्यासार्वत्रिकत्वात्। न च कार्यकारणयोरभेदो येन कारणभेदाभेदावनुपतेतां कार्यभेदाभेदौ। तस्माद्‌ यथा (क)केभ्यः कश्चिदेव बहुभ्यः कार्यमेकं जायते तथैकस्मादेव कुतश्चिद्बहूनि जनयिष्यन्ते कार्याणीति चेत्। मुधैव तर्हि नानादेशवृत्तिरेकोऽवयविसामान्यसंयोगादिरर्थस्तपस्वी भवता आयासितः। न हि नानात्वेऽपि देशानां तदाश्रितः सामान्यादिरर्थो नाना भवितुमर्हति तस्य तेभ्योऽभिन्नत्वात्। रूपान्तरेण बीजमङ्कुरादितरेषां क्षित्यादीनां जनकम्। तथा हि बीजमङ्कुरस्योपादानं तत्सारभागविक्रिययाऽङ्कुरस्योत्पत्तेः, क्षित्यादिषु तु जनयितव्येषु सहकारि; पूर्वे तु क्षित्यादयः क्षित्यादीनां यथास्वमुपादानानि तद्विक्रियया तदुत्पत्तिरिति चेत्, अथ सहकारितोपादानते किमेकं तत्त्वं नाना वा? एकं चेत्, कथं रूपान्तरेण जनकं, नानात्वे तयोर्बीजाद्भेदोऽभेदो वा? भेदे कथं बीजस्य जनकत्वं ताभ्यामेवाङ्कुरादीनामुत्पत्तेः। अभेदे वा कथं न भेदो बीजस्य भिन्नतादात्म्यात्। तयोर्वैकरूपत्वमेव तादात्म्यात्। तस्मादङ्कुराद्भिन्ने क्षित्यादौ जनयितव्ये तदुपादानं पूर्वमेव क्षित्यादिसमसमयभावि बीजेनापेक्ष्यते। एवं बीजमपि समसमयभाव्येव सहकारिकारणं क्षित्यादिभिरपेक्ष्यते नान्यथा कार्यभेदसिद्धिरित्यनिच्छताऽप्यभ्युपेयम्। न चानुपकारकमपेक्षागोचर इति भवद्भिरेवोपपादितम्। न च क्षणिकस्योपकारकत्वसम्भवोऽन्यत्र जननात् तस्याभेद्यत्वात्। न च समसमयभाविनोर्जन्यजनकत्वमस्ति सव्येतरविषाणयोरिव। तस्मात् स्वसन्तानमात्रादेव कार्योत्पादप्रसङ्गात् कार्यभेदानुपपत्तेश्चानुपकारिण्यपेक्षाविरहाच्च क्षणिकस्यापि सापेक्षस्यानपेक्षस्य वा नार्थक्रिया सम्भविनीत्यसाधारणसत्त्वं न क्षणभङ्गसिद्धावङ्गम्। अथ मा भूदसाधारणता सत्त्वस्येत्यनुपकारकेष्वपि कार्यकरणायापेक्षाऽभ्युपेयते तेषामपि कार्येणानुकृतान्वयव्यतिरेकत्वात्, न त्वनेन क्रमेणाक्षणिकोऽपि भावोऽनुपकारकानपि सहकारिणः क्रमवतः क्रमवत्तैव कार्येणानुकृतान्वयव्यतिरेकानपेक्षिष्यते। करिष्यते क्रमवत्सहकारिवशः क्रमेण कार्याणि। समर्थस्याप्यपेक्षणीयासन्निधेः कार्यक्षेप उपपत्स्यते। न चैतावता सहकारिसमवधानादेवोत्पत्तिमतः कार्यसिद्धिः कृतमेषां रूपेणेति वाच्यं तत्सहितादेव तत उत्पत्तिदर्शनात्, रूपे सत्यप्यनुत्पादात्। (ख)समवधाने हेतुसत्युत्पादादेव कार्यस्वसमवधानमेव हेतुः न पुना रूपमपीति चेत् तत्किमिदानीं रासभादितुल्यता बीजरूपस्य? ओमिति चेत्, अथ कस्माद्गर्दभादीनन्तरेणेव बीजरूपं विनाऽपि नाङ्कुरो जायते? तत्समवधानस्य तत्कारणत्वादिति चेत्, तत्समवधाने कारणे कथं तन्निवेशि रूपमपि न कारणम्। न चावर्जनीयतया तन्निवेशः, समवधानमात्रस्य बीजरूपमन्तरेणापि तत्र तत्र भावात्। विशेषस्तु समवधाने रूपमेव बीजादीनाम्। तस्माद्‌ यथोभयाधीननिरूपणा व्याप्तिरयोगव्यवच्छेदेन व्यापके निरूप्यते

(क) 'केभ्यः कश्चिदेव' इत्यत्र 'केभ्यश्चिदेव' इति पाठः सम्भाव्यते।

(ख) 'समवधाने सत्युत्पादादेव कार्यस्य समवधानमेव हेतुः' इति पाठः सम्भाव्यते।

## न्यायवार्त्तिकम्

अहेतवः। उपेत्य वा विशेषवत्त्वं वर्तमानैकक्षणविशेषवत्त्वेनानैकान्तिकम्—उभयपक्षसम्प्रतिपत्त्या य एव क्षणो वर्तमानः स विशेषवान् भवत्येकश्चेत्यनेकान्तः। अन्ते विशेषदर्शनादिति च विशेषणानर्थक्यम्। अन्तार्थानभिधानात् कतमस्मिन्नन्ते विशेषदर्शनादिति च वक्तव्यम्।

## न्यायवार्त्तिकतात्पर्यटीका

व्याप्ये भाव एव व्यापकस्य नाभाव इति व्याप्ये पुनरन्ययोगव्यवच्छेदेन व्यापक एव भावो व्याप्यस्य नान्यत्रेति एवं कार्यकारणभावोऽप्युभयाधीननिरूपणोऽपि कारणे अयोगव्यवच्छेदेन निरूप्यते, कार्योत्पादस्य पुरस्ताद्भाव एव कारणस्य नाभाव इति। कार्ये पुनरयोगव्यवच्छेदेन, कारण एव सति भावो नान्यस्मिन्निति अनुभवानुसारान्निश्चीयते, तथैव हि लौकिकपरीक्षकाणां सम्प्रतिपत्तेः। न च कारणतैव सत्ता किं तु स्वरूपं नीलादेरनुभूतावसितम्, तद्धि तेनैव रूपेण स्वाभावव्यवच्छिन्नं तासु तास्वर्थक्रियासूपयुज्यते न पुनरर्थक्रियाकारितैव स्वरूपं मा भूदनेकार्थक्रियाकारिणोऽपर्यायेण रूपभेदः। तस्माद् यद्यस्ति सर्वज्ञस्ततः स्वरूपेणैव सन् भावः तज्ज्ञानस्याऽऽलम्बनप्रत्ययो भविष्यति। अथ तु नास्ति तथाऽपि तद्रूपो जनित्वा आपाततोऽकिञ्चित्करोऽपि पश्चात्कुतश्चिन्निमित्तादासाद्य सहकारिप्रत्ययान् तासु तास्वर्थक्रियासूपयोक्ष्यते। तत्सिद्धमेतत् क्षणिकस्यापि क्रमाक्रमाभ्यां यथायोगमर्थक्रियोपपत्तेर्व्यापकानुपलब्धेरसिद्धेः सन्दिग्धव्यतिरेकमनैकान्तिकं सत्त्वं शाक्यानां क्षणिकत्वे साध्ये भावानाम्। अस्माकं त्वन्यथासिद्धमसिद्धप्रभेद एवेति। न च जनकत्वाजनकत्वलक्षणविरुद्धधर्मसंसर्गो नानात्वे हेतुर्भवितुमर्हति। जनकत्वं नाम न वस्तुस्वभावोऽपि तु तद्धर्मः। धर्मश्च धर्मिणो वस्तुतो भिद्यते। न चान्यस्य भेदोऽन्यस्य भेदायालमतिप्रसङ्गात्। अन्यत्वाविशेषे कथं तस्यैव धर्म इति चेत्। अत्र वस्तुस्वभावैरेवोत्तरं वाच्यम्। यथाऽन्यत्वाविशेषेऽपि कार्यं धूमो हुतभुज एव न बीजस्येत्युक्तम्। न च कृतकत्वमपि क्षणिकत्वे हेतुरन्यथासिद्धेः सहेतुके विनाशे तदुपपत्तेश्च। न चोत्पत्तिविनाशयोस्तादात्म्यं भावस्यात्यन्ताभावप्रसङ्गादित्युक्तम्। तदिदमुक्तं वार्त्तिककृता—तेऽप्यसिद्धा अन्यथासिद्धा विरुद्धा वा भवन्तीत्यहेतव इति। अन्त्यक्षणविशेषदर्शनं पूर्वक्षणधर्मत्वेनासिद्धत्वादसिद्धम्। सत्त्वकृतकत्वे अन्यथासिद्धे, विरुद्धत्वं च सर्वस्यैव हेतोः क्षणिकत्वे साध्ये। तथा हि सत्त्वं कृतकत्वं वा त्रैलोक्यव्यावृत्ततयाऽननुगतं देशतः कालतो वा न साधनं तस्याशक्याविनाभावज्ञानतया लिङ्गभावाभावात्, अन्वयमुखेन व्यतिरेकमुखेण वा अविनाभावग्रहस्यैकस्मिन् क्षणेऽशक्यत्वात्। तस्माद् देशकालानुगतं सत्त्वं कृतकत्वमन्यद्वा हेतुकर्तव्यम्। तच्च विधिरूपं वा भवत्वन्यव्यावृत्तिरूपं वा नानाकालमेकमक्षणिकं क्षणिकत्वेन साध्येन विरुध्यत इत्युक्तं—विरुद्धा वेति। अन्ते विशेषदर्शनादित्यस्य तु विरुद्धत्वमनन्तरं वक्ष्यति। उपेत्य विशेषवत्त्वे सिद्धत्वमनैकान्तिकत्वमाह—उपेत्य वेति। हेतोरसिद्धत्वविरुद्धत्वे दर्शयितुमाह—अन्ते विशेषेति।

## न्यायवार्त्तिकम्

अथान्तो विनाशः, नैतस्मिन् विशेषदर्शनमस्ति। अथान्तिमं वस्त्वेवान्तशब्दवाच्यम्, एवं सत्येकस्मिन् विशेषदर्शनमिति विरुद्धो हेतुः।

योऽप्ययं हेतुर्दर्शनादर्शनादिति, अस्यार्थः—नीयमानस्य किल प्रदीपादेर्द्रव्यस्य देशान्तरे उत्पादो देशान्तरे निरोधः, तत्कृते दर्शनादर्शने स्तः। अतश्च—देवदत्तादेर्गच्छतो दर्शनादर्शनात् अतस्तस्यापि प्रतिक्षणमुत्पादविनाशाविति। नैतन्न्याय्यं देवदत्तादेर्दर्शनादर्शनयोरन्यनिमित्तत्वात्—(१)संयोगविभागकृते दर्शनादर्शने नोत्पादविनाशकृते, यस्मिन् देशे संयोगो विनष्टः तस्मिन् संयोगी न गृह्यते यस्मिन्नुत्पन्नस्तस्मिन् गृह्यत इति। (क)यद्योगाद्धि द्रव्ये इहबुद्धिर्भवति तद्भावाभावयोस्तद्वत्त्वादिति। अथ संयोगविभागौ न विद्येते? तस्यापि संयोगोऽर्थान्तरं भवतीति प्रतिपादितम्। एतेन विभागो व्याख्यातः। तदेवं संयोगविभागोत्पत्तेर्द्रव्यस्य दर्शनादर्शने भवतो नान्यथेति।

यत्पुनरेतत् प्रदीपस्य देशान्तर उत्पाद इति, एतदपि न बुध्यामहे। कथमिति? यत्तावद्भवतां पक्षे (२)वस्तूत्पन्नं यत्र तत्रैव तद् ध्वंसते यदुत्पित्सु तदनाहितसंस्कारमसत्त्वाद् देशान्तरे नोत्पत्तुमर्हतीति। अथानाहितसंस्कारस्यापि देशान्तरे उत्पादः? न किञ्चिद्वस्तु स्वभिन्नदेशमुत्पद्यते। अथ कारणं संस्कृतमिति? तदाधेयवशात् कार्यमपि तथाभूतमेवोत्पद्यत इति तुल्यं कार्येण—यथैव कार्ये संस्कार आधातुमशक्यः तथा कारणेऽपीति तुल्यम्। नित्यं भवतां

## न्यायवार्त्तिकतात्पर्यटीका

दर्शनादर्शनलक्षणस्य हेतोरन्यथासिद्धतेत्याह—योऽप्ययं हेतुरिति।

भावाभावयोस्तद्वत्त्वादिति। संयोगभावाभावयोरिह बुद्धे(ख)र्भाववत्त्वादित्यर्थः।

प्रदीपस्य देशान्तरे उत्पाद इति, एतदपि न बुध्यामह इति। क्षणिकस्य प्रदीपस्य यदि सन्तानमात्रप्रभवत्वं निबद्धं देशान्तरे कार्योत्पादकत्वं ततः सर्व एव प्रदीपक्षणा देशान्तरे प्रदीपमुत्पादयेयुः न केचन प्रघनोदर एवेति। अथोपसर्पणप्रत्ययवशात् प्रघनोदरादन्यत्रापि कार्यमुत्पादयन्ति? ननूपसर्पणप्रत्ययः प्रदीपे कंचिदुपकारमाधत्ते न वा? न तावदाधत्ते क्षणस्याभेद्यत्वेनोपकृतानुपकृतत्वासंभवात्; अनाधाने च सहकारिभावाभावात्। अनुपकारकस्य सहकारित्वेऽतिप्रसङ्गादिति भवतामेव गिरः। न च विशिष्टप्रदीपक्षणजननमेवोपकारः सहकारिणां तस्य पूर्वस्मादेवोपादानादुपपत्तेः सहकार्यनपेक्षणात्। न खलु तस्यैव तत्कारणस्याप्युपकारकाः सहकारिणो भवितुमर्हन्ति। एवं पूर्वेषामपि प्रदीपक्षणानां पूर्वपूर्वप्रदीपमात्रसामर्थ्यभुवा न सह-

---

(१) 'संयोगविनाशकृते'—इति क-ख-घतपाठान्तरम्। (२) 'वस्तूपपन्नं'—इति क-ख-घत-पाठान्तरम्।

(क) 'तद्योगात्' इति पाठः सम्भाव्यते। (ख) '-र्भावाभाववत्त्वात्' इति पाठः सम्भाव्यते।

## न्यायवार्त्तिकम्

पक्षे भिन्नदेशेन कार्येणोत्पत्तव्यमभिन्नदेशेन वा। एतेनैवातुल्यपातो व्याख्यातः। अतुल्यपाताव् क्षणिकत्वमिति न किलाऽऽकाशे पततो लोष्टादेः प्रतिबन्धकं किञ्चिदस्ति यदनुविधानेन लोष्टादिकं किञ्चिच्चिरेण पतति किञ्चिदाश्विति। तस्मात् क्षणिकत्वात् काश्चिदवस्थास्तादृश्य उत्पद्यन्ते यासां न भवत्यधःसन्तानोत्पत्तौ सामर्थ्यम्, पुनश्च तादृश्य उत्पद्यन्ते यासां भवतीति? एतदप्यन्यथा-सिद्धमेव, तुल्यानां गुरुत्ववतां द्रव्याणामेकस्य गुरुत्वप्रयत्नक्षेपाः कारणम्, एकस्य गुरुत्व-मात्रमेकस्य गुरुत्वप्रयत्नाविति। तदेवं कारणभेदानुविधायीनि गुरुत्ववन्ति द्रव्याणि चिराशु-पातानुविधानभाञ्जि भवन्तीत्यहेतुरतुल्यपातः। यदपीदम् इषोश्चापतनं भवेदिति, संस्कारै-कत्ववादिनो दोषः अयमपि संस्कारैकत्वानभ्युपगमेन प्रत्युक्तः। यथा चानेकः संस्कार इति तथोक्तं पाणिनिमित्तप्रश्लेषसूत्र (२।२।३६) इति। एकश्च संस्कारः यदा कदाचिन्निमित्तभेदात् पटूनि कर्माणि करोति कदाचिन्मन्दानीति गुरुत्ववद् द्रष्टव्यम्—यथैकं गुरुत्वं सहकारिसंयोगात् मन्दं पातं करोति तदेव प्रतिबन्धापगमे पटुं करोति। दृष्टो हि ग्राव्ण आकाशे मुक्तस्य पटुः पातो मन्दोऽपामिति तदेवमतुल्यपातोऽप्यहेतुः।

अथाक्षणिकत्वे किं प्रमाणम्? उक्तम्—आधाराधेयभावाद् एककालानुभाविनी कार्यकारणे (क)कुण्डे बदरवदिति। अतश्च—विप्रतिपन्ना अयुगपत्कालाः प्रत्यया एकविषयाः अभ्युत्थायितत्-प्रत्ययसामानाधिकरण्ये सति समानशब्दवाच्यत्वात् वर्तमानैकक्षणानेकपुरुषप्रत्ययवत्। यथा

## न्यायवार्त्तिकतात्पर्यटीका

कारिणा किंचिदाधीयत इति सर्व एवैकस्मिन् (ख)प्रधाने कार्यं कुर्युः देशान्तरे वा। यदि पुनरनुप-कारिणोऽपि कार्यानुविहितभावाभावतया क्षणिकेन प्रदीपेन कार्यक्रियां प्रत्यपेक्ष्यन्ते तदक्षणिकपक्षे-ऽपि तुल्यमिति संक्षेपः। विपञ्चितं चैतदस्माभिर्ब्रह्मतत्त्वसमीक्षान्यायकणिकाभ्यामित्युपरम्यते। न किलाऽऽकाशे पततो लोष्टादेरिति। लोष्टश्येनादेस्तुल्यगुरुत्ववतां द्रव्याणामेकस्य गुरुत्व-प्रयत्नक्षेपाः कारणम्। तथा हि सौधस्योपरिस्थेन पुरुषेण भूमौ चरन्तं पारावतमुद्दिश्य यदाऽधः श्येनः क्षिप्यते तदा श्येनस्य पारावतजिघृक्षाजनितः प्रयत्नो गुरुत्वं च क्षेपश्चाऽऽशुतरपतनहेतवः। अक्षिप्तस्य तु गुरुत्वप्रयत्नावाशुपतनहेतू, अप्रयतमानस्य गुरुत्वमात्रं पतनहेतुरिति। औलूक्यमतेऽपि न दोष इत्यत आह—एकश्च संस्कार इति।

अयुगपत्कालाः प्रत्यया एकविषया इत्युच्यमाने घटपटादिप्रत्ययाः प्रदीपादिप्रत्ययाश्च क्रमवन्त एकविषयाः प्रसज्येरन्नित्यत आह—विप्रतिपन्ना इति। समानशब्दवाच्यत्वादिति अनेकान्तः, भवन्ति हि समानशब्दवाच्याः प्रत्ययाः अक्षोऽक्ष इति। न च समानविषयाः—देवनादीनां तद्विषयाणां भेदादत आह—तत्प्रत्ययसामानाधिकरण्ये सतीति। तथाऽपि प्रदीपप्रत्ययै-

(क) 'कुण्डबदरम्' इति युक्तः पाठः। (ख) 'प्रधने' इति पाठः सम्भाव्यते। चक्रिन्द इत्यर्थः।

### न्यायभाष्यम्

अत्र कश्चित्परिहारमाह—

## ( सू० )—न पयसः (१)परिणामगुणान्तरप्रादुर्भावात् ॥१५॥

पयसः परिणामो न विनाश इत्येक आह। परिणामश्चावस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिरिति।

गुणान्तरप्रादुर्भाव इत्यपर आह। (२)सतो द्रव्यस्य पूर्वगुणनिवृत्तौ गुणान्तरमुत्पद्यत इति। स खल्वेकपक्षीभाव इव ॥ १५ ॥

### न्यायवार्त्तिकम्

वर्तमानक्षणविषयाणामनेकपुरुषप्रत्ययानामव्युत्थापितप्रत्ययसामानाधिकरण्ये सति समानशब्दवाच्यानामेकविषयत्वं तथा चाव्युत्थापितप्रत्ययसमानाधिकरणाः समानशब्दवाच्याश्च विप्रतिपन्ना युगपत्कालाः प्रत्ययास्तेऽप्येकविषया इति। प्रत्यात्मं नानेककर्तृकाः प्रत्यया अप्रतिसन्धानप्रसङ्गाद् देवदत्तादिप्रत्ययवदिति। रूपरसगन्धस्पर्शप्रत्यया एकानेकनिमित्ताः मयेति प्रतिसन्धानाद् कृतसमयानां बहूनां वर्तमानैकक्षणानेकविज्ञानवदिति। श्वस्तनाद्यतनविज्ञानान्येकसन्ततौ एकानेकनिमित्तानि मयेति प्रतिसन्धानात् पूर्ववत्। शास्त्रार्थप्रत्यया एकानेकनिमित्ताः प्रतिसन्धानाद् पूर्ववत्। नानाविषयाणां च नानाकर्तृकाणां च प्रत्ययानामप्रतिसन्धानादिति पूर्ववदेव न्याय इति ॥ १४ ॥

न पयसः परिणामगुणान्तरप्रादुर्भावात्। नैवं क्षीरं विनश्यति नापि दध्युत्पद्यते, अपि त्ववस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरमुत्पद्यत इत्येके वर्णयन्ति। अपरे त्ववस्थितस्य द्रव्यस्य गुणनिवृत्तौ गुणान्तरमुत्पद्यत इति। 'स खल्वयमेकपक्षीभाव इव' क

### न्यायवार्त्तिकतात्पर्यटीका

रेवानेकान्त इत्यत आह—अव्युत्थापीति। व्युत्थातुं भ्रमितुं शीलमस्येति व्युत्थापि भ्रान्तमिति यावत्। अभ्रान्तत्वं चास्य क्षणिकत्वसाधननिराकरणेन द्रष्टव्यम्। अव्युत्थापितप्रत्ययसामानाधिकरण्येनैव सिद्धे समानशब्दवाच्यत्वं प्रपञ्चः ॥ १४ ॥

न प—वात् (सू० १५) ॥ भाष्यम्—गुणान्तरप्रादुर्भाव इति। द्रव्यं तावत्तदेव गुणोऽपि सन् केवलमनुद्भूत आसीत्। एकश्चोद्भूतो गुणः तत्र च उद्भूतस्तिरोभवति। पूर्वगुणस्य निवृत्तौ तिरोभूतौ गुणान्तरमुत्पद्यते तद्वतीत्यर्थः ॥ १५ ॥

### वृत्तिः

सौगतमते साङ्ख्यो दूषणमनुसन्दधाति—( न पयसः परिणामगुणान्तरप्रादुर्भावात् )

न क्षीरस्य नाशो दध्नश्चोत्पत्तिः, किं तु क्षीरस्य परिणामः परिणामशब्दार्थौ

---

(१) 'परिणामः' इति टि०। (२) 'गुणान्तरप्रादुर्भावश्च सतो' इति अ-ब-भा०।

## न्यायभाष्यम्

अत्र तु प्रतिषेधः—

**( सू० )—व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् ॥ १६ ॥**

संमूर्छनलक्षणादवयवव्यूहाद् द्रव्यान्तरे दध्नि उत्पन्ने गृह्यमाणे पूर्वं पयोद्रव्यमवयवविभागेभ्यो निवृत्तमित्यनुमीयते, यथा मृदवयवानां व्यूहान्तराद् द्रव्यान्तरे स्थाल्यामुत्पन्नायां पूर्वं (१)मृत्पिण्डद्रव्यं मृदवयवविभागेभ्यो निवर्त्तते इति। (२)मृद्वच्चावयवान्वयः पयोदध्नोर्नाशेषनिरोधे निरन्वयो द्रव्यान्तरोत्पादो घटत इति ॥ १६ ॥

## न्यायवार्त्तिकम्

उपमानार्थः ? उभयत्र द्रव्यमवतिष्ठते, एकस्य तिरोभावाभिव्यक्ती एकस्य विनाशप्रादुर्भावावित्युपमानार्थः ॥ १९ ॥

उभयत्रोत्तरम्—

व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम्। शेषं भाष्ये। यत्पुनरेतत्—एकस्य तिरोभावाभिव्यक्ती एकस्य विनाशप्रादुर्भावाविति, तन्न, पूर्वावस्थापरित्यागात्। यदि विनाशोत्पादौ निवृत्तिप्रादुर्भावौ अथाप्यभिव्यक्त्यनभिव्यक्ती, सर्वथा पूर्वावस्थां जहाति द्रव्यमिति। न ह्यनपवृक्तस्य पूर्वावस्थातोऽभिव्यक्त्यनभिव्यक्ती भवतो विनाशप्रादुर्भावौ वेति। तस्मादयुक्तमवस्थितस्य परिणाम इति ॥ १६ ॥

## न्यायवार्त्तिकतात्पर्यटीका

व्यूहा—नम् ( सू० १६ ) ॥ अत्र तु प्रतिषेध इति। क्षीरावयवा एव हि क्षीरविनाशे सत्युत्पन्नपाकजा विलक्षणं द्रव्यमुत्पादयन्ति। यदि तु सर्वं कार्यं सदेव कारणव्यापारात् प्रागपि, व्यर्थः कारणव्यापारः अभिव्यक्तेरपि कार्यायाः सत्त्वात्। असत्त्वे वा यथा सैव न सती क्रियते एवं कार्यान्तराण्यपीति। विपञ्चितं चैतदस्माभिर्न्यायकणिकायाम् ॥ १६ ॥

## वृत्तिः

गुणान्तरप्रादुर्भावः। विद्यमानस्य क्षीरस्य पूर्वरसतिरोभावे अम्लरसात्मकगुणान्तरस्याऽऽविर्भावादित्यर्थः ॥ १५ ॥

एतन्निराकरोति सूत्रकारः—( व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् )

व्यूहान्तराद् रचनान्तराद् द्रव्यान्तरोत्पत्तिर्दृश्यते, तदेव च पूर्वद्रव्यनिवृत्त्यनुमितिं जनयति, मूर्तयोः समानदेशताविरोधादेकदा द्रव्यद्वयासमावेशात्। न पूर्वावयवसंयोगनाशो द्रव्यान्तरोत्पादश्चाऽनुभविक इति भावः ॥ १६ ॥

---

(१) 'मृत्पिण्डम्' इति वि०। (२) 'मृद्वद् वाऽवयवा-' इति ज०।

## न्यायभाष्यम्

अभ्यनुज्ञाय च निष्कारणं क्षीरविनाशं दध्युत्पादं च प्रतिषेध (१)उच्यते—

( सू० )—क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥ १७ ॥

क्षीरदधिवन्निष्कारणौ विनाशोत्पादौ स्फटिकव्यक्तीनामिति नायमेकान्त इति। कस्मात्? हेत्वभावात्। नात्र हेतुरस्ति अकारणौ विनाशोत्पादौ स्फटिकादिव्यक्तीनां क्षीरदधिवत्, (२) न पुन(३)र्यथा (४)विनाशकारणभावात् कुम्भस्य विनाश (५)उत्पत्तिकारणभावा(४*)च्चोत्पत्तिः(५*) एवं स्फटिकादिव्यक्तीनां विनाशोत्पत्तिकारणभावाद्विनाशोत्पत्तिभाव इति।

## न्यायवार्त्तिकम्

'अभ्यनुज्ञाय च निष्कारणं क्षीरविनाशं निष्कारणं च दध्युत्पादम्'।

क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः। क्षीरदधिवन्निष्कारणौ विनाशोत्पादौ स्फटिकव्यक्तीनाम्, न पुनः कुम्भादिवत् सकारणाविति नात्र हेतुरस्तीति। निरधिष्ठानं च दृष्टान्तवचनम्। कोऽधिष्ठानार्थः? आश्रयार्थः। किमुक्तं भवति निरधिष्ठानमिति? धर्मी नास्तीति यावदुक्तं भवति। न हि स्फटिकस्योत्पादविनाशौ प्रतिक्षणमुपलभ्येते यत इयं चिन्ता भवेत् किमेतौ सकारणावाहोस्विदकारणाविति, यथाऽनभ्युपगतशब्दतत्त्वं प्रति कश्चिद् ब्रूयात् कृतकत्वादनित्यः शब्दस्ताद्गेतदिति। धर्म्यसिद्धेश्च दृष्टान्ताभाव इति च समानम्।

अभ्यनुज्ञाय च स्फटिकस्योत्पादविनाशौ योऽत्र साधकस्तस्याभ्यनुज्ञानादप्रतिषेधः। उभावेतौ

## न्यायवार्त्तिकतात्पर्यटीका

क्वचित्--न्तः ( सू० १७ ) ॥ अभ्यनुज्ञाय च निष्कारणमिति। विनाशोत्पादवत्त्वात् समानधर्मात् संशयः। दधिक्षीरयोर्विनाशोत्पादावकारणौ दृष्टौ कुम्भस्य चोत्पादविनाशौ सकारणकौ। तदिह स्फटिके विनाशोत्पादौ सकारणौ निष्कारणौ वेति सन्देहः। तद् यदि सकारणावेवेति प्रमाणतो निश्चीयते ततो विनाशकारणानुपलब्धेः स्फटिकस्य कुम्भवद्विनाशो नास्तीति निश्चीयते। तदिदमुक्तं भाष्यकारेण—न पुनर्यथा (६)विनाशकारणभावादिति।

---

(१) 'उच्यते इति' इति ज-ग-ल-भा०। (२) 'न' इति टि-पु० नास्ति। (३) 'यथा' इति ज-पु० नास्ति। (४) 'विनाशकारणाभावात् कुम्भस्य विनाश उत्पत्तिकारणाभावात्' इति ज०। (५) 'उत्पत्तिकारणाभावाच्चानुत्पत्तिः' इति ग०। (६) 'विनाशकारणाभावादिति' इति क-ख०।

## न्यायभाष्यम्

निरधिष्ठानं च दृष्टान्तवचनम्। गृह्यमाणयोर्विनाशोत्पादयोः स्फटिकादिषु स्यादयमाश्रयवान् दृष्टान्तः क्षीरविनाशकारणानुपलब्धिवद्दध्युत्पत्तिवच्चेति, तौ तु न गृह्येते। तस्मान्निरधिष्ठानोऽयं दृष्टान्त इति।

अभ्यनुज्ञाय च स्फटिकस्योत्पादविनाशौ योऽत्र साधकस्तस्याभ्यनुज्ञानादप्रतिषेधः। कुम्भवन्न निष्कारणौ विनाशोत्पादौ स्फटिकादीनामित्यभ्यनुज्ञेयोऽयं दृष्टान्तः प्रतिषेद्धुमशक्यत्वात्। क्षीरदधिवत्तु निष्कारणौ विनाशोत्पादाविति शक्योऽयं प्रतिषेद्धुं कारणतो विनाशोत्पत्तिदर्शनात्। क्षीरदध्नोर्विनाशोत्पत्ती पश्यता तत्कारणमनुमेयं कार्यलिङ्गं हि कारणमिति॥ १७॥

## न्यायवार्त्तिकम्

दृष्टान्तौ क्षीरदधिवत् कुम्भादिवच्च। तत्र किं कुम्भादिदृष्टान्तो भवत्वथ क्षीरदधिनी इति। तत्र कुम्भादिवदिति युक्तम्, कुम्भाद्युत्पत्तिविनाशकारणस्य दृष्टत्वात्। क्षीरदधिवत्तु न युक्तम् अनुमानतो ग्रहणादिति सिद्धमनित्या बुद्धिरिति। इतश्चानित्या बुद्धिः गुणत्वे सति प्रत्यक्षतया व्यापकद्रव्यसमवायात् शब्दवत्, जातिमत्त्वे सति अस्मदादिप्रत्यक्षत्वादाश्रितत्वात् शब्दवत्, करणभावे सत्ययोगिप्रत्यक्षत्वात् शब्दवदेव॥ १७॥

( इति क्षणभङ्गप्रकरणम् )

## न्यायवार्त्तिकतात्पर्यटीका

निरधिष्ठानं चेति। धर्मिणमाश्रित्य तत्समानधर्मा दृष्टान्तो भवति। स्फटिकोत्पादविनाशौ च धर्मिणौ। तत्समानधर्मतया क्षीरदधिविनाशोत्पादयोर्दृष्टान्तत्वेन भवितव्यम्। न पुनः स्फटिकोत्पादविनाशौ धर्मिणौ गृह्येते। तस्मान्न तत्समानधर्मतया दृष्टान्तौ भवत इति। यदि तु द्रव्यसमवायादित्युच्येत ततस्तोयादिपरमाणुविसमवेतै रूपादिभिरनेकान्तः स्यादित्यत आह—व्यापकेति। तथाऽप्यात्मत्वसामान्येनानेकान्तोऽत आह—गुणत्वे सतीति। तथाऽप्यात्मपरिमाणेनानेकान्तोऽत आह—प्रत्यक्षतयेति। अस्मदादीनामिति शेषः। गुणत्वादिविशेषणयोगात् प्राग् व्यापकग्रहणस्योपयोगः। अस्मदादिप्रत्यक्षत्वादित्युच्यमाने सामान्यसमवायाभ्यामनेकान्तः स्यादत आह—जातिमत्त्वे सतीति। आश्रितत्वादित्यत्रापि जातिमत्त्वे सति प्रत्यक्षत्वे चेत्यनुषञ्जनीयम्। अनित्या बुद्धिः प्रत्यक्षत्वादित्युच्यमाने मनसा व्यभिचारोऽत आह—अयोगीति। तथाऽप्यात्मना व्यभिचारोऽत उक्तं—करणभावे सतीति। ह्यानादिबुद्धौ बुद्धिः करणं भवति। शब्दश्च प्रत्यये करणम्। अत्रापि जातिमत्त्वे सतीत्यनुषञ्जनीयम्, तेन न गन्धत्वादिभिरनेकान्तः॥ १७॥

## न्यायभाष्यम्

उपपन्नमनित्या बुद्धिरिति। इदं तु चिन्त्यते कस्येयं बुद्धिरात्मेन्द्रियमनोऽर्थानां गुण इति। (१) प्रसिद्धोऽपि खल्वयमर्थः परीक्षाशेषं प्रवर्त्तयामीति प्रक्रियते। सोऽयं बुद्धौ सन्निकर्षोत्पत्तेः संशयः विशेषस्याग्रहणादिति। तत्रायं विशेषः—

**(सू०)—नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात्॥ १८॥**

नेन्द्रियाणामर्थानां वा गुणो ज्ञानं तेषां (२) विनाशेऽपि ज्ञानस्य भावात्। भवति खल्विदमिन्द्रियेऽर्थे च विनष्टे ज्ञानम् अद्राक्षमिति। न च ज्ञातरि विनष्टे ज्ञानं भवितुमर्हति। अन्यत् खलु (३) वै तदिन्द्रियार्थसन्निकर्षजं ज्ञानं यदिन्द्रियार्थविनाशे न

## न्यायवार्त्तिकम्

सा त्वियं बुद्धिः कस्य गुण इत्येतच्चिन्त्यते। न गुणभावासिद्धेः। अनित्यत्वे सत्यचाक्षुषप्रत्यक्षत्वाद्‌ गुणभावः। सन्निकर्षोत्पत्तेः संशय इति। तत्रायं विशेषः—

नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात्। भवति खल्विन्द्रियेऽर्थे च विनष्टे ज्ञानमद्राक्षमिति। अद्राक्षमित्येतन्न इन्द्रियार्थसन्निकर्षात् स्मृतित्वात्—स्मृतिरेषा नेन्द्रियार्थसन्निकर्षाद्भवितुमर्हति? स्मृतावपि तुल्यं—यथैव ज्ञातारमन्तरेण ज्ञानं न भवत्येवमनुभवितरि

## न्यायवार्त्तिकतात्पर्यटीका

चिन्तान्तरमवतारयति—इदं तु चिन्त्यत इति। नन्वात्मपरीक्षायामात्मगुणत्वं बुद्धेर्व्यवस्थापितं तत्कस्मात्पुनः परीक्ष्यत इत्यत आह भाष्यकारः—प्रसिद्धोऽपीति। यद्यप्ययमर्थः परीक्षितस्तथाऽप्यवान्तरविशेषपरिज्ञानार्थं पुनः परीक्ष्यत इत्यर्थः। चोदयति वार्त्तिककारः—न गुणेति। परिहरति—अनित्यत्वे सतीति। विमृष्य सिद्धान्तीयपक्षं गृह्णाति—सन्निकर्षोत्पत्तेरिति।

नेन्द्रि—नात् (सू० १८)॥ चोदयति—अद्राक्षमित्येतन्नेति। परिहरति—स्मृतावपीति॥ १८॥

## वृत्तिः

दोषान्तराभिधानाय सिद्धान्तिनः सूत्रम्—( क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः )

क्षीरदधिदृष्टान्तेन विनाशोत्पादावकारणकावेवेति न युक्तं घटादौ सकारणकत्वोपलब्धेर्व्यभिचारात्। वस्तुतः क्षीरविनाशेऽम्लद्रव्यसंयोगस्य हेतुत्वादम्लरसवत्परमाणुभिश्च दध्न आरम्भान्नाकारणकौ क्षीरविनाशदध्युत्पादाविति॥ १७॥

समाप्तं क्षणभङ्गप्रकरणम्॥ २॥

---

(१) 'प्रसिद्धोऽपि च' इति ज०। (२) 'विनाशे ज्ञानस्य' इति ल-ग-ज-झा०। (३) 'चैतद्' ज०।

### न्यायभाष्यम्

भवति। इदमन्यद्(१)आत्ममनःसन्निकर्षजम्, तस्य युक्तो भाव इति। स्मृतिः खल्वियमद्राक्षमिति पूर्वदृष्टविषया। न च विज्ञातरि नष्टे पूर्वोपलब्धेः स्मरणं युक्तम्, न चान्यदृष्टमन्यः स्मरति। न च मनसि ज्ञातर्यभ्युपगम्यमाने शक्यमिन्द्रियार्थयोर्ज्ञातृत्वं प्रतिपादयितुम् ॥ १८ ॥

अस्तु तर्हि मनोगुणो ज्ञानम्—

## ( सू० )—युगपज् ज्ञेयानुपलब्धेश्च न मनसः ॥ १९ ॥

युगपज्ज्ञेयानुपलब्धिरन्तःकरणस्य लिङ्गम्, तत्र युगपज्ज्ञेयानुपलब्ध्या यद् अनुमीयते अन्तःकरणम्, न तस्य गुणो ज्ञानम्। कस्य तर्हि? ज्ञस्य वशित्वात्।

### न्यायवार्त्तिकम्

नष्टे अनुभवितारमन्तरेण स्मृतिरयुक्तेति ॥ १८ ॥

अस्तु तर्हि मनोगुणो ज्ञानम्—

युगपज्ज्ञेयानुपलब्धेर्न मनसः। तत् खलु युगपज्ज्ञेयानुपलब्ध्या समधिगतं मनः, नातस्तस्य गुणो ज्ञानम्। विशेषणोपादानादन्तःकरणबहुत्वप्रसङ्ग इति चेत्—अथ मन्यसे यत् खलु युगपज्ज्ञेयानुपलब्ध्या समधिगतं मनो न तस्य गुणो ज्ञानमित्येवं ब्रुवाणेन बहून्यन्तःकरणानि प्रतिपन्नानि भवन्ति, न ह्यसत्यन्तःकरणबहुत्वे विशेषणमर्थवदिति? न, सर्वस्येन्द्रियस्य मनननिमित्तत्वात्—सर्वमिन्द्रियं मनननिमित्तत्वान्मन इत्युच्यते। एवं च सति विशेषणं युक्तम्,

### न्यायवार्त्तिकतात्पर्यटीका

देशयति—अस्तु तर्हीति।

युग—सः (सू० १९) ॥ परिहरति—युगपदिति। यत् करणत्वेनानुमितं तत् करणत्वमपोह्य न कर्तृ भवितुमर्हतीत्यर्थः। युगपज्ज्ञेयानुपलब्ध्या (क) यत्समधिगतमिति भाष्यमाक्षिपति—विशेषणोपादानादिति। समाधत्ते—न सर्वस्येति। पुनराक्षिपति—

### वृत्तिः

बुद्धेरात्मगुणत्वं यद्यप्यात्मपरीक्षात एव सिद्धप्रायं तथाऽपि विशिष्य व्युत्पादनाय बुद्ध्यात्मगुणत्वप्रकरणम्। तत्र चेन्द्रियार्थसन्निकर्षाधीनत्वादिन्द्रियादिनिष्ठत्वमेवास्तु भेर्याकाशसंयोगाधीनशब्दस्याऽऽकाशनिष्ठत्ववदिति पूर्वपक्षे सिद्धान्तसूत्रम्—

( नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् )

बुद्धिर्नेन्द्रियस्य न वाऽर्थस्य गुणस्तन्नाशेऽपि ज्ञानस्य स्मरणस्य अवस्थानात् उत्पत्तेः। न ह्यनुभवितुरभावे स्मरणमुपपद्यतेऽतिप्रसङ्गादिति भावः ॥ १८ ॥

---

(१) 'आत्ममनःसन्निकर्षे आत्ममनसोः सन्निकर्षजम्' इति वि०।

(क) अत्र टीकाकृता वार्त्तिकाक्षरसंवादी ईदृश एव भाष्यपाठः क्वचिदधिगतः अर्थमात्रं वा तस्य गृहीतमिति सुधीभिरनुसन्धेयम्।

## न्यायभाष्यम्

वशी ज्ञाता वश्यं करणम्, ज्ञानगुणत्वे (१)च करणभावनिवृत्तिः। घ्राणादिसाधनस्य च ज्ञातुर्गन्धादिज्ञानभावादनुमीयते अन्तःकरणसाधनस्य सुखादिज्ञानं स्मृतिश्चेति। तत्र (२) यज् ज्ञानगुणं मनः स आत्मा, यत्तु सुखाद्युपलब्धिसाधनमन्तःकरणं मनस्तदिति संज्ञाभेदमात्रं नार्थभेद इति।

## न्यायवार्त्तिकम्

युगपज्ज्ञेयानुपलब्ध्या यत् समधिगतं मनो न तस्य गुणो ज्ञानमिति। एवमपि विशेषणं व्यर्थम् अन्यस्यानभ्युपगमात्—यदि तस्यान्तःकरणस्य न भवत्यन्यस्य तर्हि साधनस्य ज्ञानं गुण इति प्राप्तम् अन्यस्यानभ्युपगमात्? अन्यस्योपपत्तेरप्रतिषेधः—अनवस्थितत्वात् प्रमाणप्रमेयभावस्य, यदाऽयं योगी पुरुषान्तरेण पुरुषान्तरं परिच्छिनत्ति तदा पुरुषान्तरपरिच्छेदे पुरुषान्तरं साधनमिति(क) तत्त्वज्ञानगुणं भवतीति युक्तं विशेषणमिति। तस्मान्न तस्य गुणो ज्ञानमिति। 'कस्य तर्हि? ज्ञस्य वशित्वात्—वशी ज्ञाता वश्यं करण'मिति।

## न्यायवार्त्तिकतात्पर्यटीका

एवमपीति। विशिष्टस्य करणस्य ज्ञानगुणत्वनिषेधः करणान्तरस्य ज्ञानगुणत्वमापादयति, न चाऽऽत्मा करणमित्यर्थः। समाधत्ते—अन्यस्योपपत्तेरिति। एतदेव विवृणोति—अनवस्थितत्वादिति। प्रमातैव कदाचित्प्रमाणं कदाचित्प्रमेयमित्यर्थः। पुरुषान्तरेण पुरुषान्तरं परिच्छिनत्तीति। यादृशोऽयं पुरुषस्तादृशोऽयमपीति पुरुषान्तरेण प्रसिद्धेन पुरुषान्तरपरिच्छेद इति। पृच्छति—यदि न करणस्य कस्य तर्हीति। उत्तरम्—ज्ञस्य वशित्वात्, कर्तुः स्वातन्त्र्यादित्यर्थः कर्तृकरणादिसमवधाने हि चैतन्यं कर्त्तर्येव दृष्टं न करणादौ यथा मृद्दण्ड-चक्र-सलिल-सूत्र-कुलालसमवधाने कर्तुरेव कुलालस्य न तु मृदादीनामिति। वशी ज्ञाता वश्यं करणमिति भाष्यम्। तदनुपपन्नं ज्ञातुरपि क्वचिद्वश्यत्वदर्शनात्, यथा देवदत्तं कटं कारयति यज्ञदत्त इत्यत आह—

## वृत्तिः

मनोगुणत्वं निरस्यति—( युगपज्ज्ञेयानुपलब्धेश्च न मनसः )

युगपज् ज्ञेयानुपलब्धेर्हेतोः सिद्धस्य मनसो न कर्तृत्वं धर्मिग्राहकमानेन करणत्वेनैव सिद्धेः। वस्तुतो युगपज् ज्ञेयानुपलब्धेरित्यनेन मनसोऽणुत्वं सूचितम्। तथा च तद्गतसुखाद्यप्रत्यक्षता स्यात्। एवं कायव्यूहे तत्तद्देहावच्छेदेन ज्ञानादिकं न स्यादिति ॥ १९ ॥

---

(१) 'वा करण-' ल-ग-भा०।

(२) 'यत्तु' इति वि०।

(क) 'तत्तु ज्ञानगुणम्' इति सम्यक् सम्भाव्यते।

## न्यायभाष्यम्

(१)युगपज्ज्ञेयोपलब्धेश्च (२) योगिन इति वा चार्थः(२*)। योगी खलु ऋद्धौ प्रादुर्भूतायां विकरणधर्मा निर्माय सेन्द्रियाणि शरीरान्तराणि (३) तेषु युगपज् ज्ञेयान्युपलभते। तच्चैतद् विभौ ज्ञातर्युपपद्यते नाणौ मनसीति। विभुत्वे वा मनसो ज्ञानस्य नाऽऽत्मगुणत्वप्रतिषेधः। विभु च मनस्तदन्तःकरणभूतमिति तस्य सर्वेन्द्रियैर्युगपत् संयोगाद् युगपज् ज्ञानान्युत्पद्येरन्निति ॥ १९ ॥

## ( सू० )—तदात्मगुणत्वेऽपि तुल्यम् ॥ २० ॥

विभुरात्मा सर्वेन्द्रियैः संयुक्त इति युगपज् ज्ञानोत्पत्तिप्रसङ्ग इति ॥ २० ॥

## न्यायवार्त्तिकम्

न चायं ज्ञातरि नियमो ज्ञाता वश्येव वश्योऽपि भवतीति। अचेतने तु नियमः—अचेतनं तु सर्वं वश्यमिति। वश्यं मनोऽचेतनत्वात् घ्राणादिवदिति। ज्ञानगुणत्वे वा सञ्ज्ञाभेदमात्रम्—चित्तं चान्तःकरणं ज्ञानगुणं चेति संज्ञामात्रं भिद्यते। यथा च ज्ञातुर्ज्ञानसाधनमिन्द्रियमेवं मन्तुर्मतिसाधनेनावश्यं भवितव्यमिति। उभयोश्चेतनत्वे प्रत्ययव्यवस्थानुमानं न स्यात्। विभु चान्तःकरणं ज्ञानगुणमिति सर्वेन्द्रियैर्युगपदुपलब्धिप्रसङ्गः ॥ १९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

न चायं ज्ञातरीति। यदि तु कश्चिज् ज्ञानगुणं मन इच्छेत्, तं प्रति भाष्यं—ज्ञानगुणत्वे चेति। घ्राणादिसाधनस्येति भाष्यं व्याचष्टे—यथा च ज्ञातुरिति। तथा च मन्तुर्मतिसाधनं यत् तन्मनः करणम्। अथ तदपि कस्माच्चेतनं न भवतीत्यत आह—उभयोरिति। विभु चान्तःकरणं (४)ज्ञानगुणम् अन्तःकरणान्तररहितमिति शेषः। (क) विकरणधर्मेति भाष्यम्। विशिष्टं करणं धर्मो यस्य स विकरणधर्मा अस्मदादिकरणविलक्षणकरणः येन व्यवहितविप्रकृष्ट(५)सूक्ष्मादिवेदी भवतीत्यर्थः ॥ १९ ॥

## वृत्तिः

शङ्कते—( तदात्मगुणत्वेऽपि तुल्यम् )

तस्या बुद्धेरात्मगुणत्वेऽपि ज्ञानयौगपद्यं तुल्यम्, आत्मनः सर्वेन्द्रियसंयोगात्। तथा च स दोषस्तदवस्थ एवेति कथं तया युक्त्या मनःसिद्धिरिति भावः ॥ २० ॥

---

(१) 'युगपज्ज्ञेयानुपलब्धेश्च' इति ख-ग-ज०। फ-पुस्तकपाठो गृहीतः। (२) 'अयोगिन इति चार्थः'—इति ज०। (३) 'तेषु तेषु' इति ज०। 'तेषु तेषु च' इति वि०। (४) 'ज्ञानमन्तःकर-'—इति क-ख०। (५) 'सूक्ष्मादिदर्शी' इति ख०।

(क) "विकरणधर्मेति भाष्येऽपीति" इति ख-पुस्तकपाठः। इतः प्रभृति 'भवतीत्यर्थः' इत्यन्तो ग्रन्थः क-ख-तात्पर्यपुस्तकयोः "न प्रसङ्गः" इत्येकविंशसूत्रीयतात्पर्यटीकाप्रतीकात् उत्तरं मुद्रितः इति।

**(सू०)—इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः ॥२१॥**

### न्यायभाष्यम्

गन्धाद्युपलब्धेरिन्द्रियार्थसन्निकर्षवदिन्द्रियमनःसन्निकर्षोऽपि कारणम्, तस्य चायौगपद्यमणुत्वान्मनसः। अयौगपद्यादनुत्पत्तिर्युगपज् ज्ञानानामात्मगुणत्वेऽपीति ॥ २१ ॥

यदि पुनरात्मेन्द्रियार्थसन्निकर्षमात्राद् गन्धादिज्ञानम् (१) उत्पद्येत ?

**(सू०)—नोत्पत्तिकारणानपदेशात् ॥ २२ ॥**

आत्मेन्द्रियसन्निकर्षमात्राद् गन्धादिज्ञानमुत्पद्यते (२) इति, नात्रोत्पत्तिकारणमपदिश्यते येनैतत्प्रतिपद्येमहीति ॥ २२ ॥

### न्यायवार्त्तिकम्

तदात्मगुणत्वेऽपि तुल्यम्। यस्याऽऽत्मा विभुश्च ज्ञानगुणश्च तस्यापि सर्वेन्द्रियैः सम्बन्धस्याप्रतिषेधाद् युगपदुपलब्धिप्रसङ्गः ॥ २० ॥

इन्द्रियैर्मनसः सन्निकर्षाभावात् तदनुत्पत्तिः। न प्रसङ्गः कारणान्तरभावात्—इन्द्रियार्थसन्निकर्षवदिन्द्रियमनःसन्निकर्षोऽपि कारणमिति। तस्यायौगपद्यमणुत्वान्मनस इति ॥२१॥

यदि पुनरात्मेन्द्रियार्थसन्निकर्षादेव ज्ञानमुत्पद्येत किं स्यात्—

नोत्पत्तिकारणानपदेशात्। अस्मादेवोत्पद्यतामिति न कारणमपदिश्यत इति सूत्रार्थः। आत्मेन्द्रियार्थसन्निकर्षात् (क) ज्ञानमुत्पद्यत इति। अयुगपदुत्पत्तौ वा न कारणान्तरमपदिश्यत

### न्यायवार्त्तिकतात्पर्यटीका

अथ मनोऽन्तःकरणमपश्यंश्चोदयति—तदात्मगुणत्वेऽपीति।

तदा—ल्यम् ( सू० २० ) ॥ (ख)

इन्द्रि—त्तिः ( सू० २१ ) ॥ परिहरति—न प्रसङ्ग इति ॥ २१ ॥

यदि पुनरित्यादि भाष्यं पूरयित्वा व्याचष्टे—यदि पुनरिति।

नोत्प—शात् ( सू० २२ ) ॥ नोत्पत्तीति। नात्र (ग) प्रमाणमपदिश्यते प्रत्युत बाधकं प्रमाणमस्तीत्यर्थः। व्याख्यानान्तरमाह—अयुगपदुत्पत्तौ वेति। व्याख्यानान्तर-

### वृत्तिः

उत्तरयति—( इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः )

युगपन्नानेन्द्रियैः सह मनसः सन्निकर्षाभावान्न युगपन्नानाविषयोपलब्धिरिति भावः ॥ २१ ॥

---

(१) 'उत्पद्यते' इति ख-ग-ज-भा०। (२) 'इति' इति ख-ग-ज-पुस्तकेषु नास्ति।

(क) भाष्ये 'गन्धादिज्ञान'मिति विशेषः। (ख) २०श-सूत्रे अवतरणिकातिरिक्ता टीका नास्ति।

(ग) तथाच सूत्रे भाष्ये च उत्पत्तिकारणमित्यनेन प्रमाणं विवक्षितमिति भावः। ईदृशव्याख्यायामस्वरस एव वार्त्तिककृतां कल्पान्तरारम्भे बीजमिति ध्येयम्।

## (सू०)—विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥२३॥

### न्यायभाष्यम्

'तदात्मगुणत्वेऽपि तुल्य'मित्येतदनेन समुच्चीयते। द्विविधो हि गुणनाशहेतुः, गुणानामाश्रयाभावो विरोधी च गुणः। नित्यत्वादात्मनोऽनुपपन्नः पूर्वः, विरोधी च बुद्धेर्गुणो न गृह्यते—तस्मादात्मगुणत्वे सति बुद्धेर्नित्यत्वप्रसङ्गः ॥ २३ ॥

### न्यायवार्त्तिकम्

इति; विदेहप्रत्ययानुत्पत्तौ वा। यदेन्द्रियमर्थेन बहिरवस्थितेन सम्बध्यते आत्मसम्बन्धोऽपि (१)तत्रास्तीति कस्माद्विदेहप्रत्ययो न भवतीति वक्तव्यम्। अन्तःकरणप्रत्याख्याने च केवलमात्मा स्मृत्यादिकारणमिति कस्माच्च युगपदुत्पत्तिः स्मृतीनाम्। यदा चेन्द्रियमात्मा चार्थेन (क)युगपत्सम्बद्धौ तदा किमिन्द्रियार्थसन्निकर्षः कारणम् उत आत्मार्थसन्निकर्षः उताऽऽत्मेन्द्रियार्थसन्निकर्ष इति कारणानपदेशः ॥ २२ ॥

विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः। 'तदात्मगुणत्वेऽपि तुल्यम् इत्येतदनेन समुच्चीयते'। यद्यात्मगुणो बुद्धिर्भवति विनाशकारणाभावान्नित्यत्वमस्याः प्रसज्येत। कथमिति? गुणानां द्वौ विनाशहेतू आश्रयाभावो विरोधिगुणप्रादुर्भावश्च। तत्र नित्यत्वादात्मनोऽनुपपन्नः पूर्वः, विरोधी च गुणो नास्तीति नित्यत्वप्रसङ्गः ॥ २३ ॥

### न्यायवार्त्तिकतात्पर्यटीका

माह—विदेहेति। शरीरवृत्तित्वे हि मनसः सर्वं ज्ञानं शरीरायतनस्याऽऽत्मनो भवेत्। यदा तु मन एव नास्ति तदेन्द्रियार्थसन्निकर्षस्याऽऽत्मनश्च शरीराद्बहिरपि भावाद् विदेहप्रत्ययोत्पादप्रसङ्ग इति। अन्तःकरणप्रत्याख्याने चेति। यद्यपि सर्वाण्यपि ज्ञानानि न युगपदुपजायन्ते तथाऽपि स्मृतीनामवश्यं युगपदुत्पादप्रसङ्ग इति पूर्वस्मादस्य विशेषः। व्याख्यानान्तरमाह—यदा चेन्द्रियमात्मा चार्थेन युगपत्सम्बद्धाविति। असति इन्द्रियमनःसन्निकर्षे व्यभिचारिणां कारणत्वकल्पनायां विनिगमनाहेतोरभावादिति भावः ॥ २२ ॥

विना—ङ्गः-(सू० २३) ॥ अत्र पूर्वपक्षसूत्रे चकारः पूर्वपूर्वपक्षसूत्रापेक्षयेत्याह—तदात्मगुणत्व इति। अतः परस्य निगद एव व्याख्यानम् ॥ २३ ॥

### वृत्तिः

आक्षिपति—( नोत्पत्तिकारणानपदेशात् )

बुद्ध्युत्पत्तौ कारणस्यानपदेशात् अकथनात् नाऽऽत्मगुणो बुद्धिः, आत्ममनःसंयोगस्य कारणत्वे ज्ञानस्य सार्वदिकत्वप्रसङ्ग इति भावः ॥ २२ ॥

(१) 'तत्रास्तीति' इति क-ख-धृतपाठान्तरम्।
(क) अत्र नपुंसकत्वाभावः प्रयत्नेनोपपादनीयः।

## (सू०)—अनित्यत्वग्रहाद् बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ॥२४॥

### न्यायभाष्यम्

अनित्या बुद्धिरिति सर्वशरीरिणां प्रत्यात्मवेदनीयमेतत्। गृह्यते च बुद्धिसन्तानः तत्र बुद्धेर्बुद्ध्यन्तरं विरोधी गुण इत्यनुमीयते यथा शब्दसन्ताने शब्दः शब्दान्तरविरोधीति ॥ २४ ॥

### न्यायवार्त्तिकम्

अनित्यत्वग्रहणाद् बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत्। अनित्या बुद्धिरित्येतत् प्रतिपादितम्। तत्रास्या बुद्ध्यन्तराद्वा संस्काराद्वा विनाश इति प्रतिपत्तव्यम्। न द्वे सहेति चेत्—अथ मन्यसे न द्वे बुद्धी सह भवतो यतः परया पूर्वा निवर्त्यते? तच्च न, युगपदुत्पत्तिनिषेधात्—युगपदुत्पत्तिः प्रतिषिध्यते न सहभावः। न हि बुद्ध्योर्युगपद्भावे किञ्चिद्विरुध्यत इति। लब्धात्मकेन च कार्येण कारणविनाशाभ्युपगमात्—यदा च कार्यं लब्धात्मकं भवति तदा कारणं विनाशयति; शब्दवत्—यथा लब्धात्मकः कार्यः शब्दः कारणं शब्दं निर्मार्ष्टि तथा बुद्धिरपीति। अन्त्ययोर्न स्यादिति चेत्—अथ मन्यसे यदि पूर्वौ बुद्धिशब्दौ पराभ्यां विनाश्येते अन्त्ययोर्बुद्धिशब्दयोः (१) कथं विनाशकारणमिति, यथा चान्त्यौ बुद्धिशब्दौ विना निमित्ताद्विनश्यतः एवमन्यदपि कार्यमिति? न स्पर्शवद्द्रव्यसंयोगात् (२)न तदुत्पत्तिः स्पर्शवद्द्रव्यसंयोगेनान्त्यशब्दो विरुध्यते। ये कुड्यादिभिः कारणस्य संयोगास्त एकार्थसमवायिनं शब्दं प्रतिबध्नन्ति, अतोऽत्यन्तमश्रुतिः शब्दस्येति। अन्त्या बुद्धिस्थितिहेत्वभावाद्विनश्यतीति कालाद्वा संस्काराद्वा। कथं

### न्यायवार्त्तिकतात्पर्यटीका

यदनन्तरमपवृज्यते पुरुषः सा अन्त्या बुद्धिः स्थितिहेत्वभावाद्विनश्यतीति। स्थितिहेतू धर्माधर्मौ तयोरभावादिति। अथ तयोरभावः कस्मादित्यत आह—कालात्। अन्त्यसुखदुःखोपभोगकालं प्राप्येत्यर्थः। अथ वा स्वजनितात् संस्कारादेवान्त्याया बुद्धेर्विनाश इत्याह—संस्काराद्वा। संस्कारस्य तु स्थितिहेत्वदृष्टाभावाद्विनाशो भवतीति भावः। पृच्छति—

### वृत्तिः

बुद्धेरात्मगुणत्वे दोषमप्याह—( विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः )

बुद्धेरात्मन्यवस्थाने विनाशकारणस्य आश्रयनाशादेरनुपलब्धेः तस्या बुद्धेर्नित्यत्वप्रसङ्गः ॥ २३ ॥

उत्तरयति—( अनित्यत्वग्रहणाद् बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् )

बुद्धेरनित्यत्वस्य ग्रहणाद् उत्पादनाशयोरानुभविकत्वात् तत्कारणे कल्पनीये आत्ममनोयोगादेरुत्पादकत्वमनन्तरोत्पन्नबुद्धेः संस्कारादेर्वा नाशकत्वं कल्प्यते, चरमबुद्धेस्तु अदृष्टनाशात् कालाद्वा नाशः। बुद्धेर्बुद्ध्यन्तरनाश्यत्वेऽनुरूपं दृष्टान्तमाह—शब्दवदिति। शब्दस्य यथा शब्दान्तरान्नाशश्चरमशब्दस्य निमित्तनाशनाश्यत्वं तथा प्रकृतेऽपीति भावः ॥ २४ ॥

---

(१) 'किम्' इति क-ख-वार्त्तिकपुस्तकपाठान्तरम्। (२) 'तदनुपपत्तेः' इति क-खपुस्तकपाठान्तरम्।

## न्यायभाष्यम्

असङ्ख्येयेषु ज्ञानकारितेषु संस्कारेषु स्मृतिहेतुष्वात्मसमवेतेष्वात्ममनसोश्च सन्निकर्षे समाने स्मृतिहेतौ सति न कारणस्यायौगपद्यमस्तीति युगपत्स्मृतयः प्रादुर्भवेयुः यदि बुद्धिरात्मगुणः स्यादिति। तत्र कश्चित् सन्निकर्षस्यायौगपद्यमुपपादयिष्यन्नाह—

## (सू०)—ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥ २५ ॥

ज्ञानसाधनः संस्कारो ज्ञानमित्युच्यते ज्ञानसंस्कृतैरात्मप्रदेशैः पर्यायेण मनः सन्निकृष्यते। आत्ममनःसन्निकर्षात् स्मृतयोऽपि पर्यायेण भवन्तीति ॥ २५ ॥

## न्यायवार्त्तिकम्

कालात् ? (१)यावन्त्यस्य जन्मनः स्थितिहेतू धर्माधर्मौ तयोरभावादन्त्या बुद्धिर्विनश्यतीति। कस्मात् पुनरेवमुच्यते न पुनरहेतुको विनाशोऽभ्युपगम्यत इति ? नाभ्युपगम्यते उक्तदोषात्—निर्हेतुके विनाशे उक्तो दोषः क्षणभङ्गं निराकुर्वद्भिरिति। यदि कारणस्यायौगपद्याद् बुद्धीनामयुगपदुत्पत्तिः यत्र कारणस्य यौगपद्यमस्ति तत्र युगपदुत्पत्तिप्रसङ्गो यथा स्मृतिषु। अत्र तावदेकः परिहारः करणस्यैकक्रियानिर्वृत्तौ सामर्थ्यात्—न हि करणमेकस्मिन् कालेऽनेकां क्रियां निर्वर्तयितुं शक्तमिति। परिच्छेदत्वाच्च स्मृतीनां (क)ज्ञानवदयुगपदुत्पत्तिरिति ॥ २४ ॥

ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः। अपरे तु कारणस्यायौगपद्यमुपपादयिष्यन्तः 'ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्ति'रित्याहुः ॥ २५ ॥

## न्यायवार्त्तिकतात्पर्यटीका

कथं कालात्। उत्तरम्—(२) यावन्त्यस्य जन्मन इति, चरमस्य देहस्येत्यर्थः। देशयति—यदि कारणस्येति। अत्र तावदेकः परिहार इति। 'एकः' प्रधानः 'परिहारः', परिहारान्तरं त्वेकदेशिमतेनाप्रधानमित्यर्थः। अपि च न स्मृतयो युगपदुत्पद्यन्ते परिच्छेदत्वाद् गन्ध-रस-रूप-स्पर्श-शब्दज्ञानवदित्याह—परिच्छेदत्वाच्चेति ॥ २४ ॥

ज्ञान—त्तिः ( सू० २५ ) ॥　एकदेशिपरिहारमाह—अपरे त्विति ॥ २५ ॥

(१) 'यावस्य' इति क०। (२) 'यावत्तस्य' इति क०।

(क) अत्र 'ज्ञानवद् युगपदुत्पत्तिः' इति क-ख-वार्त्तिकमुद्रणं प्रामादिकम्। व्यक्तमेतत् टीकायाम्।

## (सू०)—नान्तःशरीरवृत्तित्वान्मनसः ॥ २६ ॥

### न्यायभाष्यम्

सदेहस्याऽऽत्मनो मनसा संयोगो विपच्यमानकर्माशयसहितो जीवनमिष्यते। तत्रास्य प्राक् (१)प्रायणादन्तःशरीरे वर्तमानस्य मनसः शरीराद् बहिर्ज्ञानसंस्कृतैरात्मप्रदेशैः संयोगो नोपपद्यत इति ॥ २६ ॥

### न्यायवार्त्तिकम्

एतत्तु न सम्यगिति प्रतिपादयितुमाह—

नान्तःशरीरवृत्तित्वान्मनसः। अन्तःशरीरे मनो वर्तते इति को वृत्त्यर्थः? न तावदाश्रयाश्रितभावः, न हि मनः क्वचिदाश्रितम्। नापि वृत्तिः स्वकार्यसामर्थ्यं बहिःकार्यदर्शनात्—मनसाऽधिष्ठितं चक्षुर्निःसृत्य (२) रूपादि ग्राहयति (क)चक्षुषोर्विसरावोर्मनसः कार्यं

### न्यायवार्त्तिकतात्पर्यटीका

दूषयति—एतत्तु न सम्यगिति।

नान्तः—सः ( सू० २६ )॥ न हि मनः क्वचिदाश्रितमिति। न क्वचित्समवेतम्, संयोगमात्रं त्वतिप्रसक्तमित्यर्थः। नापि वृत्तिः स्वकार्यसामर्थ्यमिति। शरीर एव मनः

### वृत्तिः

ननु बुद्धेरात्मगुणत्वे संस्कारात्ममनोयोगयोः सत्त्वात् स्मृतीनां यौगपद्यं स्यात्? अत्रैकदेशिनः परिहारमाशङ्कते—( ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः )

ज्ञानं संस्कारकारणं समवेतं यदवच्छेदेन, तदवच्छेदेन मनःसन्निकर्षस्य स्मृत्युत्पादकत्वात्तस्य च क्रमिकत्वान्न स्मृतियौगपद्यमित्यर्थः। ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानपदं संस्कारपरमित्यन्ये ॥ २५ ॥

तन्मतं दूषयति—( नान्तःशरीरवृत्तित्वान्मनसः )

उक्तं न युक्तम्, मनसः अन्तःशरीरवृत्तित्वात्। अन्तःशरीरे वृत्तिर्ज्ञानजनकीभूतो व्यापारो यस्य तत्त्वात्। शरीरातिरिक्तावच्छेदेनाऽऽत्ममनोयोगस्य ज्ञानाहेतुत्वाच्छरीरावच्छिन्नस्य हेतुत्वे तद्दोषतादवस्थ्यमिति भावः ॥ २६ ॥

---

(१) 'प्रापणात्' इति न०। (२) 'रूपादिमदर्थं ग्राहयति' इति क-खधृतपाठान्तरम्।

(क) 'चक्षुषोर्वीसरावौं(?)मनसः' इति क-पुस्तके मुद्रितम्। ख-पाठो गृहीतः। विसरावौरिति बहिर्विसृत्वरयोरित्यर्थः। अत्र तालव्यादि'शृ'धातोरेव 'आरु'प्रत्ययो व्याकरणानुशिष्टः। तथाच विशरावौरिति पाठो विशीर्णयोरित्यर्थः। खण्डचक्षुषोरिति तु फलितम्। कार्यमिति विधेयान्वयार्थं तदित्यध्याहार्यम्।

## (सू०)—साध्यत्वादहेतुः ॥ २७ ॥

### न्यायभाष्यम्

विपच्यमानकर्माशयमात्रं जीवनम्, एवं च सति साध्यमन्तःशरीरवृत्तित्वं मनस इति ॥ २७ ॥

## (सू०)—स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥ २८ ॥

सुस्मूर्षया खल्वयं मनः प्रणिदधानश्चिरादपि कंचिदर्थं स्मरति, स्मरतश्च शरीरधारणं दृश्यते। आत्ममनःसन्निकर्षजश्च प्रयत्नो द्विविधः—धारकः प्रेरकश्च, निःसृते च शरीराद्बहिर्मनसि धारकस्य प्रयत्नस्याभावाद् गुरुत्वात् पतनं स्यात् शरीरस्य स्मरत इति ॥ २८ ॥

### न्यायवार्त्तिकम्

तद्भावभावित्वात। न चान्या वृत्तिः सम्भवति। तस्मान्नान्तःशरीरवृत्ति मन इति। अत्र ब्रूमः—नाऽऽश्रयाश्रितभावो मनसो वृत्तिर्नापि कार्यप्रतिलम्भः अपि तु नाशरीरस्य मनसः कार्यमिति मनसो वृत्त्यर्थः; न ह्यशरीरं मनः पुरुषस्यार्थं करोतीति ॥ २६ ॥

साध्यत्वादहेतुः। अशरीरं मनः पुरुषार्थासमर्थमिति साध्यमेतत् ॥ २७ ॥

स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः। स्मरणशरीरधारणे युगपद्भवत इति दृष्टम्। दृष्टं च सर्वेण प्रतिपत्तव्यम्। चिरनिश्चरिते च मनसि स्मरतः शरीरधारणं न स्यात् ॥ २८ ॥

### न्यायवार्त्तिकतात्पर्यटीका

स्वकार्यं करोति नान्यत्रेति शरीराश्रितं मन इत्युच्यत इत्येतदपि नास्ति इन्द्रियार्थसन्निकर्षस्य मनःकार्यस्य शरीराद्बहिर्भावादित्यर्थः। तमिममाक्षेपं समाधत्ते—अत्र ब्रूम इति। येनाऽऽत्मना यच्छरीरं कर्मोपार्जितं तत्संयुक्तस्य मनसो वैशेषिकज्ञानादिलक्षणकार्यकारित्वं न तदसंयुक्तस्येति शरीराश्रितत्वं मनसो नान्यदित्यर्थः ॥ २६ ॥

चोद्यम्—

साध्य—तुः ( सू० २७ ) ॥(क)

परिहारः—

स्मर—धः ( सू० २८ ) ॥(ख)

### वृत्तिः

एकदेशी शङ्कते—( साध्यत्वादहेतुः )

शरीरावच्छिन्नात्ममनोयोगो न हेतुः साध्यत्वात् असिद्धत्वात्। मानाभावादिति भावः ॥ २७ ॥

( क-ख ) २७-२८-म-सूत्रयोरवतरणिकातिरिक्ता टीका नोपलभ्यते।

## (सू०)—न तदाशुगतित्वान्मनसः ॥ २६ ॥

### न्यायभाष्यम्

आशुगति मनः तस्य बहिःशरीरात्मप्रदेशेन ज्ञानसंस्कृतेन सन्निकर्षः, प्रत्यागतस्य च प्रयत्नोत्पादनमुभयं युज्यत इति। उत्पाद्य वा धारकं प्रयत्नं शरीरान्निःसरणं मनसः, अतस्तत्रोपपन्नं धारणमिति ॥ २६ ॥

## (सू०)—न स्मरणकालानियमात् ॥ ३० ॥

किञ्चित् क्षिप्रं स्मर्यते किञ्चिच्चिरेण। यदा चिरेण, तदा सुस्मूर्षया मनसि धार्यमाणे चिन्ताप्रबन्धे सति कस्यचिद् (१)अर्थस्य लिङ्गभूतस्य चिन्तनमाराधितं स्मृतिहेतुर्भवति। तत्रैतच्चिरनिश्चरिते मनसि नोपपद्यत इति।

शरीरसंयोगानपेक्षश्चाऽऽत्ममनःसंयोगो न स्मृतिहेतुः (२)शरीरस्य भोगायतनत्वात्।

### न्यायवार्त्तिकम्

न तदाशुगतित्वान्मनसः। उभयं सिध्यति स्मरणं धारणं च ॥ २९ ॥

न स्मरणकालानियमात्। अनियतः स्मृतिकालः अतोऽयुक्तमेतत्। शरीरसंयोगानपेक्षं

### न्यायवार्त्तिकतात्पर्यटीका

पुनश्चोद्यम्—

न त—सः ( सू० २९ ) ॥(क)

परिहारः—

न स्म—मात् ( सू० ३० )॥ भाष्यम्—चिन्ताप्रबन्धः स्मृतिप्रबन्धः। (ख)कस्यचिदेवार्थस्य लिङ्गभूतस्य चिह्नभूतस्यासाधारणस्येति यावत्। चिन्तनं स्मरणम्।

### वृत्तिः

सिद्धान्तसूत्रम्—( स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः )

उक्तः प्रतिषेधो न युक्तः स्मरतः शरीरधारणरूपाया उपपत्तेर्युक्तेः, अन्यथा मनसो बहिर्भावे शरीरावच्छिन्नात्ममनोयोगाभावेन प्रयत्नाभावे शरीरधारणं न स्यादिति भावः ॥ २८ ॥

पुनः शङ्कते—( न तदाशुगतित्वान्मनसः )

शरीराधारणं न, मनस आशुगतित्वाच्छीघ्रमेव शरीरे परावृत्तेः ॥ २९ ॥

दूषयति—( न स्मरणकालानियमात् )

मनसः शीघ्रमागमनं न युक्तं स्मरणे कालनियमाभावात्। कदाचिच्छीघ्रं स्मर्यते, कदाचित् प्रणिधानाद्विलम्बेनापीति।

---

(१) 'अन्यस्य' वि०, 'अर्थस्यालिङ्ग-' इति टि०। (२) 'शरीरस्योपभोगा-' इति पं०।

(क) २९श-सूत्रस्यावतरणिकातिरिक्ता टीका नास्ति। (ख) मुद्रितभाष्यपुस्तकेषु 'एव'कारो न दृश्यते।

### न्यायभाष्यम्

उपभोगायतनं पुरुषस्य ज्ञातुः शरीरं न ततो निश्चरितस्य मनस आत्मसंयोगमात्रं ज्ञानसुखादीनाम् (क)उत्पत्तौ कल्पते, क्लृप्तौ (१)वा शरीरवैयर्थ्यमिति ॥ ३० ॥

## (सू०)—आत्मप्रेरण-यदृच्छा-ज्ञताभिश्च न संयोगविशेषः ॥३१॥

आत्मप्रेरणेन वा मनसो बहिः शरीरात् संयोगविशेषः स्यात्, यदृच्छया वा, आकस्मिकतया ज्ञतया वा मनसः ? सर्वथा चानुपपत्तिः। कथम् ? स्मर्तव्यत्वात्, (ख)इच्छातः स्मरणाज् ज्ञानासम्भवाच्च। यदि तावदात्मा अमुष्यार्थस्य स्मृतिहेतुः संस्कारः अमुष्मिन्नात्मदेशे समवेतस्तेन मनः संयुज्यतामिति मनः प्रेरयति तदा स्मृत एवासावर्थो भवति न स्मर्तव्यः। न चाऽऽत्मप्रत्यक्ष आत्मप्रदेशः संस्कारो वा, तत्रानुपपन्नात्मप्रत्यक्षेण संवित्तिरिति। सुस्मूर्षया चायं मनः प्रणिदधानश्चिरादपि कश्चिदर्थं स्मरति नाकस्मात्, ज्ञत्वं च मनसो नास्ति ज्ञानप्रतिषेधादिति ॥ ३१ ॥

### न्यायवार्त्तिकम्

चाऽऽत्मनः संयोगं स्मृतिकारणं ब्रुवतः शरीरस्योपभोगायतनत्वं निवर्तते। ततस्तन्निवृत्तौ शरीरोत्पत्तिवैयर्थ्यमिति ॥ ३० ॥

आत्मप्रेरण-यदृच्छा-ज्ञताभिश्च न संयोगविशेषः। अपरे तु 'आत्मप्रेरण-यदृच्छा-ज्ञताभिश्च न संयोगविशेषः' इति परिहारं ब्रुवते ॥ ३१ ॥

### न्यायवार्त्तिकतात्पर्यटीका

आराधितं सिद्धं चिह्नवतः स्मृतिहेतुर्भवतीति। इतश्च शरीरसंयोगापेक्षमेव मनः स्मृतिहेतुर्नेतरथेत्याह—शरीरसंयोगानपेक्ष इति ॥३०॥

शरीरान्नैव बहिर्मन इत्यत्रैकदेशिमतमुपन्यस्यति—

आत्म—षः ( सू० ३१ ) ॥(ग)

### वृत्तिः

न च प्रणिधानं शरीरान्तःस्थितमनस एव बहिर्निर्गमस्तु स्मरणाव्यवहितपूर्वमेवेति वाच्यं बहिर्निर्गमान्तःप्रवेशानुकूलक्रियाविभागादिकालकलापं यावच्छरीरधारणं न स्यादिति भावः ॥ ३० ॥

एकदेशिमतमन्य एकदेशी दूषयति—(आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः) स हि न स्मृत्यर्थमात्मप्रेरणेन, बहिःप्रदेशविशेषे मनःसंयोगविशेषो न सम्भवति।

---

(१) 'च' इति फ०।

(क) 'उत्पत्तेः' इति फ-पु० पाठः। तद्वीजं व० सा० प० प्रकाशितन्यायदर्शनस्य तृतीयखण्डे २४५पत्रे द्रष्टव्यम्। (ख) अत्र 'इच्छातः स्मरणज्ञानासम्भवाच्च' इति ख-ग-ज-झपुस्तकेषु पाठः। फ-पुस्तकपाठस्तु गृहीतः। तद्वीजं तत्रैव द्रष्टव्यम्।

(ग) ३१श-सूत्रे अवतरणिकातिरिक्ता टीका नोपलभ्यते।

## न्यायभाष्यम्

एतच्च--

**(सू०)—व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ॥ ३२ ॥**

यदा खल्वयं व्यासक्तमनाः क्वचिद् (१)देशे शर्करया कण्टकेन वा पादव्यथनमाप्नोति तदा आत्ममनःसंयोगविशेष एषितव्यः, दृष्टं हि दुःखं दुःखवेदनं चेति। तत्रायं समानः प्रतिषेधः। यदृच्छया तु (२)न विशेषो नाऽऽकस्मिकी क्रिया नाऽऽकस्मिकः संयोग इति।

कर्मादृष्टमुपभोगार्थं क्रियाहेतुरिति चेत् समानम्। कर्मादृष्टं पुरुषस्थं पुरुषोपभोगार्थं मनसि क्रियाहेतुः एवं दुःखं दुःखसंवेदनं च (३)सिध्यतीत्येवं चेन्मन्यसे, समानम्—स्मृतिहेतावपि संयोगविशेषो भवितुमर्हति। तत्र यदुक्तम् 'आत्मप्रेरण-यदृच्छा-ज्ञताभिश्च न संयोगविशेषः' इत्ययमप्रतिषेध इति। पूर्वस्तु प्रतिषेधो 'नान्तःशरीरवृत्तित्वान्मनस' इति ॥ ३२ ॥

## न्यायवार्त्तिकम्

व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम्। एतच्च व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानं भवतीत्यपरिहारः।

कर्मादृष्टमुपभोगार्थं नियामकं भवतीति न युक्तं समानत्वात्। तस्मात् पूर्व एव परिहारो नान्तःशरीरवृत्तित्वान्मनस इति ॥ ३२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

दूषयति—

व्यास—नम् ( सू० ३२ ) (क) ॥

## वृत्तिः

तस्य स्मरणीयज्ञानपूर्वकतया प्रागेव स्मरणापत्तेः, नापि 'यदृच्छया' अकस्मात्, आकस्मिकत्वस्य निषेधात्; नापि मनसो 'ज्ञतया' ज्ञातृतया, मनसो ज्ञातृत्वानभ्युपगमात्।

प्रेरण-यदृच्छा-ज्ञताभिः प्रयत्नेच्छाज्ञानैरित्यर्थं इति कश्चित्, तन्न, प्रयत्नेनैव चरितार्थत्वापत्तेः ॥ ३१ ॥

एतन्निराकरोति—( व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् )

नृत्यादिकं पश्यतः कण्टकादिना पादव्यथनेन मनःसंयोगो यथा जायते तथैव तदपि इति भावः। इतरथा तत्र मनःसंयोगेऽप्युक्तदोषाः स्युः। अदृष्टविशेषाधीनकर्मवशादसाविति चेत्? तुल्यं प्रकृतेऽपीति भावः ॥ ३२ ॥

(१) 'दृष्टे' इति ग०। (२) 'न' इति ज-पु० नास्ति। (३) 'सिध्यति च इत्येवं' इति ग०।
(क) ३२श-सूत्रे अवतरणिकातिरिक्ता टीका नास्ति।

## न्यायभाष्यम्

कः खल्विदानीं कारणयौगपद्यसद्भावे युगपदस्मरणस्य हेतुरिति ?

## (सू०)—प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावाद् (१)युगपदस्मरणम् ॥ ३३ ॥

यथा खल्वात्ममनसोः सन्निकर्षः संस्कारश्च स्मृतिहेतुरेवं (२)प्रणिधानं (३)लिङ्गादिज्ञानानि (२*)तानि च न युगपद्भवन्ति तत्कृता स्मृतीनां युगपदनुत्पत्तिरिति। (क)प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्ते यौगपद्यप्रसङ्गः। यत्खल्विदं (ख)प्रातिभमिव ज्ञानं प्रणिधानाद्यनपेक्षं स्मार्त्तमुत्पद्यते कदाचित्तस्य युगपदुत्पत्तिप्रसङ्गो (४)हेत्वभावात्। सतः स्मृतिहेतोरसंवेदनात् प्रातिभेन समानाभिमानः। बह्वर्थविषये वै

## न्यायवार्त्तिकम्

यदि तर्हि ज्ञानसमवेतात्मसन्निकर्षायौगपद्यादिति परिहारो नेष्यते प्राप्तः स्मृतीनां युगपदुत्पादः कारणस्य यौगपद्यादिति।

प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावाद् युगपदस्मरणम्। न अपेक्षाकारणस्यायुगपद्भावात्।

प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्त्ते यौगपद्यप्रसङ्गः। यतः प्रणिधानाद्यात्ममनःसंयोगस्य सहकारि कारणं तन्न युगपद्भवतीत्ययुगपदुत्पत्तिः स्मृतीनाम्। यदि प्रणिधानाद्यपेक्षात्ममनःसंयोगो न युगपत्स्मृतिकारणं याः स्मृतयः (५)प्रणिधानादिसन्निधानमन्तरेण भवन्ति तासां यौगपद्यं स्यात् ? नानभ्युपगमात्—न हि प्रणिधानाद्यनपेक्षं स्मार्तमस्ति, सतः स्मृतिहेतोरसंवेदनात् प्रातिभेन समानाभिमानोऽयमिति। प्रातिभं तर्हि युगपद्भवितुमर्हति न हि तस्यासन्निहितं

## न्यायवार्त्तिकतात्पर्यटीका

प्रातिभवदिति। स्मृत्युत्पादस्य पुरस्तात् प्रणिधानादीनां स्मृतिकारणानामसंवेदनादात्मनः संयोगात् संस्कारापेक्षात् स्मृतीनां युगपदुत्पादप्रसङ्गः प्रातिभवदित्याक्षेपः। समाधानमाह—सतः स्मृतिहेतोरिति।

---

(१) 'अयुगपत् स्मरणम्' इति ख-ग-झा-पुस्तकेषु पाठः। (२) 'प्रणिधानलिङ्गादिज्ञानानि' इति फ०। (३) 'लिङ्गज्ञानानि' इति वि०। (४) 'हेतुभावात्' इति टि०। (५) 'प्रणिधानसन्निधानाद्यन्तरेण' इति क-ख-धृतपाठान्तरम्।

(क) न्यायसूचीनिबन्धादिष्वगृहीतत्वात् क्वचित् सूत्ररूपेण गृहीतोऽप्ययं भागो भाष्यमेवेति बोध्यम्।

(ख) प्रातिभमिति तारकापरपर्यायं ज्ञानमित्यर्थः। तथाच 'प्रातिभाद्वा सर्वम्' (पातञ्जलसूत्रम् ३३, विभूतिपादः) इति सूत्रे व्यासभाष्यम् 'प्रातिभं नाम तारकमि'त्यादि। व्याख्यातं चैतत् टीकाकृता—'प्रतिभा ऊहः, तन्नवं प्रातिभम्' इति। 'प्रातिभं स्वप्रतिभोत्थमनौपदेशिकं ज्ञानमि'ति योगवार्त्तिकम्।

### न्यायभाष्यम्

चिन्ताप्रबन्धे कश्चिदेवार्थः कस्यचित् स्मृतिहेतुः, तस्यानुचिन्तनात् (१) तस्य स्मृतिर्भवति। न चायं स्मर्ता सर्वं स्मृतिहेतुं (२) संवेदयते एवं मे स्मृतिरुत्पन्नेति। असंवेदनात् प्रातिभमिव ज्ञानमिदं स्मार्तमिति (३)अभिमन्यते, न त्वस्ति प्रणिधानाद्यनपेक्षं स्मार्तमिति (३*)।

प्रातिभे कथमिति चेत् पुरुषकर्मविशेषादुपभोगवन्नियमः। प्रातिभमिदानीं ज्ञानं युगपत् कस्मान्नोत्पद्यते? यथोपभोगार्थं कर्म युगपदुपभोगं न करोति एवं पुरुषकर्मविशेषः प्रतिभाहेतुर्न युगपदनेकं प्रातिभं ज्ञानमुत्पादयति।

हेत्वभावादयुक्तमिति चेद्न न करणस्य प्रत्ययपर्याये सामर्थ्यात्। 'उपभोगवन्नियम' इत्यस्ति दृष्टान्तो हेतुर्नास्तीति चेन्मन्यसे? न, करणस्य प्रत्ययपर्याये सामर्थ्यात्। नैकस्मिन् ज्ञेये युगपदनेकं ज्ञानमुत्पद्यते, न चानेकस्मिन्। तदिदं दृष्टेन

### न्यायवार्त्तिकम्

कारणमिति? नोक्तोत्तरत्वात्—उक्तोत्तरमेतत्। न हि करणस्यानेकक्रियानिर्वृत्तिसामर्थ्यमस्ति। प्रातिभं चानेकं ज्ञानं भवदेकस्मिन्नर्थे भवेदथानेकस्मिन्? न तावदेकस्मिन्, वैयर्थ्यात्।

### न्यायवार्त्तिकतात्पर्यटीका

अदृश्यमानमपि कारणम्, तत्क्रमश्च कार्योत्पादक्रमेणानुमीयत इति प्रातिभमपि पुरुषकर्मविशेषापेक्षादात्ममनःसन्निकर्षादुपजायमानं नाकारणं न चाक्रमवदिति प्रधानभूतामुपपत्तिमवतारयितुं पृच्छति भाष्यकारः—प्रातिभमिदानीमिति।

अत्रोत्तरमाविलं दत्त्वा शङ्कते—हेत्वभावादयुक्तमिति चेत्। उत्तरसारमाह—न करणस्येति। यद्यपि क्वचिद्द व्रश्चनस्य युगपद्दारुद्वयसंयोगे युगपच्छिदाद्वयं भवति तथाऽपि व्रश्चनावयवभेदात् करणभेद उन्नेयः। अथ वा करणान्तराणि युगपत्कार्याणि कुर्वन्तु प्रत्ययकरणं तु क्रमेणैव प्रत्ययान् करोतीत्यत्र न व्यभिचारः। तदुक्तम्—प्रत्ययपर्याय इति। तस्मात् करणमेकं न क्वचिदपि युगपत्कार्यायालमिति। कर्त्ता पुनरेकोऽपि करणभेदे युगपद्बहूनि कार्याणि करोतीत्याह—

### वृत्तिः

स्मरणायौगपद्यं स्वयमुपपादयति—(प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावाद् युगपदस्मरणम् )

प्रणिधानं चित्तैकाग्र्यं सुस्मूर्षेति यावत्। लिङ्गज्ञानम् उद्बोधकम्। उद्बोधकानामानन्त्यादादिपदं ज्ञानात् परतो योजनीयम्, तस्य क्रमात् स्मरणक्रमः। यदि च युगपदुद्बोधकानि तदा तावद्विषयकस्मरणमिष्यत एव, यथा पदज्ञानादाविति मन्तव्यम् ॥ ३३ ॥

(१) 'ज्ञस' इति टि०। (२) 'संवेदयेत्' इति वि०। (३) अयमंशः न-पु० नास्ति।

## न्यायभाष्यम्

प्रत्ययपर्यायेणानुमेयं (क)करणसामर्थ्यमित्थम्भूतमिति न ज्ञातुः (१)विकरणधर्मणो देहनानात्वे प्रत्यययौगपद्यादिति।

अयं च द्वितीयः प्रतिषेधः, (२)अवस्थितशरीरस्य चानेकज्ञानसमवायादेकप्रदेशे युगपदनेकार्थस्मरणं स्यात्। (३)क्वचिद्देशेऽवस्थितशरीरस्य ज्ञातुरिन्द्रियार्थप्रबन्धेन ज्ञानमनेकमेकस्मिन्नात्मप्रदेशे समवैति। तेन यदा मनः संयुज्यते तदा ज्ञातपूर्वस्यानेकस्य युगपत् स्मरणं (४)प्रसज्यते प्रदेशसंयोगपर्यायाभावादिति। आत्मप्रदेशानामद्रव्यान्तरत्वादेकार्थसमवायस्याविशेषे (५)सति स्मृतियौगपद्यप्रतिषेधानुपपत्तिः।

## न्यायवार्त्तिकम्

नानेकस्मिन्, सामर्थ्याभावात्। न चायं नियमः प्रत्ययानां यौगपद्यं न भवतीति, ज्ञातुर्विकरणधर्मणो देहनानात्वे प्रत्ययानां यौगपद्यादिति। यदि च ज्ञानसमवेतात्मप्रदेशासन्निकर्षान्न स्मृतीनां युगपदुत्पत्तिः ये संस्कारा एकदेशास्तेष्ववस्थितशरीरस्यानेकज्ञानसमवायादेकदेशे युगपदनेकार्थस्मरणं स्यात्, न चैतदस्तीति अतश्चापरीहार इति। अवस्थितशरीरस्य संस्काराः समानदेशा इत्ययुक्तम् आत्मप्रदेशानामद्रव्यान्तरत्वात्। एवं सति सर्वसंस्काराणां समानदेशत्वे प्रत्यययौगपद्यप्रसङ्गोऽपरिहार्यः।

## न्यायवार्त्तिकतात्पर्यटीका

न ज्ञातुर्विकरणधर्मणो देहनानात्वे प्रत्यययौगपद्यादिति। विविधं करणं धर्मो यस्य स तथोक्तः। तद् व्याचष्टे वार्त्तिककारः—न चायं नियम इति। योगी खलु ऋद्धौ प्रादुर्भूतायां सेन्द्रियाणि शरीराणि तेषु तेषु लोकेषु निर्माय मुक्तात्मनामादाय मनांसि मोक्षाय त्वरमाणो युगपत्कर्मोपार्जितान् सुखदुःखभेदान्न द्विपन्न रक्तो भुङ्क्ते, तदस्यैकस्यापि करणभेदाद् युगपज्ज्ञानानि भवन्तीति।

अयं च द्वितीयः प्रतिषेधः ज्ञानसंस्कृतात्मप्रदेशभेदस्यायुगपज्ज्ञानोत्पादकस्य। अवस्थितेति। (ख)यत्राऽऽत्मप्रदेशोऽस्य ज्ञानानि नानाविषयाणि जातानि तत्संस्काराश्च तत्रैव अवस्थितशरीरस्य। तदनेन शरीरान्तर्गतस्य मनसस्तत्र प्रदेशे संयोग उपपादितः।

तदिदमाह वार्त्तिककारः—यदि च (ग)ज्ञानसमवेतात्मप्रदेशासन्निकर्षादिति। अतश्च अव्यापकत्वाद् अपरिहारः। आचार्यदेशीयानां तु स्मृतियौगपद्यप्रसङ्गमाह—अवस्थित-

---

(१) 'विकरणधर्मिणो' इति ज-वि०। (२) 'व्यवस्थित-' इति ग०। (३) 'क्वचिद्देशावस्थितशरीरस्य' इति ख-ग-ज-झा०। (४) 'प्रसज्येत' इति फ०। (५) 'सति' इति ज-ग-ख-झा-पु० नास्ति।

(क) 'करणस्य सामर्थ्यम्' इति फ-पु-पाठो युक्तः। तद्बीजं तत्रैव द्रष्टव्यम्। (ख) 'यत्राऽऽत्मप्रदेशेऽस्य' इति युक्तम्। (ग) 'ज्ञानसमवेतात्मप्रदेशेन सन्निकर्षाद्' इति क-ख-तात्पर्यपाठः। वार्त्तिके उपलब्धाकारस्तु गृहीतः।

## न्यायभाष्यम्

शब्दसन्ताने तु श्रोत्राधिष्ठानप्रत्यासत्त्या शब्दश्रवणवत् संस्कारप्रत्यासत्त्या मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिप्रसङ्गः। पूर्व एव तु प्रतिषेधो नानेकज्ञानसमवायादेकप्रदेशे युगपत् स्मृतिप्रसङ्ग इति ॥ ३३ ॥

(१) पुरुषधर्मो ज्ञानमन्तःकरणस्येच्छाद्वेषप्रयत्नसुखदुःखानि धर्मा इति कस्यचिद्दर्शनम्, तत् प्रतिषिध्यते—

## न्यायवार्त्तिकम्

संस्कारप्रत्यासत्त्या स्मृतियौगपद्यं न भवतीति। का प्रत्यासत्तिः ? न हि संस्काराणां सन्निकृष्टविप्रकृष्टभावोऽस्ति समानदेशत्वात्। न ब्रूमः सन्निकृष्टता प्रत्यासत्तिरपि तु संस्कारस्य सहकारिकारणसमवधानं प्रत्यासत्तिः शब्दवत्—यथा शब्दाः सन्तानवर्तिनः (२)सर्व एवाऽऽकाशे समवयन्ति समानदेशत्वेऽपि यस्योपलब्धेः कारणानि सन्ति स उपलभ्यते नेतरे, तथा संस्कारेष्वपीति ॥ ३३ ॥

पुरुषस्य ज्ञानमिच्छादयोऽन्तःकरणस्येति कस्यचिद्दर्शनम्। तत् प्रतिषिध्यते—

## न्यायवार्त्तिकतात्पर्यटीका

शरीरस्यैव(क) संस्काराः समानदेशा इत्ययुक्तम्। कुतः ? आत्मप्रदेशानामद्रव्यान्तरत्वात्, सर्वसंस्काराणां समानदेशत्वे प्रत्यययौगपद्यप्रसङ्गोऽपरिहार्यः। न ह्यात्मनो घटस्येव प्रदेशास्ततोऽन्ये संभवन्ति किं नामाऽऽत्मैव, स चैक एवेति सर्व एवाऽऽत्मवर्तिनः समानदेशा इत्यर्थः। तदिदमुक्तं भाष्यकारेण—आत्मप्रदेशानामद्रव्यान्तरत्वादेकार्थसमवायस्याविशेषे सति स्मृतियौगपद्यस्य प्रतिषेधानुपपत्तिरिति।

शब्दसंताने त्विति शङ्कानिराकरणभाष्यम्। तुशब्दः शङ्कां निराकरोति। तदेतद्भाष्यं वार्त्तिककारो व्याचष्टे—संस्कारप्रत्यासत्त्येति। पृच्छति—का प्रत्यासत्तिरिति। उत्तरम्—न ब्रूम इति। निष्प्रदेशत्वेऽप्यात्मनः संस्कारस्याव्याप्यवृत्तित्वमुपपादितं तेन शब्दवत् सहकारिकारणस्य सन्निधानासन्निधाने (ख) कल्पेते एवेत्यर्थः ॥ ३३ ॥

संप्रति बुद्धिरेव (ग) किमिच्छादिसमानाधिकरणा न वेति विचार्यते। तत्र सांख्यदर्शनवैनाशिकानां विप्रतिपत्तेः संशयः। तद्विप्रतिपत्तिमाह—पुरुषधर्मो ज्ञानमन्तःकरणस्य (घ)त्विति। पुरुषचैतन्यमेकमेव कूटस्थनित्यं सत् तत्तदर्थाकारपरिणतबुद्धितत्त्वप्रतिबिम्बविभ्रमवशाद्भिन्नमिवोपजनापायधर्मकं विज्ञानमिति च वृत्तिरिति चाऽऽख्यायते। इच्छाद्वेषादयस्तु वस्तुत उपजनापायधर्माणो अन्तःकरणस्येति दर्शनम्। तत्प्रतिषिध्यते—

---

(१) 'यत् पुरुषधर्मो' इति ख-ग-ङा०। (२) 'सर्वत्र वाऽऽकाशे'—क-खधृतपाठान्तरम्।

(क) 'एव'शब्दो वार्त्तिके न दृश्यते। (ख) 'कल्पेते' इति स्मृतियौगपद्यायौगपद्ययोः प्रभवतः इत्यर्थः। 'कल्प्येते' इति पाठे तु स्पष्टोऽर्थः। (ग) 'वा'शब्दसत्त्वेन 'किम्'शब्दोऽत्र नातिप्रयोजनकः प्रमादागतो ना वेति चिन्त्यम्। (घ) 'तु'शब्दो भाष्ये नोपलभ्यते।

# (सू०)—ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ॥ ३४ ॥

## न्यायभाष्यम्

अयं खलु जानाति तावदिदं मे सुखसाधनमिदं मे दुःखसाधनमिति (१)ज्ञात्वा स्वस्य सुखसाधनमाप्तुमिच्छति, दुःखसाधनं हातुमिच्छति, (२)प्राप्तीच्छाप्रयुक्तस्यास्य सुखसाधनावाप्तये समीहाविशेष आरम्भः, जिहासाप्रयुक्तस्य दुःखसाधनपरिवर्जनं निवृत्तिः, एवं ज्ञानेच्छा-प्रयत्न-द्वेष-सुख-दुःखानामेकेनाभिसम्बन्धः। एककर्तृकत्वं ज्ञानेच्छाप्रवृत्तीनां समानाश्रयत्वं च। तस्माज् ज्ञस्येच्छाद्वेषप्रयत्नसुखदुःखानि धर्मा नाचेतनस्येति। आरम्भनिवृत्त्योश्च प्रत्यगात्मनि दृष्टत्वात् परत्रानुमानं वेदितव्यमिति ॥ ३४ ॥

## न्यायवार्त्तिकम्

ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः। ज्ञातुरेवेच्छादय इति सूत्रार्थः। यद्यन्तःकरणस्येच्छादयः स्युर्न प्रत्यक्षाः स्युः, न हीच्छादयोऽन्यत्र वर्तमाना अन्यस्य प्रत्यक्षा भवितुमर्हन्तीति। नित्यं चेच्छादयोऽप्रत्यक्षाः स्युः मनोगुणानामतीन्द्रियत्वात्। आरम्भनिवृत्त्योश्च प्रत्यगात्मनि दृष्टत्वात् परत्रानुमानम् ॥ ३४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

ज्ञस्ये—त्त्योः ( सू० ३४ ) ॥ प्रति वृत्त्याऽञ्चतीति प्रत्यगात्मा तस्मिन्। एतदुक्तं भवति —ज्ञानसामानाधिकरण्येनोपलब्धेरन्यदीयानामिच्छादीनामन्यस्याप्रत्यक्षीकरणात् तत्करणे वा मैत्रगतानामपि चैत्रेण ग्रहणप्रसङ्गाद् अन्तःकरणवृत्तीनां गुणान्तराणां नित्याप्रत्यक्षत्वादात्माश्रिता एवेच्छादयो नान्तःकरणाश्रया इति ॥ ३४ ॥

## वृत्तिः

नन्विच्छादीनां मनोधर्मत्वात् तेषां ज्ञानजन्यत्वात् सामानाधिकरण्येन च तत्र कार्यकारणभावात् कथं ज्ञानस्याऽऽत्मगुणत्वमित्याशङ्कायां सिद्धान्तसूत्रम्—( ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः )

ज्ञस्य ज्ञानवतः आत्मन इच्छादयः। हेतुमाह—आरम्भनिवृत्त्योरिच्छाद्वेषनिमित्तत्वादिति। प्रवृत्तिनिवृत्त्योरिच्छाद्वेषजन्यत्वात् तत्र च सामानाधिकरण्येन ज्ञानस्य हेतुत्वमिति भावः। यद्वा ज्ञस्य ज्ञानवतो याविच्छाद्वेषौ तन्निमित्तत्वादित्यर्थः। तथा च ज्ञानेच्छाप्रयत्नानां सामानाधिकरण्यं नासिद्धम् ॥ ३४ ॥

---

(१) 'ज्ञातम्' इति ख-ग-ज०।

(२) 'प्राप्तुमिच्छाप्रयुक्तस्यास्य' इति ग-ज-झा०।

न्यायभाष्यम्

अत्र भूतचैतनिक आह—

(सू०)—तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ॥ ३५ ॥

आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति यस्याऽऽरम्भनिवृत्ती तस्येच्छाद्वेषौ तस्य ज्ञानमिति प्राप्तं पार्थिवाप्यतैजसवायवीयानां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति चैतन्यम् ॥ ३५ ॥

(सू०)—परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥ ३६ ॥

शरीरे चैतन्यनिवृत्तिः। आरम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति प्राप्तं परश्वादेः करणस्याऽऽरम्भनिवृत्तिदर्शनाच्चैतन्यमिति। अथ शरीरस्येच्छादिभिर्योगः, परश्वादेस्तु करणस्याऽऽरम्भनिवृत्ती (१)व्यभिचरतः, न तर्ह्ययं हेतुः पार्थिवाप्यतैजसवायवीयानां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति।

न्यायवार्त्तिकम्

तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः। प्रवृत्तिनिवृत्तिभ्यां सामानाधिकरण्यात् (२)शरीरादिष्वप्रसङ्ग इति सूत्रार्थः ॥ ३५ ॥

परश्वादिष्वारम्भनिवृत्तिदर्शनात्। परश्वादिष्वारम्भनिवृत्तिदर्शनादनेकान्तो वाक्यार्थः ॥ ३६ ॥

न्यायवार्त्तिकतात्पर्यटीका

अत्रान्तरे लब्धावकाशो भूतचैतनिकः प्रत्यवतिष्ठते—

तल्लि—धः ( सू० ३५ ) ॥ यदि यस्याऽऽरम्भनिवृत्ती तस्येच्छाद्वेषौ यस्य चैतौ तस्य चैतन्यं हन्ताऽऽयातमनेन क्रमेण भूतचैतन्यमस्मदभिमतं भूतेष्वेव कायाकारपरिणतेषु आरम्भनिवृत्तिदर्शनादित्यर्थः ॥ ३५ ॥

पर—नात् ( सू० ३६ ) ॥ परश्वादिष्वित्यस्य तात्पर्यमाह वार्त्तिककारः—परश्वादिष्विति।

वृत्तिः

नन्वस्तु तेषां सामानाधिकरण्यम्, परं तु तेषामधिकरणं कायाकारः पार्थिवादिपरमाणुपुञ्ज एवेति चार्वाकः शङ्कते—( तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः )

पार्थिवाद्येषु देहेषु ज्ञानादेर्न प्रतिषेधः। कुतः? 'इच्छाद्वेषयोस्तल्लिङ्गत्वाद्' आरम्भनिवृत्तिलिङ्गत्वात्, तयोः चेष्टाविशेषलिङ्गकत्वाच्चेष्टायाश्च शरीरे प्रत्यक्षसिद्धत्वादिति भावः ॥ ३५ ॥

(१) 'व्यभिचारतः' टि०। (२) 'शरीरादिषु प्रसङ्गः' इति क०।

## न्यायभाष्यम्

अयं तर्ह्यन्योऽर्थः—तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः। पृथिव्यादीनां भूतानामारम्भ(१)स्तावत् (२)त्रसस्थावरशरीरेषु तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषः लोष्टादिषु (३)च लिङ्गाभावात् प्रवृत्तिविशेषाभावो निवृत्तिः। आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति पार्थिवाद्येष्वणुषु तद्दर्शनादिच्छाद्वेषयोगस्तद्योगाज् ज्ञानयोग इति सिद्धं भूतचैतन्यमिति।

कुम्भादिष्वनुपलब्धेरहेतुः। कुम्भादिमृदवयवानां व्यूहलिङ्गः प्रवृत्तिविशेष आरम्भः, सिकतादिषु प्रवृत्तिविशेषाभावो निवृत्तिः। न च मृत्सिकतानामारम्भनिवृत्तिदर्शनादिच्छाद्वेषप्रयत्नज्ञानैर्योगः। तस्मात् तल्लिङ्गत्वादिच्छाद्वेषयोरित्यहेतुरिति ॥ ३६ ॥

## (सू०)—नियमानियमौ तु तद्विशेषकौ ॥ ३७ ॥

तयोरिच्छाद्वेषयोर्नियमानियमौ विशेषकौ भेदकौ। ज्ञस्येच्छाद्वेषनिमित्ते

## न्यायवार्त्तिकम्

नियमानियमौ तु तद्विशेषकौ। प्रयुज्यमानभूतविषयत्वं प्रवृत्तिनिवृत्त्योर्नियमः—

## न्यायवार्त्तिकतात्पर्यटीका

भूतचैतनिकस्तल्लिङ्गत्वादिति हेतुं स्वपक्षसिद्ध्यर्थमन्यथा व्याचष्टे—अयं तर्हीति। शरीरेष्ववयवव्यूहभेददर्शनाच्च (क) लोष्टादिषु शरीरारम्भकाणामणूनां प्रवृत्तिभेदोऽनुमीयते ततश्चेच्छाद्वेषौ ताभ्यां चैतन्यमिति। त्रसं जङ्गमं विशरारु अस्थिरं कृमिप्रभृतीनां शरीरम्, स्थावरं स्थिरं शरीरं देवमनुष्यादीनाम्; तद्धि चिरतरं (ख)वा म्रियते। तदेतद् दूषयति—कुम्भादिमृदवयवानामिति। कुम्भाद्यारम्भिकाणां मृदां व्यूहभेदादारम्भदर्शनाददर्शनाच्च सिकतानामारम्भनिवृत्त्योरनैकान्तत्वम् ॥ ३६ ॥

तदेवं भूतचैतन्यसाधनं दूषयित्वा तेभ्योऽन्यस्य चैतन्ये साधनमाह—

नियमानियमौ तु तद्विशेषकौ ( सू० ३७ )॥ तयोरिच्छाद्वेषयोर्नियमानियमौ

## वृत्तिः

समाधित्सुः प्रतिबन्धिमाह—( परश्वादिष्वारम्भनिवृत्तिदर्शनात् )

आरम्भनिवृत्त्यनुमापकक्रियाविशेषदर्शनात् परश्वादिषु ज्ञानादिसिद्धिप्रसङ्गः। तस्मात् क्रियाविशेषाणां प्रयत्नादिजन्यत्वं सम्बन्धान्तरेण न तु समवायेन व्यभिचारादिति भावः ॥ ३६ ॥

(१) 'ताव'दिति झा-पु० नास्ति। (२) 'त्रस'पदं ग-पु० नास्ति। (३) 'च' इति फ-पु० नास्ति।

(क) लोष्टादिष्विति पञ्चम्यर्थे सप्तमी लोष्टादिभ्य इत्यर्थः। ख-तात्पर्ये तु लोष्टादिषु (च) शरीरा— इति मुद्रितम्। (ख) 'वा'शब्द एवार्थ चिरमित्यनुक्तसमुच्चये वा द्रष्टव्यः।

## न्यायभाष्यम्

प्रवृत्तिनिवृत्ती न स्वाश्रये । किं तर्हि ? प्रयोज्याश्रये । तत्र प्रयुज्यमानेषु भूतेषु प्रवृत्तिनिवृत्ती स्तः न सर्वेष्वित्यनियमोपपत्तिः ।

यस्य तु (१)ज्ञत्वाद् भूतानामिच्छाद्वेषनिमित्ते आरम्भनिवृत्ती स्वाश्रये तस्य नियमः स्यात्, यथा भूतानां गुणान्तरनिमित्ता प्रवृत्तिर्गुणप्रतिबन्धाच्च निवृत्तिर्भूतमात्रे भवति नियमेन, एवं भूतमात्रे ज्ञानेच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती स्वाश्रये स्याताम्, (२)न तु भवतः तस्मात् प्रयोजकाश्रिता ज्ञानेच्छाद्वेषप्रयत्नाः, प्रयोज्याश्रये तु प्रवृत्तिनिवृत्ती इति सिद्धम् ।

## न्यायवार्त्तिकम्

यानि भूतानि प्रयुज्यन्ते तेषु प्रवृत्तिनिवृत्ती भवतो न सर्वेष्विति । यदि पुनर्ज्ञत्वाद् भूतानां प्रवृत्तिनिवृत्ती स्यातां भूतमात्रे स्याताम्, यथा गुरुत्वादिभ्यः—यानि गुरुत्वादिमन्ति भूतानि तानि स्वगुणात् पतन्तीति, नियमश्च दृष्टः तस्मान्न भूतानि चेतनानीति ।

## न्यायवार्त्तिकतात्पर्यटीका

विशेषकौ । अयमेव चेच्छाद्वेषयोर्विशेषो यद्भूताश्रयत्वमनयोर्व्यावर्त्यं तदितराश्रयत्वव्यवस्थितिः । तत्रानियमं तावदाह—ज्ञस्येच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती स्पन्दास्पन्दौ,—न स्वाश्रये नेच्छाद्वेषयोराश्रये । किन्तर्हि ? प्रयोज्ये परश्वादौ आश्रये दृष्टे, तत्र प्रयुज्यमानेषु एव भूतेषु प्रवृत्तिनिवृत्ती स्यातां—न सर्वेषु प्रयोजकेष्वपि शरीरादिष्विति । सेयम् अनियमोपपत्तिः (क)सार्वत्रिकत्वमनियम इति । एतदुक्तं भवति—न शरीरमिच्छाज्ञानद्वेषाधारः इच्छादिजनितस्पन्दाधारत्वात् परश्वादिवदिति ।

तदेवमनियमं भेदकं व्याख्याय नियमं व्याचष्टे—यस्य तु चार्वाकस्य दर्शने ज्ञत्वाद् भूतानामिच्छाद्वेषनिमित्ते आरम्भनिवृत्ती स्वाश्रये शरीरादौ, तस्य चार्वाकस्य । यथा भूतानां गुरुत्वादिगुणान्तरनिमित्ता प्रवृत्तिः पतनादिलक्षणा, तस्यैव गुरुत्वादेर्गुणान्तरस्य प्रतिबन्ध आधारद्रव्यसंयोगेन, तस्मात् निवृत्तिः अपतनादिका सा भूतमात्रे भवति नियमेन व्याप्ता न तु शरीरोपगृहीतेषु, एवं भूतमात्रे ज्ञानेच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती स्वाश्रये स्याताम् । एतदुक्तं भवति—ये ये पृथिव्यादिधर्मास्ते ते यावत्पृथिव्यादिभाविनो दृष्टाः यथा गुरुत्वादयः, ज्ञानेच्छादयोऽपि चेत् पृथिव्यादिधर्मास्तैरप्यवश्यं यावत्पृथिव्यादिभाविभिर्भवितव्यं न तु घटादौ दृश्यन्ते, तस्मान्न पृथिव्यादिधर्मा ज्ञानादय इति । अत्र च भाष्यकृता सार्वत्रिकत्वप्रसङ्गविवक्षया नियमशब्दः प्रयुक्तः असार्वत्रिकत्वविवक्षया त्वनियमशब्दः । वार्त्तिककृता तु

(१) 'ज्ञानाद्' इति ज० । 'ज्ञत्वादभूताना'मिति वि० । (२) 'न तु भवतः' इति ज-पु० नास्ति ।
(क) अत्र 'असार्वत्रिकत्वमनियमः' इति युक्तम् ।

## न्यायभाष्यम्

एकशरीरे तु ज्ञातृबहुत्वं निरनुमानम्। भूतचैतनिकस्यैकशरीरे बहूनि भूतानि ज्ञानेच्छाद्वेषप्रयत्नगुणानीति ज्ञातृबहुत्वं प्राप्तम्। ओमिति ब्रुवतः प्रमाणं नास्ति, यथा नानाशरीरेषु नाना ज्ञातारो बुद्ध्यादिगुणव्यवस्थानात्, एवमेकशरीरेऽपि बुद्ध्यादिव्यवस्थाऽनुमानं स्याज् ज्ञातृबहुत्वस्येति।

## न्यायवार्त्तिकम्

एकशरीरे(क) च ज्ञातृबहुत्वं निरनुमानमिति—यस्य भूतानि चेतनानि तस्यैकशरीरे बहूनि भूतानीति बहवश्चेतनाः स्युः। भवन्तु बहवश्चेतनाः किन्नो बाध्यत इति चेत्? न, (१)बहुत्वे प्रत्ययव्यवस्था न भवेत्, (ख) अव्यवस्थानं तु पश्यामः प्रत्ययानां प्रतिसन्धानात्—सर्वः प्रत्ययः

## न्यायवार्त्तिकतात्पर्यटीका

प्रयोज्य एवेत्यवधारणं विवक्षित्वा प्रादेशिके नियमशब्दः प्रयुक्तः। सार्वत्रिके तूक्तनियमरूपावधारणाभावादनियमशब्द इति विवक्षाभेदाश्रयादविरोध इति।

यस्तु नियमं मदशक्त्या व्यभिचारयेत्—यथा किल किण्वादयः परिणामविशेषवन्तो मदिराभावमापन्ना मदयन्ति एवं कायाकारेण परिणतानि पृथिव्यादीनि चेतयन्ते नान्यथा तेन घटादिष्वप्रसङ्ग इति तं प्रत्याह—एकशरीरे चेति। यथा मदिरावयवेषु प्रत्येकमेव मदशक्तिरस्ति न पुनः समुदायमात्रसमवायिनी एवं शरीरावयवेष्वपि प्रत्येकमेव चैतन्येन भवितव्यं न च वैयात्यात् कायसमुदायाश्रयमेव चैतन्यं नावयवाश्रयमिति शक्यमास्थातुं त्रिचतुरावयवच्छेदेऽपि चैतन्योपलम्भात्। तस्मादवयवानां प्रत्येकं चैतन्ये शरीर एकस्मिन् बहवश्चेतनाः स्युः। भवतु किं नो बाध्यत इति चेत्? न, विरुद्धाभिप्रायत्वेन स्वतन्त्राणां न किञ्चिदपि कार्यं जायेत। न च बहूनामेकाभिप्रायनियमो दृष्टः। काकतालीयन्यायेन स्यादेकाभिप्रायत्वं न पुनरस्य नियमो दृष्टचर इति प्रसिद्धत्वाद् दूषणमेतदुपेक्ष्य प्रत्ययव्यवस्था न भवेदिति दूषणमुक्तम्। एकस्मिन् शरीरे प्रत्ययानां परस्परप्रतिसन्धानं पश्यामो न शरीरान्तर इति व्यवस्था। सेयं यद्येकस्मिन् शरीरे एक एव चेतनो न चासौ शरीरान्तरे ततो भवेन्नान्यथेत्यर्थः। क्वचित्पाठः प्रत्ययव्यवस्था नानुमानं स्यादिति स सुगम एव।

## वृत्तिः

स्वमते व्युत्पादयति—( नियमानियमौ तु तद्विशेषकौ )

तद्विशेषकौ तयोश्चेतनाचेतनयोर्विशेषकौ इतरव्यावर्तकौ। नियमानियमौ समवायेन जन्यतानियमतदभावौ, समवायेन ज्ञानेच्छादीनां चेतनधर्मत्वात् अवच्छेदकतया च शरीरे तेषां जन्यजनकभावः, परश्वादौ यत्नविषयतया क्रिया।

वस्तुतस्तु चेष्टैव परश्वादिक्रियाजनिका यत्नादेस्तद्धेतुत्वे मानाभावः ॥ ३७ ॥

---

(१) 'बहुत्वे प्रत्ययव्यवस्थानानुमानम्' इति क-पु० पाठः।

(क) भाष्ये 'तु'शब्दो विशेषः। (ख) 'व्यवस्थानं तु पश्यामः' इति पाठः सम्भाव्यते।

## न्यायभाष्यम्

दृष्टश्च (१)अन्यगुणनिमित्तः प्रवृत्तिविशेषो भूतानां सोऽनुमानमन्यत्रापि। दृष्टः करणलक्षणेषु भूतेषु परश्वादिषु उपादानलक्षणेषु च मृत्प्रभृतिष्वन्यगुणनिमित्तः प्रवृत्तिविशेषः। सोऽनुमानमन्यत्रापि (२)त्रसस्थावरशरीरेषु। तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषो भूतानामन्यगुणनिमित्त इति। स च गुणः प्रयत्नसमानाश्रयः संस्कारो धर्माधर्मसमाख्यातः सर्वार्थः पुरुषार्थाराधनाय प्रयोजको भूतानां प्रयत्नवदिति।

आत्मास्तित्वहेतुभिरात्मनित्यत्वहेतुभिश्च भूतचैतन्यप्रतिषेधः कृतो वेदितव्यः। 'नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थाना'दिति च समानः प्रतिषेध इति। क्रियामात्रं क्रियोपरममात्रं चाऽऽरम्भनिवृत्ती इत्यभिप्रेत्योक्तम् 'तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः'। अन्यथा त्विमे आरम्भनिवृत्ती आख्याते, न च तथाविधे पृथिव्यादिषु दृश्येते। तस्मादयुक्तम् 'तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेध' इति ॥ ३७ ॥

## न्यायवार्त्तिकम्

प्रतिसन्धीयमान एकस्मिन् कार्यकारणसङ्घाते दृष्ट इति। अन्यथाभिधानाच्च—हिताहितप्राप्तिपरीहारार्थः परिस्पन्दः प्रवृत्तिनिवृत्ती, भवता तु क्रियामात्रं क्रियोपरमं चाऽऽश्रित्य तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेध इत्युक्तम् ॥ ३७ ॥

## न्यायवार्त्तिकतात्पर्यटीका

नियमानियमाविति यदुक्तं तत्रानुमानमेव सूचयति भाष्यकारः—दृष्टश्चान्यगुणनिमित्तः प्रवृत्तिविशेष इति। हिताहितप्राप्तिपरिहारहेतुः परिस्पन्दः प्रवृत्तिविशेषः। सोऽयं प्रयोगः—त्रसस्थावरशरीरेषु प्रवृत्तिः स्वाश्रयव्यतिरिक्ताश्रयगुणनिमित्ता प्रवृत्तिविशेषत्वात् परश्वादिगतप्रवृत्तिविशेषवदिति। न केवलं शरीरस्य प्रवृत्तिविशेषोऽन्यगुणनिमित्तः भूतानामपि तदारम्भकाणां प्रवृत्तिविशेषोऽन्यगुणनिबन्धन एवेत्याह—तदवयवव्यूहलिङ्ग इति।

नेन्द्रियार्थयोर्विनाशेऽपि ज्ञानावस्थानादिति च समान इति। यथा हीन्द्रियार्थयोर्विनाशेऽपि ज्ञानावस्थानान्नेन्द्रियार्थयोर्गुणो ज्ञानमेवं बाल्यकौमारवार्द्धकावस्थासु शरीरविनाशेऽपि ज्ञानावस्थानान्न शरीरगुणो ज्ञानमित्यर्थः। अपि च 'ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्यो'रित्यत्राऽऽरम्भनिवृत्तिशब्देन न प्रवृत्तिनिमित्तमात्रमभिमतमस्माकमपि तु हिताहितप्राप्तिपरिहारार्थस्पन्दविशेषः। तमिमं प्रवृत्तिविशेषमज्ञात्वा त्वया प्रवृत्तिसामान्येन प्रत्यवस्थितमित्यप्रतिपत्तिस्ते निग्रहस्थानमित्याह भाष्यकारः—क्रियामात्रमिति। तद्वार्त्तिककारो व्याचष्टे अन्यथाऽभिधानाच्च अयुक्तमिति शेषः ॥ ३७ ॥

(१) 'अन्यान्यगुणनिमित्तः' इति ज०। (२) 'स स्थावरशरीरेषु इति' ज०। 'त्रसत्स्थावरशरीरेषु' इति भा०। 'स त्रसस्थावरशरीरेषु' इति ख०।

## न्यायभाष्यम्

भूतेन्द्रियमनसां समानः प्रतिषेधः, मनस्तूदाहरणमात्रम् ।

## (सू०)—यथोक्तहेतुत्वात् पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ॥ ३८ ॥

'इच्छा-द्वेष-प्रयत्न-सुख-दुःख-ज्ञानान्यात्मनो लिङ्ग'मित्यतः प्रभृति यथोक्तं सङ्गृह्यते, तेन भूतेन्द्रियमनसां चैतन्यप्रतिषेधः ।

पारतन्त्र्यात्—परतन्त्राणि भूतेन्द्रियमनांसि धारण-प्रेरण-व्यूहनक्रियासु प्रयत्नवशात् प्रवर्त्तन्ते, चैतन्ये पुनः स्वतन्त्राणि स्युरिति ।

## न्यायवार्त्तिकम्

यथाविधे च प्रवृत्तिनिवृत्ती (क)प्रयुज्यमानभूताधारस्ते न (१)तथाभूते भूतमात्रे भवत इति भूतेन्द्रियमनसां समानः प्रतिषेधः मनस्तूदाहरणमात्रम् ।

यथोक्तहेतुत्वात् पारतन्त्र्यादकृताभ्यागमाच्च न मनसः । यथोक्तहेतुत्वादिति—दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येवमादीनां हेतूनामप्रतिषेधात् । पारतन्त्र्यादिति—परतन्त्राणि शरीरेन्द्रियमनांसि धारणप्रेरणव्यूहनक्रियासु प्रयत्नवशात् प्रवर्तन्ते चैतन्ये पुनः स्वतन्त्राणि

## न्यायवार्त्तिकतात्पर्यटीका

स्यादेतत्—यथोक्तहेतुत्वादित्यादयो वक्ष्यमाणसूत्रगता हेतवो भूतेन्द्रियचैतन्यप्रतिषेधेऽपि समाना इति कस्मान्मनोमात्रे चैतन्यं प्रतिषिध्यते (२) 'न मनस' (२*) इति ? अत आह—भूतेन्द्रियमनसामिति ।

यथो—सः ( सू० ३८ ) । यथोक्तहेतुत्वादिति व्याचष्टे—इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमित्यतः आत्मलक्षणात् प्रभृति तल्लक्षणपरीक्षापर्यवसानं यावदुक्तं तत् संगृह्यते । अत्र च हेतुशब्देनेच्छादिसूत्रं सुसंगृहीतं भावप्रत्ययेन हेतुत्वविषया परीक्षोपलक्षिता । वार्त्तिकम्—यथोक्तहेतुत्वादिति दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येवमादीनां हेतूनाम् उक्तहेतुत्वं तस्मादिति योजना । तदनेन भाष्यगतप्रभृतिपदार्थो विवृतः । नन्वेते यथोक्ता हेतवः परैः प्रतिषिद्धा इत्यत आह—अप्रतिषेधात् । वाङ्मात्रेण प्रतिषिद्धा न वस्तुत इत्यर्थः । धारण-प्रेरण-व्यूहनक्रियासु यथायोगं शरीरेन्द्रियाणि परतन्त्राणि भौतिकत्वाद् घटादिवदिति । मनश्च परतन्त्रं करणत्वाद् वास्यादिवदिति कस्यचित् प्रयत्नवशात् प्रवर्तन्ते चैतन्ये पुनः स्वतन्त्राणि स्युः । तथा च पारतन्त्र्यप्रसाधकानुमानविरोध इत्यर्थः ।

---

(१) 'तथाविधे' इति क-खधृतपाठान्तरम् । (२) 'न भूतेन्द्रियमनसाम्'-इति ख० ।

(क) अत्र यथार्थः पाठोऽनुसन्धेयः ।

## न्यायभाष्यम्

अकृताभ्यागमाच्च—'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ' इति चैतन्ये भूतेन्द्रियमनसां परकृतं कर्म पुरुषेणोपभुज्यत इति स्यात्, अचैतन्ये तु तत्साधनस्य स्वकृतकर्मफलोपभोगः पुरुषस्येत्युपपद्यत इति ॥ ३८ ॥

## न्यायवार्त्तिकम्

स्युः। अकृताभ्यागमाच्च—चेतनत्वाच्छरीरादीनां तैः कृतं कर्म पुरुषेण भुज्यत इति अकृतकृतागमनाशदोषप्रसङ्गः, अचेतनत्वे तु तत्साधनस्य स्वकृतकर्मफलोपभोग इति ॥ ३८ ॥

## न्यायवार्त्तिकतात्पर्यटीका

यस्तु कश्चिदभ्युपेतवेदप्रामाण्यः पुरुषमचेतनं फलभागिनमभ्युपगम्य शरीरादीनां चैतन्यं रोचयते तं प्रति तेषामचैतन्ये हेतुमाह—अकृताभ्यागमाच्च। उपदेशफलं हि कर्त्तरि कर्त्रपेक्षितोपायताभिधानलक्षणत्वादुपदेशस्य। यथाह स्मात्र भगवान् जैमिनिः—शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वादिति। उपपादितं चैतदस्माभिर्विधिर्विधायक इत्यत्रान्तरे(क)। स्वर्गकामो यजेतेति च कर्त्रभिप्रायफलावगमाद् अत्रैवाऽऽत्मनेपदस्मरणात् य एव कर्मणः कर्त्ता स एव तत्फलस्य भोक्तेति सर्वैरास्तिकपथानुसारिभिरभ्युपेयम्। शरीरादीनां चैतन्ये चेतनस्य स्वातन्त्र्यात् त एव कर्मणः कर्तारः न तेषां भस्मसाद्भूतानामामुष्मिकफलशालितासम्भव इत्यात्मनोऽचेतनस्य तद्भागिताऽभ्युपगन्तव्या। तथा च तैः शरीरादिभिः कृतं कर्म पुरुषेण भुज्यत इति शास्त्रप्रतिक्षिप्ताकृताभ्यागम-कृतनाशदोषप्रसङ्गः। अचैतन्ये तु शरीरादीनां देहाद्यतिरिक्तस्य च पुरुषस्य चैतन्ये पुरुषः स्वातन्त्र्यात् कर्ता तत्प्रयोज्यतया शरीरादीनि तत्साधनानीति तत्साधनस्य स्वकृतकर्मफलोपभोग इति न शास्त्रव्याकोपः नापि प्रेक्षावत्प्रवृत्तिविरोध इति भावः ॥ ३८ ॥

## वृत्तिः

इच्छादीनां मनोगुणत्वाभावे युक्त्यन्तरमाह—( यथोक्तहेतुत्वात् पारतन्त्र्यादकृताभ्यागमाच्च न मनसः )

इच्छादय इति शेषः। 'यथोक्तहेतुत्वात्' ज्ञानेच्छादीनां सामानाधिकरण्येन कार्यकारणभावात्, 'पारतन्त्र्यात्' मनसश्चेतनसहकारित्वाद् इच्छादयो न तद्गुणाः।

वस्तुतस्तु इच्छादीनां पारतन्त्र्यात् पराधीनविषयताशालित्वात्। इच्छादीनां हि समानाधिकरणस्वजनकज्ञानविषयतैव विषयता, ज्ञानवैयधिकरण्ये च तन्न स्यादिति भावः। (ख)स्वकृतात् स्वयंकृतात् कर्मणः अभ्यागमो भोगः, स मनसो यत्नादिमत्त्वे न स्यात्, न

(क) ५५३ अङ्कितपत्रे द्रष्टव्यम्। (ख) एतेन सूत्रे 'स्वकृताभ्यागमाच्च' इति वृत्तिकारसम्मतः पाठोऽनुमीयते।

## न्यायभाष्यम्

अथायं सिद्धोपसंग्रहः—

### (सू०)—परिशेषाद् यथोक्तहेतूपपत्तेश्च ॥ ३९ ॥

आत्मगुणो ज्ञानमिति प्रकृतम्। परिशेषो नाम 'प्रसक्तप्रतिषेधे अन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः'। भूतेन्द्रियमनसां प्रतिषेधे द्रव्यान्तरं न प्रसज्यते शिष्यते चाऽऽत्मा तस्य गुणो ज्ञानमिति ज्ञायते।

यथोक्तहेतूपपत्तेश्चेति 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणा'दित्येवमादीनामात्मप्रतिपत्तिहेतूनामप्रतिषेधादिति। परिशेषज्ञापनार्थं प्रकृतस्थापनाद्विज्ञानार्थं च यथोक्तहेतूपपत्तिवचनमिति।

अथ वा उपपत्तेश्चेति हेत्वन्तरमेवेदम्। नित्यः खल्वयमात्मा, यस्मादेकस्मिन् शरीरे धर्मं चरित्वा कायस्य भेदात् स्वर्गे देवेषूपपद्यते, अधर्मं चरित्वा देहभेदात् नरकेषूपपद्यते इति। उपपत्तिः शरीरान्तरप्राप्तिलक्षणा, सा सति सत्त्वे नित्ये चाऽऽश्रयवती, बुद्धिप्रबन्धमात्रे तु निरात्मके निराश्रया नोपपद्यत इति। एकसत्त्वाधिष्ठानश्चानेकशरीरयोगः संसार उपपद्यते, शरीरप्रबन्धोच्छेदश्चापवर्गो मुक्तिरित्युपपद्यते। बुद्धिसन्ततिमात्रे त्वेकसत्त्वानुपपत्तेर्न कश्चिद्दीर्घमध्वानं सन्धावति न कश्चिच्छरीरप्रबन्धाद्विमुच्यत इति संसारापवर्गानुपपत्तिरिति। बुद्धिसन्ततिमात्रे च सत्त्वभेदात् सर्वमिदं प्राणिव्यवहार-

## न्यायवार्त्तिकम्

अथायं सिद्धोपसंग्रहः—

परिशेषाद् यथोक्तहेतूपपत्तेश्च। आत्मनो गुणो ज्ञानमिति प्रकृतम्। यथोक्तहेतूपपत्तेरिति आत्मप्रतिपादकानां हेतूनामप्रतिषेधात्। परिशेषादिति शरीरेन्द्रियमनसां प्रतिषेधादन्यस्य

## न्यायवार्त्तिकतात्पर्यटीका

अथायं सिद्धोपसंग्रहः उपसंहार इत्यर्थः।

परि—श्च (सू० ३९) ॥ उपपत्तिपदार्थव्याख्यानम् अप्रतिषेधादिति। भाष्यम्—कायस्य

## वृत्तिः

ह्यन्यकृतात् कर्मणो भोगः। न च भोगोऽपि मनसः भोक्तुर्बन्धमोक्षादिभागिन एवाऽऽत्मत्वात् तद्भिन्ने आत्मनि मानाभावात्। आत्मनः सुखादिसाक्षात्कारानुरोधात् महत्त्वं मनसश्च धर्मिग्राहकमानादणुत्वम्, अतोऽपि नैक्यम्।

न च मनसः परमाणुत्वाल्लाघवाच्च नित्यत्वं त्वन्मते, तथा चाऽऽत्ममनसोर्नित्यत्वात् सदा ज्ञानादिप्रसङ्गादनिर्मोक्षः स्यादतोऽन्तःकरणस्यानित्यत्वं तन्नाशश्च मोक्ष इति वाच्यम् अदृष्टाद्यभावेन नित्ययोरपि वन्ध्ययोरिव फलाजनकत्वात्।

## न्यायभाष्यम्

जातमप्रतिसंहितमन्यावृत्तम् (१)अपरिनिष्ठं च स्यात्, ततः (२)स्मरणाभावात् नान्यदृष्टमन्यः स्मरतीति। स्मरणं च खलु पूर्वज्ञातस्य समानेन ज्ञात्रा ग्रहणम् अज्ञासिषममुमर्थं ज्ञेयमिति। सोऽयमेको ज्ञाता पूर्वज्ञातमर्थं गृह्णाति तच्चास्य ग्रहणं स्मरणमिति, तद् बुद्धिप्रबन्धमात्रे निरात्मके नोपपद्यते ॥ ३९ ॥

### (सू०)—स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ॥ ४० ॥

उपपद्यते इति। आत्मन एव स्मरणं न बुद्धिसन्ततिमात्रस्येति। तुशब्दोऽवधारणे। कथम्? ज्ञस्वभावत्वात्। ज्ञ इति अस्य स्वभावः स्वो धर्मः। अयं खलु

## न्यायवार्त्तिकम्

च शिष्यमाणस्यासम्भवात् आत्मनश्च शिष्यमाणत्वात् तस्य गुणो ज्ञानमिति। उपपत्तेरिति वा स्वतन्त्रो हेतुः आत्मनित्यत्व इति। कस्योपपत्तेः? संसारापवर्गयोरुपपत्तेरित्येवमादि भाष्ये ॥३९॥

स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ॥ ४० ॥ (क)

## न्यायवार्त्तिकतात्पर्यटीका

भेदाद् विनाशादिति। अप्रतिसंहितमिति, पूर्वेद्युरर्धकृतानामपरेद्युः परिसमापना दृष्टा मयारब्धं मयैव परिसमापनीयमिति प्रतिसन्धाने, अप्रतिसन्धाने तु न परिसमापयेयुः। परिसमापने वा चैत्रारब्धमपि मैत्रः परिसमापयेत् यतः स्वयमारब्धात् परारब्धम् अव्यावृत्तम् अविशिष्टं स्वस्यापि परत्वाद् अपरिनिष्ठं च कर्मजातं स्यात्। तथा हि वैश्यस्तोमे वैश्य एवाधिकारी न ब्राह्मणराजन्यौ, एवं राजसूये राजैव न ब्राह्मणवैश्यौ, एवं सोमसाधनके यागे ब्राह्मण एवाधिकृतो न राजन्यवैश्यौ, शूद्रश्चानधिकृत एवेति परिनिष्ठा। सा बुद्धिसंततिमात्रे न स्यात्। कुतः? (ख)सलक्षणानां सर्वेषामेव त्रैलोक्यवैलक्षण्येन भेदात्, अन्यापोहसामान्यस्य च निवर्तितत्वादित्यर्थः। अप्रतिसंहितत्वे हेतुमाह—स्मरणाभावादिति ॥ ३९ ॥

स्मर—व्यात् (सू० ४०) ॥ त्रिकालव्यापिनी ज्ञानशक्तिरेव ज्ञस्वाभाव्यम्, तच्चाऽऽकाशादिभ्यो व्यावृत्तं त्रिकालव्यापि स्वरूपमेवाऽऽत्मनः ॥ ४० ॥

## वृत्तिः

न च (ग)ज्ञानादिकं प्रक्रम्य 'इत्येतत् सर्वं मन एवे'ति श्रुतेर्मनस एव ज्ञानादिकम्, अभेदमुखेनोपादानोपादेयभावकथनादिति वाच्यम् 'अन्नं वै प्राणा' इत्यादौ निमित्तेऽपि अभेदोल्लेखदर्शनात् करणत्वमात्रे तात्पर्यादिति तत्त्वम् ॥ ३८ ॥

(१) 'अपरिनिष्ठितं' इति ग-ल-झा०। (२) 'स्मरणाभावः' इति ल-झा०।

(क) अस्य वार्त्तिकं न दृश्यते। (ख) "स्वलक्षणानाम्" इति सम्भाव्यते।

(ग) "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इति बृहदारण्यकश्रुतौ कामः प्रक्रान्तः स चेच्छाविशेष इति ज्ञानप्रक्रमा श्रुतिरनुसन्धेया।

न्यायभाष्यम्

ज्ञास्यति जानाति अज्ञासीदिति त्रिकालविषयेणानेकेन ज्ञानेन सम्बध्यते, तच्चास्य त्रिकालविषयं ज्ञानं प्रत्यात्मवेदनीयं ज्ञास्यामि जानामि अज्ञासिषमिति वर्त्तते, तद् यस्यायं स्वो धर्मस्तस्य स्मरणं न बुद्धिप्रबन्धमात्रस्य निरात्मकस्येति ॥ ४० ॥

स्मृतिहेतूनामयौगपद्याद् युगपदस्मरणमित्युक्तम्। अथ केभ्यः स्मृतिरुत्पद्यत इति ? स्मृतिः खलु—

**( सू० )—प्रणिधान-निबन्धाभ्यास-लिङ्ग-लक्षण-सादृश्य-परिग्रहाश्रयाश्रित-सम्बन्धानन्तर्य-वियोगैककार्य-विरोधातिशय-प्राप्ति-व्यवधान-सुख-दुःखेच्छा-द्वेष-भयार्थित्व-क्रियाराग-धर्माधर्मनिमित्तेभ्यः ॥ ४१ ॥**

सुस्मूर्षया मनसो धारणं प्रणिधानं सुस्मूर्षितलिङ्गचिन्तनं चार्थस्मृतिकारणम्। निबन्धः खल्वेकग्रन्थोपयमोऽर्थानाम्, एकग्रन्थोपयताः खल्वर्था अन्योन्यस्मृतिहेतव

न्यायवार्त्तिकम्

स्मृतिहेतूनामयौगपद्यादयुगपत् स्मरणमित्युक्तम्। अथ केभ्यः स्मृतिरुत्पद्यत इति।

स्मृतिकारणानामयौगपद्यप्रतिपादनार्थं प्रणिधानादिसूत्रम्—

प्रणिधान-निबन्धाभ्यास-लिङ्ग-लक्षण-सादृश्य-परिग्रहाश्रयाश्रित-सम्बन्धानन्तर्य-वियोगैककार्य-विरोधातिशय-प्राप्ति-व्यवधान-सुख-दुःखेच्छा-द्वेष-भयार्थित्व-क्रिया-राग-धर्माधर्मनिमित्तेभ्यः।

न्यायवार्त्तिकतात्पर्यटीका

स्मृतिहेतूनामयौगपद्यादित्येतत् सिंहावलोकितन्यायेन पृच्छत्यनन्तरसूत्रमवतारयितुं स्मृतिहेतूनामिति। तात्पर्याभिधानपुरःसरं सूत्रमवतारयति—स्मृतिकारणानामिति।

प्रणि—भ्यः (सू० ४१)। भाष्यम्—सुस्मूर्षया मनसो धारणमिति। तेषु तेषु विषयेषु

वृत्तिः

आत्मगुणत्वमुपसंहरति—( परिशेषाद्यथोक्तहेतूपपत्तेश्च )

इच्छादिकमात्मगुण इत्यादिः। हेतुमाह—परिशेषात् शरीरादिहेतुनिरासाद् यथोक्तहेतूनां 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' इत्यादीनाम् उपपत्तेः उपपन्नत्वात् ॥ ३९ ॥

स्मृतेरात्मगुणत्वमर्थसिद्धमपि शिष्यबुद्धिवैशद्याय पृथग् व्युत्पादयति—( स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् )

तुरप्यर्थे। ज्ञस्वाभाव्यात् ज्ञानवत्स्वाभाव्यात्। ज्ञानत्वावच्छिन्नवत्त्वं ह्यात्मनः

### न्यायभाष्यम्

आनुपूर्व्येणेतरथा वा भवन्तीति। धारणाशास्त्रकृतो वा (१)प्रज्ञातेषु वस्तुषु स्मर्तव्यानाम् उपनिक्षेपो निबन्ध इति।

अभ्यासस्तु समाने विषये (२)ज्ञानानामभ्यावृत्तिः, अभ्यासजनितः संस्कार आत्मगुणोऽभ्यासशब्देनोच्यते, स च स्मृतिहेतुः समान इति।

लिङ्गं पुनः संयोगि समवाय्येकार्थसमवायि विरोधि चेति। (३)यथा धूमोऽग्नेः, गोर्विषाणम्, पाणिः पादस्य, रूपं स्पर्शस्य, अभूतं भूतस्येति।

लक्षणं पश्ववयवस्थं गोत्रस्य स्मृतिहेतुः, विदानामिदं गर्गाणामिदमिति। सादृश्यं चित्रगतं प्रतिरूपकं देवदत्तस्येत्येवमादि। परिग्रहात् स्वेन वा स्वामी स्वामिना वा स्वं स्मर्यते। आश्रयाद् ग्रामण्या तदधीनं संस्मरति। आश्रितात् तदधीनेन ग्रामण्यमिति। सम्बन्धाद् अन्तेवासिना (४)युक्तं गुरुं स्मरति, ऋत्विजा

### न्यायवार्त्तिकम्

एवमुपपन्नमनित्या बुद्धिरिति ॥ ४१ ॥

इति बुद्धेरात्मगुणत्वप्रकरणम्।

### न्यायवार्त्तिकतात्पर्यटीका

प्रसक्तस्य मनसस्ततो निवारणमित्यर्थः। सुस्मूर्षितलिङ्गानुचिन्तनं (क)वा साक्षाद्वा (५)धारणं तल्लिङ्गे वा प्रयत्न इत्यर्थः। निबन्धः खल्विति। यथा अत्रैव प्रमाणादयोऽर्था एकग्रन्थोपात्ता अन्योन्यस्मृतिहेतवः। (ख)आनुपूर्व्या वा। यथा प्रमाणपदार्थं स्मृत्वा प्रमेयं स्मरति। इतरथा वा। (ग)यथा निग्रहस्थानानां प्रमाणानां स्मृत्वा स्मरति। निबन्धस्य व्याख्यानान्तरमाह—धारणेति। धारणाशास्त्रं जैगीषव्यादिप्रोक्तं तत्कृतो ज्ञातेष्वेव वस्तुषु (६)नाडीचक्र-हृत्पुण्डरीक-कण्ठकूप-नासाग्र-तालु-ललाट-ब्रह्मरन्ध्रादिषु स्मर्तव्यानां बीज-रूप-संस्थानास्त्राभरण(७)भूतां च देवतानाम् उपनिक्षेपः समारोपः। तथा (८) च तत्र देवताः (घ)समारोपितास्तास्तत्तदवयव-

### वृत्तिः

स्वभावः, स्मृतेश्च ज्ञानत्वावच्छिन्नत्वात्तद्धर्मत्वमर्थात् सिद्धम्। यद्वा ज्ञस्वाभाव्यात् स्मृतिहेतुज्ञानस्याऽऽत्मवृत्तित्वे सिद्धे स्मृतेरात्मवृत्तित्वमपि सिद्धम्।

परे तु ज्ञानस्याऽऽशुविनाशित्वात् कथं स्मृतिहेतुतेत्यत्राऽऽह—स्मरणमित्यादि। ज्ञानवतः स्वभावः संस्कारः तस्मादित्यर्थ इत्याहुः ॥ ४० ॥

---

(१) 'प्रज्ञातेषु स्मर्तव्यानां' वि०। (२) 'ज्ञानाभ्यावृत्तिः' इति वि०। (३) 'संयोगि यथा' इति ज-ग०। (४) 'युक्तम्' इति ज-टि-पु० नास्ति। (५) "तत्र धारणतल्लिङ्गे" क-तात्पर्ये मुद्रितम्। (६) नाडीचक्र-' इति क०। (७) '-भूतानां' इति क०। (८) 'च' इति ख-पु-नास्ति।

(क) एतेन भाष्ये 'च'शब्दो विकल्पार्थ इति प्रतिभाति। (ख) भाष्ये 'आनुपूर्व्येण-' इति पाठः। (ग) 'निग्रहस्थानानि स्मृत्वा प्रमाणानां स्मरति' इति पाठः सम्भाव्यते। (घ) 'समारोपितास्तत्तदवयव'— इति पाठः सम्भाव्यते।

## न्यायभाष्यम्

याज्यमिति। आनन्तर्यादिति करणीयेष्वर्थेषु। वियोगाद् येन वियुज्यते तद्वियोगप्रतिसंवेदी भृशं स्मरति। एककार्यात् (१)कर्त्रन्तरदर्शनात् कर्त्रन्तरे स्मृतिः। विरोधात्, विजिगीषमाणयोरन्यतरदर्शनादन्यतरः स्मर्यते। अतिशयाद् येनातिशय उत्पादितः। प्राप्तेः यतो(२)ऽनेन किंचित् प्राप्तमाप्तव्यं वा भवति तमभीक्ष्णं स्मरति। व्यवधानात्

## न्यायवार्त्तिकतात्पर्यटीका

ग्रहणात् स्मर्यन्त इत्यर्थः। अभ्यासजनितः संस्कार आत्मगुणः अत्र अभ्यासशब्देनोच्यते। तेन आदरप्रत्ययावपि संगृहीतौ भवतः तयोरप्यभ्यासवत्संस्काराधानद्वारेणैव स्मृतिहेतुत्वात्। अपि च स्मृतिकारणानां नासमावेशो विवक्षितः तेन संस्कारेण स्मृतिहेतूनां सर्वेषामेव प्रणिधानादीनां समावेश एव। निबन्धादिभिस्तु यथायोगं समावेशासमावेशावूहनीयाविति। अयत्नत उपलब्धं लिङ्गं पुनरिति। संयोगिन उदाहरणम् धूमोऽग्नेरिति। समवायिन उदाहरणम् कुड्यादिव्यवहिताया गोः अव्यवहितप्रत्यक्षं विषाणम्, गवा समस्ति विषाणसमवाय इति समवायि विषाणमुक्तम्; न तु तद्गवि समवायि गोरेव स्वावयवे विषाणादौ समवायात्। एकार्थसमवायीत्यस्य एकार्थस्य समवाय एकार्थसमवायः स यस्यास्ति स एकार्थसमवायीत्यर्थः। तदेतदुदाहरणम्—यथा पाणिः पादस्येति। एकस्य खल्वत्रावयविनः समवायः पादे च पाणौ च, तौ पाणिपादावेकार्थसमवायवन्तौ तत्रैकेनैकार्थसमवायवता प्रत्यक्षेणाप्रत्यक्ष एकः स्मर्यत इति। यदा त्वेकस्मिन्नर्थे समवाय इत्यर्थस्तदा रूपं स्पर्शस्येत्युदाहरणम्। स्वाभाविकाविनाभावयुक्तं लिङ्गं साङ्केतिकं तु चिह्नमिति विशेषः। ग्रामणीः नायकः। यद्यपि सर्वत्र प्रणिधानादौ सम्बन्धः संप्लवते तथाऽपि प्रणिधानादिपरिहाण्या संबन्धान्तरे गोबलीवर्दन्यायेन संबन्धशब्दो वर्तते। न च संबन्धशब्देन सर्वसंग्रहादनर्थकमितरपदोपादानमिति वाच्यम् उक्तमत्र भाष्यकृता—अन्यत्र स्ववाक्यलाघवं नाऽऽद्रियते सूत्रकार इति, शिष्यधीप्रसादश्चैवं भवति विशिष्याभिधानादिति। आनन्तर्यादिति। ब्राह्मे हि मुहूर्ते प्रबोधानन्तरमुत्थानं ततो मूत्रं ततः शौचं ततो मुखप्रक्षालनदन्तधावनादीनि। वियोगादिति शोकमुपलक्षयति। ततोऽपि शोकविषयस्य स्मरति। एककार्यादिति, यथा सप्तदशावराणामृद्धिकामानामेकं सत्रं कार्यम्। तत्रैकं यजमानं दृष्ट्वा यजमानान्तरं स्मरति। अतिशयात् यथा ब्रह्मचारी उपनयनविद्याविनयातिशयोत्पादकमाचार्यं स्मरति। (क)प्राप्तेस्तु यथा प्रार्थकः यतोऽनेन मिष्टमन्नं प्राप्तं प्राप्तव्यं वा

(१) 'कर्त्रन्तरबोधनात्' इति। वि०। (२) 'येन' इति ज०।

(क) 'तु'शब्दो भाष्ये न दृश्यते।

## न्यायभाष्यम्

कोशादिभिरसिप्रभृतीनि स्मर्यन्ते, सुखदुःखाभ्यां तद्धेतुः स्मर्यते। इच्छाद्वेषाभ्यां यमिच्छति यं च द्वेष्टि तं स्मरति। भयाद् यतो बिभेति। अर्थित्वाद् येनार्थी भोजनेनाऽऽच्छादनेन वा। क्रियया रथेन रथकारं स्मरति। रागाद् यस्यां स्त्रियां रक्तो भवति तामभीक्ष्णं स्मरति। धर्माज् जात्यन्तरस्मरणम् इह चाधीतश्रुतावधारणमिति। अधर्मात् प्रागनुभूतदुःखसाधनं स्मरति। न चैतेषु निमित्तेषु युगपत् संवेदनानि भवन्तीति युगपदस्मरणमिति। निदर्शनं चेदं स्मृतिहेतूनां न परिसङ्ख्यानमिति ॥ ४१ ॥

## न्यायवार्त्तिकतात्पर्यटीका

तमभीक्ष्णं स्मरति। इच्छा स्नेहः, स तु भ्रात्रादिषु। द्वेषः प्रतिकूले दारादौ, ताभ्यामपि च तद्विषयं स्मरति। क्रियया कार्येणेत्यर्थः। धर्माद्—वेदाभ्यासजनितेन धर्मेण जातिं स्मरति (१)पूर्विकाम्। एवं जातमात्रस्य स्तनादिसाधनस्मरणं धर्माधर्माभ्यां द्रष्टव्यम्। ननून्मादादयोऽपि स्मृतिहेतवो लोकसिद्धास्तत् किं तेऽपि नोक्ता इत्यत आह—निदर्शनमात्रं चेदं स्मृतिहेतूनामिति ॥ ४१ ॥

## वृत्तिः

स्मृतियौगपद्यसमाधानाय प्रणिधानादीनामुद्बोधकानां क्रमो हेतुरुक्तः तत्र प्रणिधानादीनि दर्शयति—( प्रणिधान-निबन्धाभ्यास-लिङ्ग-लक्षण-सादृश्य-परिग्रहाश्रयाश्रित-सम्बन्धानन्तर्य-वियोगैककार्य-विरोधातिशय-प्राप्ति-व्यवधान-सुखदुःखेच्छा-द्वेष-भयार्थित्व-क्रिया-राग-धर्माधर्म-निमित्तेभ्यः )।

स्मरणमित्यनुवर्त्तते। निमित्तशब्दस्य द्वन्द्वात् परं श्रुतस्य प्रत्येकमभेदेनान्वयः। प्रणिधानं मनसो विषयान्तरसंचारवारणम्। निबन्धः एकग्रन्थोपनिबन्धनम्, यथा प्रमाणेन प्रमेयादिस्मरणम्। अभ्यासः संस्कारबाहुल्यम्। एतस्य यद्यपि नोद्बोधकत्वं तथाऽपि तादृशे शीघ्रमुद्बोधकसमवधानं स्यादित्याशयेन तदुपन्यासः। अभ्यासो दृढतरसंस्कार उद्बोधकत्वेनोक्त इति केचित्। लिङ्गं व्याप्यम्, व्यापकस्य स्मारकम्। लक्षणं यथा कपिध्वजादि अर्जुनादेः। सादृश्यं देहादेः। परिग्रहः स्वीकारस्तस्य स्वस्वामिभावोऽर्थः, तदेकतरेण तदन्यतरस्मरणम्। आश्रयाश्रितौ राजादितत्परिजनौ परस्परस्मारकौ। सम्बन्धः गुरुशिष्यभावादिः गोवृषन्यायात् पृथगुक्तः। आनन्तर्यं प्रोक्षणावघातादेः। वियोगो यथा दारादेः। एककार्याः अन्तेवासिप्रभृतयः परस्परस्मारकाः। विरोधादहिनकुलादेरन्यतरेणापरस्मरणम्। अतिशयः संस्कार उपनयनादिराचार्यादिस्मारकः। प्राप्तिर्धनादे-

(१) 'इति पूर्विकाम्' इति क०।

## न्यायभाष्यम्

अनित्यायां च बुद्धौ उत्पन्नापवर्गित्वात् कालान्तरावस्थानाच्च (१)अनित्यानां संशयः किमुत्पन्नापवर्गिणी बुद्धिः शब्दवत् आहोस्वित् कालान्तरावस्थायिनी कुम्भवदिति। उत्पन्नापवर्गिणीति पक्षः परिगृह्यते। कस्मात्?

## (सू०)—कर्मानवस्थायिग्रहणात् ॥ ४२ ॥

कर्मणोऽनवस्थायिनो ग्रहणादिति। क्षिप्तस्येषोरापतनात् क्रियासन्तानो गृह्यते, प्रत्यर्थनियमाच्च बुद्धीनां (२)क्रियासन्तानवद् बुद्धिसन्तानोपपत्तिरिति(२*)। (३)अवस्थितग्रहणे च व्यवधीयमानस्य प्रत्यक्षनिवृत्तेः। अवस्थिते च कुम्भे गृह्यमाणे

## न्यायवार्तिकम्

अनित्यायां च बुद्धावुत्पन्नापवर्गित्वात् कालान्तरा(४)वस्थितत्वाच्च संशयः उत्पन्नापवर्गिणी बुद्धिः शब्दवत् आहो (५)कालान्तरस्थायिनी कुम्भवदिति। उत्पन्नापवर्गिणीति युक्तम्। कः पुनरयमर्थः उत्पन्नापवर्गिणीति? अन्येभ्योऽपि विनाशिभ्य आशुतरं विनश्यतीति, न त्वयमर्थ उत्पत्त्यनन्तरं (६)ध्वंसत इति। कः पुनरत्र न्यायः? आशुतरविनाशिनी बुद्धिः जातिमत्त्वे सत्यस्मदादि(७)प्रत्यक्षत्वे सति व्यापकद्रव्याश्रितत्वात् (७*) शब्दवत् प्रतिक्षणमपूर्वोत्पत्तौ

## न्यायवार्तिकतात्पर्यटीका

तदेवं सिंहावलोकितं समर्थ्य प्रकृतायामेव बुद्धौ विचारान्तरमारभते—अनित्यायां च बुद्धाविति। द्रव्याश्रितत्वादित्युच्यमानेऽपि चक्षुरादिगतै रूपादिभिर्व्यभिचारोऽत आह—व्यापकद्रव्याश्रितत्वादिति। तथाऽप्यात्मत्वादिभिरनेकान्तोऽत आह—जातिमत्त्वे सतीति। तथाऽपि विभुत्वेन परिमाणेनानेकान्तोऽत आह—अस्मदादिप्रत्यक्षत्वे सतीति। कर्मादिसन्तानविषया बुद्धय आशुतरविनाशिन्यः। अत्र यदि प्रकाशकत्वादित्युच्येत तत आत्मनाऽनेकान्त इत्यत आह—करणत्वे सतीति। तथाऽपि मनःश्रोत्रादिभिरनेकान्तोऽत आह—

## वृत्तिः

दातारं स्मारयति। व्यवधानम् आवरणं यथा खड्गादेः कोशादिः। सुखदुःखयोरन्यतरेणापरस्य, ताभ्यां तत्प्रयोजकस्य वा स्मरणम्। इच्छाद्वेषौ यद्विषयतया गृहीतौ तस्य स्मारकौ। भयं मरणादेर्भयहेतोर्वा स्मारकम्। अर्थित्वं दातुः। शाखादेः क्रिया वाय्वादेः। रागात् प्रीतेः पुत्रादेः स्मरणम्। धर्माधर्माभ्यां जन्मान्तरानुभूतसुखदुःखसाधनयोः प्रागनुभूतसुखादेश्च स्मरणमिति। उक्तेषु च किंचित्स्वरूपसत् किंचिच्च ज्ञातमुद्बोधकम्, शिष्यव्युत्पादनाय चायं प्रपञ्चः ॥ ४१ ॥

समाप्तं बुद्ध्यात्मगुणत्वप्रकरणम् ॥ ३ ॥

---

(१) 'नित्यानाम्' इति ग०। (२) 'क्रियासन्तानोपपत्तिः' इति ख-झा०। 'क्रियासन्तानबुद्धिसन्तानोपपत्तिः' इति वि०। (३) 'अव्यवहितग्रहणे' इति त्रि०। (४) '-वस्थायित्वाच्च' इति क-ख-धृतपाठान्तरम्। (५) 'कालान्तरावस्थायिनी' इति क-ख-धृतपाठान्तरम्। (६) 'ध्वंस' इति क-ख-धृतपाठान्तरम्। (७) '-प्रत्यक्षतायां व्यापकद्रव्यसमवायात्' इति क-ख०।

## न्यायभाष्यम्

सन्तानेनैव बुद्धिर्वर्तते (१)प्राग् व्यवधानात् तेन व्यवहिते प्रत्यक्षं ज्ञानं निवर्तते, कालान्तरावस्थाने तु बुद्धेर्दृश्यव्यवधानेऽपि प्रत्यक्षमवतिष्ठेतेति।

स्मृतिश्चालिङ्गं बुद्ध्यवस्थाने संस्कारस्य बुद्धिजस्य स्मृतिहेतुत्वात्। यश्च मन्येत अवतिष्ठते बुद्धिः दृष्टा हि बुद्धिविषये स्मृतिः सा च बुद्धावनित्यायां कारणाभावान्न स्यादिति। तदिदमलिङ्गम्। कस्मात्? बुद्धिजो हि संस्कारो गुणान्तरं स्मृतिहेतुर्न बुद्धिरिति।

## न्यायवार्त्तिकम्

(क)अयुगपदुत्पत्तौ करणत्वे सति प्रत्यर्थप्रकाशकत्वात्—यस्य प्रतिक्षणमपूर्वोत्पन्नपदार्थप्रकाशकत्वं करणत्वे सति तस्याऽऽशुतरविनाशित्वं दृष्टं यथा प्रदीपस्य (२)प्रतिक्षणमपूर्वोत्पन्नान् प्रध्वंसिनः पदार्थान् बुद्धिः प्रत्यर्थनियमेन प्रकाशयति तस्मादियमप्याशुतरविनाशिनीति। अथवा आशुतर-

## न्यायवार्त्तिकतात्पर्यटीका

प्रत्यर्थेति। एका बुद्धिरेकविषया न विषयान्तरविषया एवमन्या अपि बुद्धयः स्वविषयमात्रे पर्यवसिताः न मनःश्रोत्रादि तथा नानाविषयत्वात्तस्येति। ननु प्रत्यर्थनियतत्वमव्यापकं युगपदनेकार्थसन्निकर्षे सति नानाविषया ह्येका बुद्धिरुपजायतेऽत आह—प्रतिक्षणं कर्मणोऽर्थस्य अपूर्वस्योत्पत्तौ सत्यां तत्कार्याया बुद्धेः अयुगपदुत्पत्तौ कारणक्रमानुविधानात् कार्यक्रमस्य प्रत्यक्षबुद्धेर्विषयकारणत्वात्। एकैकश्चासौ विषयः क्रमोत्पादवान् कारणमिति क्रमवतीनां सर्वासामेव सिद्धं प्रत्यर्थनियतत्वम्। नियमश्च तज्जातीयकर्मान्तरापेक्षया न तु द्रव्यापेक्षया तेन कर्मबुद्धेर्द्रव्यादिविषयत्वेऽपि प्रत्यर्थनियमाविरोधः। प्रत्यर्थनियतत्वविशेषणयोगाच्च प्रागात्मनाऽनैकान्तिकत्वशङ्कायां करणत्वं विशेषणमिति।

प्रयोगान्तरमाह—अथवेति। सुखत्वादिभिरनैकान्तिकत्वं मा भूदत उक्तं गुणत्वे सतीति। रूपादिभिर्व्यभिचारनिवृत्त्यर्थमुक्तम् अबाह्येति।

## वृत्तिः

बुद्धेर्बुद्ध्यन्तराद्विनाश उक्तः, स च तृतीयक्षणवर्तिध्वंसप्रतियोगित्वसिद्धौ स्यात्, अतो बुद्धेरुत्पन्नापवर्गित्वं व्युत्पादनीयम्। तत्र सिद्धान्तसूत्रम्—(कर्मानवस्थायिग्रहणात्)

शरीरादिकर्मधाराया अनवस्थायिन्याः प्रत्यक्षधाराऽपि वाच्या, न चाऽऽद्यबुद्धेरुत्तरग्राहकत्वं विरम्य व्यापाराभावात्, पूर्वपूर्वस्य च परतः परतोऽननुभवाद्विनाशसिद्धावाश्रयनाशादेरभावाद्विरोधिगुणस्यैव नाशकत्वमिति। कर्मवद् बुद्धेरनवस्थायित्वग्रहणादिति वाऽर्थः॥ ४२॥

---

(१) 'प्रागव्यवधानात्' इति ग-क्रा०। (२) 'प्रतिक्षणमुत्पन्नान्' इति क-ख-धृतपाठान्तरम्।

(क) क-ख-वार्त्तिकपुस्तकसम्पादकैः 'अयुगपदुत्पत्ताविति' क्वचिदुपलब्धं टीकाकृता गृहीतत्वादस्माभिरिह निवेशितम्।

## न्यायवार्त्तिकम्

विनाशिनी बुद्धिः गुणत्वे सत्यबाह्यकरणप्रत्यक्षत्वात् सुखवदिति। अस्यार्थस्य ज्ञापनार्थम्—

कर्मानवस्थायिग्रहणात् इति सूत्रम्। यदि तर्ह्यनवस्थायिपदार्थेषु अनवस्थिता बुद्धिः अथ यदा (१) बुद्धिस्थितं कुम्भादिकमुपलभ्यते तदा किं कुम्भवत् कालान्तरावस्थायिनी उताऽऽशु-विध्वंसिनीति? अवस्थितग्रहणेऽपि प्रत्यक्षनिवृत्तेः प्रध्वंसिनी—यदाऽप्यवस्थितं कुम्भादिक-मुपलभते तदाऽपि सन्तानेनैव बुद्धयो निवर्तन्ते। कस्मात्? व्यवहिते प्रत्यक्षनिवृत्तेः—यदि कुम्भवत् कालान्तरावस्थायिनी बुद्धिरभविष्यत व्यवहितेऽपि प्रत्यक्षमवास्थास्यत; न त्वव-तिष्ठते, तस्मान्न कालान्तरावस्थायिनीति। स्मृतेरवतिष्ठत इति चेत्—यदि बुद्धिर्ध्वंसिनी स्यात् स्मृतिर्न स्यात्, न हि बुद्धिभेदे स्मृतिं पश्याम इति, यथा पुरुषान्तरबुद्धिषु, अस्ति च स्मृतिः, तस्मादवतिष्ठते बुद्धिरिति? नात एवानवस्थानात्—न हि बुद्धाववस्थितायां स्मृतिः सम्भवति, स्मृतिर्नाम प्रत्यक्षबुद्धिनिरोधे तत्पूर्वको विषयप्रतिसन्धिः यथेदमद्राक्षमिति, एतच्च न प्रत्यक्षबुद्धाववस्थितायां युक्तमिति। अन्यतश्च तद्भावात् स्मृतिरलिङ्गमिति—येयं स्मृतिर्बुद्धा-ववस्थानलिङ्गत्वेनाभ्युपगम्यते नेयं लिङ्गमन्यतस्तद्भावात्; अवतिष्ठते हि बुद्धिजः संस्कार इति ततः प्रणिधानादिनिमित्तापेक्षात् स्मृतिरिति।

## न्यायवार्त्तिकतात्पर्यटीका

कर्मा—णात् ( सू० ४२ )॥ अवस्थितग्रहणेऽपि प्रत्यक्षनिवृत्तेर्ध्वंसिनीति। यद्यपि शक्यं वक्तुं स्पर्शादिबुद्धिरेकैव तावन्तं कालमवस्थिता व्यवधानादिनाऽर्थसन्निकर्षविनाशाद्विनङ्क्ष्यति निमित्तकारणविनाशोऽपि कार्यविनाशहेतुर्दृष्टः, अपेक्षाबुद्धिविनाशाद् द्वित्वविनाशवदिति, तथाऽपि क्षणिकत्वे हेत्वन्तरादेव सिद्धे बुद्धीनामभ्युच्चयमात्रतयैतद् द्रष्टव्यम्। तथा हि क्षणविध्वंसिवस्तु-विषयबुद्धिक्षणिकत्वसमर्थनेनैव स्थायिवस्तुविषयबुद्धिक्षणिकत्वसमर्थनमपि सूचितम्। स्थिर-गोचरा बुद्धयः क्षणिकाः बुद्धित्वात् कर्मादिबुद्धिवदिति। बुद्धिरेव स्मर्त्री ग्रहीत्री चेत्यात्मभावं बुद्धावारोप्य शङ्कते—स्मृतेरवतिष्ठत इति चेदिति। निराकरोति—नात एवेति। न हि बुद्धिः स्मर्त्री येन तदभावे स्मृतिर्नोत्पद्येत अपि त्वात्मा, स च नित्यः; बुद्धिसद्भावस्तु स्मृति-विरोधीत्यर्थः। अथ यदि बुद्धिर्नास्ति कुतस्तर्हि स्मृतिरुत्पद्यते? न ह्यकारणं कार्यं भवति। न चाऽऽत्ममात्रं कारणं, मा भूदात्मनो नित्यत्वेन स्मृत्युत्पादोऽपि नित्यः। तस्मात् स्मृत्युत्पादोऽपि लिङ्गं बुद्ध्यवस्थान इत्यत आह—अन्यतश्च तद्भावादिति। स्यादेतत्—बुद्धिजः संस्कार-श्चेत् स्मृतिहेतुरथ यावत्संस्कारं स्मृतिः स्यादत आह—ततः प्रणिधानादिति। न संस्कारोऽस्ती-

(१) 'यदावस्थितं'—इति क-ख-धृतपाठान्तरम्।

### न्यायभाष्यम्

हेत्वभावादयुक्तमिति चेत् ? बुद्ध्यवस्थानात् प्रत्यक्षत्वे स्मृत्यभावः। यावदवतिष्ठते बुद्धिस्तावदसौ बोद्धव्यार्थः प्रत्यक्षः प्रत्यक्षे च स्मृतिरनुपपन्नेति ॥ ४२ ॥

**( सू० )—अव्यक्तग्रहणमनवस्थायित्वाद् विद्युत्सम्पाते रूपाव्यक्तग्रहणवत् ॥ ४३ ॥**

यद्युत्पन्नापवर्गिणी बुद्धिः प्राप्तमव्यक्तं बोद्धव्यस्य ग्रहणम् , यथा विद्युत्सम्पाते वैद्युतस्य प्रकाशस्यानवस्थानादव्यक्तं रूपग्रहणमिति ; व्यक्तं तु द्रव्याणां ग्रहणं तस्मादयुक्तमेतदिति ॥ ४३ ॥

**( सू० )—हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा ॥ ४४ ॥**

उत्पन्नापवर्गिणी बुद्धिरिति प्रतिषेद्धव्यं तदेवाभ्यनुज्ञायते विद्युत्सम्पाते रूपाव्यक्तग्रहणवदिति ।

### न्यायवार्त्तिकम्

हेत्वभाव इति चेत्—अथ मन्यसे संस्कारात् स्मृतिर्न बुद्ध्यवस्थानादिति अत्र को हेतुः ? स्मृतिरेव—यद्यवतिष्ठते बुद्धिः स्मृतिर्न स्यादिति ॥ ४२ ॥

अव्यक्तग्रहणमनवस्थायित्वाद् विद्युत्सम्पाते रूपाव्यक्तग्रहणवत् । यद्यनवस्थायिनी बुद्धिरव्यक्तं व्यक्तस्य ग्रहणं प्राप्नोति यथा विद्युत्प्रकाशितानामव्यक्तग्रहणमिति ॥ ४३ ॥

हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा । न विरोधात्, अव्यक्तग्रहणादवस्थायिनी बुद्धिरिति

### न्यायवार्त्तिकतात्पर्यटीका

त्येतावता स्मृतिरपि तु तत्प्रबोधात्। प्रबोधश्च कादाचित्कः कादाचित्कत्वात् प्रणिधानादेरित्यर्थः ॥ ४२ ॥

अव्य—वत् ( सू० ४३ ) ॥ बुद्धिस्थैर्यवाद्याह—(१)यद्यनवस्थायिनीति ॥ ४३ ॥

हेतू—ज्ञा ( सू० ४४ ) ॥ दूषयति—न विरोधादिति। बुद्धिमात्रस्य स्थायित्वं प्रतिज्ञाय विद्युत्संपातजाताया घटादिबुद्धेरनवस्थायित्वाभिधानं विरुद्धमित्यर्थः। अव्यक्त-

### वृत्तिः

शङ्कते—(अव्यक्तग्रहणमनवस्थायित्वाद् विद्युत्सम्पाते रूपाव्यक्तग्रहणवत्)

बुद्धिर्यद्याशुविनाशिनी स्याद् योग्याशेषविशेषधर्मविशिष्टधर्मिग्राहिणी न स्याद् विद्युत्सम्पातकालीनवस्तुग्रहणवत् , न चैवम्, तस्मान्न तथेत्यर्थः ॥ ४३ ॥

(१) 'नावस्थायिनी' इति क० ।

## न्यायभाष्यम्

यत्राव्यक्तग्रहणं तत्रोत्पन्नापवर्गिणी बुद्धिरिति ? (१)ग्रहणहेतुविकल्पाद् ग्रहणविकल्पो न बुद्धिविकल्पात्। यदिदं क्वचिदव्यक्तं (२)क्वचिद् व्यक्तं ग्रहणम् (३) अयं विकल्पो ग्रहणहेतुविकल्पात्, यत्रानवस्थितो ग्रहणहेतुः तत्राव्यक्तं ग्रहणं यत्रावस्थितस्तत्र व्यक्तम्, न तु बुद्धेरवस्थानानवस्थानाभ्यामिति। कस्मात् ? अर्थग्रहणं हि बुद्धिः (४)यत् तदर्थग्रहणमव्यक्तं व्यक्तं वा (५)बुद्धिः सेति। विशेषाग्रहणे च सामान्यग्रहणमात्रम् (६)अव्यक्तग्रहणं (५*) तत्र विषयान्तरे बुद्ध्यन्तरानुत्पत्तिर्निमित्ताभावात्। यत्र समानधर्मयुक्तश्च धर्मी गृह्यते विशेषधर्मयुक्तश्च तद् व्यक्तं ग्रहणम्, यत्र तु विशेषेऽगृह्यमाणे सामान्यग्रहणमात्रं तदव्यक्तं ग्रहणम्। समानधर्मयोगाच्च विशिष्टधर्मयोगो विषयान्तरम्, तत्र (७) यद् ग्रहणं न भवति तद्ग्रहणनिमित्ताभावाद् न बुद्धेरनवस्थानादिति।

## न्यायवार्त्तिकम्

ब्रुवाणोऽनवस्थायिनी बुद्धिरिति यत्प्रतिषेध्यं तदभ्यनुजानासि, तस्य चाभ्यनुज्ञानाद् यदुक्तं कालान्तरावस्थायिनी बुद्धिरिति तद् बाधितं भवति। अव्यक्तग्रहणस्य चान्यनिमित्तत्वात् नाव्यक्तग्रहणाद् बुद्ध्यनवस्थानं सिध्यति, यत्तद् व्यक्तमव्यक्तं च ग्रहणं न बुद्धेरवस्थानानवस्थानाभ्यामपि तु ग्रहणहेतोर्भेदादिति तदसम्भवाच्च। नाव्यक्तं नाम ग्रहणमस्ति। कस्मात् ? अर्थग्रहणमात्रत्वाद् बुद्धेः—अर्थग्रहणमात्रं बुद्धिः, तच्चार्थग्रहणं सामान्यतो विशेषतश्च। यच्च सामान्यविषयं तत् सामान्यं प्रति व्यक्तम्। एवं विशेषविषयम् एवं तद्द्विषयमिति। तदिदमव्यक्तग्रहणं देशितं

## न्यायवार्त्तिकतात्पर्यटीका

ग्रहणस्यान्यथासिद्धत्वं चाऽऽह—अव्यक्तग्रहणस्येति। (८)धर्मिग्रहणहेतोर्भेदात्—अव्यक्तश्च यो धर्मिग्रहणे हेतुः सामान्यमात्रवन्तं धर्मिणं गृह्णाति तद्वशादव्यक्तग्रहणम्, यस्तु सामान्यविशेषवन्तं तद्वशाद् व्यक्तग्रहणमित्यर्थः। धर्मिणं त्वनाश्रित्य स्वे विषये ग्रहणानां तदसंभवाच्च व्यक्तत्वादित्यर्थः। धर्मिणमनाश्रित्येत्यविद्वान् शङ्कते—

---

(१) 'ग्रहणे हेतु-' इति ख-ग-भा०।
(२) 'क्वचिद् व्यक्तम्' इति ज० पु० नास्ति।
(३) 'अयं ग्रहण-' इति ग०।
(४) 'यच्च तदर्थ-' इति ग०।
(५) अयं भागः वि० पु० नास्ति।
(६) 'व्यक्तग्रहणम्' इति ग०।
(७) 'यत्तु' इति ख-ग-भा०।
(८) 'धर्मग्रहण-' इति क०।

## न्यायभाष्यम्

यथाविषयं च ग्रहणं व्यक्तमेव प्रत्यर्थनियतत्वाच्च बुद्धीनाम्। सामान्यविषयं च ग्रहणं स्वविषयं (१)प्रति व्यक्तं विशेषविषयं च ग्रहणं स्वविषयं प्रति व्यक्तं प्रत्यर्थनियता हि बुद्धयः, तदिदमव्यक्तग्रहणं देशितं क्व विषये बुद्ध्यनवस्थानकारितं स्यादिति ?

धर्मिणस्तु धर्मभेदे बुद्धिनानात्वस्य भावाभावाभ्यां तदुपपत्तिः। धर्मिणः खल्वर्थस्य समानाश्च धर्मा विशिष्टाश्च, तेषु प्रत्यर्थनियता नानाबुद्धयः, ता उभय्यो यदि धर्मिणि वर्तन्ते तदा व्यक्तं ग्रहणं धर्मिणमभिप्रेत्य। यदा तु सामान्यग्रहणमात्रं तदाऽव्यक्तं ग्रहणमिति। एवं धर्मिणमभिप्रेत्य व्यक्ताव्यक्तयोर्ग्रहणयोरुपपत्तिरिति ॥ ४४ ॥

## न्यायवार्त्तिकम्

(२)कथमेकस्मिन् विषये बुद्ध्यनवस्थानकारितं स्यात्। लोकविरोध इति चेत्—यदि तर्हि व्यक्ताव्यक्तग्रहणे न स्यातां योऽयं व्यवहारो (३)लोकेषु व्यक्तं पश्यामीति स कथम् ? न अन्यथा तदुपपत्तेः—नायं सामान्यविशेषतद्वत्सु व्यक्ताव्यक्तग्रहणभेदोऽपि तु धर्मिणः सामान्यतोऽधिगतस्य विशेषत उपलिप्साद्वारकमव्यक्तग्रहणमिति। (४)अनैकान्तिकत्वाच्च—नायमेकान्तोऽस्ति यद्विषयग्रहणहेतोर्ग्राह्यस्य चानवस्थानं तत्राव्यक्तग्रहणम् ॥ ४४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

लोकविरोध इति चेदिति। धर्मिग्रहणमाश्रित्य निराकरोति—नान्यथेति। दोषान्तरमाह—अनैकान्तिकत्वाच्चेति। वार्त्तिकव्याख्यानेनैव भाष्यव्याख्या ॥ ४४ ॥

## वृत्तिः

उत्तरयति—( हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा )।

प्रतिषेद्धव्यस्य बुद्धेराशुविनाशित्वस्याभ्यनुज्ञा त्वया कृता विद्युत्सम्पातदृष्टान्तरूपस्य हेतोः साधकस्योपादानात्, तथा चांशतो बाध इति भावः ॥ ४४ ॥

---

(१) 'प्रत्यव्यक्तम्' इति ज०।

(२) 'कतमस्मिन्' इति क-ख-धृतपाठान्तरम्।

(३) लोकेन व्यक्तं—इति क-ख-धृतपाठान्तरम्।

(४) 'अनेकान्ताच्च' इति क-ख०।

न्यायभाष्यम्

(१)न चेदमव्यक्तं ग्रहणं बुद्धेर्बोद्धव्यस्य वाऽनवस्थायित्वादुपपद्यते इति। इदं हि—

## (सू०)—(क)न प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्तद्ग्रहणम् ॥४५॥

अनवस्थायित्वेऽपि बुद्धेस्तेषां द्रव्याणां ग्रहणं व्यक्तं प्रतिपत्तव्यम्। कथम्? प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्। प्रदीपार्चिषां सन्तत्या वर्तमानानां ग्रहणानवस्थानं ग्राह्यानवस्थानं च प्रत्यर्थनियतत्वाद् (२) बुद्धीनां यावन्ति प्रदीपार्चींषि तावत्यो बुद्धय इति। दृश्यते चात्र व्यक्तं प्रदीपार्चिषां ग्रहणमिति ॥ ४५ ॥

न्यायवार्त्तिकम्

न प्रदीपार्चिषः सन्तत्यभिव्यक्तग्रहणवत् तद्ग्रहणम्। अनवस्थायित्वेऽपि यथा प्रदीपार्चिषां सन्तत्या वर्तमानानां ग्राह्यानवस्थानं ग्रहणानवस्थानं च भवति, भवति च व्यक्तं ग्रहणम् अर्चीषीति, यथाऽर्चिःषु तथाऽन्यत्रापीति व्यवस्थितं क्षणिका बुद्धिरिति ॥ ४५ ॥

( इति बुद्धेरुत्पन्नापवर्गित्वप्रकरणम्। )

न्यायवार्त्तिकतात्पर्यटीका

न प्र—णम् ( सू० ४५ ) (ख) ॥

शरीरेति। पूर्वं हि भूतेन्द्रियमनसां चैतन्यं साक्षान्निराकृतमुपक्षेपात् (ग) तु शरीरस्य संप्रति तु शरीरस्यैव साक्षाच्चैतन्यं निरस्यत इति तात्पर्यभेदादपुनरुक्तम्। वस्तुतस्तु पौनरुक्त्यपरिहारं भाष्यकारः प्रकारान्तरेण वक्ष्यति।

वृत्तिः

अस्तु तर्हि तद्दृष्टान्तेनान्यासां बुद्धीनामनवस्थायित्वमित्यत्राऽऽह—( प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्तद्ग्रहणम् )।

यथा प्रदीपार्चिषां सन्तन्यमानानामनवस्थायित्वेऽप्यभिव्यक्तग्रहणं तथाऽन्यत्रापि स्यात्। विद्युत्सम्पातस्थले या बुद्धिरुत्पन्ना सा स्वविषये व्यक्तैवेति भावः ॥ ४५ ॥

समाप्तं बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ॥ ४ ॥

---

(१) 'न वेदं' इति ग०। (२) 'वा बुद्धीनाम्' इति ग०।

(क) अयं 'नशब्दः' ल-ग-ज-झा-पुस्तकेषु 'इदं हि न' इत्येवं भाष्यगततया गृहीतः। फ-पुस्तकपाठस्तु गृहीतः। तद्बीजं ३०३ पत्रे तत्पुस्तक एव द्रष्टव्यम्।

(ख) ४५तम-सूत्रे तात्पर्यटीका नोपलभ्यते।

(ग) 'तु'शब्दोऽयं प्रमादागत इति प्रतिभाति।

## न्यायभाष्यम्

चेतना शरीरगुणः सति शरीरे भावादसति चाभावादिति—

**(सू०)—द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ ४६ ॥**

सांशयिकः सति भावः, स्वगुणोऽप्सु द्रवत्वमुपलभ्यते, परगुणश्चोष्णता, तेनायं संशयः किं शरीरगुणश्चेतना शरीरे गृह्यते अथ द्रव्यान्तरगुण इति ॥ ४६ ॥

न शरीरगुणश्चेतना, कस्मात् ?

**(सू०)—(१)यावद्द्रव्यभावित्वाद्रूपादीनाम् ॥ ४७ ॥**

न रूपादिहीनं शरीरं गृह्यते चेतनाहीनन्तु गृह्यते यथोष्णताहीना आपः, तस्मान्न शरीरगुणश्चेतनेति ।

## न्यायवार्त्तिकम्

शरीरगुणश्चेतना सति शरीरे भावादसति चाभावादिति । यच्च यस्मिन्न सति भवति असति च न भवति तस्य तदिति विज्ञायते यथा रूपादय इति । न सति भावात् शरीरगुणत्वं चेतनायाः सिध्यति सति भावस्यान्यगुणत्वेऽपि दर्शनात् । न तावत् संयोगविभागसंस्काराः कर्मगुणाः अथ च सति कर्मणि भावोऽसति चाभाव इति । संयोगविभागशब्देषु च सत्सु शब्दो भवत्यथ च न तद्गुण इति । तद्गुणत्वं च तत्रोपलब्ध्या सिध्यति—यद् यत्र वर्तमानमुपलभ्यते रूपादिकं तत्तस्य गुण इति । अथ सति भावादित्यनेन शरीरे चेतनोपलब्धिं ब्रूयात् ? तस्याप्यसिद्धता-दोषः—न हि शरीरे चेतनोपलभ्यते, चेतनामात्रं तूपलभ्यते, तच्च सन्दिग्धं किं शरीरे उतान्यस्मिन् इति ।

द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः । उपेत्य शरीरे चेतनोपलब्धिं किं शरीरगुणश्चेतना उत द्रव्यान्तरगुण इति द्रव्ये स्वगुणपरगुणोपलब्धेः संशय इत्युक्तार्थं सूत्रम् ॥ ४६ ॥

## न्यायवार्त्तिकतात्पर्यटीका

तद्गुणत्वं तत्रोपलब्ध्या सिध्यति, अबाधितयेति शेषः ।

द्रव्ये—यः ( सू० ४६ ) ॥ (क)

## वृत्तिः

अथ बुद्धेः शरीरगुणत्वाभावप्रकरणम् । न च प्रागेव तत्सिद्धेरनारम्भणीयमेतत्, गौरोऽहं जानामीत्याद्यनुभवेन तत्साधकानामाभासीकरणादतो विशिष्य तद्व्युत्पादनाय संशयबीजमाह—( द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ) ।

द्रव्ये चन्दनादौ स्वगुणस्य रूपादेः परगुणस्य शैत्यादेश्च ग्रहात् । एवं शरीरे रूपादेरौष्ण्यस्य च ग्रहाद् बुद्ध्यादिः शरीरगुणो न वेति संशयः ॥ ४६ ॥

(१) 'यावच्छरीरभावित्वात्' इति ख० ।
(क) ४६तम-सूत्रे अवतरणिकाव्याख्यातिरिक्ता टीका नास्ति ।

## न्यायभाष्यम्

संस्कारवदिति चेन्न कारणानुच्छेदात्। यथाविधे द्रव्ये संस्कारः तथाविध एवोपरमो न, तत्र कारणोच्छेदादत्यन्तं संस्कारानुपपत्तिर्भवति। यथाविधे शरीरे चेतना गृह्यते तथाविधे एवात्यन्तोपरमश्चेतनाया गृह्यते। तस्मात् संस्कारवदित्यसमः समाधिः।

अथापि शरीरस्थं चेतनोत्पत्तिकारणं स्यात्? द्रव्यान्तरस्थं वा? उभयस्थं वा? तन्न, नियमहेत्वभावात्। शरीरस्थेन कदाचिच्चेतनोत्पद्यते कदाचिन्नेति नियमे हेतुर्नास्तीति। द्रव्यान्तरस्थेन च शरीर एव चेतनोत्पद्यते न लोष्ठादिष्वित्यत्र (१) न (२)नियमे हेतुरस्तीति। (३)उभयस्थस्य निमित्तत्वे शरीरसमानजातीयद्रव्ये चेतना नोत्पद्यते शरीर एव चोत्पद्यते इति नियमे हेतुर्नास्तीति॥ ४७॥

## न्यायवार्त्तिकम्

न शरीरगुणश्चेतना—

(४) यावच्छरीरभावित्वाद्रूपादीनाम्। दृष्टान्तसूत्रम्। वैधर्म्येण—ये शरीरगुणा भवन्ति ते यावच्छरीरं वर्तन्ते यथा रूपादयः, न तु यावच्छरीरं चेतना वर्तते तस्मान्न तद्गुण इति। साधर्म्येण वा न तद्गुण इति (५)यथाऽप्सूष्णतेति। संस्कारवदिति चेत्—अथ मन्यसे यथा संस्कारः शरीरगुणः न च यावच्छरीरं वर्तते तथा चेतनाऽपीति? न कारणानुच्छेदात्—संस्कारस्य न शरीरमात्रं कारणं तस्य नोदनादिकारणसन्निधाने तदभावे भावाभावौ युक्तौ, कारणसन्निधानवतोऽयुक्तमेतदिति। चेतनानिमित्तस्याप्यसन्निधानमिति चेत्—अथ मन्यसे यथैव संस्कारस्य कारणमसन्निहितमेवं चेतनाकारणमपीति? तदयुक्तं विकल्पानुपपत्तेः—यच्छरीरे चेतनोत्पत्तिकारणं तत्किं शरीरस्थमुत द्रव्यान्तरस्थम्? शरीरस्थमपि किं यावच्छरीरभावि उत नैमित्तिकमिति? यदि यावच्छरीरभावि, न कदाचिच्चेतनाहीनं शरीरमुपलभ्येत निमित्तस्य सन्निहितत्वात्। अथ नैमित्तिकम्, यच्छरीरे चेतनोत्पत्तेर्निमित्तस्य कारणं तत्रापि चेतनावत्प्रसङ्गः।

## न्यायवार्त्तिकतात्पर्यटीका

याव—नाम् (सू० ४७)॥ न कारणानुच्छेदात्(क)चेतनायाः—शरीरमस्याः कारणम्, तच्चानुच्छिन्नम्; संस्कारस्य तु कारणस्योच्छेद इति द्रष्टव्यम्॥ ४७॥

## वृत्तिः

तत्र सिद्धान्तसूत्रम्—( यावच्छरीरभावित्वाद् रूपादीनाम् )

'न शरीरगुणश्चेतना' इत्यादौ भाष्यकृतः पूरणम्, न शरीरविशेषगुण इत्यर्थः। अयं

---

(१) 'न' इति ग-पु० नास्ति। (२) 'नियमहेतु-' इति ख०। (३) 'उभयस्थ' इति ख-ग-ज०, 'उभयतः' इति वि०। (४) 'यावच्छरीरभावित्वा-' इति क-ख-धृतपाठान्तरम्। (५) 'यथाप्स्वग्रग्रणतेति' क-ख-धृतपाठान्तरम्।

(क) 'चेतनायाः' इति गृहीतभाष्यगतकारणपदार्थान्वयापेक्षया पूरितम्, भाष्यगतं वा टीकाकृतोपलब्धमिति बोध्यम्।

## न्यायभाष्यम्

यच्च मन्येत सति श्यामादिगुणे द्रव्ये श्यामाद्युपरमो दृष्टः एवं चेतनोपरमः स्यादिति—

**(सू०)—न, पाकजगुणान्तरोत्पत्तेः ॥ ४८ ॥**

(१) नात्यन्तं रूपोपरमो द्रव्यस्य, श्यामे रूपे निवृत्ते पाकजं गुणान्तरं रक्तं रूपमुत्पद्यते, शरीरे तु चेतनामात्रोपरमोऽत्यन्तमिति ॥ ४८ ॥

## न्यायवार्त्तिकम्

अथ द्रव्यान्तरस्थम्, द्रव्यान्तरवृत्ति निमित्तं शरीरे चेतनां करोति न द्रव्यान्तरेष्वित्यत्रापि नियमहेतुर्वक्तव्यः। द्रव्यान्तरस्थं च नित्यमनित्यं वा, अनित्यमपि कालान्तरावस्थायि (२)क्षणप्रध्वंसि वेति चेतनावत् प्रसङ्गः ॥ ४७ ॥

यच्च मन्यते श्यामादिगुणं च द्रव्यं भवति न च यावद्द्रव्यभाविनी श्यामतेति, तच्च (क) न।

न पाकजगुणान्तरोत्पत्तेः। (ख)नात्यन्तं (३)श्यामतोपरमे रूपान्तरोत्पत्तिः चेतनोपरमस्त्वत्यन्तमिति ॥ ४८ ॥

## न्यायवार्त्तिकतात्पर्यटीका

तच्च—

न पाकजगुणान्तरोत्पत्तेः (सू० ४८) इति ॥ नात्यन्तिकः परमाणौ वा (ग)पिठरे वा रूपाभाव इत्यर्थः ॥ ४८ ॥

## वृत्तिः

च तर्काकारः—बुद्ध्यादिकं शरीरविशेषगुणः स्याद् यावच्छरीरंभावि स्याद् रूपादिवत्। तत्परिष्कार्ये चानुमानम्, बुद्ध्यादिकं न शरीरगुणः अयावद्द्रव्यभावित्वात् शब्दवत्, व्यतिरेके रूपवद्वा। अयावद्द्रव्यभावित्वं च आश्रयत्वाभिमतकालीननाशप्रतियोगित्वम् ॥ ४७ ॥

पिठरपाकमते व्यभिचारमाशङ्कते—(न पाकजगुणान्तरोत्पत्तेः)

शरीरे पाकाधीनरूपादिना व्यभिचारान्नोक्तं साधनं युक्तमित्यर्थः। परे तु सिद्धान्त-

---

(१) 'नात्यन्तरूपो-' ग०। (२) 'प्रतिचणं ध्वंसि वेति' इति क-ख-धृतपाठान्तरम्। (३) 'श्यामरूपोपरमे' इति क-ख-धृतपाठान्तरम्।

(क) 'न'शब्दोऽयं प्रमादान्मुद्रितः सूत्रस्थ'नञ्'पदान्वयार्थं वार्त्तिककृता तच्चेत्येतावन्मात्रमेव पूरितम्, अत एव टीकाकृताऽपि तच्चेत्येतावन्मात्रमेव धृतमिति ध्येयम्।

(ख) अत्र 'नात्यन्तं रूपोपरमः श्यामतो परमेरूपान्तरोत्पत्तेः' इति पाठः समीचीनतया सम्भाव्यते।

(ग) "पिठरं स्थाली" इति कोषः। अवयविरूपार्थस्तु लक्षणालभ्य इति बोध्यम्।

## न्यायभाष्यम्

अथापि—

**(सू०)—प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥ ४९ ॥**

यावत्सु द्रव्येषु पूर्वगुणप्रतिद्वन्द्विसिद्धिस्तावत्सु पाकजोत्पत्तिर्दृश्यते पूर्वगुणैः सह पाकजानामवस्थानस्याग्रहणात्। न च शरीरे चेतनाप्रतिद्वन्द्विसिद्धौ सहानवस्थायि गुणान्तरं गृह्यते येनानुमीयेत तेन चेतनाया विरोधः। तस्मादप्रतिषिद्धा चेतना यावच्छरीरं वर्तेत, न तु वर्तते, तस्मान्न शरीरगुणश्चेतना इति ॥ ४९ ॥

## न्यायवार्त्तिकम्

इतश्च—

प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः। यावत्सु द्रव्येषु पूर्वगुणप्रतिषेधस्तावत्सु प्रतिद्वन्द्विनो गुणान्तरस्य दर्शनम्—यथा श्यामनिवृत्तौ रक्तादीनामिति। न पुनः शरीरे चेतनाविपरीतं गुणान्तरमुपलभ्यते चेतनामात्रोपरमस्तु (१)अत्यन्तम् इति। अथ मन्यसे शरीरे-(२)ऽप्यचेतनत्वं नाम गुणान्तरमिति ; तन्न, स्वरूपतोऽनिर्देशात्—यत्तदचेतनत्वं नाम, किं तत् चेतनाविपरीतं धर्मभूतं वस्तु उत चेतनाविप्रतिषेधमात्रमिति ? यदि विपरीतम्, चेतनावत् संवेद्यं स्यात्। अथ चेतनाविप्रतिषेधमात्रम्, तन्न गुण इति ॥ ४९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

तदेवमात्यन्तिकानात्यन्तिकत्वं वैधर्म्यमुक्त्वा सप्रतिद्वन्द्वित्वासप्रतिद्वन्द्वित्वं वैधर्म्यान्तरमाह—इतश्च।

प्रति—धः ( सू० ४९ ) ॥ प्रतिद्वन्द्विसिद्धेः पाकजानां तद्व्यभिचारोद्भावनेन चैतन्यस्य यावच्छरीरभावित्वाप्रतिषेधः ॥ ४९ ॥

## वृत्तिः

सूत्रमेवेदम्। तथाहि न पाकजरूपेण व्यभिचारः शङ्कनीयः, पाकजगुणान्तरस्य रूपान्तरस्योत्पत्तेः। तथा च स्वसमानाधिकरणस्वसमानजातीयासमानकालीनत्वं पूर्वोक्तहेतौ नाशप्रतियोगित्वे विशेषणीयमित्यर्थ इत्याहुः ॥ ४८ ॥

सिद्धान्तसूत्रम्—(प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः)

पाकजानां प्रतिद्वन्द्विनि पूर्वशरीरप्रतिरूपके शरीरान्तरे सिद्धेर्घटादौ पाकजरूपसम्भवेऽपि शरीरे न तत्सम्भवः शरीरावयवानां चर्मादीनामग्निसंयोगविशेषेण नाशावश्यकत्वात्।

परे तु—पाकजानां प्रतिद्वन्द्विनोऽग्निसंयोगात् सिद्धेः। तथा च तादृशाग्निसंयोगासमानाधिकरणत्वमर्थः। तेनाग्निसंयोगनाश्येऽग्निसंयोगजन्ये च न व्यभिचार इत्याहुः।

---

(१) 'अत्यन्तः' इति ख०। (२) 'अचेतना नाम' इति क-ख-धृतपाठान्तरम्।

## न्यायभाष्यम्

इतश्च न शरीरगुणश्चेतना—

### (सू०)—शरीरव्यापित्वात् ॥ ५० ॥

शरीरं शरीरावयवाश्च सर्वे चेतनोत्पत्त्या व्याप्ता इति न क्वचिदनुत्पत्तिश्चेतनायाः, शरीरवच्छरीरावयवाश्चेतना इति प्राप्तं चेतनबहुत्वम् । तत्र यथा प्रतिशरीरं चेतनबहुत्वे सुखदुःखज्ञानानां व्यवस्था लिङ्गम् एवमेकशरीरे(१)ऽपि स्यात्, न तु भवति, तस्मान्न शरीरगुणश्चेतनेति ॥ ५० ॥

यदुक्तं न क्वचिच्छरीरावयवे चेतनाया अनुत्पत्तिरिति (२)सा—

### (सू०)—(क) न केशनखादिष्वनुपलब्धेः ॥ ५१ ॥

केशेषु नखादिषु चानुत्पत्तिश्चेतनाया इति अनुपपन्नं शरीरव्यापित्वमिति ॥ ५१ ॥

## न्यायवार्त्तिकम्

इतश्च न शरीरगुणश्चेतना—

शरीरव्यापित्वात् । शरीरवत् शरीरावयवाश्चेतनोत्पत्त्या व्याप्यन्ते । को व्याप्त्यर्थः ? न कश्चित् शरीरावयवश्चेतनाहीनो भवतीति । सर्वस्य चेतनानिमित्तत्वात् शरीरवच्छरीरावयवाश्चेतनाः प्राप्नुवन्ति । भवन्तु शरीरावयवाश्चेतनाः ? न प्रत्ययव्यवस्थाप्रसङ्गात्—शरीरवत् शरीरावयवाश्चेतना इति प्रत्ययव्यवस्थानं स्यात् ॥ ५० ॥

## न्यायवार्त्तिकतात्पर्यटीका

शरी—त्वात् ( सू० ५० ) ॥ प्रत्ययव्यवस्थाप्रसङ्गात्—यथा देवदत्तस्य ज्ञानं न यज्ञदत्तः प्रतिसन्धत्ते किं तु देवदत्त एवेति व्यवस्था, एवमेकस्मिन् शरीरे अवयवान्तरज्ञानमवयविनो वा ज्ञानं न प्रतिसन्धत्ते इत्यर्थः ॥ ५० ॥

## वृत्तिः

अन्ये तु—शरीरगुणत्वाभावे हेत्वन्तरमाह—प्रतिद्वन्द्वीति । पाकजानां पूर्वरूपादिकं प्रतिद्वन्द्वि विरोधि, एकस्मिन् रूपे विद्यमाने रूपान्तराभावात् ; प्रकृते त्वेकस्मिन् ज्ञाने सत्यपि द्वितीयक्षणे ज्ञानान्तरोत्पत्तेर्ज्ञानादिकं न शरीरविशेषगुण इत्यर्थ इत्याहुः ॥ ४९ ॥

हेत्वन्तरमाह—( शरीरव्यापित्वात् )

शरीरविशेषगुणानामिति शेषः । ज्ञानसुखादिकं तु न शरीरव्यापकम्, हृदयाद्यवच्छेदेन तदानुभविकत्वादिति भावः ॥ ५० ॥

(१) 'अपि'र्नास्ति वि० । (२) 'सः' -इति ग० ।

(क) 'न'कारोऽयं ख-ग-ज-पुस्तकेषु अवतरणिकाभाष्यान्तर्गततया मुद्रितः ।

न्यायभाष्यम्

## (सू०)—त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥५२॥

इन्द्रियाश्रयत्वं शरीरलक्षणम्, त्वक्पर्यन्तं जीवमनःसुखदुःखसंवित्त्यायतनभूतं शरीरम्, तस्मान्न केशादिषु चेतनोत्पद्यते। अर्थकारितस्तु शरीरोपनिबन्धः केशादीनामिति ॥ ५२ ॥

इतश्च न शरीरगुणश्चेतना—

## (सू०)—शरीरगुणवैधर्म्यात् ॥ ५३ ॥

न्यायवार्त्तिकम्

न केशनखादिष्वनुपलब्धेः। न शरीरावयवाश्चेतनाः—'केशनखादिष्वनुपलब्धेः' इति दृष्टान्तसूत्रम् ॥ ५१ ॥

त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः। संयोगिद्रव्यं केशनखादयो न तु शरीरावयवा इति, तस्मान्नायं प्रसङ्ग इति ॥ ५२ ॥

न्यायवार्त्तिकतात्पर्यटीका

न के—ब्धेः ( सू० ५१ ) ॥ दृष्टान्तसूत्रमिति। न करचरणादयश्चेतनाः शरीरावयवत्वात् केशनखादिवदिति दृष्टान्तार्थं सूत्रमित्यर्थः ॥ ५१ ॥

त्वक्—ङ्गः ( सू० ५२ ) ॥ त्वक्पर्यन्तत्वादिति शरीरावयवत्वं केशनखादीनां हेतुरसिद्धः, इन्द्रियाश्रयत्वं शरीरलक्षणम्, तद् यत्र शरीरसमवेतं तेनेन्द्रियाश्रयेणावश्यं भवितव्यम्। त्वक्पर्यन्तश्चावयवसमूहस्तथा न तु केशनखादयस्तादृशा इति न शरीरावयवा इत्यर्थः ॥ ५२ ॥

वृत्तिः

दूषयति—( न केशनखादिष्वनुपलब्धेः )

शरीररूपादेराश्रयव्यापकत्वं न, शारीरस्य गौररूपस्पर्शादेः केशनखादावनुपलब्धेरित्यर्थः ॥ ५१ ॥

दूषयति—( त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः )

स्पष्टम्।

अन्ये तु—चेतना न शरीरगुणः शरीरव्यापित्वात्, शरीरे तदवयवेषु सर्वेष्वेकेन सम्बन्धेन सत्त्वात्, शरीरगुणस्तु न स्वावयववृत्तिः। शङ्कते—न केशेति। चैतन्यस्यानुपलब्धेः। समाधत्ते-त्वगिति, इत्याहुः ॥ ५२ ॥

## न्यायभाष्यम्

द्विविधः शरीरगुणः—अप्रत्यक्षश्च गुरुत्वम्, इन्द्रियग्राह्यश्च रूपादिः, विधान्तरं तु चेतना, (१)नाप्रत्यक्षा संवेद्यत्वात्, (क) नेन्द्रियग्राह्या मनोविषयत्वात्। तस्माद् द्रव्यान्तरगुण इति ॥ ५३ ॥

## (सू०)—न रूपादीनामितरेतरवैधर्म्यात् ॥ ५४ ॥

यथा इतरेतरविधर्माणो रूपादयो न शरीरगुणत्वं जहत्येवं रूपादिवैधर्म्याच्चेतना शरीरगुणत्वं न हास्यतीति ॥ ५४ ॥

## न्यायवार्त्तिकम्

इतश्च न शरीरगुणश्चेतना—

शरीरगुणवैधर्म्यात्। द्वये शरीरगुणा भवन्ति बाह्यकरणप्रत्यक्षा रूपादयोऽतीन्द्रियं च गुरुत्वम्, विधान्तरं तु चेतना न बाह्यकरणप्रत्यक्षा (ख) स्वसंवेद्यत्वात्, नातीन्द्रिया मनोविषयत्वात, तस्मान्न शरीरगुण इति ॥ ५३ ॥

न रूपादीनामितरेतरवैधर्म्यात्। यथेतरेतरविधर्माणो रूपादयो न शरीरगुणत्वमतिवर्त्तन्ते तथा रूपादिवैधर्म्ये सति चेतना शरीरगुणत्वं न हास्यति ॥ ५४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

शरी—र्म्यात् ( सू० ५३ ) ॥ (ग)

न रू—र्म्यात् ( सू० ५४ ) ॥ (घ)

## वृत्तिः

हेत्वन्तरमाह—( शरीरगुणवैधर्म्यात् )

बुद्धिर्न शरीरगुणः शरीरगुणवैधर्म्यात् बहिरिन्द्रियावेद्यत्वे सति मनसा वेद्यत्वात् ॥ ५३ ॥

आक्षिपति—( न रूपादीनामितरेतरवैधर्म्यात् )

नोक्तं युक्तं रूपादीनां परस्परवैधर्म्यात्। तथा च त्वद्रीत्या स्पर्शादीनां शरीरगुणत्वं न स्यादचाक्षुषत्वात्। तथा चोक्तमप्रयोजकमिति भावः ॥ ५४ ॥

---

(१) 'प्रत्यक्षा' इति ज०।

(क) मनस इन्द्रियत्वस्य नैयायिकसम्मतत्वेन अत्रेन्द्रियपदं भाष्यकृता बहिरिन्द्रियमात्रतात्पर्येण प्रयुक्तमित्यवसीयते।

(ख) 'स्वसंवेद्यत्वात्' इति पाठः प्रतिभाति। बाह्येन्द्रियजन्यप्रत्यक्षविषयो हि परेषामपि प्रत्यक्षयोग्यः, चेतना तु केवलं स्वाश्रयेणाऽऽत्मना गृह्यते इति भावः।

(ग-घ) ५३-५४ तम-सूत्रयोस्तात्पर्यटीका नोपलभ्यते।

# (सू०)—ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ॥ ५५ ॥

## न्यायभाष्यम्

(१)अप्रत्यक्षत्वाच्चेति। (२)यथेतरेतरविधर्माणो रूपादयो न द्वैविध्यमतिवर्तन्ते तथा रूपादिवैधर्म्याच्चेतना न द्वैविध्यमतिवर्तेत यदि शरीरगुणः स्यादिति। अतिवर्त्तते तु, तस्मान्न शरीरगुण इति।

भूतेन्द्रियमनसां ज्ञानप्रतिषेधात् सिद्धे सत्यारम्भो विशेषज्ञापनार्थः, बहुधा परीक्ष्यमाणं तत्त्वं सुनिश्चिततरं भवतीति ॥ ५५ ॥

## न्यायवार्त्तिकम्

ऐन्द्रियकत्वाद् रूपादीनामप्रतिषेधः। द्वये शरीरगुणा भवन्तीत्युक्तः सूत्रार्थः। रूपादीनामितरेतरवैधर्म्यमननुसंहितं चाव्यावृत्तं चेति वैधर्म्यमात्रम् अन्वयव्यतिरेकि तु चेतनायाः शरीरगुणत्वसाधनं न भवतीति, तस्मादसममेतत्।

## न्यायवार्त्तिकतात्पर्यटीका

ऐन्द्रि—धः (सू० ५५)॥ रूपादीनां (क)त्वितरेतरवैधर्म्यमननुसंहितं च शरीरगुणत्वेनानन्वितमित्यर्थः। न हि येषां चाक्षुषत्वरासनत्वादिरूपवैधर्म्ययोगस्ते न शरीरगुणा इति दृष्टम्। अव्यावृत्तं च शरीरगुणानां तादृशवैधर्म्यदर्शनात्। तस्मादशरीरगुणत्वान्वयव्यतिरेकाभावाद्वैधर्म्यमात्रमेतत्। बाह्यकरणप्रत्यक्षाप्रत्यक्षशरीरगुणवैधर्म्यं मानसप्रत्यक्षत्वम् अन्वयव्यतिरेकि तु चेतनायाः शरीरगुणत्वसाधनं न भवति अपि तु तदन्यगुणत्वसाधनमित्यर्थः (ख)विशेषप्रतिषेधस्य शेषाभ्यनुज्ञाहेतुत्वादिति।

## वृत्तिः

समाधत्ते—( ऐन्द्रियकत्वाद् रूपादीनामप्रतिषेधः )

रूपादीनां न शरीरगुणत्वप्रतिषेधः। कुतः? ऐन्द्रियकत्वात् तत्तदिन्द्रियाग्राह्यत्वलक्षणतत्तद्गुणवैधर्म्येऽपि शरीरगुणत्वावच्छिन्नवैधर्म्यस्य बहिरिन्द्रियाग्राह्यत्वे सति ग्राह्यत्वस्याभावात्। बुद्धौ च तत्सत्त्वादिति भावः ॥ ५५ ॥

समाप्तं बुद्धेः शरीरगुणभेदप्रकरणम् ॥ ५ ॥

---

(१) 'प्रत्यक्षत्वात्' इति टि०।

(२) 'यथेतरविधर्माणो' इति वि०।

(क) 'तु' शब्दो वार्त्तिके नोपलभ्यते।

(ख) स्थूलाक्षरैरादर्शपुस्तकयोर्मुद्रितोऽप्ययमंशो भाष्ये वार्त्तिके वा नोपलभ्यते इति सूक्ष्माक्षरैर्मुद्रितम्।

## न्यायभाष्यम्

परीक्षिता बुद्धिः, मनस इदानीं परीक्षाक्रमः। तत् किं प्रतिशरीरमेकमनेकमिति विचारे—

## (सू०)—ज्ञानायौगपद्यादेकं मनः ॥ ५६ ॥

अस्ति (१) खलु वै ज्ञानायौगपद्यमेकैकस्येन्द्रियस्य यथाविषयम्, करणस्यैकप्रत्ययनिर्वृत्तौ सामर्थ्यात्, न तदेकत्वे मनसो लिङ्गम्। यत्तु खल्विदमिन्द्रियान्तराणां विषयान्तरेषु ज्ञानायौगपद्यमिति तल्लिङ्गम्। कस्मात्? सम्भवति खलु वै बहुषु मनःस्विन्द्रियमनःसंयोगयौगपद्यमिति ज्ञानयौगपद्यं स्यात्, न तु भवति। तस्माद्विषये प्रत्ययपर्यायादेकं मनः ॥ ५६ ॥

## न्यायवार्त्तिकम्

ये हेतवोऽनेन (२)प्रकरणेन लभ्यन्ते तेषां प्रयोगः—न शरीरगुणश्चेतना निमित्तान्तराभावे विरोधिगुणादर्शने च सत्ययावद्द्रव्यभावित्वात् अप्सु औष्ण्यवदिति। शरीरव्यापित्वादिति तु न साधनम्, किन्तु शरीरे चेतनां ब्रुवतो दोषोऽनेकचेतनत्वप्रसङ्गः। न शरीरगुणश्चेतना बाह्यकरणाप्रत्यक्षत्वात् सुखादिवदिति। अथेदं प्रकरणं निर्णीतार्थं कस्मात् पुनरारभ्यमिति? बहुधा परीक्ष्यमाणं तत्त्वं निश्चिततरं भवतीत्यत आरभ्यत इति ॥ ५५ ॥

( इति बुद्धेः शरीरगुणव्यतिरेकप्रकरणम् )

परीक्षिता बुद्धिरिति मनोऽवसरप्राप्तं परीक्ष्यते। तत् प्रतिशरीरमेकमनेकमिति वा विचारे—

ज्ञानायौगपद्यादेकं मनः। अयुगपज्ज्ञानानि भवन्तीति प्रत्यक्षम् एतच्च मनस एकत्वं साधयति। कथमिति? यदि बहूनि मनांसि स्युः प्रतीन्द्रियं मनसः सम्बन्ध इति युगपदनेकार्थसन्निधाने युगपदनेकज्ञानानि भवेयुः। यस्त्वेकेन्द्रियग्राह्येष्वर्थेषु विज्ञानानामयुगपद्भावः तन्न मनस एकत्वे लिङ्गम् अन्यतस्तद्भावात् अन्यथां हि करणत्वात्तद्भवतीत्युक्तम् ॥ ५६ ॥

## न्यायवार्त्तिकतात्पर्यटीका

ये हेतव इति बहुवचनं हेत्वेकदेशविवक्षया। न शरीरगुणश्चेतना अयावद्द्रव्यभावित्वादित्युच्यमाने संस्कारेणानेकान्त इत्यत उक्तम्—निमित्तान्तराभाव इति। तथाऽपि पाकजेन गुणेनानेकान्त इत्यत उक्तं—विरोधिगुणादर्शने चेति। शरीरव्यापित्वादिति न साधनमिति। प्रसङ्गो हि न साधनं हेतोरभावात्। यथाऽऽहुः—'अस्ति (३)प्रसङ्गो न प्रसङ्गसाधनमिति। बाह्यकरणाप्रत्यक्षत्वादिति। न च गुरुत्वादिभिरनेकान्तः तेषां खल्वप्रत्यक्षत्वमेव न तु बाह्यकरणप्रत्यक्षत्वमिति भावः ॥ ५५ ॥

ज्ञाना—नः (सू० ५६)॥ मनःस्वरूपपरीक्षायां भाष्यवार्त्तिके निगदेनैव व्याख्याते ॥५६॥

(१) 'खलु' इति नास्ति वि—टि०। (२) 'प्रकारेण' इति ख-पु०-धृतपाठान्तरम्। (३) 'प्रसङ्गः' इति क०।

## (सू०)—न युगपदनेकक्रियोपलब्धेः ॥ ५७ ॥

### न्यायभाष्यम्

अयं खल्वध्यापकोऽधीते व्रजति कमण्डलुं धारयति पन्थानं पश्यति (१)शृणोत्यारण्यजान् शब्दान्(१*) (२)बिभ्यद् (३)व्याललिङ्गानि बुभुत्सते स्मरति च गन्तव्यं (क)स्थानीयमिति। क्रमस्याग्रहणाद् युगपदेताः क्रिया इति प्राप्तं मनसो बहुत्वमिति ॥ ५७ ॥

## (सू०)—अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात् ॥ ५८ ॥

आशुसञ्चाराद् (ख)अलातस्य भ्रमतो विद्यमानः क्रमो न गृह्यते। क्रमस्याग्रहणाद्·

### न्यायवार्त्तिकम्

न युगपदनेकक्रियोपलब्धेः इति। शेषं भाष्ये ॥ ५७ ॥

### न्यायवार्त्तिकतात्पर्यटीका

न यु—ब्धेः ( सू० ५७ ) ॥ (ग) संस्थानं स्थानम् ॥ ५७ ॥

### वृत्तिः

अथ क्रमप्राप्ता मनःपरीक्षा। तत्र प्रतिशरीरमेकं मनः चक्षुरादिसहकारितया मनःपञ्चकं वेति संशये मनःपञ्चकमेवोचितम्, तेन प्रत्येकसकलमनःसम्बन्धासम्बन्धाभ्यां व्यासङ्गयौगपद्ये उपपद्येते इति पूर्वपक्षे सिद्धान्तसूत्रम्—( ज्ञानायौगपद्यादेकं मनः )

प्रतिशरीरं मनोनानात्वे व्यासङ्गस्थलेऽपि यौगपद्यं स्यादतो न मनोनानात्वमिति भावः ॥ ५६ ॥

दीर्घशष्कुलीभक्षणादौ ज्ञानयौगपद्यान्नानात्वं स्यादित्याशङ्कते—( न, युगपदनेकक्रियोपलब्धेः )

न एकं मनः अनेकक्रियाणाम् अनेकज्ञानानामुपलब्धेरित्यर्थः ॥ ५७ ॥

---

(१) 'शृणोत्यारण्यजीवशब्दान्' इति टि०। (२) 'बिभेति' इति ख-ग-झा०। 'बिभर्ति' इति वि०।

(३) 'ध्यानलिङ्गानि' इति वि०।

(क) 'स्थानीयम्' इति ख-ज०। 'संस्थायनम्' इति ग०। 'स्थानीयम्' इति फ-झा०। 'संस्थायनम्' इति 'संस्थापनम्' इति ल-पु० पाठान्तरतया धृतम्। 'स्थानीय'मिति पाठे नगरमित्यर्थः।

(ख) 'अलातः' अङ्गारम्। ज्वलदलातभ्रमणं चाद्यापि बालकैरुत्सवेषु क्रियमाणं दृश्यते।

(ग) क-तात्पर्ये 'संस्थापनं स्थापनम्' इति ख-तात्पर्ये च 'संस्थापनं स्थानम्' इति मुद्रितम्। शब्दकल्पद्रुमे संस्थायशब्दस्य गृहं सन्निवेश इत्यर्थौ दृश्येते। तथाच संस्थानशब्दस्यापि तथाऽर्थौ भवितुमर्हतीति "संस्थानं स्थानम्" इति 'संस्थायः स्थानम्' इति वा पाठः। टीकाकृता स्वीयभाष्यग्रन्थे 'संस्थानम्' इति उपलब्धमिति सम्भाव्य टीकायामपि तथा मुद्रितमस्माभिः। 'संस्थापन'मिति पाठे तु चिन्त्यः।

## न्यायभाष्यम्

विच्छेदबुद्ध्या चक्रवद् बुद्धिर्भवतीति(१)। तथा बुद्धीनां क्रियाणां चाऽऽशुवृत्तित्वाद् विद्यमानः क्रमो न गृह्यते क्रमस्याग्रहणाद् युगपत् क्रिया भवन्तीति अभिमानो भवति।

किं पुनः क्रमस्याग्रहणाद् युगपत् क्रियाभिमानः, अथ युगपद्भावादेव युगपदनेकक्रियोपलब्धिरिति नात्र विशेषप्रतिपत्तेः कारणमुच्यते (२) इति। उक्तमिन्द्रियान्तराणां विषयान्तरेषु पर्यायेण बुद्धयो भवन्तीति तच्चाप्रत्याख्येयमात्मप्रत्यक्षत्वात्। अथापि दृष्टश्रुतानर्थान् चिन्तयतः क्रमेण बुद्धयो वर्तन्ते न युगपदनेनानुमातव्यमिति। वर्णपदवाक्यबुद्धीनां तदर्थबुद्धीनां चाऽऽशुवृत्तित्वात् क्रमस्याग्रहणम्। कथम्? वाक्यस्थेषु खलु वर्णेषूच्चरत्सु प्रतिवर्णं तावच्छ्रवणं भवति, श्रुतं वर्णमेकमनेकं वा पदभावेन (३)स प्रतिसन्धत्ते, प्रतिसन्धाय पदं व्यवस्यति, पदव्यवसायेन स्मृत्या पदार्थं प्रतिपद्यते, पदसमूहप्रतिसन्धानाच्च वाक्यं व्यवस्यति, सम्बद्धांश्च पदार्थान् गृहीत्वा वाक्यार्थं प्रतिपद्यते। न चाऽऽसां क्रमेण वर्तमानानां बुद्धीनामाशुवृत्तित्वात् क्रमो गृह्यते, तदेतदनुमानमन्यत्र बुद्धिक्रियायौगपद्याभिमानस्येति। न चास्ति मुक्तसंशया युगपदुत्पत्तिर्बुद्धीनां यया (४)मनसां बहुत्वमेकशरीरेऽनुमीयेत इति ॥ ५८ ॥

## न्यायवार्त्तिकम्

अस्योत्तरद्वारकं सूत्रम्—

अलातचक्रदर्शनवत् तदुपलब्धिराशुसञ्चारात्। यथाऽलातस्य भ्रमतो विद्यमानः क्रमो नोपलभ्यते तथा बुद्धीनामाशुभावाद् विद्यमानः क्रमो नोपलभ्यते (५, क)न चास्त्युभयपक्षसम्प्रतिपन्ना युगपदुत्पत्तिर्यया बहुत्वं मनसः प्रतिपद्येमहीति ॥ ५८ ॥

## न्यायवार्त्तिकतात्पर्यटीका

अला—रात् ( सू० ५८ ) ॥ (ख)

## वृत्तिः

समाधत्ते—( अलातचक्रदर्शनवत् तदुपलब्धिराशुसञ्चारात् )

क्रमिकेऽपि 'तदुपलब्धिः' यौगपद्योपलब्धिः आशुसञ्चारात् शीघ्रसञ्चारात्मकदोषात्, यथा अलातचक्रे वेगातिशयेन भ्राम्यमाणे क्रियासन्तानस्य भेदेनानुपलब्धिरिति ॥ ५८ ॥

---

(१) 'इति' शब्दः ग-पु० नास्ति।
(२) 'इति' शब्दः ग०पु० नास्ति। (३) 'स' इति फ-ग-भा-पु० नास्ति। (४) 'मनसः' इति ग०।
(५) 'न चास्त्युभयपक्षसम्प्रतिपन्ना' इति क-खधृतपाठान्तरम्।
(क) सूत्रोक्तं पूर्वपक्षिणोऽभिमानं निरस्यति नेति।
(ख) ५८तम-सूत्रे तात्पर्यटीका नोपलभ्यते।

## (सू०)—यथोक्तहेतुत्वाच्चाणु ॥ ५९ ॥

### न्यायभाष्यम्

अणु मन एकं चेति धर्मसमुच्चयो ज्ञानायौगपद्यात्। महत्त्वे मनसः सर्वेन्द्रियसंयोगाद् युगपद्विषयग्रहणं स्यादिति ॥ ५९ ॥

मनसः खलु भोः सेन्द्रियस्य शरीरे वृत्तिलाभो नान्यत्र शरीरात्। ज्ञातुश्च पुरुषस्य शरीरायतना बुद्ध्यादयो विषयोपभोगो जिहासितहानमीप्सितावाप्तिश्च सर्वे च शरीराश्रया व्यवहाराः। तत्र खलु विप्रतिपत्तेः संशयः—किमयं पुरुषकर्मनिमित्तः शरीरसर्गः आहोस्विद् भूतमात्रादकर्मनिमित्त इति। श्रूयते खल्वत्र विप्रतिपत्तिरिति।

तत्रेदं तत्त्वम्—

## (सू०)—पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ६० ॥

पूर्वशरीरे या प्रवृत्तिर्वाग्बुद्धिशरीरारम्भलक्षणा तत्पूर्वकृतं कर्मोक्तम्. तस्य फलं

### न्यायवार्त्तिकम्

(१) यथोक्तहेतुत्वाच्चाणु। य एवैकत्वे हेतुर्मनस उक्तोऽनेनैवाणु मनोऽवसातव्यमिति ॥ ५९ ॥

( इति मनःपरीक्षाप्रकरणम्। )

मनसः खलु भोः सेन्द्रियशरीरे वृत्तिः। शरीरे (२) विचार्यमाणे मन एव विचारितं भवत्यतः शरीरं पुनर्विचार्यते—किमयं शरीरसर्गः कर्मनिरपेक्षैर्भूतैरारभ्यते आहोस्वित् सापेक्षैरिति। विप्रतिपत्तेः संशयः—श्रूयते खल्वत्र विप्रतिपत्तिः।

तत्रेदं तत्त्वम्—

पूर्वकृतफलानुबन्धात् तदुत्पत्तिः। पूर्वशरीरे या प्रवृत्तिर्वाग्बुद्धिशरीरारम्भलक्षणा

### न्यायवार्त्तिकतात्पर्यटीका

यथो—णु ( सू० ५९ ) ॥ (क)

मनसि विचार्यमाणे कः संबन्धः शरीरोत्पत्तिनिमित्तविचारस्येत्यत आह—मनसः खल्विति। मन एवाधिकरणविचारेणापि परीक्ष्यत इति नासंबन्धः शरीरोत्पत्तिनिमित्तविचारस्य। परित ईक्षा परीक्षा सा च स्वरूपतश्च संबन्धितश्च, शरीरं च मनःसंबन्धि, तदधिकरणत्वान्मनसः। तस्मान्मनस एव परीक्षा या शरीरस्येत्यर्थः।

### वृत्तिः

ननु यौगपद्योपपादकतया मनसो वैभवं स्यादत्राऽऽह—( यथोक्तहेतुत्वाच्चाणु )

(१) 'यथोक्तनिमित्तत्वाच्चाणु' इति क-खधृतपाठान्तरम्। (२) 'विचारिते' इति क-खधृतपाठान्तरम्।
(क) ५९तम-सूत्रे तात्पर्यटीका नोपलभ्यते।

## न्यायभाष्यम्

तज्जनितौ धर्माधर्मौ। तत्फलस्यानुबन्ध आत्मसमवेतस्यावस्थानम्. तेन प्रयुक्तेभ्यो भूतेभ्यस्तस्योत्पत्तिः शरीरस्य, न स्वतन्त्रेभ्य इति। यदधिष्ठानोऽयमात्मा (१)अयमहमिति मन्यमानो यत्राभियुक्तो यत्रोपभोगतृष्णया विषयानुपलभमानो धर्माधर्मौ संस्करोति तदस्य शरीरम्, तेन संस्कारेण धर्माधर्मलक्षणेन भूतसहिते पतितेऽस्मिन् शरीरे (२)उत्तरं निष्पद्यते, निष्पन्नस्य चास्य पूर्वशरीरवत्पुरुषार्थक्रिया, पुरुषस्य च पूर्वशरीरवत्

## न्यायवार्त्तिकम्

तत् पूर्वकृतम्, तस्य फलं—तज्जनितौ धर्माधर्मौ, तयोरनुबन्धः—आत्मसमवेतयोरवस्थानम्, विपाककालस्यानियमात्—अनियतो विपाककाल इहामुत्र जात्यन्तरे चेति। तेनावस्थितेन प्रयुक्तेभ्यो भूतेभ्यः तस्य शरीरस्योत्पत्तिर्न स्वतन्त्रेभ्यः। कस्मात् पुनः कर्म धर्माधर्मसंज्ञकमुत्पत्तिसमकालं फलं न ददाति? क एवमाह न ददातीति विपाककालस्यानियमात्—यदाऽशेषकारणसन्निधानं भवति, सन्निधानेऽपि यदा कारणान्यप्रतिबद्धानि भवन्ति तदा (३)ददात्येव; यदा पुनर्न ददाति तदा विपच्यमानकर्मातिशयप्रतिबन्धात्—यो विपच्यमानः कर्मातिशयो भवति यस्य (४)धर्माधर्मसमाख्या सोऽनुपभुक्तफलः तेन प्रतिबन्धाद्व विद्यमानमपि कर्म फलं न ददाति। यानि वा प्राण्यन्तराणि तस्य कर्मणः समानोपभोगानि तेषां विपच्यमानैः

## न्यायवार्त्तिकतात्पर्यटीका

पूर्व—त्तिः ( सू० ६० )॥ उत्पत्तिसमकालमिति। सममिव समम्, उत्पत्त्यनन्तरमित्यर्थः। क एवमाह न ददातीति। यदि समग्रं भवति तत उत्पत्त्यनन्तरं दास्यत्येवेत्यर्थः। विपच्यमानः (क)कर्मातिशय इति, स्वफलं भोजयन्नित्यर्थः। यानि वा प्राण्यन्तराणि तस्य कर्मणः समानोपभोगानीति। तद्व यथा किन्नरत्वनिर्वर्त्तनीयं कर्म स्त्रीपुंसभोग्यं स्त्रीपुंसयोरन्यतरकर्मप्रतिबन्धे फलं न ददातीति। यानि (ख) प्राण्यन्तराणि स्नेहविषया भ्रात्रादयः तस्य कर्मणो (५)भागीनीति कर्मफलानाम् (ग)अन्नाद्यश्वग्रामादीनां भागित्वात् कर्म-

## वृत्तिः

मन इति शेषः। यथोक्तस्य ज्ञानायौगपद्यस्य हेतुत्वाद् मनोऽणुत्वसाधकत्वादित्यर्थः॥ ५९॥

समाप्तं मनःपरीक्षाप्रकरणम्॥ ६॥

अथ प्रसङ्गाच्छरीरस्य तत्तत्पुरुषादृष्टनिष्पाद्यताप्रकरणम्। अथवा एकत्रैव शरीरे मनसः सर्वैरात्मभिः सह संयोगात् सर्वत्रैव मनसा ज्ञानं जन्यतामतस्तत्तददृष्टजन्यताप्रति-

(१) 'यमह'मिति ज०। (२) 'शरीरान्तरम्' इति फ०। (३) 'ददात्यपि' इति क-ख-धृतपाठान्तरम्। (४) 'धर्माधर्मसमाख्यातोऽनुप'- इति ख०। (५) 'भोगीनि' इति क०।

(क) कर्माश्रय इति प्रमादान्मुद्रितम्, वार्त्तिके कर्मातिशयपदस्यैव दर्शनादिति बोध्यम्॥ (ख) वार्त्तिकगत'वा'शब्दो न गृहीतः। (ग) 'अन्नाद्याश्वग्रामादीनाम्' इति क-खपुस्तकयोर्मुद्रितम्। तस्य याथार्थ्यम् 'आद्य'शब्दप्रयोगस्वीकारेणोपपादनीयम्।

प्रवृत्तिरिति कर्मापेक्षेभ्यो भूतेभ्यः शरीरसर्गे सत्येतदुपपद्यते इति। दृष्टा च पुरुषगुणेन प्रयत्नेन प्रयुक्तेभ्यो भूतेभ्यः पुरुषार्थक्रियासमर्थानां द्रव्याणां रथप्रभृतीनामुत्पत्तिः। (१)तथाऽनुमातव्यं शरीरमपि पुरुषार्थक्रियासमर्थमुत्पद्यमानं पुरुषस्य गुणान्तरापेक्षेभ्यो भूतेभ्य उत्पद्यते इति॥ ६०॥

## न्यायवार्त्तिकम्

कर्माशयैः प्रतिबन्धात् न सर्वदा फलम्। यानि वा प्राण्यन्तराणि कर्मभागीनि तस्य कर्मणस्तत्कर्मभिः प्रतिबन्धात् तस्य वा कर्मणः सहकारिधर्माधर्मलक्षणं निमित्तं नास्तीत्यतः फलस्यानारम्भः, तस्य वा सहकारिणः प्रतिबन्धात्, सत्त्वान्तरकर्मणां वा सहकारिणां प्रतिबन्धात् न सर्वदा फलं धर्माधर्मौ प्रयच्छत इति। दुर्विज्ञेया च कर्मगतिः सा न शक्या मनुष्यधर्मणाऽवधारयितुम्। आकृतिमात्रं तूक्तम्।

कः पुनरत्र न्यायः कर्मतन्त्राणि भूतानि शरीरमारभन्ते न निरपेक्षाणीति? अयं न्यायोऽभिधीयते—पुरुषविशेषगुणप्रेरितभूतपूर्वकं शरीरं कार्यत्वे सति पुरुषार्थक्रियासामर्थ्यात् यत् पुरुषार्थसमर्थं तत् पुरुषविशेषगुणप्रेरितभूतपूर्वकं दृष्टं यथा रथादि पुरुषविशेषगुणेन प्रयत्नेन प्रेरितैर्भूतैरारभ्यमाणं पुरुषार्थक्रियासमर्थं दृष्टं तथा च शरीरम्, तस्मादिदमपि सापेक्षैर्भूतैरारभ्यते

## न्यायवार्त्तिकतात्पर्यटीका

(क)भागीनीत्युच्यन्ते तेषां प्राणिनां कर्मभिरभाग्यादिशब्दवाच्यैः प्रतिबन्धादिति। तस्य वा कर्मणः सहकारि धर्माधर्मलक्षणं निमित्तं नास्तीति। अयमर्थः। दृष्टानां सेवादिकर्मणां व्यभिचाराद् ग्रामादिलाभेऽदृष्टं कारणं कल्पनीयम्। यथाहुः 'तच्चैव तत्र कारणं शब्दश्च' इति, दृष्टं सेवादि (ख)च कारणम्, शब्दश्चेति विषयिणा तद्विषयमदृष्टमुपलक्षयति। ते च ग्रामादयस्तस्माददृष्टादुपजायमाना अन्तरा विघ्ननाशाय देवतानमस्कारादिजनितमपि धर्ममपेक्षन्ते (ग)तस्मात् प्राग्भवीयेण धर्मेण स्वफलनिर्वर्त्तनाय धर्मान्तरं सहकार्यपेक्ष्यते सहकारिणां च वैचित्र्यात् प्रतिबन्धापगमहेतोरपि सहकारित्वाविरोधः। तेन कर्मणः सहकारिनिमित्ताभावात् प्रतिबद्धमदृष्टं फलं न जनयतीत्यर्थः। तस्य वा कर्मणः सहकारिणः कारणस्य गरीयसा कर्मान्तरेण प्रतिबन्धात् फलस्यानारम्भः। एवं स्वकर्मणां सहकारिनिमित्ताभावप्रतिबन्धावुक्त्वा समानोपभोगसत्त्वान्तरकर्मणामपि सहकारिनिमित्ताभावप्रतिबन्धौ दर्शयति—सत्त्वान्तरकर्मणां (घ)वेति।

## वृत्तिः

पादनप्रकरणम्। तत्र शरीरं तत्तत्पुरुषसमवेतादृष्टनिमित्तकं न वेति विप्रतिपत्तौ निषेधकोटिस्त्रेधा—अदृष्टाभावात्, तस्य शरीरहेतुत्वाभावात्, अदृष्टस्य पुरुषसमवायाभावाद्वा। तत्राऽऽद्यपक्षं निरस्यति—( पूर्वकृतफलानुबन्धात्तदुत्पत्तिः )

---

(१) 'तथा' इति ज० ग०।

(क) '-भोगीनि' इति क०। (ख) क-तात्पर्ये 'च'कारो न मुद्रितः। (ग) पूर्वोक्तमेव विवृणोति तस्मादिति। (घ) क-ख-पुस्तकयोः 'चेति' इति मुद्रितम्।

## न्यायभाष्यम्

अत्र नास्तिक आह—

### (सू०)—भूतेभ्यो मूर्त्युपादानवत्तदुपादानम् ॥ ६१ ॥

यथा कर्मनिरपेक्षेभ्यो भूतेभ्यो निर्वृत्ता मूर्तयः सिकता-शर्करा-पाषाण-गैरिकाञ्जन-प्रभृतयः पुरुषार्थकारित्वादुपादीयन्ते तथा कर्मनिरपेक्षेभ्यो भूतेभ्यः शरीरमुत्पन्नं पुरुषार्थकारित्वादुपादीयते इति ॥ ६१ ॥

### ( सू० )—न, साध्यसमत्वात् ॥ ६२ ॥

यथा शरीरोत्पत्तिरकर्मनिमित्ता साध्या तथा सिकता-शर्करा-पाषाण-गैरिकाञ्जन-प्रभृतीनामप्यकर्मनिमित्तः सर्गः साध्यः साध्यसमत्वादसाधनमिति भूतेभ्यो(१)मूर्त्युपादानवदिति चानेन (क)साध्यम् ॥ ६२ ॥

## न्यायवार्त्तिकम्

सुखदुःखनिमित्तत्वाद् घटादिवदिति। इतश्च कार्यत्वाद् रथादिवत् (२)वाह्यकरणग्राह्यत्वे सति रूपादिमत्त्वाद्‌ घटादिवदेव ॥ ६० ॥

अत्र नास्तिक एवमाह—

भूतेभ्यो मूर्त्युपादानवत् तदुपादानम्। यथा कर्मनिरपेक्षेभ्यो भूतेभ्यो निर्वर्त्या मूर्तयः सिकताशर्करागैरिकाञ्जनप्रभृतयः पुरुषार्थक्रियाकारित्वादुपादीयन्ते तथा शरीरसर्गोऽपीति पुरुषार्थक्रियासामर्थ्यादित्येतस्य हेतोरनैकान्तिकद्वारकं सूत्रम्। साधनपक्षे दृष्टान्तमात्रत्वादसिद्धम् ॥ ६१ ॥

## न्यायवार्त्तिकतात्पर्यटीका

रूपादिमत्त्वादित्युच्यमाने परमाणुभिरनेकान्तः स्यादत आह—वाह्यकरणग्राह्यत्वे सतीति। इन्द्रियग्राह्यत्वे सतीत्येतावतैव सिद्धे इन्द्रियग्राह्यराशेर्बाह्यकरणग्राह्यं राश्यन्तरमित्येतावन्मात्र(३)विवक्षया बाह्यकरणग्राह्यत्वे सतीत्युक्तम् ॥ ६० ॥

भूते—नम् (सू० ६१) ॥ ( ख )

## वृत्तिः

पूर्वकृतस्य याग-दान-हिंसादेः फलस्य धर्माधर्मरूपस्य अनुबन्धात् सहकारिभावात् तस्य शरीरस्योत्पत्तिः ॥ ६० ॥

---

(१) 'मूर्त्तुरत्पादनवदिति' इति ख०, 'मूर्त्युपादानमिति' इति वि०, 'मूर्त्युपादानवत्तदिति' इति टि०।
(२) 'वाह्यकरणप्रत्यक्षत्वे सति' इति वा-खधृतपाठान्तरम्। (३) '-विवक्षया' इति ख०।
(क) साध्यमित्यत्र 'साम्यम्' इति ग-पुस्तकपाठः। तन्मते 'भूतेभ्यो मूर्त्युपादानवदिति चानेन साम्यम्' इत्येतत् उत्तरसूत्रावतरणिकारूपं सूत्रस्थेन 'न' इत्यनेन सम्बध्यते इति बोध्यम्।
(ख) ६१तम-सूत्रे तात्पर्यटीका नोपलभ्यते।

# ( सू० )—नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ ६३ ॥

## न्यायभाष्यम्

विषमश्चायमुपन्यासः। कस्मात्? निर्बीजा इमा मूर्तय उत्पद्यन्ते बीजपूर्विका तु शरीरोत्पत्तिः। मातापितृशब्देन लोहितरेतसी बीजभूते गृह्येते। तत्र सत्वस्य गर्भवासानुभवनीयं कर्म पित्रोश्च पुत्रफलानुभवनीये कर्मणी मातुर्गर्भाशये शरीरोत्पत्तिं भूतेभ्यः प्रयोजयन्तीत्युपपन्नं बीजानुविधानमिति ॥ ६३ ॥

## न्यायवार्त्तिकम्

अथ पक्षः कर्मनिरपेक्षाणि भूतानि शरीरमारभन्ते पुरुषार्थक्रियासामर्थ्यात् सिकतादिवदिति? एतच्च—

न साध्यसमत्वात्। यथैव शरीरसर्गः कर्मनिरपेक्षैर्भूतैरारभ्यत इति साध्यं तथा सिकतादीनामकर्मनिमित्तः सर्गः साध्यत इति। सिकतादीनामपि कर्मनिमित्तः सर्ग इत्येतस्मादेव हेतोः सिध्यतीति। यथा चोभयपक्षसम्प्रतिपन्नो रथादिर्दृष्टान्तः पुरुषविशेषगुणप्रेरितभूतपूर्वकोऽस्ति न तथा अकर्मनिमित्तसर्गपक्षे दृष्टान्तोऽस्तीति ॥ ६२ ॥

नोत्पत्तिनिमित्तत्वान्मातापित्रोः। विषमश्चायमुपन्यासः भूतेभ्यो मूर्त्युपादानवदिति। मातापितृशब्देन लोहितरेतसी बीजभूते गृह्येते—तत्र पित्रोः पुत्रफलानुभवनीये कर्मणी सत्त्वस्य गर्भवासानुभवनीयं कर्म सह मातृगर्भाशये शरीरोत्पत्तिं प्रयोजयति। तत्र चोपपन्नं बीजानुविधानम्, बीजानुविधानाच्च यज्जातीयौ तस्य पितरौ तज्जातीयः सम्भवतीति ॥ ६३ ॥

## न्यायवार्त्तिकतात्पर्यटीका

न सा—त्वात् ( सू० ६२ ) ॥ सिकतादिदृष्टान्तस्य साध्यसमतयैव पुरुषार्थक्रिया-(१)सामर्थ्यादित्यस्य हेतोरनैकान्तिकत्वोद्भावनमपि प्रत्युक्तम्। सिकतादीनामपि कथंचित् पुरुषार्थहेतुत्वात्तत्सर्गः पुरुषगुणपूर्वक इत्युक्तम् ॥ ६२ ॥

मा भूद्वा पुरुषगुणपूर्वकत्वं सिकतादिसर्गस्य तथाऽपि शरीरस्योत्पत्त्यादि परिभावयन्तः सिकतादिभ्यो वैषम्यं वीक्षमाणास्तद्विलक्षणकारणत्वमेव प्रतिपद्यामहे तथा च सिध्यति पुरुषगुणनिमित्ततेत्याह—विषमश्चायमुपन्यास इति।

नोत्—त्रोः (सू० ६३) ॥ ननु मातापितरौ न साक्षाच्छरीरोत्पत्तौ कारणमित्यत आह—मातापितृशब्देन लोहितरेतसी इति। अनुभवनीये इति भव्यगेयादिपाठात् कर्तरि कृत्यः ॥६३॥

## वृत्तिः

आक्षिपति—( भूतेभ्यो मूर्त्युपादानवत्तदुपादानम् )

भूतेभ्य इति सावधारणम्। तथा च अदृष्टनिरपेक्षेभ्यो भूतेभ्यः परमाणुभ्यो मूर्त्तेः मृदादेः उपादानम् आरम्भो यथा तथैव तस्य शरीरस्य उपादानमारम्भः परमाणुभ्योऽदृष्टनिरपेक्षेभ्य इत्यर्थः ॥ ६१ ॥

(१) '-सामान्यादि' इति क०।

## ( सू० )—तथाहारस्य ॥ ६४ ॥

### न्यायभाष्यम्

उत्पत्तिनिमित्तत्वादिति प्रकृतम्। भुक्तं पीतमाहारः तस्य पक्तिनिर्वृत्तं रसद्रव्यं मातृशरीरे (१)चोपचीयते बीजे गर्भाशयस्थे बीजसमानपाकम्, मात्रया चोपचयो बीजे यावद्व्यूहसमर्थः सञ्चय इति। सञ्चितं च (क, २)कललार्बुदमांसपेशी(२*, ३)कण्डरा-(४)शिरःपाण्यादिना च व्यूहेनेन्द्रियाधिष्ठानभेदेन व्युह्यते, व्यूढे च गर्भनाड्याऽवतारितं रसद्रव्यमुपचीयते यावत्प्रसवसमर्थमिति। न चायमन्नपानस्य स्थाल्यादिगतस्य कल्पत इति। एतस्मात् कारणात् कर्मनिमित्तत्वं शरीरस्य विज्ञायत इति ॥ ६४ ॥

### न्यायवार्त्तिकम्

तथाहारस्य। उत्पत्तिनिमित्तत्वादिति प्रकृतम्। एतदपि सिकतादिभिर्वैधर्म्यमेवोच्यते। अशितपीतमाहारः तस्य पाकाद् रसद्रव्यं निर्वर्त्यते तन्मातृशरीरे उपचीयते, गर्भशरीरे चोपचितं कललादिभावेनोपचीयमानं कर्मसापेक्षभूतैः पाण्यादिभावमापद्यते। यदि पुनः कर्मनिरपेक्षाणि भूतानि स्युः स्थाल्यादिगतमिवान्नं पच्येत, न त्विदमस्ति तस्मात् सापेक्षाणीति ॥ ६४ ॥

### न्यायवार्त्तिकतात्पर्यटीका

इतोऽपि वैधर्म्यमित्याह—

तथाऽऽहारस्य ( सू० ६४ )॥ पूर्वसूत्रप्रतीकेन पूरयति—उत्पत्तिनिमित्तत्वादिति प्रकृतम्। कलल-कण्डर-मांसपेश्यादयो लोहितरेतसोः शरीरारम्भकयोः परिणामभेदाः ॥ ६४ ॥

### वृत्तिः

समाधत्ते—( न साध्यसमत्वात् )

नोक्तं युक्तं दृष्टान्तस्य साध्यसमत्वात् पक्षसमत्वात्। मृदादेरप्यदृष्टसापेक्षपरमाणुभ्य एवोत्पत्तेरुपगमात् तदजन्यत्वस्य तत्रासिद्धेरिति भावः ॥ ६२ ॥

न मृदादिसाम्यमित्याह सूत्राभ्याम्—( 'नोत्पत्तिनिमित्तत्वान्मातापित्रोः' इति 'तथा आहारस्य' इति )

शरीरे न मृदादिसाम्यं मातापित्रोः कर्मणः शरीरोत्पत्तिनिमित्तत्वात्। पुत्रदर्शनादि-जन्यसुखानुभावकादृष्टस्य देवाराधनादिजन्यस्य पुत्रादिनिमित्तत्वात्। एवं मातापित्रो-राहारस्य शरीरोत्पत्तिनिमित्तत्वाददृष्टसहकारेणाऽऽहारस्य शुक्रशोणितादिद्वारा कललादि-जनकत्वात्।

आहारस्य पितामहपिण्डभोजनादेरदृष्टद्वारेण पुत्रजनकत्वादित्यर्थ इत्यन्ये ॥६३-६४॥

---

(१) 'चोपचितं' इति ल-ग-झा०। (२) 'अर्बुदमांसपेशीकलल' इति ल-ग०। (३) '-काण्डर-' इति ल-झा-ग०, 'कन्धर' इति टि०। (४) —'शिरःपाणिपादादिना' इति न-वि०।

(क) 'ऋतुकाले संप्रयोगादेकरात्रोषितं कललं भवति, सप्तरात्रोषितं बुद्बुदं भवति' इति गर्भोपनिषद्। प्रथमे मासि संक्लेदभूतो धातुर्विमूर्च्छितः। मास्यर्बुदं द्वितीये तु तृतीयेऽङ्गेन्द्रियैर्युतः॥ इति याज्ञवल्क्यसंहिता।

## ( सू० )—प्राप्तौ चानियमात् ॥ ६५ ॥

### न्यायभाष्यम्

न सर्वो दम्पत्योः संयोगो गर्भाधानहेतुर्दृश्यते तत्रासति कर्मणि न भवति सति च भवतीति (क)अनुपपन्नो नियमाभाव इति। कर्मनिरपेक्षेषु भूतेषु शरीरोत्पत्तिहेतुषु (१) नियमः स्यात् न ह्यत्र कारणाभाव इति ॥ ६५ ॥

### न्यायवार्त्तिकम्

प्राप्तौ चानियमात्। कर्मनिरपेक्षाणि भूतानि शरीरमारभन्त इति सर्वो दम्पत्योः संयोगः पुत्रादिफलकः स्यात्। कर्मसापेक्षेषु भूतेषूपपन्नो नियमाभाव इति ॥ ६९ ॥

सर्वात्मभिः सम्बन्धात् साधारणविग्रहवत्त्वप्रसङ्गः नियमहेत्वभावादिति चेत्—अथ मन्यसे शरीरं सर्वात्मभिः सम्बध्यते संयोगजेन (ख) च संयोगेन क्रियाजेन वा, तत्र शरीरादिगतो न कश्चित्(ग)नियमहेतुरिति येन शरीरमेव तस्याऽऽत्मनो व्यवतिष्ठेत, न च पुरुषगतो विशेषः कश्चिद्

### न्यायवार्त्तिकतात्पर्यटीका

प्राप्तौ—मात् ( सू० ६५ ) ॥ दम्पत्योः संयोगः प्राप्तिः तस्यामनियमः शरीरोत्पादस्य तस्मात्। दृष्टस्य व्यभिचारादस्ति तददृष्टं यतः शरीरसर्ग इत्यर्थः।

पार्श्वस्थः शङ्कते—सर्वात्मभिरिति। ननु यदीयेनादृष्टेन यच्छरीरमुपात्तं तत्तस्यैव भोगायतनं नान्यस्येति नानियम इत्यत आह—न च पुरुषगत इति। आत्ममनःसन्निकर्षजौ हि धर्माधर्मौ सन्निकर्षश्च मनसः सर्वात्मभिः साधारण इति सर्वेषामेव धर्माधर्मौ न पुनः कस्यचिदेवा-साधारणावित्यर्थः। अस्योत्तरम्—शरीरेति।

### वृत्तिः

आहारस्यादृष्टसहकारित्वे विपक्षे बाधकमाह—( प्राप्तौ चानियमात् )

प्राप्तौ दम्पत्योः सम्प्रयोगे तु गर्भधारणस्य यतो न नियमस्ततोऽदृष्टस्य सहकारित्व-मावश्यकमिति भावः ॥ ६५ ॥

---

(१) चानियमः—इति ज०।

(क) अत्र 'उपपन्नो नियमाभावः' इति पाठः सम्भाव्यते उत्तरग्रन्थे पूर्वपक्षिमते नियमस्य दम्पतिसंयोगे गर्भाधानव्याप्यत्वरूपस्याऽऽपाद्यतया सिद्धान्ते तदभावस्य उपपन्नताया एव वक्तुमुचितत्वात्। अत एव वार्त्तिके ''कर्मसापेक्षेषु भूतेषूपपन्नो नियमाभावः'' इति दृश्यते।

(ख) 'च' शब्दार्थश्चिन्त्यः।

(ग) 'नियमहेतुरस्ति' इति पाठः सम्भाव्यते।

## न्यायभाष्यम्

अथापि—

**( सू० )—शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म ॥६६॥**

(१)यथा खलु इदं शरीरं धातुप्राणसंवाहिनीनां नाडीनां शुक्रान्तानां धातूनां च स्नायुत्वगस्थिशिरापेशीकललकण्डराणां च (२)शिरोबाहूदराणां सक्थ्नां च (क)कोष्ठगानां वातपित्तकफानां च मुखहृदयामाशयपक्वाशयाधःस्रोतसां च परमदुःखसम्पादनीयेन (३)सन्निवेशेन (४)व्यूहनमशक्यं पृथिव्यादिभिः कर्मनिरपेक्षैरुत्पादयितुमिति कर्मनिमित्ता शरीरोत्पत्तिरिति विज्ञायते ; एवं च प्रत्यात्मनियतस्य निमित्तस्याभावान्निरतिशयै-रात्मभिः सम्बन्धात् सर्वात्मनां च समानैः पृथिव्यादिभिरुत्पादितं शरीरं पृथिव्यादि-गतस्य च नियमहेतोरभावात् सर्वात्मनां सुखदुःखसंवित्त्यायतनं समानं प्राप्तम् । यत्तु प्रत्यात्मं व्यवतिष्ठते तत्र शरीरोत्पत्तिनिमित्तं कर्म व्यवस्थाहेतुरिति विज्ञायते। परिपच्यमानो हि प्रत्यात्मनियतः कर्माशयो यस्मिन्नात्मनि वर्तते तस्यैवोपभोगायतनं शरीरमुत्पाद्य व्यवस्थापयति । तदेवं 'शरीरोत्पत्तिनिमित्तवत्संयोगनिमित्तं कर्मे'ति विज्ञायते । प्रत्यात्मव्यवस्थानं तु शरीरस्याऽऽत्मना संयोगं प्रचक्ष्महे इति ॥ ६६ ॥

## न्यायवार्त्तिकम्

विद्यते येन शरीरमेकस्य पुरुषस्य उपभोगसाधनं भवेत्, अस्ति च नियमः, तस्माद्व वक्तव्यो नियमहेतुरिति । अस्योत्तरद्वारकं सूत्रम्—

शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म । येनैव कर्मणा शरीरमुत्पाद्यते तदेव संयोगं नियमयति अकर्मनिमित्ते तु शरीरसर्गे यथोक्तदोष इति ।

तत्स्थता कुत इति चेत्—अथ मन्यसे यदि कर्म नियामकं शरीरसर्गस्याथ कर्मणि कुतो नियम इति ? न, स्वसंयोगोत्पत्तिनियमात्—यो यस्याऽऽत्मनः संयोगः तस्माद्द यत् कर्मोपजायते

## न्यायवार्त्तिकतात्पर्यटीका

शरी--र्म ( सू० ६६ ) ॥ उक्तेनैवाभिप्रायेण शङ्कते—तत्स्थता एकपुरुषस्थता कुत इति चेत् । उत्तरम्—न स्वसंयोगेति । पुनः पृच्छति—संयोगे कुतो नियम इति । यथै-

(१) 'तथा' इति टि० ।

(२) 'शिरोबाहूदरसक्थ्नां' इति केचिद् युक्तं मन्यन्ते ।

(३) 'कण्ठसन्निवेशेन' इति ल० । (४) 'व्यूहितम्' इति फ० ।

(क) स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च ।
हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते ॥ इति, सुश्रुतः, चिकित्सितस्थानं २य अ०।

## ( सू० )—एतेनानियमः प्रत्युक्तः ॥ ६७ ॥

### न्यायभाष्यम्

(क)योऽयमकर्मनिमित्ते शरीरसर्गे सत्यनियम इत्युच्यते, अयं 'शरीरोत्पत्ति-

### न्यायवार्त्तिकम्

तत्तस्य भवतीति। संयोगे कुतो नियम इति—यथैव कर्मणि पर्यनुयोगो न व्यावर्तते तथा संयोगेऽपीति ? न, मनोनियमहेतुत्वात्—यस्याऽऽत्मनो यन्मनस्तेन यः संयोगो जन्यते स तस्य भवतीति। मनस्यपि तुल्यम्—मनसस्तर्हि सर्वात्मभिः सम्बन्धात् किं नियामकमिति ? कर्मैव—यन्मनो यदीयेन कर्मणा उपनिबद्धं तदीयं तद्भवतीति। सर्गादौ कथमिति चेत् सर्गादेरनभ्युपगमाददेश्यम्। अनादिः संसारः पूर्वाभ्यस्तसूत्रे प्रतिपादितमेतत्। आदिमति संसार एष देश्यो नानादाविति ॥ ६६ ॥

### न्यायवार्त्तिकतात्पर्यटीका

यैकेनाऽऽत्मना मनः संयुक्तमेवमात्मान्तरैरपि एवं यथैकेन मनसा स आत्मा संयुक्त एवं मनोऽन्तरैरपीति नाऽऽत्ममनःसन्निकर्षेऽस्ति विशेष इत्यर्थः। उत्तरम्—न मनोनियमहेतुत्वादिति। अदृष्टनियमनिबन्धनो हि मनोनियमः मनोनियमनिबन्धनश्चादृष्टनियमः। अनादित्वाच्च बीजाङ्कुरवदन्योन्याश्रयो न क्षतिमावहतीत्यर्थः ॥ ६६ ॥

### वृत्तिः

नन्वदृष्टनिरपेक्षैरेव भूतैः कैश्चित् स्वभावविशेषाच्छरीरं जन्यताम्, स्वभावानभ्युपगमे च शरीरस्य सर्वात्मसंयुक्तत्वात् साधारण्यापत्तिरत आह—( शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म )

अयमर्थः—शरीरस्य सर्वात्मसंयुक्तत्वेऽपि संयोगविशेषोऽवच्छेदकतालक्षणो येनाऽऽत्मना सह तदीयं तच्छरीरम्। संयोगविशेष एव कुत इत्यत आह—संयोगेति। संयोगविशेषोत्पत्तौ कर्म अदृष्टविशेषो निमित्तम्, यथा शरीरोत्पत्तावदृष्टविशेषो निमित्तमिति। संयोगविशेषस्तदात्मज्ञानजननियामको जातिविशेष एव।

संयोगः शरीरावयवसंस्थानविशेष इति कश्चित् ॥ ६६ ॥

---

(क) 'योऽयमकर्मनिमित्ते शरीरसर्गे सत्यनियम इत्युच्यते' इत्यत्र "सोऽयमकर्मनिमित्ते शरीरसर्गे मते नियम इत्युच्यते" इति पाठान्तरं तत्रभवद्भिर्गङ्गाधरशास्त्रिभिः क्वचिदुपलब्धमिति तत्सम्पादित ग पुस्तकदर्शनेन परिज्ञायते। तत्रेदं चिन्त्यते 'प्राप्तौ चानियमात्' इति ६५-तम-सूत्रभाष्ये कर्मनिरपेक्षशरीरसृष्टिमते नियम एवापाद्यतयोक्तः। स च नियमस्तत्र दम्पतिसंयोग-गर्भाधानयोर्व्याप्यव्यापकभावरूप इति तत्र व्याख्यातोऽपि इह अन्यादृश इति उभयसूत्रभाष्यतात्पर्यटीकापर्यालोचनया स्फुटमवगम्यते। सूत्रस्य

## न्यायभाष्यम्

निमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म'त्यनेन (१) प्रत्युक्तः। कस्तावदयं नियमः? यथैकस्याऽऽत्मनः शरीरं तथा सर्वेषामिति नियमः। (२)अन्यस्यान्यथाऽन्यस्यान्यथे-

## न्यायवार्त्तिकम्

एतेनानियमः प्रत्युक्तः। कः पुनरयं नियमः? यथैकस्याऽऽत्मनः शरीरं तथा सर्वात्मना-मिति नियमः, अन्यस्यान्यथा अन्यस्यान्यथेत्यनियमो भेदो व्यावृत्तिदृष्टः शरीरभेदः प्राणिनामनेक-

## न्यायवार्त्तिकतात्पर्यटीका

तदेवमात्मगुणनिबन्धने शरीरसर्गे व्यवस्था दर्शिता। ये तु मेनिरे न कर्मनिबन्धनः शरीरसर्गोऽपि तु प्रकृत्यादिनिबन्धनः। प्रकृतयो हि स्वयमेव धर्माधर्मरूपनिमित्तानपेक्षाः सत्त्वरजस्तमस्तया प्रवृत्तिशीलाः स्वं स्वं विकारमारभन्ते, प्रतिबन्धापगममात्रे तु धर्माधर्मा-वपेक्षन्ते, तद्य यथा कृषीवलः केदारादपां पूर्णात् केदारान्तरमपूर्णमापिप्लावयिषुरपां सेतुमात्रं भिनत्ति, तास्तु निम्नाभिसर्पणस्वभावा अपहृतसेतवः स्वयमेव केदारमाप्लावयन्ति, एवमाप्लावयन्ति प्रकृतयोऽपि विकारानिति। यथाऽऽहुः—

(क)'निमित्तमप्रयोजकं प्रकृतीनामावरणभेदस्तु ततः क्षेत्रिकवत्' इति।

तान् प्रत्याह—

एतेनानियमः प्रत्युक्तः ( सू० ६७ )॥ एतेन कर्मसापेक्षाणां भूतानां शरीरसर्गे अनियमा-

## वृत्तिः

अथ शरीरं नादृष्टजन्यं प्रकृतेरारम्भस्वभावत्वादेव तदुपपत्तेः, प्रतिबन्धकपूर्वशरीराप-गमस्त्वदृष्टाधीनः, जलस्य निम्नानुसरणस्वभावस्येव बन्धापगमाधीनत्वमिति द्वितीयपक्षं साङ्ख्यसम्मतं निरस्यति—( एतेनानियमः प्रत्युक्तः )

---

च वक्त्रर्थसूचकत्वं युक्तमेव। तथाच कर्मनिरपेक्षशरीरसृष्टिमते प्रसज्यमानो नियमः 'शरीरोत्पत्तिव'दित्यनेन 'प्रत्युक्तः' निरस्तः दत्तोत्तरो वेदितव्यः इति भाष्यस्य यथाश्रुतेऽर्थे स्वीकरणीये "सोऽयमकर्मनिमित्ते शरीरसर्गे मते नियम इत्युच्यते" इति पाठान्तरमेवात्र 'योऽयमकर्मनिमित्तशरीरसर्गमते नियम इत्युच्यते' इति संस्कृत्य ग्रहीतुं युक्तम्। यथामुद्रिते तु अकर्मनिमित्तशरीरसर्गवादिमते नियमाभावकथनमभुक्तत्रान्तायते। एवञ्च 'प्रत्युक्त' इति पदमपि 'निरस्त' इत्यर्थे ग्रन्थकृत्स्वरसप्रयुज्यमानं सुसङ्गच्छते। अनया च दिशा "एतेन नियमः प्रत्युक्तः" इत्येव सूत्रपाठो युक्तः स्यादित्याकलय्यैव न्यायसूत्रविवरणकारै राधामोहनगोस्वामिपादैरनियमपदस्यार्थं 'प्रत्युक्तः समाहित इत्यर्थः' इति व्याख्यातम्। स्वतन्त्रास्तु गड्डलिकाप्रवाहन्यायेन सर्वत्र लेखकप्रमादमा-कलयन्तः 'एतेन नियमः प्रत्युक्तः' इत्येव सूत्रपाठं तात्पर्यटीकायामपि व्यतिरेकमुखेण इत्यतः परम् 'अनियमः' इत्यत्र 'नियम' इति पाठं कल्पयितुमर्हन्ति। न चैवमुत्तरत्र अनियमपदव्याख्यानमसङ्गतं नियमनिराकरणेन सिद्धान्तस्यानियमस्य उत्सूत्रपदं प्रदर्शनादिति। 'प्रत्युक्त' इत्यस्य प्रतिपक्षसिद्धान्ततया उक्तः इति तु यथाश्रुते कथञ्चिदर्थः करणीयः।

(१) 'अनियमः प्रत्युक्तः' इति ख-ग०। (२) ज-पु० 'अन्यस्यान्यथा' इति सकृत् मुद्रितम्।

(क) पातञ्जलसूत्र' कैवल्यपादः, सू० ३।

## न्यायभाष्यम्

ति (१) अनियमो भेदो व्यावृत्तिर्विशेष इति। दृष्टा च जन्मव्यावृत्तिरुच्चाभिजनो निकृष्टाभिजन इति, प्रशस्तं निन्दितमिति, व्याधिबहुलमरोगमिति, समग्रं विकलमिति, पीडाबहुलं सुखबहुलमिति, पुरुषातिशयलक्षणोपपन्नं विपरीतमिति, प्रशस्तलक्षणं निन्दितलक्षणमिति, पट्विन्द्रियं मृद्विन्द्रियमिति। सूक्ष्मश्च भेदोऽपरिमेयः। सोऽयं जन्मभेदः प्रत्यात्मनियतात् कर्मभेदादुपपद्यते, असति कर्मभेदे प्रत्यात्मनियते (२)निरतिशयत्वादात्मनां समानत्वाच्च पृथिव्यादीनां पृथिव्यादिगतस्य नियमहेतोरभावात् सर्वं सर्वात्मनां प्रसज्येत, न त्विदमित्थम्भूतं जन्म। (३)तस्मान्नाकर्मनिमित्ता शरीरोत्पत्तिरिति।

उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः। कर्मनिमित्ते शरीरसर्गे तेन शरीरेणाऽऽत्मनो वियोग (४) उपपन्नः। कस्मात्? कर्मक्षयोपपत्तेः। उपपद्यते खलु कर्मक्षयः सम्यग्दर्शनात् प्रक्षीणे मोहे वीतरागः पुनर्भवहेतुकर्म कायवाङ्मनोभिर्न करोति इत्युत्तरस्यानुपचयः पूर्वोपचितस्य विपाकप्रतिसंवेदनात् प्रक्षयः। एवं प्रसवहेतोरभावात् पतितेऽस्मिन् शरीरे पुनः (५)शरीरान्तरानुपपत्तेरप्रतिसन्धिः (क)। अकर्मनिमित्ते तु शरीरसर्गे भूतक्षयानुपपत्तेस्तद्वियोगानुपपत्तिरिति॥ ६७॥

## न्यायवार्त्तिकम्

रूपः स च कर्मनिरपेक्षैर्भूतैः शरीरारम्भे न युक्तः, कर्मणां भेदाच्छरीराणि भिद्यन्त इति युक्तम्।

उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः। द्वे शरीरस्य प्रकृती व्यक्ता चाव्यक्ता च। तत्राव्यक्तायाः कर्मसमाख्यातायाः प्रकृतेरुपभोगात् प्रक्षयः (६)प्रक्षीणे च कर्मणि विद्यमानानि भूतानि न शरीर-

## न्यायवार्त्तिकतात्पर्यटीका

भिधानेन तन्निरपेक्षाणां व्यतिरेकमुखेन (ख)अनियमः प्रत्युक्तः। नियमो व्याप्तिः साधारणविग्रहवत्त्वं सर्वात्मनाम्, अनियमस्त्वव्याप्तिः कस्यचिदात्मनः किंचिच्छरीरं कस्यचित् किंचिदिति। प्रकृतिनिबन्धने हि शरीरसर्गे तस्या एकत्वात् सर्वात्मसाधारण्याच्च न शरीराणामसाधारण्यहेतुः। भूतग्रहणं तु प्रकृत्युपलक्षणार्थम्।

---

(१) 'नियमे'—इति ग०। (२) 'निरतिशयित्वात्' ख-ग-ज-भा०। (३) 'तस्मात् कर्मनिमित्ता' इति ज०। (४) 'उत्पन्नः' इति ग०। (५) 'शरीरान्तरानुत्पत्तिरि'ति वि०। (६) 'प्रचीयमाणे च' इति क-ख-धृतपाठान्तरम्।

(क) प्रतिसन्धिः पुनर्जन्म तदभावोऽप्रतिसन्धिः। अत्यन्ताभावार्थे अव्ययीभावापवादत्वात् तत्पुरुषसमास इति पुंस्त्वम्। अत एव वादिनामविवाद इति प्रयोगः पक्षधरमिश्रैः समर्थित इति शब्दशक्तिप्रकाशिकायामुक्तम्। (ख) अनियमाभिधानेन अनियमस्य प्रतिवचनासम्भवात् अत 'नियमः' इति युक्तम्। भाष्यटिप्पन्यामन्यद् द्रष्टव्यम्।

## ( सू० )—तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे ॥६८॥

### न्यायभाष्यम्

अदर्शनं खल्वदृष्टमित्युच्यते अदृष्टकारिता भूतेभ्यः शरीरोत्पत्तिः। न जात्वनुत्पन्ने शरीरे द्रष्टा निरायतनो दृश्यं पश्यति। तच्चास्य दृश्यं द्विविधं विषयश्च नानात्वं च (१)अव्यक्तात्मनः, तदर्थः शरीरसर्गः। तस्मिन्नवसिते चरितार्थानि भूतानि न (२) शरीरमुत्पादयन्तीत्युपपन्नः शरीरवियोग इति एवं चेन्मन्यसे, पुनस्तत्प्रसङ्गोऽपवर्गे—पुनः शरीरोत्पत्तिः प्रसज्यते इति। या चानुत्पन्ने शरीरे दर्शनानुत्पत्तिरदर्शनाभिमता या चापवर्गे शरीरनिवृत्तौ दर्शनानुत्पत्तिरदर्शनभूता नैतयोरदर्शनयोः क्वचिद्विशेष इत्यदर्शनस्यानिवृत्तेरपवर्गे पुनः शरीरोत्पत्तिप्रसङ्ग इति।

### न्यायवार्त्तिकम्

मुत्पादयन्तीति उपपन्नोऽपवर्गः, कर्मनिरपेक्षेषु कस्य प्रक्षयान्मोक्षमाणा अपवृज्येरन् भूतलक्षणायाः प्रकृतेरनुच्छेदात्॥ ६७॥

तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे। अदृष्टकारितमिति चेत्—अथ मन्यसे अदृष्टकारिता शरीरोत्पत्तिः—अदृष्टशब्देनादर्शनमुच्यते अदर्शनमदृष्टमिति, सर्गादौ प्रधानं (क)पुरुषार्थेन हेतुना प्रवर्तते, तत्तु प्रवर्तमानं महदादिभावेन शरीरमुत्पादयति उत्पन्ने शरीरे द्रष्टा

### न्यायवार्त्तिकतात्पर्यटीका

न केवलमकर्मनिमित्तशरीरसर्गे साधारणविग्रहवत्त्वं दोषः अपि तु मोक्षोऽपि न स्यादिति दर्शयितुं स्वपक्षे मोक्षमुपपादयति—उपपन्नश्चेति। सांख्यपक्षे तु न मोक्षः स्यादिति दर्शयति—कर्मनिरपेक्षेष्विति॥ ६७॥

शङ्कते—तददृष्टकारितमिति चेत् इति।

तद—र्गे ( सू० ६८ )॥ उपभोग्यशब्दाद्यदर्शनं प्रकृतिपुरुषभेदादर्शनं वाऽदृष्टमुच्यते तत्कारितमित्यर्थः। निराकरोति—यतस्मिन्निति। यथा प्रागदर्शनमेवं निरोधसमाधेः पश्चादप्यदर्शनमित्यपवृक्तोऽपि पुनः संसरेदित्यर्थः।

### वृत्तिः

एतेन अदृष्टहेतुकत्वव्यवस्थापनेन, अनियमस्तु आत्मनः कदाचिन्मानुषशरीरसम्बन्धः कदाचिदन्यादृशः, किञ्चिच शरीरं सकलावयवं किञ्चिच विकलावयवमित्यादिः, अदृष्टहेतुत्वानभ्युपगमे त्वयमनियमो न त्वसन्मते। किं चादृष्टनिरपेक्षप्रकृतिमात्रारब्धत्वे सर्वात्मसाधारण्यं शरीरस्य स्यादिति भावः।

अन्ये तु अदृष्टमप्यनियतं स्यादित्यत्राऽऽह—एतेनेति। तत्राप्यदृष्टान्तरमित्यनादित्वमेवेति भाव इत्याहुः॥ ६७॥

---

(१) 'आत्मानात्मनोः' इति वि०। (२)' शरीरमुपपादयन्तो—' वि-टि।
(क) "पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम्" ( सांख्यकारिका )।

## न्यायभाष्यम्

(१)चरितार्थता विशेष इति चेत् न करणाकरणयोरारम्भदर्शनात् (१*)। चरितार्थानि भूतानि दर्शनावसानान्न शरीरान्तरमारभन्ते इत्ययं विशेष एवं चेदुच्यते; न, करणाकरणयोरारम्भदर्शनात्—चरितार्थानां (२) भूतानां विषयोपलब्धिकरणात् पुनः पुनः शरीरारम्भो दृश्यते प्रकृतिपुरुषयोर्नानात्वदर्शनस्याकरणान्निरर्थकः शरीरारम्भः पुनः पुनर्दृश्यते। तस्मादकर्मनिमित्तायां भूतसृष्टौ न दर्शनार्था शरीरोत्पत्तिर्युक्ता, युक्ता तु कर्मनिमित्ते सर्गे दर्शनार्था शरीरोत्पत्तिः। कर्मविपाकसंवेदनं दर्शनमिति।

## न्यायवार्त्तिकम्

दृश्यं पश्यतीति। दृश्यं च द्वेधा विषयो(क) नानात्वं च प्रकृतिपुरुषयोः, दृष्टेन प्रधानं चरितार्थत्वान्न प्रवर्तेत इति तदेवमदर्शनं शरीरसर्गहेतुस्तद्भावभावित्वादिति ? एतस्मिन् खल्वदर्शने पुनस्तत्प्रसङ्गोऽपवर्गे—या च प्राक् प्रवृत्तेर्दर्शननिवृत्तिरदर्शनाभिमता या चोत्तरकालं निवृत्ते सर्गे नैतयोरदर्शनयोः कश्चिद्विशेषः। अदर्शननिमित्ता चेत् शरीरोत्पत्तिर्भवति (ख) तेन यथा प्राक् नानात्वदर्शनात् प्रधानं (ग)पुरुषार्थं प्रवर्तते (घ)तथाऽपवृक्तेऽपि प्रवर्तेत, न चैवमभ्युपगम्यते, तस्मान्नादर्शनं शरीरसर्गे कारणमिति।

(३) चरितार्थता विशेषो भविष्यतीति (४)न युक्तं (४*) चरितार्थानामचरितार्थानां च भूतानां पुनरारम्भदर्शनात् आद्येन शरीरेण रूपाद्युपलब्धेः कृतत्वाद् द्वितीयादिशरीरं शब्दाद्युपलब्धिसाधनं न स्यात्, भवति च शब्दाद्युपलब्धिसाधनं द्वितीयादिशरीरम्, तेन गम्यते चरितार्था-

## न्यायवार्त्तिकतात्पर्यटीका

शङ्कामुत्थाप्य दूषयति—चरितार्थतेति। ननु न शब्दाद्युपभोगं पुरुषार्थं ब्रूमो येन चरितार्थता स्यात्, अपि तु पुरुषभेददर्शनं तच्चाद्यापि न भवतीत्यारभते शरीरमिति देशयति—

## वृत्तिः

आर्हतास्तु मनःपरमाणुगुणमदृष्टं मन्यन्ते, तथाहि पार्थिवाः परमाणवः सहिताः स्वादृष्टवशाच्छरीरमारभन्ते, मनश्च स्वादृष्टप्रयुक्तं शरीरमाविशति, तच्चादृष्टं स्वभावादेव पुद्गलस्य सुखदुःखे साधयतीति, तत्रोत्तरमाह—( तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे )

(१) अयं भागः टि-पु० नास्ति। (२) 'भूतानां' इति नास्ति वि०। (३) 'चरितार्थतया'—इति ख०। (४) 'न युक्तं न' इति ख०।

(क) भेद इत्यर्थः। (ख) तेनेति तदेत्यर्थः। (ग) "पुरुषार्थं" इति पाठः सम्भाव्यते। (ग) 'यथा' इति क-ख-वार्त्तिकपुस्तकयोः प्रमादकृतम्।

## न्यायभाष्यम्

तददृष्टकारितमिति चेत् ? कस्यचिद्दर्शनम् अदृष्टं नाम परमाणूनां गुणविशेषः क्रियाहेतुस्तेन प्रेरिताः परमाणवः सम्मूर्च्छिताः शरीरमुत्पादयन्तीति (१) तन्मनः समाविशति स्वगुणेनादृष्टेन(२) प्रेरितं समनस्के शरीरे द्रष्टुरुपलब्धिर्भवतीति।

एतस्मिन् वै दर्शने गुणानुच्छेदात् पुनस्तत्प्रसङ्गोऽपवर्गे। अपवर्गे शरीरोत्पत्तिः परमाणुगुणस्यादृष्टस्यानुच्छेद्यत्वादिति ॥ ६८ ॥

## न्यायवार्त्तिकम्

न्यपि भूतानि पुनः शरीरमारभन्त इति। पुरुषार्थेन च हेतुना पुनः शरीराण्यारभन्त इति ? पुरुषार्थश्च पुरुषप्रधाननानात्वदर्शनम्, तस्य चाकरणादनर्थकः शरीरारम्भो भवेदिति। दिदृक्षा-विशेषोऽदर्शनमिति चेत्—अथ मन्यसे नादर्शनं दर्शनाभावः किन्तु दिदृक्षा दर्शनमित्युच्यते सा चापवृक्ते प्रधाने दिदृक्षा न भवतीति ? न प्राक्प्रवृत्तेस्तदभावात्—यावत्प्रधानं महदादि-भावेन न परिणमते तावद्दिदृक्षा नास्ति कथं कारणं भविष्यति प्रवृत्तेरिति। सर्वशक्तिमत्त्वात् तदाऽप्यस्तीति चेत्—अथ मन्यसे सर्वाः कारणशक्तयः प्रधाने विद्यन्ते तदिदमात्मभूताभिः कारणशक्तिभिः सर्वशक्तिमत्प्रधानम्, सर्वशक्तिमत्त्वाच्च प्रागपि प्रवृत्तेः प्रधाने दिदृक्षाऽस्तीति ? न अपवर्गाभावप्रसङ्गात्—दिदृक्षावन्नानात्वदर्शनमप्यस्तीत्यपवर्गाभावः विद्यमाने च नानात्व-

## न्यायवार्त्तिकतात्पर्यटीका

पुरुषार्थेन च हेतुनेति। चोऽवधारणे पुरुषार्थत्वेनैवेत्यर्थः। परिहरति—तस्य चाकरणादिति। चस्त्वर्थे (३)देश्यनिवृत्तौ। यदर्थं शरीराण्यारभते तन्न कृतमन्यत्तु कृतमिति किं केन संगतमित्यर्थः। शङ्कते—दिदृक्षाविशेष इति। दर्शनं हि नञा पर्युदस्तमतस्तन्मूलां दिदृक्षां ब्रूते, सा चापवर्गे नास्ति तस्मान्नापवृक्तः संसरतीत्यर्थः। निराकरोति—न प्रागिति। एतदुक्तं भवति—दिदृक्षा हि बुद्ध्याश्रया नासत्यां बुद्धावस्ति प्रकृतिपरिणामश्च बुद्धिः। तथा च सत्यां दिदृक्षायां बुद्धिः बुद्धौ सत्यां दिदृक्षेति परस्पराश्रयप्रसङ्गः। न चात्रानादिता परिहारः सृष्ट्यादौ द्वयोरभावात्। अस्माकं तु प्रलयसमये धर्माधर्मसंस्कृतोऽस्त्यात्मा मनश्चेति विशेषः। सत्कार्यमादाय शङ्कते—सर्वशक्तिमत्त्वादिति। निराकरोति—नापवर्गाभावप्रसङ्गादिति। शिष्टं विभजते—दिदृक्षावन्नानात्वदर्शनमप्यस्तीति। न तदर्थं प्रकृतेः प्रवृत्तिः तथा च न संसारस्तत्प्रध्वंसश्चापवर्गाभावान्नास्तीत्यपवर्गाभाव इत्यर्थः। एतदेव

(१) 'तन्न मनः' इति ख०। (२) 'प्रेरिते' इति ज०।
(३) 'देशयति वृत्तौ' इति क०।

## न्यायवार्त्तिकम्

दर्शने प्रधानस्य प्रवृत्तिरयुक्ता—यदा च नानात्वदर्शनं तदाऽपि दिदृक्षा न व्यावर्तते, न हि सदात्मानं जहातीति वः पक्षः। दिदृक्षायां च सत्यां कुतोऽपवर्गः? दिदृक्षा-नानात्वदर्शने च विरुद्धे कथमेकस्मिन् काले भवतः। अज्ञानमदर्शनमिति च ब्रुवाणो विकल्पतः पर्यनुयोज्यः किं ज्ञानाभावोऽज्ञानमुत मिथ्याज्ञानमिति। किं चातः? यद्यभावः, अपवर्गो न प्राप्नोति प्राक् प्रवृत्तेरपवृत्ते च प्रधाने ज्ञानाभावस्य तुल्यत्वात्। अथ मिथ्याज्ञानम्, तन्न युक्तम्, प्राक् प्रवृत्तेस्तदभावात्। कथमभावः? (क)बुद्धिधर्मकत्वात्—अपवृत्ते च प्रधाने न (१)बुद्धिरिति कथं तद्धर्मोऽज्ञानं भविष्यतीति। सत्कार्यवादाभ्युपगमात् सर्वदाऽस्तीति ब्रुवाणो मोक्षं बाधते। कथम्? तत्त्वज्ञानस्य सर्वदा भावात् तत्त्वज्ञानमिथ्याज्ञानयोश्च सहानवस्थानात् प्रवृत्ते(२)स्तादर्थ्यमयुक्तम्। न हि भवतां पक्षे किञ्चिदसद्भवति सच्चाऽऽत्मानं जहातीति सर्वार्थानां सम्भवात् प्रधानं किमर्थं प्रवर्तत इति वक्तव्यम्। अथाभिव्यक्तिनिमित्तां प्रवृत्तिं प्रतिपद्येथाः? साऽप्यभिव्यक्तिः प्राक् प्रवृत्तेः सती (ख)आहो असतीति पूर्ववत्प्रसङ्गः। अथ प्रागनुपलब्धं (ग)पश्चादुपलभते? किमुपजातविशेषमुतानुपजातविशेषमिति। यदि विशेषोपजननात् पश्चादुपलभ्यते व्याहतं भवति। (घ)अनुपजातविशेषः कस्मात् प्राङ् नोपलभ्यत इति वक्तव्यम्। सत्कार्यवादाभ्युपगमे च स्फूर्जताऽपि न विशेषोपजनः शक्यः प्रतिपादयितुम्। न च विशेषोपजनप्रत्याख्याने वस्तुन उपलब्ध्यनुपलब्धिविषयत्वं शक्यमवगमयितुम्। कर्मनिमित्ते तु सर्गे दर्शनार्थं भूतानि शरीरं पुरुषगुणप्रेरितान्यारभन्त इति युक्तम्। न ह्यनुत्पन्ने शरीरे द्रष्टा निरायतनो दृश्यं पश्यतीति।

## न्यायवार्त्तिकतात्पर्यटीका

स्फुटयति—विद्यमाने च नानात्वदर्शने तदर्थं प्रधानस्य प्रवृत्तिरयुक्ता, ततः संसाराभावात् तत्प्रध्वंसोऽपवर्गो न स्यादिति भावः। तमेवापवर्गाभावं तद्विरोधिसंसारसत्त्वेन दर्शयति—यदा च नानात्वदर्शनमिति। निदानानुच्छेदे निदानिनो नोच्छेद इत्यर्थः। पुनर्विकल्पं दर्शयति—अज्ञानमदर्शनमिति चेति। विवेकज्ञानाभावस्य तुल्यत्वादित्यर्थः। शेषमतिरोहितार्थमिति।

## वृत्तिः

तत्तदात्मादृष्टोपग्रहं विनैव तत्तदात्मोपभोगाय परमाणवश्चेच्छरीरमारभन्ते, मुक्तेऽपि तदात्मनि तद्भोगाय शरीरमारभेरन्। अपवर्ग इत्युपलक्षणम्, संसारिणामपि नर-करि-तुरगादिशरीरोपग्रहे विनिगमकं न स्यादिति भावः॥ ६८॥

---

(१) 'बुद्धिरस्ति'—इति क-ख-धृतपाठान्तरम्।

(२) '-तादार्थ्यम्' इति क-ख०। 'तादात्म्यम्'—इति क-ख-धृतपाठान्तरम्।

(क) कुत्सार्थोऽयं क-प्रत्यय इति बोध्यम्। (ख) "आहोऽसतीति" इति क-ख०। (ग) पश्चादुपलभ्यते" इति युक्तं मन्यते। (घ) अत्रापि यदीति सम्बध्यते।

## ( सू० )—मनःकर्मनिमित्तत्वाच्च (१)संयोगाव्युच्छेदः ॥६९॥

### न्यायभाष्यम्

मनोगुणेनादृष्टेन समावेशिते मनसि (२) संयोगव्युच्छेदो न स्यात्, (३)तच्च किंकृतं शरीरादपसर्पणं मनस इति (४)? कर्माशयक्षये तु कर्माशयान्तराद्विपच्यमानादपसर्पणोपपत्तिरिति। अदृष्टादेवापसर्पणमिति चेत्—योऽदृष्टः शरीरोपसर्पणहेतुः स एवापसर्पणहेतुरपीति? न, एकस्य जीवनप्रायणहेतुत्वानुपपत्तेः—एवं च सति (५) एकमदृष्टं जीवनप्रायणयोर्हेतुरिति प्राप्तम्, नैतदुपपद्यते ॥ ६९ ॥

### न्यायवार्त्तिकम्

अपरे त्वदृष्टं परमाणुगुणं वर्णयन्ति, तेषामपि पुनस्तत्प्रसङ्गोऽपवर्ग इति परमाणुगुणस्य शरीरोत्पत्तिनिमित्तत्वात् पुनस्तत्प्रसङ्गोऽपवर्ग इति ॥ ६८ ॥

मनःकर्मनिमित्तत्वाच्च संयोगाद्यनुच्छेदः। परमाणवः स्वगुणाददृष्टात् संहन्यन्ते संहताश्च द्व्यणुकादिप्रक्रमेण शरीरमुत्पादयन्ति तन्मनः स्वगुणाददृष्टादुपसर्पतीति। उपसर्पणहेतोरदृष्टस्य नित्यत्वात् किंकृतमपसर्पणमिति? कर्माशयक्षये कर्माशयादपसर्पणमिति युक्तं प्रायणम्। उभयहेतुर्मनोवृत्तिरदृष्टो भविष्यतीति न युक्तम् एकस्य जीवनप्रायणहेतुत्वानुपपत्तेः ॥ ६९ ॥

### न्यायवार्त्तिकतात्पर्यटीका

अपरे तु आर्हता अदृष्टं परमाणुगुणं वर्णयन्ति। पार्थिवानामणूनां मनसश्च गुणोऽदृष्टं ते पार्थिवाद्या अणवः स्वादृष्टप्रयुक्ताः शरीरमारभन्ते मनश्च स्वगुणप्रयुक्तं तच्छरीरमाविशति। तच्च स्वकादेवादृष्टात् पुद्गलस्य सुखदुःखोपभोगं साधयति न तु पुद्गलस्य धर्मोऽदृष्टमिति सांख्यवत् तेषामपि पुनस्तत्प्रसङ्गोऽपवर्गे। एतदुपपादयति—परमाणुगुणस्येति ॥ ६८ ॥

अपि चास्मिन् दर्शने प्रायणं न स्यादित्याह—मनःकर्मनिमित्तत्वादिति।

मनः—दः (सू० ६९) ॥ अस्मद्दर्शने तूपपद्यते प्रायणमित्याह—वर्तमानशरीरारम्भककर्माशयक्षये तु भविष्यद्देहान्तरारम्भककर्माशयान्तरादपसर्पणं मनस इति युक्तं प्रायणम्। उभयहेतुरिति उपसर्पणापसर्पणहेतुरित्यर्थः ॥ ६९ ॥

---

(१) 'संयोगानुच्छेदः' इति ख-ग-ज-भा०। 'संयोगाद्यनुच्छेदः' इति न्यायवार्त्तिके, न्यायसूचीनिबन्धे, वि-पुस्तके च। 'संयोगव्युच्छेदः' इति टि०। (२) 'संयोगाद्यनुच्छेदः' इति वि०। (३) 'तत्र' इति फ-वि-टि-भा०। (४) अतः परं 'तदिदं दृष्टान्तस्य साध्यसमत्वमभिधीयते इति। अथवा नाकृताभ्यागमप्रसङ्गात् अणुश्यामता दृष्टान्ते'—इत्यधिकः ग-पु० पाठः। (५) 'एको दृष्टम्' इति ज-ग०। एकोऽदृष्टो—फ०।

## ( सू० )—नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः ॥ ७० ॥

### न्यायभाष्यम्

विपाकसंवेदनात् कर्माशयक्षये शरीरपातः प्रायणम् , कर्माशयान्तराच्च पुनर्जन्म। भूतमात्रात्तु कर्मनिरपेक्षाच्छरीरोत्पत्तौ कस्य क्षयाच्छरीरपातः प्रायणमिति ? प्रायणानुपपत्तेः खलु वै नित्यत्वप्रसङ्गं विद्मः। यादृच्छिके तु प्रायणे प्रायणभेदानुपपत्तिरिति ॥ ७० ॥

### न्यायवार्त्तिकम्

नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः। नित्यत्वप्रसङ्ग इति प्रायणानुपपत्तिं ब्रूमः तदिदमुक्तमुपसर्पणहेतोरदृष्टस्यानित्यत्वादपसर्पणहेतोश्चादृष्टस्याभावाद्व यादृच्छिके तु प्रायणे प्रायणभेदो न स्यात् ॥ ७० ॥

### न्यायवार्त्तिकतात्पर्यटीका

ननु भवतु (१) संयोगानुच्छेदः किं नो बाध्यत इत्यत आह शरीरस्य नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः।

नित्य—त्तेः ( सू० ७० ) ॥ (२)संयोगान्युच्छेदादित्यर्थः। ननु सदकारणं नित्यमिति कथं सकारणं शरीरं नित्यं भवेदित्यत आह—नित्यत्वप्रसङ्ग इति प्रायणानुपपत्तिं ब्रूमः, विनाशानुपपत्तेरित्यर्थः। यादृच्छिके अकारणके प्रायणभेदो न स्यात्। दृष्टश्च प्रायणभेदः कश्चिद्गर्भस्थ एव प्रैति कश्चिज्जातमात्रः कश्चित्कुमारक इत्यादिरिति। अकारणस्य नित्यं सत्त्वमसत्त्वं वा स्यात् गगनवत्तत्कुसुमवदित्यर्थः ॥ ७० ॥

### वृत्तिः

अदृष्टस्य मनोगुणत्वमपि दूषयति—( मनःकर्मनिमित्तत्वाच्च संयोगानुच्छेदः ) मनसो संयोगस्य शरीरारम्भकस्य ज्ञानादिजनकस्य च उच्छेदो न स्यात्। कुतः ? तस्यार्थत् कर्म अदृष्टं तन्निमित्तत्वात्, तस्य नित्यत्वात् तादृशसंयोगधारा नोच्छिद्येत। नित्यत्वेऽपि व्यधिकरणभोगस्य तन्नाशकत्वेऽतिप्रसङ्ग इति भावः ॥ ६९ ॥

संयोगानुच्छेदे का क्षतिरत आह—( नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः ) तथा सति प्रायणस्य मरणस्यानुपपत्तेः शरीरादेर्नित्यत्वस्य अविनाशित्वस्य प्रसङ्गः ॥ ७० ॥

(१) 'संयोगाद्युच्छेदः'—इति क०।
(२) 'संयोगाद्युच्छेदात्' इति क०।

## न्यायभाष्यम्

पुनस्तत्प्रसङ्गोऽपवर्ग इत्येतत्समाधित्सुराह—

### ( सू० )—अणुश्यामतानित्यत्ववदेतत् स्यात् ॥ ७१ ॥

यथा अणोः श्यामता नित्या अग्निसंयोगेन (१)प्रतिषिद्धा न पुनरुत्पद्यते एवमदृष्टकारितं शरीरमपवर्गे पुनर्नोत्पद्यत इति ॥ ७१ ॥

### ( सू० )—नाकृताभ्यागमप्रसङ्गात् ॥ ७२ ॥

नायमस्ति दृष्टान्तः। कस्मात्? अकृताभ्यागमप्रसङ्गात्। अकृतं प्रमाणतोऽनुपपन्नम्, तस्याभ्यागमोऽभ्युपपत्तिर्व्यवसायः, एतच्छ्रद्दधानेन प्रमाणतोऽनुपपन्नं मन्तव्यम्। तस्मान्नायं दृष्टान्तो न प्रत्यक्षं न चानुमानं किंचिदुच्यत इति। तदिदं दृष्टान्तस्य साध्यसमत्वमभिधीयत इति।

अथ वा नाकृताभ्यागमप्रसङ्गात्। अणुश्यामतादृष्टान्तेन(२)अकर्मनिमित्तां शरीरोत्पत्तिं समादधानस्याकृताभ्यागमप्रसङ्गः। अकृते सुखदुःखहेतौ कर्मणि पुरुषस्य सुखं दुःखमभ्यागच्छतीति प्रसज्येत। ओमिति ब्रुवतः प्रत्यक्षानुमानागमविरोधः।

## न्यायवार्त्तिकम्

अणुश्यामतानित्यत्ववदेतत् स्यात्। अणुश्यामतानित्यत्ववदेतत् स्यादिति परिहारं वर्णयन्ति। यथा किलाणोः श्यामता नित्याऽथापि संयोगेन प्रतिषिध्यते एवमणुमनसोरदृष्टः सम्यग्ज्ञानेन प्रतिषिध्यते इति ॥ ७१ ॥

नाऽकृताभ्यागमप्रसङ्गात्। एतच्च न—अकृताभ्यागमप्रसङ्गादिति अनुपपन्नप्रमाणस्याभ्युप-

## न्यायवार्त्तिकतात्पर्यटीका

अकारणत्वादित्यस्य हेतोरनैकान्तिकत्वेन प्रत्यवतिष्ठते—अणुश्यामतावत् इति।

अणु—त् ( सू० ७१ ) ॥ ७१ ॥ (क)

नाकृ—त् ( सू० ७२ ) ॥ निराकरोति—(ख) तच्च नेति। प्रमाणेनाविषयीकृतमकृतं प्रत्युत प्रत्यक्षागमविरुद्धमिति यावत्, तस्याभ्यागमोऽभ्युपगमस्तत्प्रसङ्गादित्यर्थः। न च परमाणुश्यामताऽप्यकारणा पार्थिवरूपत्वाल्लोहितादिरूपवदित्यनुमानेन तस्यापि पाकजत्वा-

## वृत्तिः

आक्षिपति—( अणुश्यामतानित्यत्ववदेतत् स्यात् )

यथा परमाणोः श्यामता नित्याऽपि निवर्तते, तथा शरीरादिकमपि निवर्तते; तथैव परमाणुनिष्ठं नित्यमप्यदृष्टं निवर्तते। तदभावाच्च नापवर्गे शरीरमिति ॥ ७१ ॥

(१) 'प्रतिबद्धा' इति फ० वि०। 'प्रतिविद्धा' इति ल०। (२) अकर्मनिमित्तो इति वि०।
(क) ७१तम सूत्रे अवतरणिकातिरिक्ता टीका नास्ति। (ख) 'एतच्च' इति वार्त्तिके पाठभेदः।

## न्यायभाष्यम्

प्रत्यक्षविरोधस्तावत्—भिन्नमिदं सुखदुःखं प्रत्यात्मवेदनीयत्वात् प्रत्यक्षं सर्वशरीरिणाम्। को भेदः? तीव्रं मन्दं चिरमाशु नानाप्रकारमेकप्रकारमित्येवमादिर्विशेषः। न चास्ति प्रत्यात्मनियतः सुखदुःखहेतुविशेषः, न चासति हेतुविशेषे फलविशेषो दृश्यते। कर्मनिमित्ते तु सुखदुःखयोगे कर्मणां तीव्रमन्दतोपपत्तेः (१)कर्मसञ्चयानां चोत्कर्षापकर्षभावात् नानाविधैकविधभावाच्च कर्मणां सुखदुःखभेदोपपत्तिः। सोऽयं हेतुभेदाभावाद् दृष्टः सुखदुःखभेदो न स्यादिति प्रत्यक्षविरोधः।

तथा अनुमानविरोधः—दृष्टं हि पुरुषगुणव्यवस्थानात् सुखदुःखव्यवस्थानम्। यः खलु चेतनावान् साधननिर्वर्तनीयं सुखं बुद्ध्वा तदीप्सन् साधनावाप्तये प्रयतते स सुखेन युज्यते न विपरीतः। यश्च साधननिर्वर्तनीयं दुःखं बुद्ध्वा तज्जिहासुः साधनपरिवर्जनाय यतते स च दुःखेन त्यज्यते न विपरीतः। अस्ति चेदं यत्नमन्तरेण चेतनानां सुखदुःखव्यवस्थानं तेनापि चेतनगुणान्तरव्यवस्थाकृतेन भवितव्यमित्यनु-

## न्यायवार्त्तिकम्

गमोऽकृताभ्यागम इति सूत्रार्थः। यथाश्रुति वा सूत्रार्थः अकृतस्य कर्मण उपभोगप्रसङ्गादिति। एतत्सविस्तरोक्तं भाष्य इति ॥ ७२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

भ्युपगमादिति भावः। यथाश्रुति वा सूत्रार्थः। अकृतस्य कर्मणः फलोपभोगप्रसङ्गादिति। यदा खलु परमाणुगुण एव नित्यः शरीराद्यारम्भकस्तदाऽसौ नित्यत्वान्न केनचित् क्रियते। तस्याकृतस्यैव फलं पुरुषैरुपभुज्यते ततश्चायमास्तिकानां विहितनिषिद्धप्रवृत्तिनिवृत्तिनिचयो-

## वृत्तिः

सिद्धान्तसूत्रम्—( नाकृताभ्यागमप्रसङ्गात् ) न हि परमाणु-

अकृतस्य प्रमाणाविषयस्य अभ्यागमः स्वीकारस्तत्प्रसङ्गादित्यर्थः। एवमणुश्यामतानित्यत्वस्यापि प्रमाणागोचरस्य स्वीकारः स्यात्, तथा च दृष्टान्तासिद्धिः। न चानादेर्भावस्य नाशः सम्भवति निष्ठादृष्टस्य कारणस्य सत्त्वे शरीरोच्छेदः स्यात्? जन्यभावत्वेन तद्धेतुत्वात्।

(१) 'कर्मसन्निचयानां' इति वि०।

## न्यायभाष्यम्

मानम्। तदेतदकर्मनिमित्ते सुखदुःखयोगे विरुध्यते इति। तच्च गुणान्तरमसंवेद्यत्वाददृष्टं विपाककालानियमाच्चाव्यवस्थितम्। बुद्ध्यादयस्तु संवेद्याश्चापवर्गिणश्चेति।

अथागमविरोधः—बहु खल्विदमार्षमृषीणामुपदेशजातमनुष्ठानपरिवर्जनाश्रयम्, उपदेशफलं च शरीरिणां वर्णाश्रमविभागेणानुष्ठानलक्षणा प्रवृत्तिः, परिवर्जनलक्षणा निवृत्तिः। तच्चोभयमेतस्यां दृष्टौ "नास्ति कर्म सुचरितं दुश्चरितं वा? कर्मनिमित्तः पुरुषाणां सुखदुःखयोगः" इति विरुध्यते। सेयं पापिष्ठानां मिथ्यादृष्टिः—अकर्मनिमित्ता शरीरसृष्टिरकर्मनिमित्तः सुखदुःखयोग इति॥ ७२॥

इति श्रीवात्स्यायनीये न्यायभाष्ये तृतीयाध्यायस्य द्वितीयमाह्निकम्॥ २॥

समाप्तश्चायं तृतीयोऽध्यायः॥ ३॥

## न्यायवार्त्तिकम्

आत्मा शरीरं करणमर्थो बुद्धिर्मनस्तथा।
यद्यथा वस्तु तत्त्वेन तत् तथेहोपपादितम्॥

( इति प्रासङ्गिकमदृष्टनिष्पाद्यत्वप्रकरणम्। )

इति औद्द्योतकरे न्यायसूत्रवार्त्तिके तृतीयाध्यायस्य द्वितीयमाह्निकम्॥

तृतीयोऽध्यायः समाप्तः॥

## न्यायवार्त्तिकतात्पर्यटीका

ऽनर्थकः शास्त्रप्रणयनं चाप्यनर्थकं भवेदिति भावः। एतच्च अतिविस्तृतं भाष्ये तस्यार्थौ निगदव्याख्यातः।

इति वाचस्पतिमिश्रविरचितायां न्यायवार्त्तिकतात्पर्यटीकायां तृतीयोऽध्यायः समाप्तः॥ शुभम्।

## वृत्तिः

यद्वा नित्यादृष्टाच्छरीरसम्बन्धोपगमे अकृतात् स्वयमजनितात् कर्मणोऽभ्यागमः फल-सम्बन्धः स्यात्, तथा च स्वाकृतत्वाविशेषात् किं शरीरं कस्य भविष्यतीत्यत्र नियामकाभाव इति भावः॥ ७२॥

समाप्तं शरीरस्यादृष्टनिष्पाद्यताप्रकरणम्॥ ७।
समाप्तं च तृतीयाध्यायस्य द्वितीयमाह्निकम्॥

इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ
तृतीयाध्यायवृत्तिः समाप्ता॥

तृतीयाध्याये १ आह्निके ७३ सूत्राणि, २ आह्निके ७२ सूत्राणि
मिलित्वा १४५ सूत्राणि।

# न्यायदर्शनम्

## अथ चतुर्थाध्यायस्याद्यमाह्निकम्

### न्यायभाष्यम्

मनसो(१)ऽनन्तरं प्रवृत्तिः परीक्षितव्या। तत्र खलु यावद्धर्माधर्माश्रयशरीरादि परीक्षितम्, (२)सर्वा सा प्रवृत्तेः परीक्षेत्याह—

**(सू०)—प्रवृत्तिर्यथोक्ता ॥ १ ॥**

तथा परीक्षितेति ॥ १ ॥

अथ चतुर्थाध्यायस्याद्यमाह्निकम् ।

### न्यायवार्त्तिकम्

मनसोऽनन्तरं प्रवृत्तिरवसरप्राप्ता परीक्षितव्येत्यत आह—

प्रवृत्तिर्यथोक्ता। प्रवृत्तिर्यथोक्ता तथा परीक्षितेत्यर्थः सूत्रस्य। किं पुनः प्रवृत्तेः परीक्षितमिति ? यावद्धर्माधर्माश्रयं परीक्षितं सर्वा प्रवृत्तेः परीक्षा। तत्र प्रवृत्तिर्द्वेधा भवति—कारणरूपा कार्यरूपा च। कारणरूपा—प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति। कार्यरूपा—धर्माधर्मसमाख्या

### न्यायवार्त्तिकतात्पर्यटीका

अथ मनःपरीक्षानन्तरमुद्देशलक्षणक्रमानुरोधेन प्रवृत्तिः परीक्षितुं युक्ता। सा कस्मान्न परीक्ष्यत इति शङ्कानिराकरणाय सूत्रमित्याह—मनसोऽनन्तरमिति।

प्रवृत्तिर्यथोक्ता ( सू० १ ) ॥ अस्य शेषः,—तथा परीक्षिता। यथा लक्षिता तथा परीक्षितेत्यर्थः। पृच्छति—किं पुनरिति, प्रमेयमात्मादिमनोऽन्तं परीक्षितम्, न पुनः प्रवृत्तेः स्वरूपं वा कार्यं वा परीक्षितमिति भावः। उत्तरम्—यावद्धर्माधर्माश्रयमिति।

### वृत्तिः

सूरकोटिविजयिप्रभाभरं योगिमानसचरं परं महः।
श्यामलं किमपि धाम कामदं कामकोटिकमनीयमाश्रये ॥ १ ॥

तृतीये तावदात्मादिप्रमेयषट्कं कारणरूपं परीक्षितम्, अथ कार्यरूपं प्रवृत्त्यादिप्रमेयषट्कमवसरतो हेतुहेतुमद्भावेन च परीक्षणीयम्।

(१) 'अनन्तरा' इति ल-ग-भा०।
(२) 'पूर्वा सा' ज०।

## न्यायवार्त्तिकम्

दुःखादिसूत्रे वर्णिता । तत्र कारणरूपायाः प्रवृत्तेर्विंशतिधा भेदः(क) । कार्यरूपा तु प्रवृत्तिरेकद्रव्याऽभ्युदयस्य प्रतिनियमात्, अवस्थिता विपाककालस्य नियमात्, आत्मसमवायाद् गुणभूता, अनित्या प्रायणादिदर्शनात् । तदुक्तं विपच्यमानकर्माशयप्रक्षये प्रायणमिति । जन्मनः कारणं पूर्वकृतफलानुबन्धात् तदुत्पत्तिरिति । संसारापवर्गहेतुभूता तद्भावे संसारः तदभावेऽपवर्ग इत्येवमाद्युक्तम् ॥ १ ॥

## न्यायवार्त्तिकतात्पर्यटीका

एकद्रव्येति एकस्मिन्नेवाऽऽत्मनि वर्तत इत्यर्थः । अवस्थिता न तु बुद्ध्यादिवदाशुतरविनाशिनीत्यर्थः । आत्मसमवायादिति । कार्यत्वे सतीति द्रष्टव्यं विशेषणम्, तेन न सामान्यविशेषाभ्यां व्यभिचारः । प्रायणादीति आदिशब्देन सुखादिक्षयोऽपवर्गश्च गृह्यते; संसारापवर्गहेतुभूता आत्मसद्भावासद्भावाभ्यामिति शेषः । एवमाद्युक्तमिति, आदिग्रहणेनाऽऽत्मसमवेता प्रवृत्तिर्न तु पृथिव्याद्याश्रयेति दर्शयति ॥ १ ॥

## वृत्तिः

यद्यपि प्रथमाह्निके षट्कं परीक्षणीयम्, द्वितीयाह्निके तु तत्त्वज्ञानम्, तथाऽपि तस्यापवर्गहेतुत्वादुपोद्घातेन च परीक्षणीयत्वादपवर्गपरीक्षान्तःपातितया षट्कपरीक्षैवाध्यायार्थः । तत्र चोद्दिष्टधर्मवत्तया षट्कपरीक्षा प्रथमाह्निकार्थः ।

तत्र प्रथमाह्निके चतुर्दश प्रकरणानि, तत्र चोक्तरूपवत्तया प्रवृत्तिदोषयोः परीक्षा प्रथमप्रकरणार्थः । न चार्थभेदात् प्रकरणभेदः, यथा तथेति परस्परसाकाङ्क्षाभ्यामवयवाभ्यामुक्तरूपवत्त्वलक्षणैकार्थवत्त्वकथनात् ।

प्रवृत्तिपरीक्षायामाकाङ्क्षितायां सूत्रम्—( प्रवृत्तिर्यथोक्ता )

अत्र तथैवेति शेषं पूरयन्ति, तदयुक्तम्, तथा सत्यत्रैव यथाशब्दस्याऽऽकाङ्क्षाशान्तावग्रिमसूत्रस्थतथाशब्देऽपि यथाशब्दान्तरस्य पूरणीयतया प्रकरणभेदापत्तेः । तस्मादग्रिमसूत्रस्थ'तथा'शब्देनान्वयो युक्तः । प्रवृत्तिर्यथा उक्तलक्षणवती तथा दोषा अप्युक्तलक्षणवन्त इत्यग्रिमसूत्रसंवलितोऽर्थः । 'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः' इत्युक्तलक्षणसत्त्वात् (१) नासिद्धं लक्षणमिति भावः । प्रवृत्तिस्तु द्वयी कारणरूपा कार्यरूपा च, द्वे अप्यात्मसमवेते । तत्राऽऽद्या जन्यत्वेनाऽविशिष्टा विशिष्टा च यत्नत्वजातिमती मानसप्रत्यक्षसिद्धा, द्वितीया तु धर्माधर्मरूपा यागादेरगम्यागमनादेश्च चिरध्वस्तस्य व्यापारतया कर्मनाशा-जलस्पर्शादेः प्रायश्चित्तादेश्च नाश्यतया सिध्यतीति ॥ १ ॥

(क) ७६म-पत्रे भाष्यं द्रष्टव्यम् ।
(१) 'सिद्धं लक्षणमि'ति भ० ।

## न्यायभाष्यम्

प्रवृत्त्यनन्तरास्तर्हि दोषाः परीक्ष्यन्तामित्यत आह—

### (सू०)—तथा दोषाः ॥ २ ॥

(१)परीक्षिता इति। बुद्धिसमानाश्रयत्वादात्मगुणाः, प्रवृत्तिहेतुत्वात् पुनर्भवप्रतिसन्धानसामर्थ्याच्च संसारहेतवः, (२)संसारस्यानादित्वादनादिना प्रबन्धेन प्रवर्तन्ते, मिथ्याज्ञाननिवृत्तिस्तत्त्वज्ञानात् तन्निवृत्तौ रागद्वेषप्रबन्धोच्छेदेऽपवर्ग इति। प्रादुर्भाव(३)तिरोधानधर्मका इत्येवमाद्युक्तं दोषाणामिति ॥ २ ॥

## न्यायवार्त्तिकम्

प्रवृत्तेरनन्तरास्तर्हि दोषा इत्यभिधीयन्तामित्यत आह—

तथा दोषाः। उक्ता इति। बुद्धिसमानाश्रयत्वादात्मगुणाः संसारस्यानादित्वात् अनादिना (४) प्रबन्धेन प्रवर्तन्ते, सम्यग्ज्ञानाच्च मिथ्याज्ञाननिवृत्तौ निवर्तन्त इत्युत्पादनिरोधधर्मकाः। कार्यत्वे सतीन्द्रियान्तरप्रत्यक्षत्वात् अचाक्षुषप्रत्यक्षत्वाच्च गुणाः ॥ २ ॥

( इति प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम्। )

## न्यायवार्त्तिकतात्पर्यटीका

प्रवृत्तेरनन्तरास्तर्हि दोषाः परीक्ष्यन्तामित्यत आह—

तथा दोषाः ( सू० २ ) ॥ उक्ता इति शेषः। प्रवृत्तितुल्यतया प्रवृत्तिपरीक्षयैव तावद्दोषाणां सत्त्वं परीक्षितमित्यर्थः। कार्यरूपप्रवृत्तितुल्यतामाह—बुद्धिसमानाश्रयत्वादिति। अभीष्टविषयानुचिन्तनप्रभवाः खल्विमे दोषा नार्थचिन्तनबुद्धिव्यधिकरणा भवितुमर्हन्ति, तथा सति चैत्रस्याभीष्टविषयानुचिन्तने मैत्रस्य रागः प्रवर्त्तेत। तस्माद् बुद्धिसमानाश्रयत्वादात्मगुणाः। इदं च आत्मगुणत्वाच्च कार्यप्रवृत्तितुल्यतया प्रवृत्तिपरीक्षयैव तावद्दोषाः परीक्षिता इत्यर्थः। एतच्चोक्तं वीतरागजन्मादर्शनादित्यनेन तथोद्देशपरीक्षापरेण द्वितीयसूत्रेण। यत्तेषां दोषाणां परीक्षितं तदाह—सम्यग्ज्ञानाच्चेति। प्रवृत्तितुल्यत्वमपरं दोषाणामित्याह—संसारस्यानादित्वादिति। तदेव तु कुत इत्यत आह—स्यादेतत्—गुणत्वेन ह्यात्मगुणा इति सिध्यति, कार्यत्वे सतीति। इन्द्रियान्तरं मन इति। मानसप्रत्यक्षैश्चात्मत्वसुखत्वादिभिरनैकान्तिकत्वं मा भूदत उक्तं कार्यत्वे सतीति विशेषणम्। अचाक्षुषप्रत्यक्षत्वादित्यत्रापि कार्यत्वे सतीति विशेषणमनुषञ्जनीयम् ॥ २ ॥

(१) 'तथा परीक्षिता' इति फ०।
(२) 'संसारवासनानादित्वादिति ख-पु०स्थपाठान्तरम्।
(३) '-निरोधधर्मकाः' इति वि० टि०।
(४) 'प्रवर्त्तेन' इति ख०।

## न्यायभाष्यम्

प्रवर्तनालक्षणा दोषा इत्युक्तम्, तथा चेमे मानेर्ष्यासूया-विचिकित्सा-मत्सरादयः, ते कस्मान्नोपसङ्ख्यायन्ते इत्यत आह—

## (सू०)—तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥

तेषां दोषाणां त्रयो राशयस्त्रयः पक्षाः। (१)रागपक्षः—कामो मत्सरः स्पृहा तृष्णा लोभ इति। (२)द्वेषपक्षः—क्रोध ईर्ष्या असूया द्रोहोऽमर्ष इति। (३)मोहपक्षो

## न्यायवार्त्तिकम्

प्रवर्तनालक्षणा दोषा इत्युक्तम्, तथा च मानादयः प्रवर्तयन्तीति लक्षणसाम्यात् तेऽप्युपसंख्येया इति ? नोपसंख्यायन्ते संगृहीतत्वात्। केन संग्रहः ? प्रवर्तनालक्षणा दोषा इत्यनेनैव।

तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्। तेषां तु संगृहीतानां—(४) रागद्वेषमोहार्थान्तरभावात्। "तेषां दोषाणां त्रयो राशयः त्रयः पक्षाः सम्भवन्ति। रागपक्षः—कामो मत्सरः स्पृहा तृष्णा लोभ इति। द्वेषपक्षः—क्रोधः ईर्ष्या असूया द्रोहोऽमर्ष इति। मोहपक्षः—मिथ्याज्ञानं विचिकित्सा मानः प्रमाद इति।"

## न्यायवार्त्तिकतात्पर्यटीका

तदेवं बहु परीक्षितं दोषाणां, यत्तु किञ्चिद्दोषाणामपरीक्षितमस्ति तत् परीक्षितुमुपक्रमते—प्रवर्तनालक्षणा इत्युक्तं तथा च मानादय इति। रागद्वेषमोहा एव दोषाः, न च मानादयस्तेष्वन्तर्भवन्ति बुद्धिव्यपदेशभेदात्, प्रवर्तनालक्षणत्वं तु तेषामप्यस्ति, तस्मादतिव्यापकत्वान्न लक्षणमेतद् युक्तम्, युक्तत्वे वा लक्षणसूत्रे मानादयोऽपि दोषवत् पठनीया इति पूर्वपक्षः। सिद्धान्तयत्याह—नोपसंख्यायन्ते संगृहीतत्वादिति। रागद्वेषमोहानां सामान्यत्रयाणां कामादयो विशेषाः तथा चोपपन्नो बुद्धिव्यपदेशभेदः संग्रहश्चेति भावः।

## वृत्तिः

दोषपरीक्षायां प्राप्तायामाह—( तथा दोषाः )

तथा दोषा अपि, प्रवर्त्तनालक्षणा इत्युक्तलक्षणवन्त एवेति नासिद्धिरिति भावः ॥२॥

समाप्तं प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् ॥ १ ॥

अथ त्रैराश्येन विशेषेण दोषपरीक्षणाय तत्त्रैराश्यप्रकरणम्, तत्र सिद्धान्तसूत्रम्—( तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् )

---

(१) 'रागपक्षाः'—इति ज०।
(२) 'द्वेषपक्षाः' इति ज०।
(३) 'मोहपक्षाः' इति ज०।
(४) 'तत्-त्रैराश्यम्' इति क-पुस्तके अधिकम्।

## न्यायभाष्यम्

मिथ्याज्ञानं विचिकित्सा मानः प्रमाद इति। वैराश्यान्नोपसङ्ख्यायन्ते इति। लक्षणस्य तर्ह्यभेदात्त्रित्वमनुपपन्नम् ? नानुपपन्नम्, रागद्वेषमोहार्थान्तरभावात्;

## न्यायवार्त्तिकम्

'कामो' 'मत्सर' इत्यादि किं पर्यायवचनम् आहो अर्थान्तरभाव इति ? किं चातः ? यदि पर्यायवचनम्, त्रयो राशय इत्ययुक्तम्, न हि पर्यायशब्देषु राशित्वं सम्भवति। न हि "इन्द्र"-'शक्र'-'पुरन्दर'शब्दानां राश्यर्थः कश्चित् सम्भवति। अर्थान्तरभावे विशेषो वाच्य इति। अर्थान्तरभाव इति ब्रूमः। तत्र कामः स्त्रीगताभिलापः, या स्त्रीगता प्रार्थना सा काम इति। एवं चाऽऽहुः नाकामयमानो मण्डयत इति। अक्षीयमाणवस्त्वपरित्यागेच्छा मत्सरः—(१)यद्वस्तु दीयमानमुपभुज्यमानं वा न क्षीयते तदपरित्यागेच्छा मत्सरः(१*), यथा राजकीयोदपानान्मोदकं पा इति। अस्ववस्त्वादानेच्छा स्पृहा—यद्वस्तु स्वं न भवति तस्य या आदानेच्छा सा स्पृहा। पुनर्भवप्रतिसन्धानहेतुभूता तृष्णा—या पुनर्भवप्रार्थना सा तृष्णा। प्रमाणविरुद्धपरद्रव्यापहारेच्छा लोभः—प्रमाणविरुद्धं परद्रव्यादानं कुर्वाणो लुब्ध इत्युच्यते। एषां च सामान्यं रागः, सामान्येन विशेषः संगृहीत इति।

शरीरेन्द्रियाधिष्ठानवैकृत्यहेतुः क्रोधः—सञ्जाते यस्मिन् शरीरेन्द्रियाधिष्ठानानि विकृतानि भवन्ति स क्रोध इति। साधारणे वस्तुनि पराभिनिवेशप्रतिषेधेच्छा ईर्ष्या—यदपरिगृहीतं साधारणं वस्तु तस्मिन् यः पराभिनिवेशप्रतिषेधाभिप्रायः सा ईर्ष्या। परगुणाक्षमता असूया—या परगुणान् श्रुत्वा अक्षमतोपजायते सा असूया। परापकारेच्छा द्रोहः—अशक्तस्य (२) या परं प्रत्यपचिकीर्षा सा द्रोहः। (३)कृतापकारासहिष्णुता अमर्षः—(४)या कृतापकारस्य असहिष्णुता सोऽमर्षः (४*)। अस्य च द्वेषः सामान्यं तेन संग्रहः।

## न्यायवार्त्तिकतात्पर्यटीका

तत्र—वात् (सू० ३)॥ अस्ववस्त्वादानेच्छा स्वामिदानपूर्विका स्पृहा। पुनर्भवप्रार्थना तृष्णा, हेतुभूता प्रवृत्तिद्वारेण पुनर्भवप्रतिसन्धानस्येति। प्रमाणविरुद्धेति अन्यायेनेत्यर्थः। परस्य ज्ञातेर्ममाप्येतदिति बुद्धिरभिनिवेशः तत्प्रतिषेधाभिप्रायो ज्ञानि-

## वृत्तिः

तेषां दोषाणां त्रयो राशयस्त्रयः पक्षाः, न तु रागद्वेषमोहानामेकैकत्वं तेषामर्थान्तरभावात् अवान्तरभेदवत्त्वात्। तथा च भयशोकमानादीनामेष्वेवान्तर्भावान्न विभागन्यूनत्वम्। इच्छात्वद्वेषत्वमिथ्याज्ञानत्वरूपविरुद्धधर्मवत्त्वान्न विभागाधिक्यम्। इच्छात्वादिकं तु रागादावनुभवसिद्धम्।

तत्र रागपक्षः—कामो मत्सरः स्पृहा तृष्णा लोभो माया दम्भ इति। कामो रिरंसा, रतिश्च विजातीयः संयोगः। नारीगताभिलाष इति तु न युक्तम्, स्त्रियाः कामेऽव्याप्तेः।

---

(१) अयमंशः क-पुस्तके नास्ति। (२) 'या' इति ख-पुस्तके नास्ति। (३) 'क्रते'ति ख-पु० नास्ति। (४) अयमंशः ख-पुस्तके नास्ति।

## न्यायभाष्यम्

(१)आसक्तिलक्षणो रागः, अमर्षलक्षणो द्वेषः, मिथ्याप्रतिपत्तिलक्षणो मोह इति। एतत् प्रत्यात्मवेदनीयं सर्वशरीरिणाम्—विजानात्ययं शरीरी रागमुत्पन्नम् 'अस्ति मेऽध्यात्मं रागधर्म' इति। विरागं च विजानाति—'नास्ति मेऽध्यात्मं रागधर्म' इति। एवमितरयोरपीति। मानेर्ष्याऽसूयाप्रभृतयस्तु त्रैराश्यमनुपतिता इति नोपसङ्ख्यायन्ते ॥३॥

## न्यायवार्त्तिकम्

विपर्ययज्ञानं मिथ्याज्ञानम् अतस्मिंस्तदिति प्रत्यय इति। संशयो विचिकित्सा (२)किंस्विदिति। तथा विद्यमानाविद्यमानगुणाध्यारोपेणात्मोत्कर्षप्रत्ययो मानः (३)अहो अहमस्मि इति। शक्तस्य कर्तव्याकरणं प्रमादः—(४)यतः शक्तः स्वकर्तव्यं न करोति स प्रमाद इति। अस्य च सामान्यं मोहः तेन संग्रह इति। अतस्त्रैराश्यान्नोपसंख्यायन्त इति।

कुत एतत्? लोकतस्तदवगतेः—(५)लोकत एते कामादयः एवम्भूतेष्वभिप्रायेषु प्रयुज्यन्ते, नाभिप्रायमात्रे, न हि भिक्षां प्रार्थयमानः कामयत इत्येवं भवतीति। लक्षणस्य तर्हि अभेदात् त्रित्वमनुपपन्नमिति—एकं रागद्वेषमोहाः लक्षणाभेदात् रागभेदवदिति? नानुपपन्नं रागद्वेषमोहार्थान्तरभावात्—सत्यपि लक्षणस्याभेदे आन्तर्गणिकं भेदकं लक्षणमस्ति तदुपपत्तेस्त्रित्वम्, यथा रागलक्षणेन संगृहीतानां कामादीनामिति। न च सामान्यमेकत्वे कारणम्, (६)सामान्यस्यैवाभावः स्यात् यदि रागद्वेषमोहानामेकत्वं स्यात्; समानमेतल्लक्षणमित्येतदेव न स्यादिति न ह्येकस्य समानं भवतीति। किं पुनरान्तर्गणिकं लक्षणमिति? सक्तिलक्षणो रागः—यो विषयेष्वभिषङ्गः स रागः। अमर्षलक्षणो द्वेषः—असहिष्णुता दुःखस्य दुःखसाधनानां चेति द्वेषः। मिथ्याप्रतिपत्तिलक्षणो मोहः—यथावस्थितविषये अयथाभावप्रतिपत्तिर्या। एतच्च रागद्वेष-

## न्यायवार्त्तिकतात्पर्यटीका

पिशाचस्येर्ष्येत्युच्यते। अमर्षलक्षणो द्वेष इति। ननु (७) कृतापकारस्य या असहिष्णुता सोऽमर्ष इति द्वेषस्यैव विशेष इत्युक्तम्, कथं द्वेषसामान्यमुच्यत इत्यत आह—असहिष्णुता दुःखस्य दुःखसाधनानां चेति। मिथ्याप्रतिपत्तिलक्षणो मोह इति। संशयो हि यथावस्थिते

## वृत्तिः

मत्सरः स्वप्रयोजनप्रतिसन्धानं विना परामिमतनिवारणेच्छा, यथा राजकीयादुदपानान्नोदकं पेयमित्यादि। एवं परगुणनिवारणेच्छाऽपि। स्पृहा धर्माविरोधेन प्राप्तीच्छा। तृष्णा इदं मे न क्षीयतामितीच्छा। उचितव्ययाकरणेनापि धनरक्षणेच्छारूपं कार्पण्यमपि तृष्णाभेद एव। धर्मविरोधेन परद्रव्येच्छा लोभः। परवञ्चनेच्छा माया। कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छा दम्भः।

---

(१) 'सक्तिलक्षणः'—इति टि०। (२) 'कस्मादिति (?)' इति ख०। (३) 'अहोऽहमस्मि' इति क-पुस्तके मुद्रितम्, तत्र सन्धिश्चिन्त्यः, 'आहोऽहमस्मि' इति ख०। (४) 'यच्छक्तः' इति ख०। (५) 'लोके' इति क-खधृतपाठान्तरम्। (६) 'तथा च सामा-'—इति ख०। (७) 'अक्षता'—इति क०।

## (सू०)—नैकप्रत्यनीकभावात्(क) ॥ ४ ॥

### न्यायभाष्यम्

नार्थान्तरं रागादयः। कस्मात्? एकप्रत्यनीकभावात्—तत्त्वज्ञानं सम्यङ्मतिरार्यप्रज्ञा सम्बोध इत्येकमिदं प्रत्यनीकं त्रयाणामिति ॥ ४ ॥

### न्यायवार्त्तिकम्

मोहानां व्यवच्छेदकं लक्षणमात्मप्रत्यक्षमिति ॥ ३ ॥

नैकप्रत्यनीकत्वात्। एकं रागद्वेषमोहा एकप्रत्यनीकत्वात् विभागवदिति—यथा विभाग एकेनैव संयोगेन विरुध्यमान एको भवति तथा तत्त्वज्ञानेनैकेन विरुध्यन्ते रागादयस्तस्मादेकं रागादय इति ॥ ४ ॥

### न्यायवार्त्तिकतात्पर्यटीका

पदार्थे अयथाभावप्रतिपत्तिर्भवति। व्यवस्थितं हि वस्तु अव्यवस्थिततया गृह्णाति संशयः एवं पण्डितमानिनो मीमांसकदुर्दुरूढस्याभिमान इति ॥ ३ ॥

नैक—त्वात् ( सू० ४ ) ॥ आर्यप्रज्ञेति भाष्यम्। आरात् तत्त्वाद् याता आर्या। आर्या चासौ प्रज्ञा चेति आर्यप्रज्ञा सम्यग्बोधः संबोधः ॥ ४ ॥ (ख)

### वृत्तिः

द्वेषपक्षः—क्रोध ईर्ष्या असूया द्रोहोऽमर्षोऽभिमान इति। क्रोधो नेत्रलौहित्यादिहेतुर्द्वेषविशेषः। ईर्ष्या साधारणे वस्तुनि परस्वत्वात् तद्ग्रहीतरि द्वेषः, यथा दुरन्तदायादानाम्। असूया परगुणादौ द्वेषः। द्रोहो नाशाय द्वेषः। हिंसा तु द्रोहजन्या। परे तु तां द्रोहं मन्यन्ते। अमर्षः कृतापराधेऽसमर्थस्य द्वेषः। अभिमानोऽपकारिण्यकिञ्चित्करस्याऽऽत्मनि द्वेषः।

मोहपक्षः—विपर्यय-संशय-तर्क-मान-प्रमाद-भय-शोकाः। विपर्ययो मिथ्याज्ञानापरपर्यायोऽयथार्थनिश्चयः। एकधर्मिकविरुद्धभावाभावज्ञानं संशयः, स एव विचिकित्सेत्युच्यते। व्याप्यारोपाद् व्यापकप्रसञ्जनं तर्कः। आत्मन्यविद्यमानगुणारोपेणोत्कर्षधीर्मानः। गुणवति निर्गुणत्वधीरूपं स्मयमपि मानेऽन्तर्भावयन्ति।

प्रमादः पूर्वं कर्त्तव्यतया निश्चितेऽप्यकर्त्तव्यताधीः, एवं वैपरीत्येऽपि। भयम् अनिष्टहेतूपनिपाते तत्परित्यागानर्हताज्ञानम्। शोक इष्टवियोगे तल्लाभानर्हताज्ञानम् ॥३॥

---

(क) "नैकप्रत्यनीकत्वात्" इति न्यायसूचीसम्मतः पाठः; वार्त्तिक-तात्पर्यटीकयोरपि तथैव दृश्यते।

(ख) आर्यप्रज्ञेत्यादिः "सम्बोधः" इत्यन्तो ग्रन्थः पूर्वसूत्रीय तात्पर्यटीकायां 'भावः' इत्यनन्तरं मुद्रितः तच्चायुक्तमिति इह सन्निवेशितः।

## (सू०)—व्यभिचारादहेतुः ॥ ५ ॥

### न्यायभाष्यम्

एकप्रत्यनीकाः पृथिव्यां श्यामादयोऽग्निसंयोगेनैकेन, एकयोनयश्च पाकजा इति ॥ ५ ॥

सति चार्थान्तरभावे—

## (सू०)—तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः ॥ ६ ॥

मोहः पापः, पापतरो वा (१)द्वावभिप्रेत्योक्तम्। कस्मात्? नामूढस्ये-

### न्यायवार्त्तिकम्

व्यभिचारादहेतुः। एकप्रत्यनीकाश्च रूपादयः एकाग्निसंयोगविरोधिनः, न चैषामेकत्वमिति (२) अनैकान्तिकम्। एकयोनित्वादेकं रागादयः शब्दवदित्यप्यनेनैव प्रत्युक्तम्, एकयोनयो रूपादयो न चैषामेकत्वमिति ॥ ५ ॥

सति (३) चार्थान्तरत्वे—

तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः। तेषां मोहः पापीयान्। पापतमः पापिष्ठ इति वा (क) प्राप्ते द्वौ द्वावभिप्रेत्य पापीयानित्युच्यते, रागमोहयोर्मोहः पापीयान् द्वेषमोहयोर्मोहः

### न्यायवार्त्तिकतात्पर्यटीका

व्यभि—तुः (सू० ५)॥ (ख) एकयोनयो हि रूपादयो न चैषामेकत्वम्। यदि पुनस्तत्र रूपादीनां परस्परभेदसिद्धये कश्चित्कारणभेद आस्थीयते स रागादिष्वपि समान इति भावः ॥ ५ ॥

नासति निदानोच्छेदे निदानिनामुच्छेद इति रागद्वेषयोर्निदानिनोरुच्छेदाय तन्निदानत्वं मोहस्य दर्शयति—सति चार्थान्तरत्व इति।

तेषां—त्तेः (सू० ६)॥ तेषां मोहः पापीयान्। कुतः? नामूढस्येतरोत्पत्तेः।

### वृत्तिः

शङ्कते—( नैकप्रत्यनीकभावात् )

रागादीनां भेदो न, एकप्रत्यनीकभावात् एकस्मिन् प्रत्यनीकभावो विरोधित्वं यस्य तत्तथा, तेनैकनाश्यत्वादित्यर्थः। एकं हि तत्त्वज्ञानमेषां विरोधि ॥ ४ ॥

समाधत्ते—( व्यभिचारादहेतुः )

एकविरोधित्वं भेदनिषेधे न हेतुर्व्यभिचारात्, एकाग्निसंयोगनाश्यत्वेऽपि रूपादीनां भेदात् ॥ ५ ॥

---

(१) 'द्वौ द्वावभि-' इति टि०। (२) 'अनैकान्तिकोऽयम्' इति ख०। (३) 'चार्थान्तरभावे' इति क-ख०।

(क) तथाच पाणिनीयसूत्रे—"अतिशायने तमबिष्ठनौ', 'द्विवचनविभज्योपपदे तरबीयसुनौ' (५।३।५५—५।३।५७) इति। (ख) एकयोनयो हीत्यादिः भाव इत्यन्तो ग्रन्थः क-ख तात्पर्यटीकापुस्तकयोः 'अभिमान इति' इति तृतीयसूत्रीय-टीकाग्रन्थात् परं मुद्रितः। तच्चायुक्तमिति इह मुद्रितः।

## न्यायभाष्यम्

तरोत्पत्तेः—अमूढस्य रागद्वेषा नोत्पद्यन्ते मूढस्य तु यथासङ्कल्पमुत्पत्तिः, विषयेषु रञ्जनीयाः सङ्कल्पा रागहेतवः, कोपनीयाः सङ्कल्पा द्वेषहेतवः, उभये च सङ्कल्पा न मिथ्याप्रतिपत्तिलक्षणत्वान्मोहादन्ये, ताविमौ मोहयोनी रागद्वेषाविति। तत्त्वज्ञानाच्च मोहनिवृत्तौ रागद्वेषानुत्पत्तिरित्येकप्रत्यनीकभावोपपत्तिः। (१)एवं च कृत्वा तत्त्वज्ञानाद् "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये (क)तदनन्तराभावादपवर्ग" इति व्याख्यातमिति॥ ६॥

## न्यायवार्त्तिकम्

पापीयानिति। कस्मात्? नामूढस्येतरौ भवतः मूढः कुप्यति मूढो रज्यते मूढो मुह्यतीति। तत्त्वज्ञानाच्च मोहनिवृत्तौ रागादिनिवृत्तिरित्येकप्रत्यनीकता—यस्मात् तत्त्वज्ञाननिवृत्ते मोहे न रागद्वेषौ भवतः अत एकप्रत्यनीकता, न (२)पुनरेकत्वादिति। एवं च कृत्वा दुःखादीनामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति सिध्यति॥ ६॥

## न्यायवार्त्तिकतात्पर्यटीका

अमूढस्येतरोत्पत्तिर्न भवति यत इत्यत्रार्थे 'नामूढस्येतरोत्पत्ते'रित्युक्तम्। मोहाद्विषयस्य सुखसाधनत्वानुस्मृतिः दुःखसाधनतानुस्मृतिश्च। सङ्कल्पाः रञ्जनीयाः कोपनीया इति कर्त्तरि कृत्यो भव्यगेयादिपाठात्।

वार्त्तिकम्—मूढो मुह्यतीति, मूढ इति मोहवासनावान्। भवतु निदानोच्छेदादुच्छेदो निदानिनः, निदानस्य कुत उच्छेद इत्यत आह—तत्त्वज्ञानाच्चेति। प्रतिपक्षाभ्यासान्निदानोच्छेद इत्यर्थः॥ ६॥

## वृत्तिः

किं च नैतेषामेकनिवर्त्यत्वं तत्त्वज्ञानस्य मोहनिवर्तकत्वात् तन्निवृत्त्या रागादिनिवृत्तेरित्याशयेनाह—( तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः )

यद्यपि बहूनां निर्धारणे इष्ठनस्तमपो वा विधानात् पापतमः पापिष्ठ इति वा युक्तं तथाऽपि द्वौ द्वावधिकृत्य निर्धारणम्, द्वयोर्निर्धारणे ईयसुनो विधानात्। तेन रागमोहयोर्द्वेषमोहयोर्वा मोहः पापीयान् अनर्थमूलं बलवद्द्वेष्य इति यावत्। हेतुमाह—नामूढस्येति। मोहशून्यस्य रागद्वेषयोरभावादित्यर्थः।

न च तत्त्वज्ञानिनोऽपि हिताहितगोचरप्रवृत्तिनिवृत्ती रागद्वेषाधीने इति तत्र व्यभिचार इति वाच्यम्—धर्माधर्मप्रयोजकरागद्वेषयोर्दोषत्वेन विवक्षितत्वात्। एतदभिप्रायकमेवासक्तोऽद्विष्टश्च मुक्त इत्यादिकमपीति भावः॥ ६॥

(१) 'एकवच्च कृत्वा' इति टि०। (२) 'पुनरनेकत्वा'दिति ख०।

(क) 'तदनन्तरापायादि'ति सूत्रपाठः।

## न्यायभाष्यम्

(क)प्राप्तस्तर्हि—

### (सू०)—निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ॥७॥

अन्यद्धि निमित्तमन्यच्च नैमित्तिकमिति दोषनिमित्तत्वाददोषो मोह इति ॥ ७ ॥

### (सू०)—न दोषलक्षणावरोधान्मोहस्य ॥ ८ ॥

प्रवर्त्तनालक्षणा दोषा इत्यनेन दोषलक्षणेनावरुध्यते दोषेषु मोह इति ॥ ८ ॥

## न्यायवार्त्तिकम्

निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः । प्राप्तस्तर्हि अदोषो मोहः दोषनिमित्तत्वाद्रूपादिवदिति ॥ ७ ॥

न दोषलक्षणावरोधान्मोहस्य । न दोषलक्षणावरोधात्—न कार्यकारणभावेन पदार्थानां तथाभावोऽतथाभावो वा सिध्यति, किन्तु लक्षणस्याभेदादिति दोषलक्षणं च मोहेऽस्तीति दोषो मोहः ॥ ८ ॥

## न्यायवार्त्तिकतात्पर्यटीका

निमि—भ्यः (सू० ७) ॥ (ख)

दोषनिमित्तत्वादिति हेतोरप्रयोजकत्वमाह—न दोषलक्षणावरोधादिति ।

न दो—स्य (सू० ८) ॥ तथाभावः तज्जातीयत्वम् अतथाभावः अतज्जातीयत्वम् ॥ ८ ॥

## वृत्तिः

शङ्कते—( प्राप्तस्तर्हि निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः )

दोषनिमित्तत्वान्मोहस्य दोषभिन्नत्वं स्यादभेदेन कार्यकारणभावाभावात् । दोषेभ्य इत्यान्तर्गणिकभेदाद्बहुवचनम् ।

प्राप्तस्तर्हीत्यंशस्तु न सूत्रं किं तु भाष्यकृतः पूरणमित्यपि वदन्ति ॥ ७ ॥

निराकरोति—( न दोषलक्षणसत्त्वान्मोहस्य ) (ग)

मोहस्य दोषलक्षणसत्त्वाद्दोषत्वम्, व्यक्तिभेदाच्च हेतुहेतुमद्भावो न विरुध्यते इति भावः ॥ ८ ॥

---

(क) ज-पुस्तके 'प्राप्तस्तर्हि' इत्यंशः सूत्रेऽन्तर्भावितः ।

(ख) ७मसूत्रे तात्पर्यटीका नोपलभ्यते ।

(ग) 'अवरोधाद्' इत्यत्र 'सत्त्वात्' इति वृत्तिकृन्मते विशेषः ।

## (सू०)—निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥ ९ ॥

न्यायभाष्यम्

द्रव्याणां गुणानां वाऽनेकविधविकल्पो निमित्तनैमित्तिकभावे तुल्यजातीयानां दृष्ट इति ॥ ९ ॥

दोषानन्तरं प्रेत्यभावः, तस्यासिद्धिरात्मनो नित्यत्वात्—न खलु नित्यं किंचिज्जायते म्रियते वा इति जन्ममरणयोर्नित्यत्वादात्मनोऽनुपपत्तिः, उभयं च प्रेत्यभाव इति तत्रायं (१)सिद्धानुवादः—

## (सू०)—आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥

नित्योऽयमात्मा प्रैति पूर्वशरीरं जहाति म्रियते इति, प्रेत्य च पूर्वशरीरं हित्वा

न्यायवार्त्तिकम्

निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः । तुल्यजातीयानामनेकविधविकल्पो निमित्तनैमित्तिकभावो दृष्ट इति, यथा बुद्धिर्बुद्ध्यन्तरनिमित्तं बुद्धिजातीया चेति । तुर्यादयो द्रव्यस्य निमित्तं द्रव्यजातीयाः । नोदनाभिघातसंयुक्तसंयोगाः (२)संस्कारश्च (क)गुणा इति ॥ ९ ॥

( इति दोषत्रैराश्यप्रकरणम् ) ।

परीक्षिता दोषा इति दोषानन्तरं प्रेत्यभावः तस्यासिद्धिरात्मनो नित्यत्वात्—नित्य आत्मा न जायते न म्रियते, उभयं च प्रेत्यभावः मृत्वा पुनर्जन्म । तत्रायं सिद्धार्थानुवादः—

आत्मनित्यत्वे प्रेत्यभावसिद्धिः । नित्यः सन् आत्मा प्रैति जायते चेति । किमुक्तं

न्यायवार्त्तिकतात्पर्यटीका

अनैकान्तिकत्वमाह—निमित्तनैमित्तिकोपपत्तेश्चेति ।

निमि—धः (सू० ९) ॥ (ख)

आत्म—द्धिः (सू० १०) ॥ उत्पादोच्छेदौ प्रेत्यभावः, न चात्मनो नित्यस्य तौ स्तः, तस्मादस्मिन् दर्शने न युक्तः प्रेत्यभावः । वैनाशिकानां तु सत्त्वोत्पादनिरोधाभ्यां युक्तः

वृत्तिः

अप्रयोजकत्वमुक्त्वाऽनैकान्तिकत्वमप्याह—( निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः )

एकजातीययोरपि द्रव्ययोर्गुणयोश्च निमित्तनैमित्तिकोपपत्तेर्हेतुहेतुमद्भावस्वीकारात् तुल्यजातीयत्वप्रतिषेधो न युक्त इति ॥ ९ ॥

समाप्तं दोषपरीक्षाप्रकरणम् ॥ २ ॥

---

(१) 'सिद्धार्थानुवादः' इति फ० । (२) 'संस्कारस्य' इति क० ।

(क) संस्कारश्चेति ख-पुस्तकपाठो गृहीतः । वेगाख्यसंस्कारस्य वेगजन्यत्वं प्रसिद्धम् । गुणजातीययोः संयोगसंस्कारयोर्हेतुहेतुमद्भावस्य क्रियाद्वारकत्वेति बोध्यम् ।

(ख) इमसूत्रे अवतरणिकाऽतिरिक्ता टीका नोपलभ्यते ।

## न्यायभाष्यम्

भवति जायते शरीरान्तरमुपादत्त इति। तच्चैतदुभयं 'पुनरुत्पत्तिः प्रेत्यभावः' इत्यत्रोक्तं पूर्वशरीरं हित्वा शरीरान्तरोपादानं प्रेत्यभावः (सू० १९, आ० १ अ० १) इति तच्चैतन्नित्यत्वे सम्भवतीति। यस्य तु सत्त्वोत्पादः सत्त्वनिरोधः प्रेत्यभावः तस्य कृतहानमकृताभ्यागमश्च दोषः। उच्छेदहेतुवादे ऋष्युपदेशाश्चानर्थका इति ॥१०॥

## न्यायवार्त्तिकम्

भवति म्रियत इति? पूर्वोत्पन्नाभिः शरीरेन्द्रियबुद्धिवेदनाभिर्वियुज्यत इति। किं चोक्तं जायत इति? अपूर्वोत्पन्नाभिर्निकायविशिष्टाभिः शरीरेन्द्रियबुद्धिवेदनाभिः सम्बध्यत इति। न पुनः जन्ममरणे (१) आत्मन्युत्पादनिरोधौ नित्यत्वात्—नित्य आत्मेति पूर्वाभ्यस्तसूत्रे प्रतिपादितम्। यस्य पुनरात्मन उत्पादनिरोधौ जन्ममरणे तस्याकृताभ्यागम-कृतनाशदोषप्रसङ्ग इत्युक्तं शरीरदाहे पातकाभावादिति सूत्रं वर्णयद्भिः ॥ १० ॥

## न्यायवार्त्तिकतात्पर्यटीका

प्रेत्यभावः। प्रेत्येति ल्यब् मुखं व्यादाय स्वपितीतिवद् द्रष्टव्यः। तथा च भूत्वा प्रायणमिति भवनप्रायणयोः समानकर्तृकत्वमप्युपपन्नमिति पूर्वपक्षः। पूर्वाभ्यस्तसूत्रे आत्मनित्यत्वव्यवस्थापनात्, सत्त्वोत्पादोच्छेदे च कृतहानाकृताभ्यागमदोषेणाभ्युदयनिःश्रेयसार्थमप्रवृत्तिः ऋष्युपदेशानर्थक्यप्रसङ्गश्च। स्वदेहेन्द्रियबुद्धिसंवेदनासंबन्धोत्पादविनाशौ नित्यस्यात्मनो जन्मप्रायणे। तथाचोपपन्नः प्रेत्यभाव इति सिद्धान्तः ॥ १० ॥

## वृत्तिः

क्रमप्राप्ततया प्रेत्यभावे परीक्षणीये प्रेत्यभावः शरीरस्य बुद्धेरात्मनो वेति संशये 'पुनरुत्पत्तिः प्रेत्यभावः' इति लक्षणसूत्राद्विनष्टस्योत्पादः प्रतीयते, न चासौ नित्यस्यात्मनः सम्भवतीति शरीरादेः स्यात्। न च मृतस्य शरीरादेरुत्पत्तिविरोधान्नेदं युक्तमिति वाच्यं प्रेत्यभाव इत्यस्य मुखं व्यादाय स्वपितीतिवद् व्यत्ययेन भूत्वा प्रायणमित्यर्थात्।

अत्र सिद्धान्तसूत्रम्—( आत्मनित्यत्वे प्रेत्यभावसिद्धिः )

आत्मनः पूर्वोक्तयुक्त्या नित्यत्वे प्रेत्यभावस्तस्य सिध्यति एकजातीयशरीराद्यसम्बन्धचरमसम्बन्धनाशयोरुत्पादप्रायणयोरात्मनः सम्भवात्। सम्बन्धस्त्ववच्छेद्यावच्छेदकभावलक्षणः, स च स्वरूपसम्बन्धविशेषोऽतिरिक्तो वेत्यन्यदेतत्।

लक्षणसूत्रे पुनरुत्पत्तिरित्यत्र पुनःपदं च प्रेत्यभावप्रवाहस्यानादित्वज्ञापनाय, तज्ज्ञानं च वैराग्ये उपयुज्यत इति ॥ १० ॥

---

(१) 'आत्मन उत्पादनिरोधौ' इति क-ख-धृतपाठान्तरम्।

### न्यायभाष्यम्

कथमुत्पत्तिरिति चेत्—

(सू०)—व्यक्ताद् व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ ११ ॥

केन प्रकारेण किंधर्मकात् कारणाद् व्यक्तं शरीराद्युत्पद्यत इति? व्यक्ताद् भूतसमाख्यातात् पृथिव्यादितः परमसूक्ष्मान्नित्याद् व्यक्तं शरीरेन्द्रियविषयोपकरणाधारं प्रज्ञातं द्रव्यमुत्पद्यते। व्यक्तं च खल्विन्द्रियग्राह्यं तत्सामान्यात् कारणमपि व्यक्तम्। किं सामान्यम्? रूपादिगुणयोगः - रूपादिगुणयुक्तेभ्यः पृथि-

### न्यायवार्त्तिकम्

कथमुत्पत्तिरिति चेत्—किंधर्मकात् कारणात् शरीरेन्द्रियमहाभूतादि व्यक्तमुत्पद्यत इति?

व्यक्ताद् व्यक्तानां प्रत्यक्षप्रामाण्यात्। किं पुनर्व्यक्तम्? उपलब्धिलक्षणप्राप्तं रूपादियुक्तं द्रव्यम्, तत्सामान्यात् परमाणुलक्षणमपि पृथिव्यादिकारणं व्यक्तमित्युच्यते। किं सामान्यम्? रूपादियोगः—(१)रूपादिसामान्यात् परमाणवो व्यक्ता इत्युच्यन्त इति। रूपादियुक्तेभ्यः परमाणुभ्यो घटादि गवादि व्यक्तमुत्पद्यत इति। कः पुनरत्र न्यायः? प्रत्यक्षप्रामाण्यात् (२)दृष्टा रूपादिमद्भ्यो (२*) रूपादिमतामुत्पत्तिरिति। नानेकान्तात्? नायमेकान्तो

### न्यायवार्त्तिकतात्पर्यटीका

प्रेत्यभावविचारप्रस्तावेनेदमपरं विचारयति—येयं प्रेत्य[illegible]त्तिर्नाम सा कथमिति चेत्। अत्र हि प्रावादुकानां नानाविधा विप्रतिपत्तयः सन्ति। तत्राभिमतं तावत्पक्षं गृह्णाति—व्यक्तादिति।

व्यक्तात्—ण्यात् ( सू० ११ )॥ अग्रे विप्रतिपत्तीर्निवारयिष्यति। शरीरेन्द्रियविषयोपकरणाधारमिति एकवद्भावेन नपुंसकत्वम्। प्रत्यक्षगृहीतसंबन्धप्रभवमनुमानं प्रत्यक्षेऽप्युपदिशति—(क)प्रत्यक्षमूलकत्वादिति। ननु भवतु शरीरं पृथिव्यादि च व्यक्तं महत्त्वानेकद्रव्यवत्त्वरूपविशेषेभ्यः, तन्मूलकारणं परमाणवः कथं व्यक्ता इत्यत आह—तत्सामान्यादिति। रूपादिमत्सामग्रीपूर्वकं शरीरमित्यर्थः॥ ११ ॥

### वृत्तिः

ननु प्रेत्यभाव उत्पत्तिनिरूप्यः, सा च न सजातीयाद् विजातीयाद्वा सम्भवति आद्यपृथिव्यादौ व्यभिचारात्, तन्नित्यत्वे मानाभावादतः प्रेत्यभावोऽसिद्ध इत्युपोद्घातात् प्रसङ्गाद्वोत्पत्तिप्रकारं दर्शयति—( व्यक्ताद् व्यक्तानां प्रत्यक्षप्रामाण्यात् )

(१) 'रूपादिसामान्ययोगात्'—इति क-खधृतपाठान्तरम्।
(२) अयमंशः ख-पु० नास्ति।
(क) 'प्रत्यक्षप्रामाण्यादि'ति तु मूले दृश्यते।

## न्यायभाष्यम्

व्यादिभ्यो नित्येभ्यो रूपादिगुणयुक्तं शरीराद्युत्पद्यते। प्रत्यक्षप्रामाण्यात्—दृष्टो हि रूपादिगुणयुक्तेभ्यो मृत्प्रभृतिभ्यस्तथाभूतस्य द्रव्यस्योत्पादः, तेन चादृष्टस्यानुमानमिति। रूपादीनामन्वयदर्शनात् प्रकृतिविकारयोः, पृथिव्यादीनां (१)नित्यानामतीन्द्रियाणां कारणभावोऽनुमीयत इति ॥ ११ ॥

## (सू०)—न घटाद् घटानिष्पत्तेः ॥ १२ ॥

इदमपि प्रत्यक्षम्—न खलु व्यक्ताद् घटाद् व्यक्तो घट उत्पद्यमानो दृश्यते इति, व्यक्ताद् व्यक्तस्यानुत्पत्तिदर्शनान्न व्यक्तं कारणमिति ॥ १२ ॥

## न्यायवार्त्तिकम्

रूपादिमद्भ्यो रूपादिमदुत्पत्तिरिति अरूपादपि संयोगाद्रूपादिमदुत्पद्यमानं घटादि गवादि दृष्टमिति ? न सूत्रार्थापरिज्ञानात्—नायं सूत्रार्थो रूपादिमत एव रूपादिमदुत्पद्यत इति, अपि तु रूपादिमत्सामग्रीपूर्वकं गवादि व्यक्तमिति सूत्रार्थः। एवं च नानेकान्तोऽस्ति, न ह्यरूपायाः सामग्र्या रूपादिमत् कार्यमिति ॥ ११ ॥

न घटाद् घटानिष्पत्तेः। सजातीयात् सजातीयमुत्पद्यत इति मत्वा प्रतिषेधः। न सूत्रार्थापरिज्ञानादिति—न ब्रूमः सर्वं सर्वस्य कारणमिति, यश्च सर्वं सर्वस्य कारणत्वेनाभ्युपेयात् स एवं प्रत्यवस्थेयो न घटाद् घट उत्पद्यमानो दृष्ट इति ॥ १२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

न घ—त्तेः (सू० १२) ॥(क)।

## वृत्तिः

'व्यक्तानाम्' उत्पत्तिरिति शेषः। (ख) व्यक्ताद् व्यक्तजातीयात् पृथिव्यादितो व्यक्तानां व्यक्तजातीयानां जन्यपृथिव्यादीनामुत्पत्तिः। इत्थं च पृथिव्यादेः पृथिव्यादितो रूपवदादितश्च रूपवदादीनामुत्पत्तेः प्रत्यक्षसिद्धत्वात् परमाणुरपि कल्प्यते त्रसरेणोरपकृष्टमहत्त्वेन सावयवावयवत्वसिद्धेः, तस्य लाघवान्नित्यत्वमिति भावः ॥ ११ ॥

अबुद्ध्वा शङ्कते—( न घटाद्घटानिष्पत्तेः )

विशेषकार्यकारणभावाभावे सामान्यतोऽपि न तथेति भावः ॥ १२ ॥

(१) नित्यानाम्—इति ज० पु० नास्ति।
(क) १२शसूत्रस्य तात्पर्यटीका नोपलभ्यते।
(ख) समुदायार्थमाह 'व्यक्तात्' इत्यादिना।

## (सू०)—व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥

### न्यायभाष्यम्

न ब्रूमः सर्वं सर्वस्य कारणमिति, किन्तु यदुत्पद्यते व्यक्तं द्रव्यं तत् तथाभूतादेवोत्पद्यते इति। व्यक्तं च तन्मृद्द्रव्यं कपालसंज्ञकं यतो घट उत्पद्यते। न चैतन्निह्नुवानः क्वचिदभ्यनुज्ञां लब्धुमर्हतीति। तदेतत्तत्त्वम् ॥ १३ ॥

अतः परं प्रावादुकानां दृष्टयः प्रदर्श्यन्ते—

## (सू०)—अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥ १४ ॥

### न्यायवार्त्तिकम्

अपि तु—

व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः। यदपि तद् घटादि व्यक्तमुत्पद्यते तदपि व्यक्तादेव कपालादेः; व्यक्ताच्चोत्पद्यमानं घटादि न किञ्चिद्बाधत इति। रूपादिमत्सामग्रीपूर्वकं शरीरादि व्यक्तं दर्शनस्पर्शनाभ्यामेकार्थग्रहणाद् घटवदिति। शब्दवद्वा वैधर्म्येण, तदेतत् तत्त्वम् ॥ १३ ॥

( इति प्रेत्यभावपरीक्षाप्रकरणम् )

अतः परं प्रावादुकानां दर्शनान्युपन्यस्य कानिचित् प्रतिषिध्यन्ते कानिचिदुपगम्यन्त इति। तत्र तावत्—

अभावाद् भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात्। अभावाद्भावो जायत इति कस्यचिद्दर्शनम्।

### न्यायवार्त्तिकतात्पर्यटीका

व्यक्तात्—धः (सू० १३)॥(क)।

(ख)अतः परं प्रावादुकानां तैर्थिकानां च दर्शनान्युपन्यस्तानि कानिचित् प्रतिषिध्यन्ते तत्र कानिचिद् (ग)अभ्यनुज्ञायन्त इति। तत्र तावद् एके प्राहुः।

अभा—वात् (सू० १४) ॥ अभावाद्भावोत्पत्तिः। कुतः ? नानुपमृद्य प्रादुर्भावो यतः तस्मादित्यर्थः।

### वृत्तिः

विशेषतो व्यभिचारो न विरोधी, सामान्यतस्तु नास्त्येवेत्याशयवान् समाधत्ते—( व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः )

सजातीयात् सजातीयोत्पत्तेर्न प्रतिषेधः, पृथिवीजातीयात् कपालादितो घटादिनिष्पत्तेः, उक्तापादनं चाप्रयोजकमिति भावः ॥ १३ ॥

समाप्तं प्रेत्यभावपरीक्षाप्रकरणम् ॥ ३ ॥

अथात्राष्टौ प्रकरणानि, प्रसङ्गाद् व्यक्तानामित्येतत्सिद्ध्यर्थमुपोद्घाताद्वा। तत्रादौ शून्यतोपादानप्रकरणम्।

तत्र पूर्वपक्षसूत्रम्—( अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् )

---

(क) १३-शसूत्रस्य तात्पर्यटीका नोपलभ्यते। (ख) अत्र भाष्यवार्त्तिकतात्पर्यटीकानामक्षरविसंवादः स्पष्टः। टीकाक्षतोपलब्धो वार्त्तिकग्रन्थ ईदृशाकार एवासीत् तस्यार्थमात्रपरिग्रहो वा कृत इति तु सुधीभिरवधानेन निर्णेयम्। (ग) वार्त्तिके 'उपगम्यन्ते' इत्यक्षरविसंवादः।

## न्यायभाष्यम्

असतः सदुत्पद्यते(क) इत्ययं पक्षः। कस्मात्? उपमृद्य प्रादुर्भावात्। उपमृद्य बीजमङ्कुर उत्पद्यते नानुपमृद्य, न चेद् बीजोपमर्दोऽङ्कुरकारणम् अनुपमर्देऽपि बीजस्याङ्कुरोत्पत्तिः स्यादिति ॥ १४ ॥

अत्राभिधीयते—

### (सू०)—व्याघातादप्रयोगः ॥ १५ ॥

उपमृद्य प्रादुर्भावादित्ययुक्तः प्रयोगो व्याघातात्। यदुपमृद्नाति न तदुपमृद्य प्रादुर्भवितुमर्हति विद्यमानत्वात्। यच्च प्रादुर्भवति न तेनाप्रादुर्भूतेनाविद्यमानेनोपमर्द इति ॥ १५ ॥

## न्यायवार्त्तिकम्

तत्र न्यायं ब्रुवते—नानुपमृद्य प्रादुर्भावादिति, न किलाविनष्टे कारणे कार्यमुत्पद्यत इति। यथा बीजविनाशोत्तरकालमङ्कुरः प्रादुर्भवति। यदि बीजविनाशोऽङ्कुरकारणं नाभविष्यत्, अविनष्टेऽपि बीजेऽङ्कुरोऽभविष्यत्, न चैवमस्ति। तस्माद्बीजविनाशोऽङ्कुरकारणमिति ॥१४ ॥

व्याघातादप्रयोगः। उपमृद्य प्रादुर्भवतीति व्याघातः—यदुपमृद्नाति तदस्ति। न ह्यसदुपमर्द-कारणमिति। यच्च प्रादुर्भवति तन्नास्ति न हि सदुत्पद्यत इति। तदिदमुपमृद्नाति प्रादुर्भवति चेति व्याहतमुच्यते। को व्याघातः? सहासम्भवः। यद्युपमृद्नाति न जायते; अथ जायते, नोपमृद्नाति ॥१५॥

## न्यायवार्त्तिकतात्पर्यटीका

विश्वं हि शून्यताया एव जायते। एवं किल श्रूयते—(क)असदेवेदमग्र आसीदिति। अत एवाद्याप्यसत एव जन्म दृश्यते न सतः। तत् कस्य हेतोः? अभावस्तस्य कारणमिति। उपलक्षणं चेदं नानुपमृद्य प्रादुर्भावादिति, असत उत्पादादित्यपि द्रष्टव्यम्। तस्मादसदुपादानं विश्वमिति सिद्धम् ॥ १४ ॥

तत्र सिद्धान्ती गूढाभिसन्धिराह—

व्याघा—गः (सू० १५) ॥ उपमृद्य प्रादुर्भवतीति व्याघात इति ॥ १५ ॥

## वृत्तिः

अभावादुपादानात् कार्याणां भावानामुत्पत्तिः यतोऽङ्कुरादेर्बीजादिकमनुपमृद्य न प्रादुर्भावः, तथा च बीजादिविनाशोऽङ्कुराद्युपादानमिति ॥ १४ ॥

अत्रोत्तरम्—( व्याघातादप्रयोगः )

उपमृद्य प्रादुर्भवतीति न युक्तः प्रयोगो व्याघातात्, उपमर्दकस्य पूर्वमसत्त्वे उपमर्द-कत्वायोगात्, सत्त्वे च परतः प्रादुर्भावायोगात् ॥ १५ ॥

(क) 'असतः सज्जायते' इति छान्दोग्यम् ६।२।१।

## (सू०)—नातीतानागतयोः कारकशब्दप्रयोगात् ॥ १६ ॥

### न्यायभाष्यम्

अतीते चानागते चाविद्यमाने कारकशब्दाः प्रयुज्यन्ते। पुत्रो जनिष्यते, जनिष्यमाणं पुत्रमभिनन्दति, पुत्रस्य जनिष्यमाणस्य नाम करोति, अभूत्कुम्भः, भिन्नं कुम्भमनुशोचति, भिन्नस्य कुम्भस्य कपालानि, अजाताः पुत्राः पितरं तापयन्तीति बहुलं भाक्ताः प्रयोगा दृश्यन्ते। का पुनरियं भक्तिः? आनन्तर्यं भक्तिः, आनन्तर्यसामर्थ्या-दुपमृद्य प्रादुर्भावार्थः, प्रादुर्भविष्यन्नङ्कुर उपमृद्नातीति भाक्तं कर्तृत्वमिति ॥ १६ ॥

### न्यायवार्त्तिकम्

नातीतानागतयोः कारकशब्दप्रयोगात्। अतीतेऽनागते च कारकशब्दः प्रवर्तमानो दृष्टः—अतीते तावद् भिन्नं कुम्भमनुशोचति, भिन्नस्य कुम्भस्य कपालानि, अभूत् कुम्भ इति। अनागतेऽपि—पुत्रो जनिष्यते, जनिष्यमाणं पुत्रमभिनन्दति, जनिष्यमाणस्य पुत्रस्य नाम करोति, अजाताः पुत्राः स्थविरं तापयन्तीति बहुलं प्रयोगा भाक्ता इति। एवमयं प्रादुर्भविष्यन्नङ्कुर उपमृद्नातीत्युच्यते। कः पुनरुपमर्दार्थः? आनन्तर्यसामर्थ्यात् अनन्तरोत्पत्त्यर्थः, यस्माद् बीजोपमर्दादनन्तरमयं प्रादुर्भवतीति। अत्रोक्तं व्याघातादिति, नाजातेनोपमर्दो नोपमर्दासमर्थो जायत इति। यदपीदमुच्यते अतीतेऽनागते च कारकशब्दाः प्रयुज्यन्त इति, न प्रयोगो वार्यते,

### न्यायवार्त्तिकतात्पर्यटीका

तदभिसन्धिमविद्वान् पूर्वपक्षी दूषयति।

न अतीतानागतयोः कारकशब्दप्रयोगात्। ( सू० १६ )॥ इति, उपमृद्य प्रादुर्भवतीति भाक्त एव प्रयोगो न मुख्य इत्यर्थः। भिन्नस्य कुम्भस्य कपालानीति तु यद्यपि न साक्षात्कारकशब्दस्तथाऽपि षष्ठ्या संबन्धाभिधानात् तस्य क्रियागर्भत्वात् क्रियायाश्च कारकनान्तरीयकत्वात् पारम्पर्येण कारकशब्दता द्रष्टव्या। का पुनर्भक्तिः? यया योगाद्(क) उपसंगृह्णाति बीजमङ्कुर इति भवति प्रयोग इत्यर्थः।

पृच्छति—कः पुनरङ्कुरेण (ख) बीजोपमर्दार्थः। उत्तरम्—अनन्तरोत्पत्त्यर्थः। पुनरपि गूढाभिसन्धिरेव उपमर्द्योपमर्दकयोरप्यानन्तर्यम् (ग)अनयोरपीति एतत्सामान्यमित्यर्थः। सिद्धान्ती उक्तं स्मारयति—अत्रोक्तमिति। अभिप्रायमुद्घाटयति—यदपीदमुच्यत इति।

### वृत्तिः

पूर्वपक्षी दूषयति—( नातीतानागतयोः कारकशब्दप्रयोगात् ) कर्तृकर्मादिबोधकशब्दनायुक्तः प्रयोगः, अतीतेऽनागते च कारकशब्दप्रयोगात्

(क) अत्र "उपमृद्नाति" इति पाठः सम्भाव्यते। (ख) अङ्कुरेण बीजेति च तात्पर्यकृता पूरितम्, तथैव वा पुस्तकान्तरपाठः। "कः पुनरङ्कुरेण बीजोपमर्द्दार्थः" इति ग्रन्थः "का पुनर्भक्तिः" इत्यतः पूर्वं क-ख-पुस्तकयोर्मुद्रितः। औचित्यादेवं सन्निवेशः कृतः। (ग) अनयोरिति उपमर्द्दप्रादुर्भावयोरित्यर्थः।

## (सू०)—न त्रिनष्टेभ्योऽनिष्पत्तेः ॥ १७ ॥

### न्यायभाष्यम्

न विनष्टाद् बीजादङ्कुर उत्पद्यते इति तस्मान्नाभावाद् भावोत्पत्तिरिति ॥ १७ ॥

### न्यायवार्त्तिकम्

अपि त्वसतः कारणादुत्पत्तिर्न युक्तेति। कारकशब्दानां च त्रैकालिकः प्रयोगः, तदुक्तं (क) प्रामाण्यसामान्यचिन्तायां वृक्षस्तिष्ठतीति यथा। यत्पुनरेतत् आनन्तर्यसामर्थ्यादुपमृद्य प्रादुर्भवतीतीत्युच्यत इति, न बीजनाशोऽङ्कुरकारणमपि तु (१)व्याहतव्यूहानां बीजावयवानां पूर्वव्यूहनिवृत्तौ व्यूहान्तरमुत्पद्यत इति व्यूहान्तरादङ्कुर आविर्भवतीति। न चाविनष्टे पूर्वव्यूहे व्यूहान्तरेण शक्यते भवितुमित्यानन्तर्यं प्रादुर्भावार्थः। एवं च बीजोपादानं युक्तमिति ॥१६॥

अस्य चार्थस्य ज्ञापनार्थं सूत्रम्—

न विनष्टेभ्योऽनिष्पत्तेः इति। न हि बीजविनाशोऽङ्कुरस्य कारणमपि तु बीजावयवाः पूर्वव्यूहपरित्यागेनेत्यर्थः सूत्रस्य ॥१७॥

### न्यायवार्त्तिकतात्पर्यटीका

नौपचारिकं प्रयोगं व्यासेधामः कारकशब्दानाम्, किन्तु यथा भविष्यन्नङ्कुरः सम्प्रति असन्न बीजमुपमृद्नाति, एवं बीजाभावोऽसन्नाङ्कुरं करोतीति ब्रूमः। तदिदमाह—अपि त्वसतः कारणादुत्पत्तिर्न युक्तेति। ननूक्तम् 'उपमृद्य प्रादुर्भावा'दित्यनेनानन्तर्यं बीजविनाशाङ्कुरोत्पादयोः सूचितं बीजविनाशानन्तर्याच्चाङ्कुरोत्पादस्य बीजविनाशकार्यत्वमित्यत आह—यत्पुनरेतदानन्तर्यसामर्थ्यादिति। अनन्यप्रयुक्तमानन्तर्यं कार्यकारणभावसाधनम् (२)इदं तु व्यूहानन्तर्यप्रयुक्तमिति नाभावस्य कारणत्वं गमयितुमर्हतीत्यर्थः। यदि व्यूहान्तरकार्योऽङ्कुरः अथ कस्मादविनष्टे पूर्वव्यूहे न भवतीत्यत आह—न चाविनष्टे इति। ननु यदि बीजावयवव्यूहान्तरमङ्कुरोत्पादहेतुर्न बीजं, कस्मादङ्कुरार्थिनः कृषीवला बीजमुपाददत इत्यत आह—एवं चेति। बीजावयवोपादाने अवर्जनीयतया बीजमागच्छदशक्यप्रत्याख्यानमित्यर्थः ॥ १६ ॥

तदेवमर्थं परिशोध्यात्रैवार्थे सूत्रं योजयति—अस्य चार्थस्येति।

न वि—त्तेः (सू० १७)॥ न विनष्टेभ्यो बीजेभ्योऽङ्कुरस्य अनिष्पत्तेः। बीजविनाश-

### वृत्तिः

प्रयोगात्। यथा जनिष्यते पुत्रः, जनिष्यमाणं पुत्रमभिनन्दति, अभूत् कुम्भः, भिन्नं कुम्भमनुशोचति ॥ १६ ॥

---

(१) 'व्याहत'—इति क०। (२) 'इदं तत्तु व्यूहा'—इति क०।

# (सू०)—क्रमनिर्देशादप्रतिषेधः ॥ १८ ॥

## न्यायभाष्यम्

उपमर्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः, स खल्वभावाद्भावोत्पत्तेर्हेतुर्निर्दिश्यते ; स च न प्रतिषिध्यते इति। व्याहतव्यूहानामवयवानां पूर्वव्यूहनिवृत्तौ व्यूहान्तराद् द्रव्यनिष्पत्तिर्नाभावात्। बीजावयवाः कुतश्चिन्निमित्तात् प्रादुर्भूतक्रियाः पूर्वव्यूहं जहति व्यूहान्तरं चापद्यन्ते व्यूहान्तरादङ्कुर उत्पद्यते। दृश्यन्ते खलु अवयवास्तत्संयोगाश्चाङ्कुरोत्पत्तिहेतवः। न चानिवृत्ते पूर्वव्यूहे बीजावयवानां शक्यं व्यूहान्तरेण भवितु-

## न्यायवार्त्तिकम्

क्रमनिर्देशादप्रतिषेधः। पूर्वं बीजविनाशः पश्चादङ्कुरोत्पत्तिरिति सूत्रार्थः। अभावश्चेद् अङ्कुरोत्पादकारणं स्यात् सर्वं सर्वस्मादुत्पद्येत अभावस्य निर्विशेषत्वात्। न हि शालिबीजं विनष्टे

## न्यायवार्त्तिकतात्पर्यटीका

श्चेदङ्कुरोत्पादहेतुरथ विनष्टे बीजे तदवयवेषु परस्परविच्छिन्नेष्वसति तेषां व्यूहान्तरे कस्मादङ्कुरो न भवति भवति तु सति तेषां व्यूहे ? तस्माद्विनष्टेभ्योऽङ्कुरानुत्पत्तेरसति व्यूहे न बीजनाशः कारणमिति सूत्रार्थः ॥ १७ ॥

क्रम—धः (सू० १८) ॥ क्रमनिर्देशादित्यस्य हेतोरस्मत्पक्षेऽप्यप्रतिषेधः, तत्राप्यानन्तर्यस्य तुल्यत्वात्। तथाऽपि विनिगमनायां को हेतुरित्यत आह—अभावश्चेदङ्कुरोत्पादकारणं स्यात्, अनुपाख्येय इति शेषः। न ह्यनन्वयविनष्टयोः शालि-यव-बीजयोः कश्चिद्विशेषोऽस्ति येनैकस्माच्छाल्यङ्कुरो नान्यस्मादिति। को नु खल्वभावानामस्त्याजानतो भेद इति। अपि च कारणानां शक्तिभेदात् कार्याणि भिन्नशक्तियुक्तानि। यदा तु कारणानामभेदस्तदा

## वृत्तिः

नन्वास्तामौपचारिकः प्रयोगस्तथाऽपि किं बीजादेर्विनष्टस्योपादानत्वं मन्यसे, बीजादेर्विनाशस्य वा ? अन्त्येऽपि तस्योपादानत्वं निमित्तत्वं वा ? तत्राद्ये उत्तरम्—

( न विनष्टेभ्योऽनिष्पत्तेः )

विनष्टानां बीजादीनामुपादानत्वायोगात्, अत एव न द्वितीयः, तत्र विनष्टे विनाशस्ततो नोत्पत्तिः, द्रव्यत्वस्य भावकार्यसमवायिकारणतावच्छेदकत्वात् ॥ १७ ॥

तृतीये त्वाह—( क्रमनिर्देशादप्रतिषेधः )

अभावस्य कारणत्वं न प्रतिषिध्यते प्रतिबन्धकाभावस्य हेतुत्वोपगमादित्याह क्रमेति। बीजे विनष्टेऽङ्कुरो जायते इति प्रत्ययाद् बीजस्य प्रतिबन्धकस्याभावः कारणम्, बीजे विनष्टे हि

न्यायभाष्यम्

मित्युपमर्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः, तस्मान्नाभावाद् भावोत्पत्तिरिति। न चान्यद् वीजावयवेभ्योऽङ्कुरोत्पत्तिकारणमित्युपपद्यते बीजोपादाननियम इति ॥ १८ ॥

अथापर आह—

(सू०)—ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् ॥ १९ ॥

पुरुषोऽयं समीहमानो नावश्यं समीहाफलं प्राप्नोति तेनानुमीयते पराधीनं (१)पुरुषस्य कर्मफलाराधनमिति, यदधीनं स ईश्वरः। तस्मादीश्वरः कारणमिति ॥१९॥

न्यायवार्त्तिकम्

काचिदन्वयशक्तिरस्ति, अनन्वितं च कार्यं सर्वाभिः शक्तिभिरुत्पद्येत, अन्वितं तु दृष्टम्, तस्मान्नाभावः कारणमिति सूत्रार्थः ॥१८॥

( इति शून्यतोपादानप्रकरणम् )

अपर इदानीमाह—

ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्। पुरुषोऽयं समीहमानो नावश्यं समीहाफल-

न्यायवार्त्तिकतात्पर्यटीका

कुतस्तच्छक्तीनां भेदः तथा च कार्याणि भिन्नशक्तीनि न स्युरित्याह—अनन्वितं च कार्यं सर्वाभिरिति। यदप्यसत उत्पादादभावस्योपादानत्वं तदपि कार्याणां भिन्नत्वेन भिन्नशक्तिकत्वेन च प्रत्युक्तम् तत्प्रागभावानां स्वाभाविकभेदविरहात्। अपि च प्रागभावानामनादित्वेन कार्योत्पादस्याप्यनादित्वप्रसङ्गः। भावरूपकारणसहकारित्वं त्वभावस्य न निषिध्यते अस्मदभिमतस्योपाख्येयस्य। अत एव (क) पाकजादीनां रूपादीनां पूर्वरूपादिध्वंसनिमित्तत्वमभ्युपेयते। श्रुतिस्तु पूर्वपक्षाभिप्राया। तथा च सिद्धान्तश्रुत्यन्तरं—सदेव सोम्येदमग्र आसीदिति कथमसतः सज्जायेतेति (ख)। शून्यताविवर्तो विश्वप्रपञ्च इति तु दर्शनमसत्ख्यात्यनिर्वचनीयख्यातिनिराकरणेनापाकृतम्। अपि च सर्वशून्यत्वे ख्यातुरभावात् ख्यातेरभावः। तस्मान्न शून्यतोपादानस्तद्विवर्तो वा विश्वप्रपञ्च इति सिद्धम् ॥ १८ ॥

अथापर आह—

ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् (सू० १९) ॥ मा भूदयं नामरूपप्रपञ्चः

वृत्तिः

तदवयवैर्जलादिसिक्तभूम्यवयवसहितैरङ्कुर आरभ्यते, अभावमात्रस्य कारणत्वे च चूर्णीकृतादपि वीजादङ्कुरोत्पत्तिः स्यादभावस्य निर्विशेषत्वादिति भावः ॥ १८ ॥

समाप्तं शून्यतोपादाननिराकरणप्रकरणम् ॥ ४ ॥

(१) 'पुरुषकर्मफला-' इति क०।

(क) अत्र "आदि"पदप्रयोजनं चिन्त्यम्। (ख) छान्दोग्ये ६ अ०।

## न्यायवार्त्तिकम्

माप्नोति तेनावगम्यते पराधीनं पुरुषस्य (१) कर्मफलाराधनमिति—निरपेक्षश्चेत् पुरुषः कर्मफलभोगे समर्थः स्यात् न कस्यचिदफला क्रिया भवेत्। न कश्चिद् दुःखं कुर्यादिति। उभयं च दृष्टम्, तस्मादीश्वरः कारणमिति ॥१९॥

## न्यायवार्त्तिकतात्पर्यटीका

शून्यतोपादानोऽपि तु ब्रह्मोपादानो भविष्यति। ब्रह्मैव हि प्रपञ्चरूपेण परिणमते मृत्तिकेव घटशरावोदञ्चनादिभावेन। न चैवं नित्यत्वव्याघातः। परिणामेऽपि तत्त्वाविघातात् तल्लक्षणत्वाच्च नित्यतायाः। यदाह(क) यस्मिंस्तत्त्वं न विहन्यते तदपि नित्यमित्येकं दर्शनम्। अपरं च ब्रह्मैवानिर्वचनीयानाद्यविद्योपधानान्नामरूपप्रपञ्चभेदेन विवर्त्तते मुखमिवैकमनेकमणिकृपाणादिभेदान्नैकविधप्रतिबिम्बभेदेनेति। तदेतद्दर्शनद्वयमनेन सूचितम्। ईश्वरो ब्रह्म ईशनायोगात्। चेतनाशक्तिः क्रियाशक्तिश्चेशना। सा चास्ति ब्रह्मणीति ब्रह्म ईश्वरः कारणं जगतः। श्रूयते हि (ख) तदैक्षत बहु स्यां प्रजायेयेत्यादि। सा चेयं श्रुतिश्चेतनस्य जगत्कारणतामाह। न चाभावो वा प्रधानं वा परमाणवो वा चेतयन्ते। ननु जीवा एव चेतनास्तत्कर्मनिमित्तो नामरूपप्रपञ्चो भविष्यति, कृतमत्र भगवतेश्वरेणेत्यत उक्तं पुरुषकर्माफल्यदर्शनादिति। पुरुषश्चेच् चेतयेन्नैवं निष्फलं कर्मारभेत। निष्फलं विद्वान् प्रवर्त्तमानः कथं चेतनो नाम? तस्मात्पुरुषकर्माफल्यदर्शनादीश्वरः कारणमित्यर्थः ॥ १९ ॥

## वृत्तिः

मतान्तरमाह—( ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् )

अनेन ब्रह्मपरिणामवादो ब्रह्मविवर्त्तवादो वा दर्शित इति वदन्ति। तथाहि ब्रह्मैव नामरूपप्रपञ्चभेदेन विपरिणमते, मृत्तिकेवोदञ्चनादिभावेन। अत एव प्राक्तरूपस्य सत्त्वस्यापरित्यागः प्रपञ्चेषु, उदञ्चनादाविव मृत्तिकात्वस्येति परिणामवादः।

ब्रह्मैव चानाद्यनिर्वचनीयाविद्यावशान्नानारूपेण विवर्तते मुखमिव तत्तज्जलाद्यालम्बनभेदादिति विवर्तवादः।

ननु पुरुषकर्मैव कारणमस्तु, किमीश्वरस्य कारणत्वेनेत्यत आह—पुरुषेति। पुरुषकर्मणो हि वैफल्यमपि दृश्यते, अतः सहकार्यन्तरमवश्यं वाच्यम्, तथा चेश्वर एव यथा यथेच्छति तथा जगद्विपरिवर्तते इत्येवास्तु, किं पुरुषकर्मणेति भावः।

वस्तुतस्तु केवलेश्वरकारणतापरं प्रकरणं तदुपादानतापरत्वे तु न किमपि मानमाकलयाम इति ॥ १९ ॥

(१) 'कर्मफलावधानम्' इति ख०। '-फलाबाधन'मिति—का-खप्रतपाठान्तरम्।

(क) महाभाष्यम् १।१।१। (ख) छा० ६।२।३।

## (सू०)—न पुरुषकर्माभावे फलानिष्पत्तेः ॥ २० ॥

### न्यायभाष्यम्

ईश्वराधीना चेत् फलनिष्पत्तिः स्याद् अपि तर्हि पुरुषस्य समीहामन्तरेण फलं निष्पद्येतेति ॥ २० ॥

### न्यायवार्त्तिकम्

न पुरुषकर्माभावे फलानिष्पत्तेरिति। ईश्वरश्चेत् कारणं (१)भवेत् पुरुषकर्मान्तरेणापि (२) सुखदुःखोपभोगौ स्यातां ततश्च कर्मलोपोऽनिर्मोक्षश्च, ईश्वरस्यैकरूपत्वादेकरूपा क्रियेति। अथेश्वरः कारणभेदानुविधानेन कार्यं निर्वर्तयति, यदपेक्षते तन्न करोतीति प्राप्तम्। न हि कुलालो दण्डादि करोति। एवं कर्मसापेक्षश्चेदीश्वरो जगदुत्पत्तिकारणं स्यात् कर्मणि ईश्वरोऽनीश्वरः स्यात् ॥२०॥

### न्यायवार्त्तिकतात्पर्यटीका

एतद्दर्शनद्वयमपाकरोति—

न पुरुषकर्माभावे फलानिष्पत्तेः (सू० २०) ॥ इदमत्राकूतम्। न तावन्मृत्तिकेव नामरूपप्रपञ्चरूपेण ब्रह्म परिणमते। तद्धि सर्वात्मना वा परिणमते एकदेशेन वा। तत्र सर्वात्मना परिणामे तत्त्वविघातादनित्यत्वम्। एकदेशेन परिणामे सावयवत्वात् तदेवानित्यत्वम्। अथ तत्त्वेनानुगतस्य परिणामः तच्च ब्रह्म। न तर्हि ब्रह्मणः परिणामः। न च निर्भागस्यैकस्य स्वसंवेदनप्रत्यक्षस्य विपरीतज्ञानगोचरत्वसम्भवः। सामान्यतो ग्रहे रूपविशेषाग्रहे च तदन्यरूपारोपेण विभ्रमो दृष्टः शुक्तिकादौ, न तु जातु शुक्तिरूपं विद्वान् रजतमिति विपर्यस्यति। न च निरंशे स्वसंवेदनप्रत्यक्षे ब्रह्मणि तत्स्वरूपाग्रहः सामान्यग्रहो वा भवति। तस्मादीश्वरो जगद्भेदेन विवर्तत इत्ययुक्तम्। निमित्तं तु स्यादीश्वरो जगतः। स चेदनपेक्ष एव जगत्कारणमित्युच्यते तत्रेदमुपतिष्ठते—न पुरुषकर्माभावे फलानिष्पत्तेरिति। अस्य व्यतिरेकमाह वार्तिककारः—ईश्वरश्चेत्कारणं भवेदिति। एकरूपं कार्यं स्यादित्याह—ईश्वरस्येति। कर्मणि ईश्वरोऽनीश्वरः स्यात्, तथा च सत्कारणानि नेश्वरेण प्रयुज्यन्त इत्यनेकान्तो वक्ष्यमाणो हेतुरित्यर्थः ॥ २० ॥

### वृत्तिः

समाधत्ते—( पुरुषकर्माभावे फलानिष्पत्तेः )

(३)केवलं न ब्रह्मणः, परं तु ईश्वरस्यैव(३*) हेतुत्वे तदिच्छया अव्यतिरिक्ताया-

(१) 'स्यात्' इति क-ख०। (२) 'सुखदुःखोपभोगौ भवेत्' इति क-खद्वयपाठान्तरम्।
(३) 'केवलब्रह्मण एव' इति भ०।

## (सू०)—तत्कारितत्वादहेतुः ॥ २१ ॥

### न्यायभाष्यम्

पुरुषकारमीश्वरोऽनुगृह्णाति, फलाय पुरुषस्य यतमानस्येश्वरः फलं सम्पादयतीति। यदा न सम्पादयति तदा पुरुषकर्माफलं भवतीति। तस्मादीश्वरकारितत्वात् (१)अहेतुः पुरुषकर्माभावे फलानिष्पत्तेरिति।

गुणविशिष्टमात्मान्तरमीश्वरः। तस्य (२)आत्मकल्पात् कल्पान्तरानुपपत्तिः, अधर्म-मिथ्याज्ञान-प्रमादहान्या धर्म-ज्ञान-समाधिसम्पदा च विशिष्टमात्मान्तरमीश्वरः,

### न्यायवार्त्तिकम्

तत्कारितत्वादहेतुः। न ब्रूमः कर्माद्यनपेक्ष ईश्वरः कारणमिति, अपि तु पुरुषकर्म ईश्वरोऽनुगृह्णाति। कोऽनुग्रहार्थः? यद्व यथाभूतं यस्य (३) च यदा (४) विपाककालः तत्तथा तदा विनियुङ्क्त इति। यः पुनरीश्वरं कर्मानपेक्षं कारणत्वेन प्रतिपद्यते तस्यानिर्मोक्षत्वादिदोषः। सापेक्षे त्वीश्वरे यथोक्तो न दोषः। शेषं भाष्ये।

तत्कारितत्वादित्येवं ब्रुवता निमित्तकारणमीश्वर इत्युपगतं भवति। यच्च निमित्तं तदितरयोः समवायिकारणासमवायिकारणयोरनुग्राहकम्, यथा तूर्यादि तन्तूनां तत्संयोगानां चेति। ईश्वर-

### न्यायवार्त्तिकतात्पर्यटीका

तदेवमीश्वरोपादानत्वं च ब्रह्मविवर्तत्वं च निरपेक्षेश्वरनिमित्तत्वं च निराकृत्याभिमतं पक्षं गृह्णाति—

तत्कारितत्वादहेतुः (सू० २१)॥ परमाणूपादानस्य जगतः पुरुषकर्मापेक्ष ईश्वरो निमित्तकारणम्। यच्च तेनापेक्षणीयं पुरुषकर्म तदपीश्वरनिमित्तकमेव। न च यदपेक्ष्यते तस्यानिमित्तत्वमित्युपरिष्टात् प्रवेदयिष्यामः। तस्मादीश्वरकारितत्वात् पुरुषकारस्य तत्सहाय ईश्वरो निमित्तकारणं जगत इत्यस्य पक्षस्य निराकरणे पुरुषकर्माभावे फलानिष्पत्तेरित्यहेतुः, निरपेक्षेश्वरनिमित्तकत्वनिराकरणे हेतुरेवेत्यर्थः।

भाष्यम्—गुणविशिष्टमात्मान्तरमिति। गुणानीश्वरस्य ज्ञानादीनुपपादयिष्यति वार्तिक-

### वृत्तिः

स्तद्विषयतायाश्चानभ्युपगमादभ्युपगमे द्वैतापत्तिरतः सर्वे सर्वदा स्यान्न स्याच्च कार्यवैचित्र्यमिति पुरुषकर्मणोऽपि सहकारिताऽऽवश्यकी, ब्रह्मण उपादानत्वं तु न सम्भवत्यसमवायिकारणत्वासम्भवात् तस्य कारणतामात्रं त्विष्यत एवेति भावः ॥ २० ॥

---

(१) 'पुरुषकारः फलस्याहेतुः' इति टि०। (२) 'आत्मकल्पान्तरानुपपत्तिः'—इति वि०। (३) 'च' इति नास्ति ख०। (४) 'परिपाककालः —इति क-खधृतपाठान्तरम्।

### न्यायभाष्यम्

तस्य च धर्मसमाधिफलमणिमाद्यष्टविधमैश्वर्यम्। सङ्कल्पानुविधायी चास्य धर्मः प्रत्यात्मवृत्तीन् धर्माधर्मसञ्चयान् पृथिव्यादीनि च भूतानि प्रवर्तयति। एवं च स्वकृताभ्यागमस्यालोपेन निर्माणप्राकाम्यमीश्वरस्य स्वकृतकर्मफलं वेदितव्यम्। आप्तकल्पश्चायम्—यथा पिताऽपत्यानां तथा पितृभूत ईश्वरो भूतानाम्। न चाऽऽत्मकल्पादन्यः कल्पः सम्भवति। न तावदस्य बुद्धिं विना कश्चिद्धर्मो लिङ्गभूतः शक्य उपपादयितुम्। आगमाच्च द्रष्टा बोद्धा सर्वज्ञाता ईश्वर इति। बुद्ध्यादिभिश्चात्म-

### न्यायवार्त्तिकम्

श्च जगतो निमित्तं जगतः साक्षादुपादानकारणं किम्? उक्तं पृथिव्यादि परमसूक्ष्मं परमाणुसंज्ञितं (१)द्रव्यमिति।

### न्यायवार्त्तिकतात्पर्यटीका

कारः। आत्मकल्पादिति अत्रात्मप्रकारादात्मजातीयादिति यावत्। संसारवद्भ्य आत्मभ्यो विशेषमाह—अधर्मेति। नन्वस्य कर्मानुष्ठानाभावात् कुतो धर्मः, तथा चाणिमादिकमैश्वर्यं कार्यरूपं विनैव कर्मणेत्यकृताभ्यागमप्रसङ्ग इत्यत आह—सङ्कल्पानुविधायी चास्य धर्म इति। प्रवर्त्तयतु, किमेतावतेत्यत आह—एवं च स्वकृताभ्यागमस्यालोपेनेति। मा भूद् बाह्यानुष्ठानं सङ्कल्पलक्षणानुष्ठानजनितधर्मफलमस्यैश्वर्यं जगन्निर्माणफलमिति नाकृताभ्यागमप्रसङ्ग इत्यर्थः। स्यादेतत्। प्रयोजनं विना न प्रेक्षावतां प्रवृत्तिः। न च प्राप्तसकलप्राप्तव्यस्यास्ति प्रापणीयं किञ्चिदीश्वरस्य। तस्मात् कृतमस्य जगन्निर्माणेनेत्यत आह—आप्तकल्पश्चेति। मा भूदस्य भगवतः स्वार्थः, परानुग्रहार्थं जगन्निर्माणे प्रवर्त्स्यतीत्यर्थः। अत्रैव दृष्टान्तमाह—अयं यथा (क)पिताऽपत्यानाम्। अयं पिता स्वापत्यानां यथा पितेत्यर्थः। दार्ष्टान्तिके योजयति—तथा पितृभूत ईश्वर इति। नन्वात्मान्तराण्यनित्यज्ञानयोगीनि दृष्टानि तद्वैलक्षण्यादीश्वरो नात्मजातीयो भवितुमर्हतीत्यत आह—न चात्मकल्पादिति। यद्यप्यात्मान्तराण्यनित्यज्ञानयोगीनि अयं च नित्यज्ञानादियुक्तः, तथाऽप्यात्मजातीय एव, बुद्ध्यादिगुणयोगित्वात्; अन्यथा तोयादिपरमाणूनामतोयत्वादिप्रसङ्गो नित्यरूपादियोगात्; करकादिगतानां रूपादीनामनित्यत्वोपलब्धेरिति। यदि चायं बुद्ध्यादिगुणैर्नोपाख्यायेत प्रमाणाभावादनुपपन्न एव स्यादित्याह—बुद्ध्यादिभिश्चेति। स्यादेतद्—यदि कारुण्यादीश्वरो जगन्निर्माणे प्रवर्त्तते—हन्त भोः सुखिनमेव सृजेन्न तु दुःखिनम्। न च क्षेत्रज्ञगतधर्माधर्मसहकारितया निर्माणवैचित्र्यं धर्मस्य तदनधिष्ठितस्य स्वकार्याकरणेन कारुणिकेन तदधिष्ठानायोगात्।

(१) 'द्रव्य(व्यक्त)मिति' इति क०।

(क) 'पितुरपत्यानाम्' इति क-ख-तात्पर्यमुद्रणं प्रामादिकम्।

## न्यायभाष्यम्

लिङ्गैर्निरुपाख्यमीश्वरं प्रत्यक्षानुमानागमविषयातीतं कः शक्त उपपादयितुम्। स्वकृताभ्यागमलोपेन (१)च प्रवर्तमानस्यास्य यदुक्तं प्रतिषेधजातमकर्मनिमित्ते शरीरसर्गे तत्सर्वं प्रसज्यते इति ॥ २१ ॥

## न्यायवार्त्तिकम्

व्यक्तकारणाभ्युपगमे तु सति निमित्तविशेषविप्रतिपत्तौ ईश्वरप्रक्रिया, यस्मान्निमित्तकारणे विप्रतिपद्यन्ते—केचित् कालं केचिदीश्वरं केचित् प्रकृतिमिति। तदेवं निमित्तविशेषविप्रतिपत्तौ किं न्याय्यमिति? ईश्वर इति न्याय्यम्, तत्र हि प्रमाणानि अविघातेन प्रवर्तन्त इति। अस्तित्वासिद्धिरिति चेत्—अथ मन्यसे सिद्ध ईश्वरस्यास्तित्वे कारणान्तरनिराकरणं (क) निमित्तकारणाभावश्च (२) सिध्येत्, तत्तु असिद्धम्, तस्मादयुक्तमिति। न, अत एव (३) तदुपपत्तेः इति —येनैव न्यायेन ईश्वरस्य कारणत्वं सिध्यति तेनैवास्तित्वमिति, न ह्यविद्यमानं कारणमिति। कः पुनरीश्वरस्य कारणत्वे न्यायः? अयं न्यायोऽभिधीयते—प्रधानपरमाणुकर्माणि प्राक् प्रवृत्तेर्बुद्धिमत्कारणाधिष्ठितानि प्रवर्तन्ते अचेतनत्वात् वास्यादिवदिति—यथा वास्यादि बुद्धिमता तक्ष्णा अधिष्ठितमचेतनत्वात् प्रवर्तते तथा प्रधानपरमाणुकर्माणि अचेतनानि प्रवर्तन्ते, तस्मात् तान्यपि बुद्धिमत्कारणाधिष्ठितानीति।

तत्र प्रधानकारणिकास्तावत् पुरुषार्थमधिष्ठायकं प्रधानस्य वर्णयन्ति। पुरुषार्थेन प्रयुक्तं प्रधानं प्रवर्त्तते(ख), पुरुषार्थश्च द्वेधा भवति शब्दाद्युपलब्धिर्गुणपुरुषान्तरदर्शनं चेति, तदुभयं प्रधान-

## न्यायवार्त्तिकतात्पर्यटीका

तस्मात् सुखिदुःख्यादिभेदेन जगद्वैचित्र्यदर्शनात् नानुकम्पाप्रयुक्त ईश्वरः करोतीत्यत आह—स्वकृताभ्यागमलोपेन प्रवर्तमानस्येति। अयमभिसन्धिः। कारुणिकोऽप्ययमात्मान्तरातिशयितमहिमाऽपि न वस्तूनां सामर्थ्यमन्यथा कर्त्तुं पारयति। तस्मादधर्मेणोत्पत्तिमताऽपि नेश्वरप्रभावादपि नित्येन भवितुं युक्तम्। न च फलविरोधिना फलमप्रदाय विनंष्टुमपि शक्यम्। अतः क्षेत्रज्ञानां नियतिमलङ्घयता ईश्वरेण नाधर्मः शक्योऽनधिष्ठातुम्। तस्मात् कारुणिकोऽप्ययं वस्तुस्वभावमनुविधीयमानो धर्माधर्मसहकारी जगद्वैचित्र्यं विधत्ते। तदिदमुक्तम्—(ग)स्वकृताभ्यागमलोपेन प्रवर्त्तमानस्येति। पुरुषैर्यत्कर्म कृतं (घ) तत्फलाभ्यागमलोपेन प्रवर्तमानस्येत्यर्थः।

वार्त्तिके ईश्वरप्रक्रियेति। प्रक्रिया प्रकरणम्, ईश्वरनिमित्तत्वविचार इत्यर्थः।

---

(१) 'च' इति नास्ति क०।
(२) 'साध्येत' इति क०।
(३) 'तदुत्पत्तेः' इति क०।
(क) 'निमित्तकारणभावश्च' इति युक्तम्।
(ख) 'पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम्' इति (सांख्यकारिका ३१)
(ग-घ)—'अभ्यागमालोपेन' इति क-खपुस्तकयोर्मुद्रणं प्रामादिकम्।

## न्यायवार्त्तिकम्

प्रवृत्तेर्विना न भवतीति ? न, प्राक् प्रवृत्तेस्तदभावात्—यावत् प्रधानं महदादिभावेन न परिणमते तावन्न शब्दाद्युपलब्धिरस्ति न गुणपुरुषान्तरोपलब्धिरिति हेत्वभावात् प्रधान-प्रवृत्तिरयुक्ता। अथास्ति, नासदात्मानं लभते न सन्निरुध्यत इति ? एवं च सति विद्य-मानः पुरुषार्थः प्रधानं प्रवर्तयतीति न (१) पुरुषार्थाय प्रधानस्य प्रवृत्तिः। न हि लोके यद् यस्य भवति स तदर्थं पुनर्यतत इति। सततं च प्रवृत्तिः प्राप्नोति कारणस्य सन्निहितत्वादिति—पुरुषार्थः प्रवृत्तेः कारणमिति पुरुषार्थस्य नित्यत्वात् सततं प्रवृत्त्या भवितव्यमिति। अथ विद्यमानोऽपि न प्रवर्तयति, न तर्हि पुरुषार्थः कारणमिति, यस्याभावात् प्रधानं न प्रवर्त्तते यस्य च भावात् प्रवर्तते तत्कारणमिति। अथ विद्यमानः प्रतिबन्धान्न प्रवर्तयति ? प्रतिबन्धा-पगमस्याशक्यत्वात् सततमप्रवृत्तिः—यत्तत्र प्रतिबन्धकारणं पुरुषार्थस्य तस्यापगमः कर्तुमशक्यः, न सदात्मानं जहातीति प्रतिबन्धकस्य नित्यत्वान्नित्यमप्रवृत्त्या भवितव्यम्। यदा भवन्तः सत्त्वरजस्तमसां साम्यावस्थां प्रकृतिं वर्णयन्ति सा कुतो निवर्तत इति वक्तव्यम्। न चानि-वृत्तायां साम्यावस्थायां वैषम्येण शक्यं भवितुम्। अथाङ्गाङ्गिभावस्यानियमाद्वैषम्यं भवति इति ? अत्रापि भवन्तं (२) पर्यनुयुञ्ज्महे—कथं साम्येनावस्थितमधिकं हीनं च भवति ना-पूर्वोपचयो विद्यते न पूर्वहानमस्तीति। यांश्च शब्दादीन् प्रागनुपलब्धस्वरूपान् पुरुष उपलभते बुद्धिरुपलम्भयति ते किमुपजातविशेषा उतानुपजातविशेषा इति ? यद्युपजातविशेषा उपलभ्यन्त इति, व्याहतं भवति नासदात्मानं लभत इति। अथानुपजातविशेषा एवोपलभ्यन्ते, तथाऽप्य-निवृत्तो व्याघातः प्रधानं पुरुषार्थः प्रवर्तयतीति। सोऽयं प्रधानवादो यावद् यावद् विचार्यते तावत्तावत् प्रमाणवृत्तं बाधत इति।

ये परमाणून् पुरुषकर्माधिष्ठितान् जगतः कारणत्वेन वर्णयन्ति तान् प्रतीदमुच्यते—परमाणवः प्रवर्तन्त इति सततं प्रवृत्त्या भवितव्यम्। अथ कालविशेषापेक्षाः प्रवर्तन्ते परमाणुभिः कालो व्याख्यातः—यथा (३)अचेतनत्वात् परमाणवो बुद्धिमन्तमधिष्ठातारमपेक्षन्ते तथा कालोऽपीति, न हि तत्राचेतनत्वं निवर्तत इति। (क) क्षीरादिवदचेतनस्यापि प्रवृत्तिरिति चेत्—यथा अपत्य-

## न्यायवार्त्तिकतात्पर्यटीका

अथ विद्यमानः प्रतिबन्धान्न प्रवर्त्तयतीति। सुखाय पुरुषार्थेन प्रधाने प्रवर्तयितव्ये अधर्मः पुरुषार्थस्य प्रतिबन्धकः। एवं दुःखाय पुरुषार्थेन प्रधाने प्रवर्त्तयितव्ये धर्म इत्यर्थः।

---

(१) 'पुरुषार्थां(य)' इति क-पुस्तके मुद्रितम्।
(२) 'पर्यनुयुञ्ज्महे' इति क०।
(३) 'अचेतनत्वात्' इति क-पुस्तके नास्ति।
(क) वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।
पुरुषविमोचननिमित्तं तथा प्रवृत्तिः प्रधानस्य॥ इति ( सांख्यकारिका ५७ )।

## न्यायवार्त्तिकम्

भरणार्थं क्षीरादेरचेतनस्यापि प्रवृत्तिरेवं परमाणवोऽप्यचेतनाः पुरुषार्थं प्रवर्तिष्यन्त इति ? तन्न युक्तम्, साध्यसमत्वात्—यथैव परमाणवः स्वतन्त्राः प्रवर्तन्त इति साध्यं तथा क्षीराद्यचेतनं स्वतन्त्रं प्रवर्तत इति। यदि क्षीरादि स्वतन्त्रं प्रवर्तेत, मृतेष्वपि प्रवर्तेत ; न तु प्रवर्त्तते अतोऽवगम्यते बुद्धिमत्कारणाधिष्ठितं तदपि। न चायं हेतुः तस्मात् (१)निवर्तते, एवं यावद् यावदचेतनं प्रवर्तते (२) सर्वं तत् (३) चेतनाधिष्ठितमिति।

अयमपरो हेतुः बुद्धिमत्कारणाधिष्ठितं महाभूतादि (४)व्यक्तं सुखदुःखादिनिमित्तं भवति रूपादिमत्त्वात् तुर्यादिवदिति। धर्माधर्मौ बुद्धिमत्कारणाधिष्ठितौ पुरुषस्योपभोगं कुरुतः करणत्वाद् वास्यादिवदिति। आत्मैवाधिष्ठाता धर्माधर्मयोर्भविष्यतीति चेत् ? यस्य तौ धर्माधर्मौ स एवाधिष्ठाता भविष्यतीति न युक्तम्, प्राक् कार्यकरणोत्पत्तेः तदसम्भवात्—यावत् कार्यकरण-सङ्घातो नोपजायते पुरुषस्य तावदयमज्ञः उपलब्धाताऽपि उपलभ्यानपि तावद्रूपादीन्नोपलभते कुतोऽनुपलभ्यौ धर्माधर्मावुपलप्स्यत इति। यदि पुरुषः स्वतन्त्रः प्रवर्तते, न दुःखं कुर्यात् न हि कश्चिदात्मनो दुःखमिच्छतीति। यश्चाऽऽत्मनोऽङ्गोपघातं शिरश्छेदादि वा करोति (५) सोऽपि तद्वैकल्ये (६)प्रायणे वा हितबुद्धिः प्रवर्तते इति। यदि पुनर्धर्माधर्माभ्यामेवाधिष्ठिताः परमाणवः प्रवर्तेरन् ? न युक्तमेतदचेतनत्वात्—न हि किञ्चिदचेतनं स्वतन्त्रमधिष्ठायकं दृष्टमिति। (क)अभ्युपगम्यापि च धर्माधर्मयोः परमाणुप्रवृत्तिसामर्थ्यम् ? न करणस्य केवलस्य क्रियानिर्वृत्ताव-सामर्थ्यात्—न हि करणं केवलं क्रियां निर्वर्तयदुपलभ्यते। अथ (७)परमाण्वपेक्षाभ्यां धर्मा-धर्माभ्यां क्रियते ? तदपि न युक्तमदृष्टत्वात्—न हि (ख)कर्मकरणाभ्यां क्रियां जन्यमानां क्वचिदपि पश्याम इति। आत्मा कर्ता भविष्यतीति ? उक्तमेतदज्ञत्वादिति। अकारणोत्पत्ति-र्भविष्यतीति ? न युक्तमदृष्टत्वादिति। न चान्या गतिरस्ति। तस्माद् बुद्धिमत्कारणाधिष्ठिताः परमाणवः कर्माणि च प्रवर्तन्त इति।

क्रियानावेशादकारणमिति चेत्—अथ मन्यसे ये खलु कर्तारो भवन्ति ते क्रियाविष्टाः कुलालादय

## न्यायवार्त्तिकतात्पर्यटीका

न चायं हेतुस्तस्मान्निवर्त्तत इति। अयमेवाचेतनत्वलक्षणो हेतुः क्षीरान्न निवर्त्तत इत्यर्थः।

परिस्पन्दः क्रिया, सा च मूर्त्यनुविधायिनी नामूर्ते सर्वगत ईश्वरे संभविनीति मन्वानः शङ्कते —क्रियानावेशादकारणमिति चेदिति। अपरिस्पन्दा अपि ज्ञानचिकीर्षाप्रयत्ना आख्यातपद-

(१) '-न्न प्रवर्त्तते'—इति क-खधृतपाठान्तरम्। (२) 'तावत् सर्वं' इति ख०। (३) 'बुद्धिमत्-कारणाधिष्ठितमिति'—इति क-खधृतपाठान्तरम्। (४) 'व्यक्तमिति' इति ख०। (५) 'सोऽपि'—इति क-खपुस्तकयोर्नास्ति। तत्सम्पादकैस्तु पुस्तकान्तरे तदुपलभ्यमस्माभिर्गृहीतम्। (६) 'प्रधाने'—क-ख-धृतपाठान्तरम्। (७) 'परमात्मापेक्षाभ्यां'—क-खधृतपाठान्तरम्।

(क) 'अपि'शब्द एवार्थः। तथा च धर्माधर्मयोः परमाणुक्रियोत्पत्तिसामर्थ्यमभ्युपगम्यैव उपपादयिष्यते इति प्रश्नार्थः। (ख) "कर्म" धर्माधर्मौ, "करणं" परमाणवः।

## न्यायवार्त्तिकम्

इति, क्रियारहितश्चेश्वरः, तस्मादकारणमिति ? न विकल्पानुपपत्तेः—ईश्वरो निष्क्रिय इति कां क्रियामधिकृत्योच्यते ? द्वयी हि नः क्रिया उत्क्षेपणादिका चाऽऽख्यातशब्दवाच्या च। यद्याख्यातशब्दवाच्यामधिकृत्योच्यते, तदाऽसिद्धो हेतुः स्वातन्त्र्याभ्युपगमात्—स्वातन्त्र्यं हि भगवति नित्यमस्ति। किं पुनः स्वातन्त्र्यम् ? अन्यकारकाप्रयोज्यत्वमितरकारकप्रयोक्तृत्वं च, तदुक्तं (क) कारकाणि वर्णयद्भिरिति। अथोत्क्षेपणादिकमधिकृत्योच्यते निष्क्रिय इति, तदाऽनेकान्तः,—क्रियावच्च कारणं दृष्टं निष्क्रियं चेति। कदाचिद्ध द्रव्याणि उपरतक्रियाणि द्रव्यमारभन्ते—संयोगात् निवृत्ते कर्मणि संयोगोपकरणानि द्रव्याणि द्रव्यमारभन्त इति निष्क्रियाणामारम्भः। यदा च युगपद्ध (१) अनेकानि द्रव्याणि संहन्यन्ते तदाऽसाधारणकार्यव्यावृत्तेभ्यः संयोगेभ्यः एकमेव द्रव्यमुत्पद्यते। एकावयवविभागे तु द्रव्यनिवृत्तौ शेषाणि द्रव्यान्तराणि (२)द्रव्यमारभन्त इति निष्क्रियाणामारम्भः। कानिचित् पुनः क्रियावन्त्यारभन्ते यदाऽन्यतरकर्मजात् संयोगान्निवृत्ते कर्मणि इतरस्मिन् द्रव्ये कर्मनिवृत्तिसमकालमेव द्रव्यमुत्पद्यते तदा क्रियावता द्रव्येणाऽऽरम्भात् क्रियावतामारम्भः, विरोधश्चोत्क्षेपणादिकायाः क्रियायाः अनभ्युपगमादिति।

## न्यायवार्त्तिकतात्पर्यटीका

वाच्यतया भवन्ति क्रिया ईश्वर इत्यभिसंधिना परिहारः—न विकल्पानुपपत्तेः। यदा च युगपदनेकानि द्रव्याणि संहन्यन्ते तदाऽसाधारणकार्यव्यावृत्तेभ्यः संयोगेभ्य इति। 'असाधारणं कार्यम्' एकैकस्य तन्तुद्वयसंयोगस्य द्वितन्तुकम्, तस्माद्ध व्यावृत्तेभ्यः संयोगेभ्यः सह साधारणस्यैव कार्यस्य पटलक्षणस्योत्पादादित्यर्थः। न केवलमुत्पन्नक्रियेषु क्रियोपरतौ द्रव्योत्पादः क्वचिदनुत्पन्नक्रियेष्वपि द्रव्येष्ववस्थितसंयोगेभ्यः पूर्वद्रव्योपरतौ द्रव्यान्तरोत्पाद इत्याह—एकावयवविभागे त्विति। तुशब्देन पूर्वस्मादुत्पन्नोपरतक्रियाद्ध विशेषो दर्शितः। किमक्रियावतामेवारम्भः ? नेत्याह—कानिचित्पुनरिति। अन्यतरकर्मजान्नोदनात् संयोगान्निवृत्ते कर्मणि इतरस्मिन् द्रव्ये (३) कर्मनिवृत्तिसमकालमेव द्रव्यमुत्पद्यत इति।

## वृत्तिः

नन्वेवं पुरुषव्यापारस्य फले व्यभिचारो न स्यादिति चेत्तत्राऽऽह—( तत्कारितत्वादहेतुः )

फलाभावस्य पुरुषकर्माभावकारितत्वात् पुरुषस्य कर्म्म अदृष्टं तदभावाधीनत्वात्, पुरुषकारः अहेतुः फलानुपधायकः।

(१) 'बहूनि' इति क-ख-वार्त्तिकपाठः। (२) 'द्रव्यमुत्पादयन्त' इति ख०। (३) 'कर्मनिवृत्तिसमकालमेव द्रव्यं चोत्पद्यत' इति क-ख०।

(क) ४३४-तमपत्रे वार्त्तिक-तात्पर्यटीके द्रष्टव्ये।

## न्यायवार्त्तिकम्

न कारणमीश्वरः विकल्पानुपपत्तेः—कर्ता चेदीश्वरः, किं सापेक्षः करोति उत निरपेक्ष इति। किं चातः? यदि सापेक्षः, येन करोति तस्याकर्ता एवमन्यत्रापि प्रसङ्गः, तदपि साधनं येन करोति तस्याकर्तेति। अथायं किञ्चिदनपेक्ष्य करोति तद्वदन्यत्रापि प्रसङ्गः—अथायं सर्वमनपेक्ष्य करोति (१) एवमपि पुरुषकर्माफलं भवेत् अनिर्मोक्षश्च प्रसज्येत। यश्चाकर्मनिमित्ते सर्गे दोषः स इहापि प्रसज्यत इति? निरपेक्षकर्तृत्वस्यानभ्युपगमात् धर्माधर्मविफलत्वादिदोषो नास्ति न चाकर्मनिमित्ते सर्गे दोष इति। येन करोति (२) तस्याकर्तेति चेत्? नानेकान्तात्—नायमेकान्तोऽस्ति यो येन करोति स तन्न करोतीति, यथाऽनेकशिल्पपर्यवदातः पुरुषः करणान्तरोपादानो वास्यादि करोति, वास्याद्युपादानो दण्डादि करोति, तदुपादानो घटादि; न च पर्यायकर्तृत्वे सति अकर्तृत्वम्, तथेश्वरोऽपि धर्माधर्मोपादानः शरीरसुखदुःखादि, आत्ममनःसंयोगशुद्धाशुद्धाभिसन्धिसाधनश्च धर्माधर्मौ, सुखदुःखस्मृत्यपेक्षः तत्साधनाद्यपेक्षश्च शुद्धमशुद्धं चाभिसन्धिमिति। यदा करोति तदा साधनस्याकर्तेति चेत्—अथ मन्यसे यदाऽयं साध्यं (३) किञ्चिद्द दृष्टं निर्वर्तयति तदा येन साधयति तस्याकर्ता प्रसज्यत इति? नैतदेवम्—न ब्रूमः सर्वानर्थानयमेकस्मिन् काले करोतीति, अपि तु पर्यायेण, पर्यायकर्तृत्वे चायमदोषः। यदादौ करोति तस्यासाधनोत्पत्तिरिति चेत्—अथ मन्यसे यदि शरीरादिकर्तृत्वं धर्माधर्माद्यपेक्षस्य, अथ यदादौ करोति(४) कथं तत्? (क)आदेरनभ्युपगमाद्देश्यमेतत्—अनादिः संसार इति, प्रतिपादितमेतत्, धर्माधर्मसाफल्यं चैवम्—यदि चानादिः संसारः सापेक्षश्च कर्ता, एवं प्राण्यन्तरसमवायिनां धर्माधर्माणां साफल्यम्।

अथायमीश्वरः कुर्वाणः किमर्थं करोति? लोके हि ये कर्तारो भवन्ति ते किञ्चिदुद्दिश्य प्रवर्त्तन्ते इदमाप्स्यामि इदं हास्यामि चेति, न पुनरीश्वरस्य हेयमस्ति दुःखाभावात्, नोपादेयं वशित्वात्। (ख)क्रीडार्थमित्येके—एके तावद्द ब्रुवते क्रीडार्थमीश्वरः सृजतीति। नन्वेतदयुक्तम्, क्रीडा हि नाम रत्यर्थं भवति विना क्रीडया रतिमविन्दताम्, न च रत्यर्थी भगवान् दुःखाभावादिति। दुःखिनश्च सुखोपगमार्थं क्रीडन्ति। विभूतिख्यापनार्थमित्यपरे—जगतो वैश्वरूप्यं ख्यापनीयमित्यपरे मन्यन्ते। एतदपि तादृगेव—न हि विभूतिख्यापनेन कश्चिदतिशयो लभ्यते न चास्याख्यापनेन किञ्चिद्धीयत इति। किमर्थं तर्हि करोति? तत्स्वाभाव्यात् प्रवर्तत

(१) अतः परं 'तस्याकर्त्तेति' क-खवार्त्तिकसम्पादकैः क्वचिदुपलब्धम्।
(२) 'न तस्या-' इति ख-वार्त्तिके प्रामादिकम्।
(३) 'यत्किञ्चित्' इति ख०।
(४) अतः परं 'तस्यासाधनात्'—इत्यधिकं क्वचित् क-ख-वार्त्तिकसम्पादकैरुपलब्धम्।
(क) प्रतिपादनप्रकारः ७७, २२१, ७४१-पत्रेषु द्रष्टव्यः।
(ख) 'भोगार्थं सृष्टिरित्यन्ये, क्रीडार्थमिति चापरे। देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा॥' इति ( माण्डूक्य-कारिका १.९ )

## न्यायवार्त्तिकम्

इत्यदुष्टम्—यथा भूम्यादीनि धारणादिक्रियां तत्स्वाभाव्यात् कुर्वन्ति तथेश्वरोऽपि तत्स्वाभाव्यात् प्रवर्तत इति प्रवृत्तिस्वभावकं तत्तत्त्वमिति ।

तत्स्वाभाव्यात् (१) सततप्रवृत्तिरिति चेत्—अथ मन्यसे यदि प्रवृत्तिस्वभावकं तत्त्वं प्रवृत्तिनिवृत्ती न प्राप्नुतः, न हि प्रवृत्तिस्वभावके तत्त्वे निवृत्तिर्युज्यत इति (२) क्रमेणोत्पत्तिर्न प्राप्नोति तत्त्वस्यैकरूपत्वात्, इदमिदानीं भवत्विदमिदानीं (३) न भवत्विति न युक्तम्—न ह्येकरूपात् कारणात् कार्यभेदं पश्याम इति ? नैष दोषः बुद्धिमत्त्वेन विशेषणात्—बुद्धिमत्तत्त्वमिति प्रतिपादितम् ; बुद्धिमत्तया च विशिष्यमाणं सापेक्षं च न सर्वदा प्रवर्त्तते न सर्वमेकस्मिन् काले उत्पादयति यस्य कारणसान्निध्यं तद्भवति यदसन्निहितकारणं तन्न भवति, न च सर्वस्य युगपत्कारणसान्निध्यमस्ति, अतः सर्वस्य युगपदुत्पादो न (४) प्रसक्तः, स खलु प्रवर्तमानो धर्माधर्मयोः परिपाककालमपेक्षते कारणान्तरोत्पादं तद्भागिनां च सत्त्वानां तत्र सन्निधानं तद्भागिसत्त्वधर्माधर्मपरिपाकं च तदप्रतिबन्धं चेति ।

यत् तदीश्वरस्यैश्वर्यं किं तन्नित्यमनित्यमिति ? यद्यनित्यं तस्य कारणं वाच्यं यस्य चानित्यमैश्वर्यं तस्य कारणभेदो भवति अणिमादेः, एवमन्येषामपीत्यनेक ईश्वरः प्रसज्यत इति । अथानेकत्वे किं बाध्यत इति ? एकस्मिन् वस्तुनि (क) व्याहतकामयोरीश्वरयोः प्रवृत्तिर्न प्राप्नोति। अथैकमितरः अतिशेते, योऽतिशेते स ईश्वरः (५) नेतरः इति । अथ नित्यमैश्वर्यं, धर्मवैयर्थ्यं —न तद् धर्माद्भवतीति । नित्यमिति ब्रूमः । न च धर्मवैयर्थ्यं दोषस्तस्य, यो धर्म ईश्वरे नासौ तत्रैश्वर्यं करोति, किन्तु प्रत्यात्मवृत्तीन् धर्माधर्मसन्निचयाननुगृह्णाति, न चेश्वरे धर्मोऽस्तीत्यचोद्यमेतत् ।

## न्यायवार्त्तिकतात्पर्यटीका

तत्स्वाभाव्यात् प्रवर्त्तत इत्यदुष्टमिति, चेतनोऽप्ययं परानुग्रहस्वभावोऽपि वस्तुस्वभावमनुरुध्यमानः कर्माशयानुरोधेन जगद्वैचित्र्यं विधत्ते । न चावश्यं दुष्कृते पुंसां प्रवृत्तिं विहन्तीत्यर्थः । अद्यत्वेऽपि चेतनानां विचित्रस्वभावत्वं दृष्टं सदसन्मध्यमानां जनानाम् ।

अथ नित्यमैश्वर्यं धर्मवैयर्थ्यं न तद् धर्माद्भवतीति । ततः (ख) ईश्वरस्यैश्वर्यं स्वकृतकर्मफलं वेदितव्यमित्ययुक्तं भाष्यमिति भावः । परिहरति—नित्यमिति ब्रूमः । तस्य हि ज्ञानक्रियाशक्ती नित्ये इति ऐश्वर्यं नित्यम् । अणिमादिकं त्वनित्यं तदभिप्रायं च भाष्यकारस्य धर्मफलत्वाभिधानम् । प्रत्यात्मवृत्तिधर्माधर्मसन्निचयाधिष्ठानं (ग) धृत्यात्मवृत्तिसंकल्पानु-

---

(१) 'सततं प्रवर्तत इति'—इति ख० । (२) 'क्रमेण चोत्पत्ति-' इति क-खधृतपाठान्तरम् । (३) 'मा भूदिति' —इति क-खधृतपाठान्तरम् । (४) 'युक्तः' इति ख० । (५) 'इतरो नेश्वर इति'—इति क-खधृतपाठान्तरम् ।

(क) 'अव्याहतकामयो'रिति पाठो युक्तः । (ख) 'निर्माणप्राकाम्यमीश्वरस्य' इति भाष्यमक्षरविसंवादेन गृहीतम् । (ग) 'प्रत्यात्मवृत्ति—' इति पाठः सम्भाव्यते ।

## न्यायवार्त्तिकम्

तत्स्वभावानवधारणात् सन्देहः—ईश्वरः किं द्रव्यमाहो गुणादीनामन्यतम इति। द्रव्यं बुद्धिगुणत्वाद् द्रव्यान्तरवत्। बुद्धिमत्त्वात् तर्हि आत्मान्तरमिति? नात्मान्तरं गुणभेदात्—तद् यथा गुणभेदे सति पृथिव्यादयो नात्मानः तथा गुणभिन्न ईश्वरस्तस्मादसावपि नात्मान्तरमिति। कः पुनरेतस्य भेदः? (क)एके तावद् ब्रुवते—धर्म-ज्ञान-वैराग्यैश्वर्याण्यतिशयवन्ति तस्मिन्निति। नित्यत्वमतिशयः। एतत्तु न बुध्यामहे यथा बुद्धिमत्तायामीश्वरस्य प्रमाणसद्भावो न चैवं धर्मादिनित्यत्वे प्रमाणमस्ति, न चाप्रामाणिकं प्रतिपत्तुं शक्यम्, अतिशयस्तु बुद्धिनित्यत्वं गुणभेदः—तत्र हि नित्या बुद्धिः सङ्ख्यादयश्च सामान्यगुणाः, षड्गुण आकाशवदीश्वर इति। अथास्य बुद्धिनित्यत्वे किं प्रमाणमिति? नन्विदमेव—बुद्धिमत्कारणाधिष्ठिताः परमाणवः प्रवर्त्तन्त इति। बुद्धिसत्तायामेतत् साधनं सा पुनर्नित्येति कुतः? प्रत्यर्थनियमासम्भवात्—ये खलु प्रत्यर्थनियता बुद्धिभेदास्ते शरीरादिकारणसन्निधाने सति भवन्ति, (१) न त्वियं प्रत्यर्थनियता युगपदनेककार्योत्पत्तिदर्शनात् यथा स्थावरभेदस्यानेकस्य युगपदुत्पाद इति। स च (ख) प्रत्यर्थनियतबुद्धिभेदेष्वीश्वरस्य न युक्तः, संख्यापरिमाण-पृथक्त्व-संयोग-विभाग-बुद्धय एव तस्य गुणाः।

अथ बुद्धिमत्तयेश्वरस्य शरीरयोगमपि प्रतिपद्यते? तेनापि प्रतिपद्यमानेन शरीरादयो नित्या अनित्या वा अवश्यमेषितव्याः। यद्यनित्याः धर्माधर्मसद्भावोऽभ्युपेयः, तदभ्युपगमे च तत्तन्त्रत्वादीश्वरो नेश्वरः स्यात्। अथ नित्यान् शरीरादीन् कल्पयसि, एवमपि दृष्टविपरीतं

## न्यायवार्त्तिकतात्पर्यटीका

विधायिन ईश्वरस्य धर्मस्य प्रयोजनमिति। अभ्युपेत्येश्वरधर्ममेतदुक्तं भाष्यकृता। परमार्थतस्तु नेश्वरस्य धर्मसद्भावे प्रमाणमस्ति नित्याभ्यामेव ज्ञानक्रियाशक्तिभ्यां सकलकार्योत्पादसिद्धेरित्याशयवानाह—न चेश्वरे धर्मोऽस्तीति।

बुद्धिमत्त्वात्तर्ह्यात्मान्तरमिति। आत्मान्तरं शरीर्यन्तरमभिप्रेतमिति। स च शरीरसंबन्धो वर्त्तमानः केषांचिद् यथा संसारिणां केषांचिदतीतो यथा मुक्तानां शुकप्रह्लादादीनाम्। तदनेनेश्वरेण बुद्धिमता सताऽवश्यं भाव्यं शरीरिणेति देश्यार्थः। नात्मान्तरं शरीर्यन्तरमित्यर्थः। कुतः गुणभेदात्। नित्याश्चेदस्य बुद्ध्यादयः कृतं शरीरग्रहणेन तदुत्पादार्थेनेति भावः। नन्विदमेव बुद्धिमत्कारणाधिष्ठिताः परमाणवः प्रवर्त्तन्त इति पक्षधर्मताबलात्तर्कसहायान्नित्यबुद्धिमत्त्वमस्य सिध्यतीत्यर्थः। प्रत्यर्थनियमासंभवादित्यादिना तर्कः प्रमाणसहायो दर्शितः।

एवं तावद्गुणभेदेनाशरीरित्वमीश्वरस्य दर्शितं, न चैतस्य शरीरयोगो विकल्पमपि सहत

---

(१) 'न चेयं'—इति क-खधृतपाठान्तरम्।

(क) "ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः। स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च। अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे॥" योगभाष्य-टीका। (ख) 'प्रत्यर्थनियतबुद्धिभेदोऽपीश्वरस्य' इति पाठः सम्भाव्यते।

## न्यायवार्त्तिकम्

कल्पितं भवति, दृष्टविपर्ययं प्रतिपद्यमानेन (१)बुद्धेर्नित्यत्वं प्रतिपत्तव्यम्। अथ सन्तानवर्तिनीमनेकां बुद्धिमीश्वरे प्रतिपद्यसे? एवमपि न युगपदुत्पादः स्थावरादीनां प्राप्नोति। अथ (२)ताः सन्तानवर्तिन्यः सर्वार्थाः (२*) बुद्धयो भवन्ति? एवमपि दृष्टविपरीतं कल्पितं भवति। एवं च कल्पयता बुद्धिनित्यत्वमेव प्रतिपत्तव्यम्। एतावच्चैतत् स्यात्—नित्या वा सन्तानवर्तिनी वा। सन्तानवर्तिनी न युक्ता। यदि गुणभेदाद्भेदः यदभिन्नगुणं तदेकं प्राप्नोति, यथा दिक्कालाविति? नानेकान्तात्—गुणभेदान्नानात्वं ब्रूमः, न पुनर्गुणाभेदादेकत्वमिति। तथाहि अभिन्नगुणानां घटादीनां नानात्वमिति, दिक्कालयोर्गुणाभेदेऽपि कार्यभेदान्नानात्वमिति। न च बुद्धिमत्तया विनेश्वरस्य जगदुत्पादो घटत इति। सा च बुद्धिः सर्वार्थाऽतीतानागतवर्तमानविषया प्रत्यक्षा, नानुमानिकी (३)नागमिकी—न तत्रानुमानं नागम इति। ज्ञाननित्यत्वाच्च न संस्कारः—नित्यं विज्ञानमीश्वरस्येति (क) न तत्र संस्कारो विद्यत इति संस्काराभावाद् बुद्धिनित्यत्वाच्च न स्मृतिः, स्मृत्यभावाच्च नानुमानम्, न दुःखमधर्मस्याभावात्। अत एव न वैराग्यमिति—दुःखाभावान्न विरज्यत इति। अत एव न द्वेषो दुःखाभावादिति। इच्छा तु विद्यतेऽक्लिष्टाऽव्याहता सर्वार्थेषु यथा बुद्धिरिति।

अथ किमयं बद्धो मुक्त इति? न बद्धो दुःखाभावादेव अबद्धत्वान्न मुक्त इति—बन्धवान् मुच्यत इति, न च भगवति बन्धनमस्तीति अतो न मुक्त इति। आत्मान्तराणामसम्बन्धादधिष्ठातृत्वमनुपपन्नमिति चेत्—अथ मन्यसे अर्थान्तरसमवायिनो ये धर्माधर्माः ते न साक्षादीश्वरेण सम्बध्यन्ते न पारम्पर्येण; न चाऽसम्बद्धमधिष्ठातुं शक्यते, न चानधिष्ठितयोर्धर्माधर्मयोः प्रवृत्तिर्युक्तेति? तच्च न, अजसम्बन्धोपपत्तेः—अजः सम्बन्ध आत्मान्तराणामित्येक इच्छन्ति न चैतदिह प्रतिषिध्यत इति अप्रतिषेधादुपात्तः स इति। ते त्वजं सम्बन्धं प्रमाणतः प्रतिपादयन्ति—व्यापकैराकाशादिभिः सम्बद्ध ईश्वरः मूर्तिमद्द्रव्यसम्बन्धित्वाद् घटवदिति, यथा घटादि मूर्तिमता घटादिना सम्बन्धित्वेन व्यापकैराकाशादिभिः सम्बध्यते तथेश्वरोऽपि मूर्तिमत्सम्बन्धीति, तस्मादयमपि व्यापकैराकाशादिभिः सम्बध्यत इति।

## न्यायवार्त्तिकतात्पर्यटीका

इत्याह—अथ बुद्धिमत्तयेति। अतीतानागतवर्त्तमानविषया प्रत्यक्षेति साक्षात्कारवतीत्यर्थः; न पुनरक्षमाश्रिता नित्यत्वात्। उपलक्षणं चैतत् नानुमानिकी (ख) चेति नैन्द्रियकी नौपमानिकीत्यपि द्रष्टव्यम्। अक्लिष्टेति। क्लेशोऽविद्या तददूषितेत्यर्थः।

मूर्त्तिमद्द्रव्यसंबन्धित्वादिति संयोगित्वादित्यर्थः। तथा च न रूपादिभिर्व्यभिचारः।

(१) 'बुद्धेरेव'—इति क-खधृतपाठान्तरम्। (२) 'ताः सन्तानवर्त्तिन्योऽर्थाः'—इति ख०। (३) 'नागमिकी' इति क-पु-नास्ति।

(क) 'न तत्र संस्कार' इति, ज्ञानोपरमे सति तत्कार्योपपत्तये संस्कारः कल्प्यते, नित्यज्ञानाश्रये च भगवति नास्ति तत्कल्पकमिति भावः। (ख) अत्र 'च'कारार्थश्चिन्त्यः। वार्त्तिके तु चकारो नोपलभ्यते।

## न्यायवार्त्तिकतात्पर्यटीका

एतावदभिप्रेतमाचार्यस्य—त्रयो हि खलु भावा जगति भवन्ति, प्रसिद्धचेतनकर्तृकाः यथा प्रासादाट्टाल-गोपुर-तोरणादयः। प्रसिद्धतद्विपर्ययाः यथा परमाण्वाकाशादयः। संदिग्धचेतनकर्तृकाः यथा तनु-तरु-महीधरादयः। तत्र प्रमेयत्वाद् वादिविप्रतिपत्तेर्वा साधकबाधकप्रमाणाभावे चेतनकर्तृत्वे संशयः। न च प्रत्यक्षानुपलब्धिमात्रमत्र बाधकं भवितुमर्हति। स्वभावविप्रकर्षिणां सतामपि प्रत्यक्षानुपलब्धेः परमाण्वादीनाम्। तथा च विवादाध्यासितास्तरुमहीधरादय उपादानाभिज्ञकर्तृका उत्पत्तिमत्त्वात् अचेतनोपादानत्वाद्वा, यदुत्पत्तिमदचेतनोपादानकं वा तत्सर्वमुपादानाभिज्ञपूर्वकं यथा प्रासादादि, तथा च विवादाध्यासितास्तनुतरुमहीधरादयः, तस्मात्तथेति। न चैषामुत्पत्तिमत्त्वमसिद्धम्, सावयवत्वेन वा महत्त्वे सति क्रियावत्त्वेन (१) वा वस्त्रादिवत्तत्सिद्धेः। न चैतावता वैनाशिकानां कर्मणा चेतनेन मीमांसकानां क्षेत्रज्ञेन चेतनेन चेतनकर्तृत्वसिद्धेः पृथिव्यादीनां सिद्धसाधनं चैतन्येऽपि तेषामुपादानानभिज्ञत्वात्। तज्ज्ञत्वे वा स एवास्माकमीश्वरः। ईदृशमस्तु सिद्धसाधनं को हि क्लेशं विना न वाञ्छितसिद्धिमिच्छेत्। न च साध्यहीनो दृष्टान्तः, पटादीनामप्युपादानाभिज्ञकुविन्दादिकर्तृकत्वात्। अत एव न विरुद्धता हेतोः, एवं हि सा भवेत् यद्युपादानानभिज्ञकर्तृकाः पटादयो भवेयुः ; न चैतत्परेषामपि संमतम्।

स्यादेतत्—अर्थाक्षिप्तस्य विशेषस्य शरीरादिमत्त्वादेः प्रमाणविरोधाद्विरुद्धता। यथा तृणादिविकारकारित्वादग्निमद्धिममित्यत्र वह्निमत्त्वाक्षिप्ततृणादिविकारोपयुक्तवह्निगतोद्भूतोष्णस्पर्शविरुद्धशीतस्पर्शस्य प्रत्यक्षेणोपलम्भाद्बाधितो विरुद्धो हेतुः। तथा ह्यस्य क्षित्याद्युपादानविषयं ज्ञानमात्ममनःसन्निकर्षादिकारणकं नासति तस्मिन् भवतीति तदनेनाक्षिप्तं तच्चात्र प्रमाणबाधितं तन्निवृत्तौ च ज्ञानमस्य निवर्त्तेत उष्णत्वोद्भूतिनिवृत्ताविव दाहको वह्निरवश्याय इति। न, अव्यापकनिवृत्तावव्याप्यनिवृत्तेरयोगात्। कारणं चेदव्यापकं कार्यस्य, हन्त हता तर्हि व्याप्यव्यापकसंकथा। भवेदेतद् यदि क्षित्याद्युपादानज्ञानमप्यस्य कार्यं स्यान्नित्यं तु तदभ्युपेयत इति न शरीरादिनिवृत्तावपि निवर्त्तितुमर्हति अव्यापकनिवृत्तेरव्याप्यस्यानिवृत्तेरिति। अन्यथा नाश्ववान् मैत्र इति गोमानपि न स्यात्। न च बुद्ध्यादीनामनित्यानां बहुलमुपलब्धेर्नित्या बुद्धिरसंभाविनीति साम्प्रतम्। न हि प्रत्यक्षाः पाथसीया हिमकरकादयस्तद्गता रूपादयोऽनित्या इति तदारम्भकैः परमाणुभिस्तद्गतैर्वा रूपादिभिस्तथा भवितव्यम्। (क)सदकारणतया तु नित्यतोभयत्रापि तुल्या।

## वृत्तिः

नन्वीश्वर एव क इत्यत्र भाष्यम् 'गुणविशिष्टमात्मान्तरमीश्वरः'। गुणैर्नित्यज्ञानेच्छाप्रयत्नैः सामान्यगुणैश्च संयोगादिभिर्विशिष्टमात्मान्तरं जीवेभ्यो भिन्न आत्मा जगदाराध्यः सृष्ट्यादिकर्ता वेदद्वारा हितोपदेशको जगतः पितेति।

(१) 'वा' इति क-पु० नास्ति।
(क) 'सदकारणवन्नित्य'मिति वैशेषिकसूत्रम्।

## न्यायवार्त्तिकतात्पर्यटीका

न च शरीरादिसहभावेन ज्ञानस्य तत्र तत्रोपलम्भाच्छरीरादीनां ज्ञानं व्याप्यमिति युक्तम्, स्वाभाविकसंबन्धशालिता हि व्याप्यता, सा चोपाधिविरहे भवति। अस्ति च शरीरादिसहभावे ज्ञानस्योपाधिः कार्यत्वम्। कार्यं ज्ञानं स्वकारणं शरीरादि नातिवर्त्तते नित्यं तु तदतिवर्त्तमानमपि साहित्योपलम्भं न विरुणद्धि। तस्माद् यथाऽनित्यः शब्दः उत्पत्तिमत्त्वात् घटवदिति प्रयुक्ते कश्चित् साध्यदृष्टान्तयोर्धर्मवैचित्र्यात् प्रत्यवतिष्ठेत—'यदि घटसाधर्म्यादुत्पत्तिमत्त्वादनित्यः शब्दः, हन्त तस्मादेव रूपादिमता तेन भाव्यम्, न चेदयं घटसाधर्म्येण रूपादिमान् एवमनित्योऽपि मा भूदिति। एवं च प्रत्यवतिष्ठमान उत्कर्षसमजातिवादी पराजीयते, एवमेवंवाद्युत्कर्षसमजातिवादितया पराजेतव्यः साधर्म्यमात्रेणाप्रयोजकेन प्रत्यवस्थानात्, तस्य च सर्वानुमानेषु सुलभतया सर्वानुमानोच्छेदापादकत्वात्।

स्यादेतत्। उत्पत्तिमत्त्वमुपादानाद्यभिज्ञकर्तृपूर्वकत्वमात्रव्याप्तं घटादिषु दृष्टं तावन्मात्रमेव पृथिव्यादीनां गमयेद् नित्यसर्वविषयज्ञानवत्कर्तृत्वं तु कुतस्त्यम्। न हि तद् दृष्टान्तधर्मिणि दृष्टम्। अथ रूपाद्युपलब्धेः क्रियात्वेन चक्षुराद्यनुमानमपि कथम्? न हि च्छिदादयः क्रिया इन्द्रियादिसाधनाः तासां कुठारादिसाधनत्वात्। अथ दृष्टान्तधर्मिण्यदृष्टमपीन्द्रियसाधनत्वं पक्षधर्मताबलात् सिध्यति। रूपाद्युपलब्धिगतं हि क्रियात्वं तदेव करणं गमयेद् यदुपलब्धिनिर्वर्तनसमर्थं, न च कुठारादयः समर्था इति पक्षधर्मताबलात्कुठारादिविलक्षणमदृष्टचरमपि चक्षुराद्युपस्थापयतीति तदितरत्रापि समानम्। न ह्यपरिमेयानियतदिग्देशैन्द्रियकानैन्द्रियक-त्रस-स्थावरादिलक्षणकार्योत्पादयौगपद्यमसति सर्वविषयज्ञाने तन्नित्यत्वे वा सेद्धुमर्हति। नो खल्वीदृशं परमेश्वरविज्ञानं कार्यशरीरादिकार्यं संभवति, शरीराद्युत्पत्तेः प्रागस्याचैतन्येन तत्प्राक्कालकार्यान्तरोत्पादायेश्वरान्तरकल्पनाप्रसङ्गात्। एवं तत्प्राक् तत्प्रागित्यनेकालौकिक(क)कल्पनया वरं बुद्धिनित्यत्वं कल्पितम्। एतेन शरीरेन्द्रियनित्यत्वकल्पनाऽपि प्रत्युक्ता। एतेन यदेके ब्रुवते—

सन्निवेशादिमत्सर्वं बुद्धिमद्धेतु यद्यपि।
प्रसिध्येत्सन्निवेशादेरेककारणता कुतः॥

इति, तदपि परिहृतम्। तेषां प्रसिध्येत् सर्वज्ञनिराक्रियामनोरथो यदि पिशितचक्षुषः परमाणून् क्षेत्रज्ञान् तत्समवेतान् वा कर्माशयान् द्रष्टुमीशते, न चैतदस्ति। तस्मादतीन्द्रियार्थदर्शिनः अस्मदादिविलक्षणा बहवः कल्पनीयाः, तद्वरमेक एव तादृशः कल्पनालाघवायेति। न च कादाचित्कपरिपाकादृष्टवत्क्षेत्रज्ञपरमाणुसंयोगादेव तनुभुवनादिकार्योपपत्तेः कृतं चेतनकर्तृकत्वेनेति

## वृत्तिः

परे तु प्रसङ्गादीश्वरप्रतिपादनायेयं विसूत्री, तथाहि—ईश्वरः कारणम्, अर्थाज्जन्यजातस्य। अनुमानन्तु—क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवदित्यूह्यम्।

(क) 'कल्पनायाः' इति पाठः सम्भाव्यते।

न्यायवार्त्तिकतात्पर्यटीका

वाच्यम्, उत्पत्तिमत्त्वस्योपादानाद्यभिज्ञकर्तृकत्वेनोपाधिविरहिणः स्वाभाविकप्रतिबन्धसिद्धेः। न च विज्ञानानामिन्द्रियमनसां ज्ञानोत्पादसाधनानामनधिष्ठानस्य च वत्सवृद्धिनिमित्तस्याप्यचेतनस्य क्षीरस्य स्वातन्त्र्येण प्रवृत्तेः वने विटपादीनां च विना प्रयत्नमुत्पादस्य दर्शनाद् व्यभिचार इति सांप्रतम्, सर्वेषामेव तेषां विवादास्पदीभूतत्वेन पक्षनिक्षेपात्। न च शशशृङ्गास्तितावदनुपलब्धिविरोधादपक्षधर्मता धर्मिणो दर्शनानर्हतया भगवतस्तद्विरोधानुपपत्तेः; अन्यथा सर्वानुमानोच्छेदप्रसङ्गात्; शृङ्गस्य तु शशशिरोवर्तिनो वत्सादिगतस्येव दर्शनार्हस्यानुपलब्धिनिराकृतस्य साधनानर्हत्वात्।

स्यादेतत्—नोत्पत्तिमात्रं स्वभावप्रतिबद्धं बुद्धिमद्धेतुत्वेन किं तु तद्विशेषः, यद्दृष्टेरक्रियादर्शिनोऽपि कृतबुद्धिरुत्पद्यते तस्य च दृष्टेः सोपजायते। (क) यद् बुद्धिमद्भावाभावं दृष्टं घटादि च तथा, न तूत्पत्तिमन्मात्रं तनुभुवनाद्यपि, तस्य सद्भावासद्भावानुविधानादर्शनात्। तदेतेन विशेषेणोपाधिना प्रयुक्तां बुद्धिमद्धेतुकत्वव्याप्तिमुपजीवदुत्पत्तिसामान्यं न तेन स्वभावप्रतिबद्धमिति न तद्गमयितुमर्हतीति। अन्यथा धूमप्रयुक्तां धूमध्वजव्याप्तिमुपजीव्य पाण्डुतादेः कुमुदकपोतकादिगतादपि (ख) धूमकेतुनानुमानप्रसङ्गादिति। अत्रोच्यते। इदमत्र निपुणतरं भवन्तो निरूपयन्तु किं बुद्धिमदन्वयव्यतिरेकानुविधानं विशेष आहो तद्दर्शनम्। यदि पूर्वपक्षः स बुद्धिमद्धेतुकत्वं तनुभुवनादीनामातिष्ठमानैरभ्युपेयत एव। न हि कारणं कार्याननुविहितभावाभावमन्यो वक्तुमर्हत्यह्रीकात्। अथ दर्शनं न तर्ह्यक्रियादर्शिनः कृतबुद्धिसंभवः। य एव हि पटोऽनेन बुद्धिमद्धेत्वन्वयव्यतिरेकानुविधायी दृष्टः, स एव तत्कार्यो न तु विपणिवर्ती। तज्जातीयस्य तदन्वयव्यतिरेकानुविधानदर्शनाददृष्टान्वयव्यतिरेकानुविधानमपि सज्जातीयं तथेति चेत् हन्तोत्पत्तिमद् घटादि बुद्धिमदन्वयव्यतिरेकानुविधायीत्यन्यदपि तज्जातीयं तनुभुवनादि तथा भवद् दण्डेन न पराणुद्यते। घटजातीयमुत्पत्तिमद् बुद्धिमत्पूर्वमिति चेत् ननु प्रासादादि न तद्धेतुकं भवेत् अघटजातीयत्वात्। अथ यज्जातीयं बुद्धिमदन्वयव्यतिरेकानुविधायि दृष्टं तज्जातीयमेवादृष्टान्वयव्यतिरेकमपि बुद्धिमद्धेतुकम्। तत्किमिदानीं कार्यजातीयं प्रासादादि बुद्धिमद्धेतुकं न दृष्टं येनोत्पत्तिमत्तनुभुवनादि तथा न स्यात्। न खलु तज्जातीयत्वे कश्चिद्विशेष

वृत्तिः

ननु जीवानामेव कर्तृत्वं स्यादत आह—पुरुषेति। पुरुषकर्मणां वैफल्यं दृश्यते, तथा च विफले कर्मणि प्रवर्त्तमानत्वादज्ञत्वं जीवानां यत उपादानगोचरापरोक्षज्ञानादिमतो हि कर्तृत्वं, न क्षित्याद्युपादानगोचरमपरोक्षज्ञानं जीवानामिति भावः।

(क) 'यद् बुद्धिमद्भावानुविधायिभावाभावं' इति ख-पुस्तके मुद्रितम्। 'यद् बुद्धिमद्भावाभावानुविधायिभावाभावम्' इति तु समीचीनं सम्भाव्यते। एवं यच्छब्दाकाङ्क्षापूरकस्तच्छब्द उत्तरवाक्ये द्रष्टव्यः।

(ख) "धूमकेतनानुमान" इति समीचीनतया सम्भाव्यते।

## न्यायवार्त्तिकतात्पर्यटीका

इति। यत्तु मृद्विकारत्वेन वल्मीकस्य घटादिवत्कुलालकार्यत्वं न भवति, तत् कुम्भकारस्य प्रत्यक्षानुपलम्भविरोधात्; अदृश्यचेतनपूर्वकत्वं तु तस्योपेयत एव।

स्यादेतत्—नोत्पत्तिमात्रमुपादानाभिज्ञकर्तृकत्वेन व्याप्तम्, अपि तु यदस्मदादिशक्य-ज्ञानोपादानादि; न च तथा तनुभुवनाद्युत्पत्तिमदपि, तस्माद्व्याप्तिविरहान्न तत्पूर्वकमिति। तदयुक्तम्; उत्पत्तिमत्त्वतदुपादानाद्यभिज्ञकर्तृकत्वयोः प्रथममन्वयव्यतिरेकाभ्यां व्याप्तौ सिद्धाय तदुपादानादिशक्यज्ञानत्वकल्पनायाः कार्यज्ञानविपये व्यवस्थापनात्। व्याप्तिबलेन ज्ञानसामान्य-सिद्धौ पक्षधर्मताबलेन तन्नित्यत्वसिद्धिरित्युक्तम्। तेनोपायैरनुस्त्रियमाणस्यानुपलब्धेः स्वभाव-प्रतिबद्धमुत्पत्तिमत्त्वं बुद्धिमद्धेतुकत्वेन। न च स्वभावप्रतिबद्धमुत्पत्तिमत्त्वं स्वसंबन्धिनमती-त्यापि वर्त्स्यतीति शक्यं शङ्कितुं तथा सति स्वभावहानिप्रसङ्गः।

स्यादेतत्—न सर्वज्ञपूर्वकाः क्षित्यादयः प्रमेयत्वसत्त्वादिभ्यः घटादिवदित्यनुमानानि सन्ति प्रतिपक्षसाधनानीति सत्प्रतिपक्षतया प्रकृतमनुमानाभासम्। अत्रोच्यते। किमनेन सर्वज्ञपूर्वकत्वं निषिध्यते उत ज्ञातृमात्रपूर्वकत्वं सर्वग्रहणमुपलक्षणार्थम्। यदि पूर्वः पक्षः, तदैकदेशदर्शिपूर्वकत्वं साधितं स्यात्। तथा चापसिद्धान्तः। न च शक्यमपि। न ह्यस्मदा-दिनाऽर्वाग्दर्शिना शक्याः पृथिव्यादयः कर्तुम्। ज्ञातृमात्रपूर्वकत्वे तु निषेध्ये घटादिभिर्व्यभिचारः। यच्चेश्वरो नाधिष्ठाता परमाण्वादीनामशरीरित्वाद्‌ मुक्तात्मवत्। ऐश्वरं ज्ञानं न सर्वविषयम् अनित्यं च ज्ञानत्वाद्‌ अस्मदादिज्ञानवदित्यनुमानं तत्पक्षधर्मतासिद्ध्यर्थमीश्वरसिद्धिं तद्बुद्धिमत्त्वं चापेक्षमाणं तत्साधकप्रमाणविरुद्धमात्मानमेव तावन्नाऽऽसादयितुमर्हति (क)प्रागेव तद्विरोद्धुम्। न ह्यागमानुमाने जगत्कर्तृत्वनित्यसर्वविषयबुद्धिमत्त्वव्यतिरेकेण केवलमीश्वरं साधयतः। तथा च ताभ्यां विरुद्धं भवदनुमानं नोत्पत्तुमर्हतीति सिद्धम्। बुद्धिवदिच्छाप्रयत्नावपि तस्य नित्यौ सकर्तृकत्वसाधनान्तर्गतौ वेदितव्यौ ज्ञानचिकीर्षाप्रयत्नसमवायलक्षणत्वात् कर्तृत्वस्य, तेषां च परस्पराविनाभावादन्यतरसिद्धावितरयोः सिद्धेः। तदेवमुत्पत्तिमत्त्वादेव पक्षधर्मता-सहायादेवंभूतेश्वरसिद्धिरित्युक्तम्।

भवतु वा तस्मादुपादानाद्यभिज्ञकर्तृकत्वमात्रसिद्धिः परिशेषानुमानात्तु व्यतिरेक-सिद्धेर्विशेषसिद्धिः। तथा हि तनुभुवनाद्यभिज्ञः कर्त्ता नानित्यासर्वविषय-बुद्धिमान्, तत्कर्तुस्तदुपादानाद्यनभिज्ञत्वप्रसङ्गात्, न ह्येवंविधस्तदुपादानाद्यभिज्ञो दृष्टः

## वृत्तिः

नन्वदृष्टद्वारा जीवानां कर्तृत्वमस्त्वित्याशङ्कते—न पुरुषेति। फलस्य कार्यस्य कर्माभावेऽनिष्पत्तेः। तत्तत्पुरुषोपभोगसाधनत्वात् तत्कर्मजन्यत्वमिति स्फोरणाय पुरुषेति।

---

(क) 'प्रागेव' इति 'किमुत' इत्यर्थे निपातः इति गुरवः।

## न्यायवार्त्तिकम्

स पुनरात्मेश्वरसम्बन्धः किं व्यापकोऽव्यापको वा इति अर्थाभावादव्याकरणीयः प्रश्नः। आत्मेश्वरसम्बन्धोऽस्तीत्येतदेव शक्यते वक्तुम्। स पुनरीश्वरात्मानौ व्याप्नोति न व्याप्नोतीति न व्याक्रियते। येऽप्यजं संयोगं नेच्छन्ति तेषामप्यणुमनःसंयोगोपपत्तेरस्ति सम्बन्धः—यानि प्रत्यात्म मनांसि तानि सर्वाणीश्वरसम्बद्धानीत्यतः सम्बद्धसम्बन्धोपपत्तेरात्मान्तराण्यधितिष्ठति यथाऽऽत्महस्तसंयोगप्रयत्नाभ्यां हस्ते कर्म भवति, उत्पन्नकर्मको हस्तः सन्दंशादिना सम्बध्यते, तत्सम्बन्धादयःपिण्डाद्यधितिष्ठति। यदि तर्हि सर्गादावीश्वरस्य कारणत्वेऽयं न्यायोऽभिहितः इदानीमीश्वरो न कारणमिति प्राप्तम्? इदानीमपि स एव न्यायः—मृतशरीरिणां यौ धर्माधर्मौ तौ बुद्धिमत्कारणाधिष्ठिताविति समानो न्यायः। बुद्धिमत्कारणाधिष्ठितानि स्वासु स्वासु धारणादिक्रियासु महाभूतानि वाय्वन्तानि प्रवर्तन्ते अचेतनत्वाद्वास्यादिवत्। एवं कार्यत्वात् तृणादीनि पक्षीकृत्य दर्शनस्पर्शनविषयत्वादिति वक्तव्यम्। एवं यत्र यत्र विप्रतिपत्तिः कार्यत्वं च तत्तदनेनैव न्यायेनानेन दृष्टान्तेन वास्यादिना पक्षयित्वा साधयितव्यम्। आगमाच्च—आगमादपि श्रूयते ईश्वरः कारणम्।

## न्यायवार्त्तिकतात्पर्यटीका

यथाऽस्मदादिः, तदुपादानाद्यभिज्ञश्चायम्, तस्मात्तथेति। नो खलु परमाणुभेदान् प्रतिक्षेत्रज्ञसमवायिनश्च कर्माशयानन्यः शक्तो ज्ञातुमृते तादृशादीश्वरादिति प्रपञ्चितमधस्तात्। परपुरुषसमवेतावपि धर्माधर्मावधिष्ठातुं शक्नोति संबन्धात्। न हि साक्षात्संयोगसमवायावेव संबन्धौ संयुक्तसंयोगिसमवायस्यापि तद्भावात्। संयुक्ताः खल्वीश्वरेण परमाण्वादयः तैश्च क्षेत्रज्ञाः तत्समवेतौ धर्माधर्माविति। संयुक्तसमवायो वा क्षेत्रज्ञेनेश्वरस्य संयोगात् अजसंयोगस्याप्युपपादितत्वात्। धर्माधर्मौ परमाणून् वा स्वधर्मोपग्रहमन्तरेणापि चेश्वरः स्वकार्याभिमुखान् करिष्यति विषविद्याविदिव विषशकलं क्रियारम्भाभिमुखम्। एतेन चेतनोपादानत्वमपि व्याख्यातम्। वार्त्तिककृता तूपलक्षणतया चेतनत्वं हेतुरुक्तः। उत्पत्तिमत्त्वादयोऽपि हेतव ऊहनीयाः। इमं च न्यायमाम्नाय उपोद्बलयति—

"एतस्य वाऽक्षरस्य प्रशासने गार्गि (क) द्यावापृथिवी विधृते तिष्ठतः" (ख) "द्यावापृथिवी जनयन् देव एकः" "तदैक्षत बहु स्यां प्रजायेये"त्यादिः। स्मृतिश्च भवति—

## वृत्तिः

समाधत्ते—तदिति। कर्मणोऽपि तत्कारितत्वात् ईश्वरकारितत्वात् अचेतनस्य चेतनाधिष्ठितस्यैव जनकत्वादिति भावः॥ २१॥

समाप्तमीश्वरोपादानताप्रकरणम्॥ ५॥

(क) "द्यावापृथिव्यौ" इत्यस्मदृष्टमुद्रितपुस्तकेषु पाठः।

(ख) "द्यावाभूमी" इत्यस्मत्पुस्तकपाठः।

अपर इदानीमाह—

(सू०)—अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् ॥२२॥

न्यायभाष्यम्

अनिमित्ता शरीराद्युत्पत्तिः (१) कस्मात्? कण्टकतैक्ष्ण्यादिदर्शनात्। कण्टकस्य

न्यायवार्त्तिकम्

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥

( महाभारतं वनपर्व ३०अ० २८ श्लो० )

यदा स देवो जागर्ति तदेदं चेष्टते जगत्।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ॥

( मनुसंहिता १।५२ ) ॥ २१ ॥

इति ईश्वरोपादानताप्रकरणम्।

अपर इदानीमाह—

अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात्। यथा कण्टकतैक्ष्ण्यादि निर्निमित्तं च उपादानवच्च तथा शरीरादिसर्गोऽपि। तदिदं दृष्टान्तसूत्रम्। कः पुनरत्र न्यायः? अनिमित्ता

न्यायवार्त्तिकतात्पर्यटीका

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥

अकारणत्वेन चेश्वरज्ञाननित्यतां दर्शयति श्रुतिः—

"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः। स वेत्ति विश्वं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणम्" इत्यादिका। एतयैवाशरीरित्वं दर्शितं भवति। परिशिष्टं तु वार्त्तिककृता स्वयमेव प्रपञ्चितमित्युपरम्यते ॥ २१ ॥

कण्टकादीनां संस्थानविशेषवतां निमित्तादर्शनेनानिमित्ततां मन्वानस्तेनैव दृष्टान्तेन शरीरादीनामपि संस्थानभेदवतामनिमित्ततां मन्वानः पूर्वपक्षयति—अनिमित्तत इति।

अनि-नात् ( सू० २२ ) ॥ अदृश्यमाननिमित्तानां शरीरकण्टकादीनां पक्षनिक्षेपात्

वृत्तिः

यदि च कार्याणामाकस्मिकत्वं तदा न परमाण्वादीनामुपादानत्वं न वेश्वरस्य निमित्तत्वमत आकस्मिकत्वनिराकरणमारभते।

तत्र पूर्वपक्षसूत्रम्—( अनिमित्तत इति )।

(१) 'कस्मात्' इति ज-ग-पु० नास्ति।

न्यायभाष्यम्

तैक्ष्ण्यम्, पर्वतधातूनां चित्रता, ग्राव्णां श्लक्ष्णता, निर्निमित्तं च (१) उपादानवच्च दृष्टं तथा शरीरादिसर्गोऽपीति ॥ २२ ॥

(सू०)—अनिमित्तनिमित्तत्वान्नानिमित्ततः ॥ २३ ॥

अनिमित्ततो भावोत्पत्तिरित्युच्यते यतश्चोत्पद्यते तन्निमित्तम्। अनिमित्तस्य निमित्तत्वान्नानिमित्ता भावोत्पत्तिरिति ॥ २३ ॥

न्यायवार्त्तिकम्

रचनाविशेषाः शरीरादयः संस्थानवत्त्वात् कण्टकादिवदिति। न, अनुपलब्धनिमित्तानामनुमानतो निमित्तोपलब्धिः—यस्य निमित्तं प्रत्यक्षतो नोपलभ्यते तस्यानुमानतः प्रत्येतव्यम्। कुतः? निमित्तवद्द्रव्यसामान्यात्—यानि खलु निमित्तवन्ति द्रव्याणि संस्थानविशेषवन्ति तानि घटादीनि, संस्थानविशेषवच्च शरीरं कण्टकादयश्च, तस्मात् निमित्तवन्त इति। उक्तं चात्र। किमुक्तम्? पूर्वकृतफलानुबन्धात् तदुत्पत्तिरिति (सू ६०।२।३)। न चोभयपक्षसम्प्रतिपन्नं संस्थानविशेषवदनिमित्तं दृष्टमिति ॥ २२ ॥

अनिमित्तनिमित्तत्वान्नानिमित्ततः। अपरे तु अनिमित्तनिमित्तत्वान्नानिमित्तत इति परिहारं वर्णयन्ति। अनिमित्तमेव निमित्तम्, यतश्चोत्पत्तिस्तन्निमित्तमिति, अनिमित्तनिमित्तत्वात् नानिमित्तत उत्पत्तिरिति ॥ २३ ॥

न्यायवार्त्तिकतात्पर्यटीका

पक्षेण व्यभिचारानुद्भावनात्, उद्भावने वा सर्वानुमानोच्छेदप्रसङ्गात् सर्वत्र तस्य सुलभत्वात् उभयसिद्धेन निमित्तवत्पटादिदृष्टान्तेन संस्थानभेदवत्त्वात् कण्टकशरीरादीनामपि निमित्तवत्त्वमिति सिद्धान्तः ॥ २२ ॥

सिद्धान्त्येकदेशिमतमुद्भाव्य दूषयति—

अनि-तः (सू० २३)॥ अपरे त्विति ॥ २३ ॥

वृत्तिः

अनिमित्तत इति प्रथमान्तात् (२)तसिः, अनिमित्ता भावोत्पत्तिरित्यर्थः। भावेति स्पष्टार्थम्। घटाद्युत्पत्तिर्न कारणनियम्या उत्पत्तित्वात् कण्टकतैक्ष्ण्याद्युत्पत्तिवत्। यद्वा घटादिकं न सकारणकं भावत्वात् कण्टकतैक्ष्ण्यादिवत्। तैक्ष्ण्यं संस्थानविशेषः। आदिपदान्मयूरचित्रादिपरिग्रहः, तदकारणकमेवेत्याशयः ॥ २२ ॥

(१) 'उपादानं दृष्टम्' इति ख-ग-ज०।

(२) 'तसिल्' इति भ०।

## (सू०)—निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥ २४ ॥

### न्यायभाष्यम्

अन्यद्धि निमित्तमन्यच्च निमित्तप्रत्याख्यानम्, न च प्रत्याख्यानमेव प्रत्याख्येयं

### न्यायवार्त्तिकम्

एतच्च न—

निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः। अन्यद्धिनिमित्तमन्यच्च निमित्तप्रत्याख्यानमिति। न च प्रत्याख्यानमेव प्रत्याख्येयं भवति; निमित्तमित्यर्थाभ्यनुज्ञा, अनिमित्तमिति तस्य प्रतिषेधः, अभ्यनुज्ञाप्रतिषेधयोश्चैकत्वमयुक्तमिति। स खल्वयं वादोऽकर्मनिमित्तः सत्त्वसर्ग इति एतस्मान्न भिद्यत इति। अभेदे तु तत्प्रतिषेधेनैव प्रतिषिद्धो बोद्धव्यः।

कण्टकादीनां चानिमित्तं जन्मेति ब्रुवाणः प्रष्टव्यः—किं कण्टकमात्रस्यानिमित्तं जन्म उत सर्वस्येति? यदि कण्टकमात्रस्यानिमित्तं जन्म? तच्छेषेण दृष्टान्तेन शक्यं प्रतिपादयितुं निमित्तवदिति। अथ सर्वमनिमित्तमित्ययं पक्षस्तथाऽपि व्याघातः प्रतिपाद्यप्रतिपादकन्यायस्याभ्युपगमात्—सर्वं चानिमित्तं प्रतिपादयसि चेति (क) व्याघातः। वाक्योपादानाच्च व्याघातः—

### न्यायवार्त्तिकतात्पर्यटीका

निमि-धः ( सू० २४ )॥ स्वयं वार्त्तिककारः कण्टकादीनामनिमित्ततां विकल्प्य दूषयति—कण्टकादीनामनिमित्तं जन्मेति। प्रतिपाद्यप्रतिपादकन्यायस्येति। प्रतिपाद्यः पुरुषः कर्म प्रतिपादकश्च पुरुषः कर्ता, कर्तृकर्मणी च कारके, कारकं च क्रियाया निमित्तमिति प्रतिपाद्यप्रतिपादकविषयो न्यायः; स चायमनिमित्तं शरीरादीनां जन्मेति प्रतिजानानेनानेनाभ्युपेयते। अन्यथा ते मूकतैव स्यादिति। तदिदमुक्तम्—सर्वं चानिमित्तं प्रतिपादयसि चेति व्याहतम्। न केवलं प्रतिपाद्यप्रतिपादकन्यायाभ्युपगमात् इतोऽपीत्याह—वाक्योपादानाच्चेति। प्रतिपादननिमित्तं वाक्यमुपादत्से अभिधत्से चानिमित्तं सर्वमिति

### वृत्तिः

एकदेशी भ्रान्तो दूषयति—( अनिमित्तनिमित्तत्वान्नानिमित्ततः )।

अनिमित्तत इति हेतुपञ्चमीनिर्देशादनिमित्तस्यैव निमित्तत्वात् कथमनिमित्तत इति॥ २३ ॥

दूषयति—( निमित्तेति )।

अनिमित्तस्य निमित्तस्य चार्थान्तरभावाद्भेदादुक्तः प्रतिषेधो न युक्तः, अनिमित्तस्य (१)निमित्तत्वासम्भवात् शरीरस्याकर्मनिमित्तत्वदूषणेनैव च दूषितप्रायमित्याशयेनात्र न दूषितमिति।

---

(१) 'निमित्तासम्भवात्' इति भ०।

(क) 'व्याहत'मिति टीकासम्मतः पाठः।

## न्यायभाष्यम्

यथाऽनुदकः कमण्डलुरिति नोदकप्रतिषेध उदकं भवतीति। स खल्वयं वादोऽकर्मनिमित्तः शरीरादिसर्ग इत्येतस्मान्न भिद्यते, अभेदात्तत्प्रतिषेधेनैव प्रतिषिद्धो वेदितव्य इति ॥ २४ ॥

## न्यायवार्त्तिकम्

अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिवदिति वाक्यं प्रतिपादकमुपादीयते, न च निमित्तमस्तीति व्याघातः। अनिमित्ततो भावोत्पत्तिरिति सनिमित्ता भावोत्पत्तिरिति च वाक्ये। यद्यनयोरर्थभेदं प्रतिपद्यसे, वाक्यभेदादर्थभेदप्रतिपत्तिरिति व्याहतं भवति अनिमित्ता भावोत्पत्तिरिति। अथ न वाक्यभेदेनार्थभेदं प्रतिपद्यसे, वाक्यविशेषोपादानं व्याहतम् ; यत्किञ्चिद् वाक्यमुपादेयमिति। अनिमित्तां भावोत्पत्तिं प्रतिपद्यमानेन सर्वलोकव्यवहार उच्छिन्नो भवति। अनिमित्ता भावोत्पत्तिरिति च भावमात्रपक्षीकरणे न दृष्टान्तो भवति। अथ शरीराद्येकदेशं पक्षयसि ? तथाऽप्यन्यतरधर्मासिद्धो दृष्टान्तः (१) संस्थानविशेषवत्त्वस्य (२) भावात् अनिमित्तत्वस्य चाभावादिति ॥२४॥

इति आकस्मिकत्वप्रकरणम्।

## न्यायवार्त्तिकतात्पर्यटीका

व्याघात इत्यर्थः। तथाऽप्यन्यतरधर्मासिद्ध इति। अन्यतरेण साध्यधर्मेणानिमित्तत्वाख्येनासिद्धोऽनिमित्तत्वस्यैवासिद्धेः। ननु प्रतिवादिनो वाङ्मात्रेण न सिद्धमसिद्धं भवत्यतिप्रसङ्गादित्यत आह—संस्थानविशेषवत्त्वस्य भावात्। पटादिदृष्टान्तेन कण्टकादीनां सनिमित्तकत्वस्य (क)प्रामाणिकत्वेन वाङ्मात्रादसिद्धेरिति।

कस्मात् पुनः पूर्वः पक्षः स्वयं सूत्रकारेण न निराकृत इत्यत आह भाष्यकारः—स खल्वयं वादोऽकर्मनिमित्त इति ॥ २४ ॥

## वृत्तिः

नव्यास्तु सूत्रद्वयमेवं व्याचक्षते। समाधत्ते—अनिमित्तेति। अनिमित्तस्य अनिमित्तत्वसाधकस्य। निमित्तत्वात् अनिमित्तत्वानुमितिजनकत्वाद् अनिमित्तत इति व्याहतम्। अनिमित्तत्वानुमितिजनकानभ्युपगमेऽनिमित्तत्वं न सिध्येदिति, कण्टकतैक्ष्ण्यादिकमपि नानिमित्तकम्, अदृष्टविशेषसहकृतैरणुभिस्तदुत्पादनादिति हृदयम्। दोषान्तरमाह—निमित्तेति। इदमत्र निमित्तमिदमनिमित्तमिति प्रतीत्याऽनयोर्भेदसिद्धेर्निमित्तप्रतिषेधो न युक्तः, इतरथा च सार्वलौकिकी प्रतीतिर्नोपपद्येतेति भावः ॥ २४ ॥

समाप्तमाकस्मिकत्वप्रकरणम् ॥ ६ ॥

---

(१) 'सन्तानविशेषवत्त्वस्य' इति क-खधृतपाठान्तरम्। (२) 'विद्यमानत्वात्' इति क-ख०।

(क) अत्र 'प्रामाणिकत्वे न वाङ्मात्रादसिद्धिरिति' इति पाठः समीचीनतया प्रतिभाति।

## न्यायभाष्यम्

अन्ये तु मन्यन्ते(१)—

### (सू०)—सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥ २५ ॥

किमनित्यं नाम ? यस्य कदाचिद्द भावस्तदनित्यम्। उत्पत्तिधर्मकमनुत्पन्नं नास्ति विनाशधर्मकं (२) च (क)विनष्टं नास्ति। किं पुनः सर्वम् ? भौतिकं च शरीरादि

## न्यायवार्त्तिकम्

अन्ये तु मन्यन्ते—

सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात्। किमनित्यं नाम ? यस्य कदाचिद्भावस्तदनित्यम्। उत्पत्तिधर्मकमनुत्पन्नं नास्ति विनाशधर्मकं च (ख)विनष्टं नास्ति। किं पुनः सर्वम् ? भौतिकं शरीरादिकमभौतिकं च बुद्ध्यादि। तदुभयमुत्पत्तिविनाशधर्मकमिति विज्ञायत इति। तस्मात् सर्वमनित्यमिति। सूत्रस्य दृष्टान्तार्थत्वात् तस्य सर्वान्तर्भावादुदाहरणाभावः। (३)सर्वमनित्यमिति ब्रूषे (३*) दृष्टान्ताभावः, सर्वस्य पक्षीकृतत्वात्; न साध्यमुदाहरणं युक्तम्। उत्पत्तिविनाशधर्म-

## न्यायवार्त्तिकतात्पर्यटीका

अन्ये तु मन्यन्ते—

सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् इति ॥ ( सू० २५ ) ॥ हेतोर्गमकत्वं दर्शयितुं पृच्छति—किमनित्यमिति। उत्तरम् यस्य कदाचिद्भावः। हेत्वर्थं विवृणोति—उत्पत्तीति। यद्द उत्पत्तिधर्मकमनुत्पन्नं नास्ति तद्द उत्पन्नं चास्ति, विनाशधर्मकं च विनष्टं नास्ति अविनष्टं चास्ति। तस्मात् पूर्वापरयोः कालयोरभावान्मध्ये च भावात् सिद्धं कदाचिद्भावलक्षणमनित्यत्वमुत्पत्तिविनाशधर्मकत्वादित्यर्थः। साध्यधर्मिरूपं पृच्छति—किं पुनरिति। उत्तरम्—भौतिकं चेति। अत्र तावत् स्वयं वार्त्तिककार उत्तरमाह—(क) सर्वमनित्यमिति—सूत्रस्य

## वृत्तिः

सर्वस्यैवानित्यत्वे नात्मादेरपि नित्यत्वं स्यादतः सर्वानित्यत्वनिराकरणप्रकरणम्। तत्र प्रमेयत्वमनित्यत्वव्याप्यं न वेति संशये पूर्वपक्षसूत्रम्—( सर्वमिति )।

---

(१) 'अन्येऽनुमन्यन्ते'—इति ज०। (२) 'अविनष्टं नास्ति' इति ख-ग-ज०।

(३) 'सर्वमुत्पत्तिविनाशधर्मकत्वादिति ब्रूषे'—इति क-खधृतपाठान्तरम्।

(क) 'सर्वमनित्यमिति' इत्यंशोऽत्र वार्त्तिकोक्तमूलपदव्याख्यानार्थं सूत्रादाकृष्यैव टीकाकृता योजितः, न तु वार्त्तिके 'सूत्रस्य' इत्यतः पूर्वमुपलभ्यमानः 'सर्वमनित्य'मिति ग्रन्थोऽत्र धृतः, तद्वार्त्तिकग्रन्थस्य 'तस्मात्'-पदपूर्वकत्वेन पूर्वपक्षिण उपसंहारस्वरूपताया एवाभ्युपगन्तव्यतया उत्तरग्रन्थत्वाभावादिति ध्येयम्।

(क) विनाशादुत्तरकाले नास्तीत्यर्थः। (ख) 'अविनष्ट'मिति क-ख-वार्त्तिकपाठः। टीकानुसारेण 'विनष्ट'मिति पाठो गृहीतः।

न्यायभाष्यम्

अभौतिकं च बुद्ध्यादि, तदुभयमुत्पत्तिविनाशधर्मकं विज्ञायते, तस्मात्तत्सर्वमनित्य-मिति ॥ २५ ॥

## (सू०)—नानित्यतानित्यत्वात् ॥ २६ ॥

यदि तावत् सर्वस्यानित्यता नित्या, तन्नित्यत्वान्न सर्वमनित्यम्। अथानित्या तस्यामविद्यमानायां सर्वं नित्यमिति ॥ २६ ॥

न्यायवार्त्तिकम्

कत्वादिति चायं हेतुरव्यापकः—यदि सर्वं पक्षयित्वा उत्पत्तिविनाशधर्मकत्वमुपादत्से, परमाण्वाकाशादिषु तद्गुणेषु च केषुचित् सामान्यादिषु नोत्पत्तिविनाशधर्मकत्वमस्तीति हेतुरव्यापकः ॥२५॥

नानित्यतानित्यत्वात्। सर्वमनित्यमेवेति ब्रुवाणः प्रष्टव्यः—किं सर्वस्यानित्यता नित्या आहोस्विदनित्येति ? यद्यनित्यता नित्या, न तर्हि सर्वमनित्यम्। अथानित्या, अनित्यताया अभावात् सर्वमनित्यमिति व्याहतो हेतुः ॥ २६ ॥

न्यायवार्त्तिकतात्पर्यटीका

दृष्टान्तार्थत्वादिति। अर्थशब्दो निमित्तवचनः दृष्टान्तनिमित्तत्वात् सूत्रस्य प्रतिज्ञाहेतूपन्यास-परस्य। न दृष्टान्तं विना हेतुः प्रतिज्ञातार्थस्य गमको यत इत्यर्थः। एतदेव विभजते—सर्वमनित्यमिति। निराकरणान्तरमाह—उत्पत्तिविनाशधर्मकत्वादिति चायमिति ॥ २५॥

सिद्धान्त्येकदेशिमतमुपन्यस्य दूषयति—

नानित्यतानित्यत्वात् इति ( सू० २६ ) ॥ (क)

वृत्तिः

अनित्यं विनाशि उत्पत्तिमतो विनाशधर्मकत्वात्। उत्पत्तिमत्त्वं चाकाशादेरपि मेयत्वात्सिद्धमिति भावः, तेन परमते तत्र नासिद्धिः।

यद्वा, उत्पत्तिविनाशधर्मकत्वात् उत्पत्तिविनाशधर्मकाणां मानसिद्धत्वात्तद्भिन्नमप्रमा-णकमिति हृदयम्।

परे तु अनित्यत्वं कादाचित्कत्वम्, उत्पत्तिधर्मकत्वाद्विनाशधर्मकत्वादिति हेतुद्वये तात्पर्यमित्याहुः ॥ २५ ॥

दूषयति—( नानित्यतानित्यत्वात् )।

उत्पत्तिमत्त्वं न विनाशित्वसाधकम्, अनित्यताया ध्वंसस्य नित्यत्वात् अविनाशित्वात्, तत्र व्यभिचारात् ॥ २६ ॥

(क) २६ सूत्रे टीका नोपलभ्यते।

न्यायभाष्यम्

## (सू०)—तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् ॥ २७ ॥

तस्या अनित्यताया अप्यनित्यत्वम्। कथम्? यथा अग्निर्दाह्यं विनाश्यानुविनश्यति एवं सर्वस्यानित्यता सर्वं विनाश्यानुविनश्यतीति ॥ २७ ॥

## (सू०)—नित्यस्याप्रत्याख्यानं यथोपलब्धि व्यवस्थानात् ॥ २८ ॥

अयं खलु वादो नित्यं प्रत्याचष्टे, नित्यस्य च प्रत्याख्यान(१)मनुपपन्नम्। कस्मात्? यथोपलब्धि व्यवस्थानात्। यस्योत्पत्तिविनाशधर्मकत्वमुपलभ्यते प्रमाणतस्तदनित्यम्,

न्यायवार्त्तिकम्

तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत्। यथाऽग्निर्दाह्यं विनाश्यानुविनश्यति एवमनित्यताऽपि सर्वं विनाश्यानुविनश्यति ॥ २७ ॥

नित्यस्याप्रत्याख्यानं यथोपलब्धि व्यवस्थानात्। अयं (क) च खलु वादः सर्वमनित्यमिति नित्यं (ख)प्रत्याचष्टे—नित्यस्य प्रत्याख्यानं न युक्तं यथोपलब्धि व्यवस्थानात्। यत्र यत्रायं हेतुरुपलभ्यते, तत्र तत्र हेतुसामर्थ्यादनित्यत्वं प्रतिपद्यामहे; यत्र पुनरयं हेतुर्नास्ति, तेषामनित्यत्वं कथं प्रतिपत्तव्यम्? अथाकारणकमनित्यं प्रतिपद्यसे? व्याहतस्तर्हि हेतुः, उत्पत्तिविनाशधर्म-

न्यायवार्त्तिकतात्पर्यटीका

तद—वत् (सू० २७) ॥ (ग)

नित्य—नात् (सू० २८) ॥ परमसिद्धान्तं सूत्रोक्तमाह—अयं खल्विति—अथोच्यते न वयं सर्वमनित्यं साधयामोऽपि तु यस्य यस्यानित्यता नामास्ति धर्मः तत्सर्वमनित्यमिति। ततश्चाकाशादीनां नित्यत्वेऽपि नास्मत्पक्षक्षतिरिति। तदेतत्सिद्धसाधनेन दूषयति—

वृत्तिः

आक्षिपति—( तदनित्यत्वमिति )।

तस्या अनित्यताया अप्यनित्यत्वं, यथाग्निर्दाह्यस्येन्धनादेर्विनाशानन्तरं स्वयमपि नश्यति, न तु दाह्योन्मज्जनम्, तथा घटादेरपि नाशो नश्यति, न तु घटाद्युन्मज्जनम्।

ध्वंसध्वंसस्यापि प्रतियोगिध्वंसत्वात् ध्वंसप्रागभावानाधारकालस्य प्रतियोग्यधिकरणत्वमिति व्याप्तेरप्रयोजकत्वात् नोन्मज्जनमित्यन्ये ॥ २७ ॥

---

(१) '-मुपपन्नम्' इति वि०।
(क) भाष्ये 'च'-शब्दो नास्ति। (ख) क-खवार्त्तिकपुस्तकयोः 'व्याचष्टे' इति मुद्रितम्।
(ग) २७शसूत्रे टीका नोपलभ्यते।

## न्यायभाष्यम्

यस्य नोपलभ्यते तद्विपरीतम्। न च परमसूक्ष्माणां भूतानामाकाश-काल-दिगात्म-मनसां तद्गुणानां च केषाञ्चित्सामान्य-विशेष-समवायानां चोत्पत्तिविनाशधर्मकत्वं प्रमाणत उपलभ्यते, तस्मान्नित्यान्येतानीति ॥ २८ ॥

## न्यायवार्त्तिकम्

कत्वादिति। अनित्यमिति ब्रुवाणेनावश्यं नित्यमभ्युपेयं नञः प्रसज्यप्रतिषेधपर्युदासविषयत्वात्,—अयं खलु नञ् प्रवर्तमानः प्रसज्यप्रतिषेधे वर्तते पर्युदासे वा। तथा चोत्तरपदसिद्धिः, यदि नित्यं न भवतीत्यनित्यम्, तर्हि यदन्यत्र भवति तदन्यत्र प्रतिषिध्यत इति सिद्धमुत्तरपदम्। अथ नित्यादन्यदनित्यमिति, तथाऽप्युत्तरपदेन भवितव्यम्, नासत्युत्तरपदार्थे तस्मादन्यत्वं सिध्यतीति। अनित्यताभावाच्च सर्वमनित्यमिति न दोषः, अनित्यताया धर्मत्वेनाभ्युपगमात्—अनित्यत्वं नाम धर्मः, सोऽसति धर्मिणि न भवतीति; एवं च सति सर्वस्यानित्यत्वं न दोष इति। अथ पुनरुत्पत्तिविनाशधर्मकेणानित्येन सिद्धेन शेषं सन्दिह्यमानानित्यत्वं विपरीतनित्यत्वं च सत्त्वादनित्यमिति साधयेत् तस्याप्युत्तरपदसिद्ध्या नित्यत्वसिद्धिरिति प्रतिज्ञादोषाद्वाक्यं निवर्तत इति ॥ २८ ॥

इति सर्वानित्यतानिराकरणप्रकरणम्।

## न्यायवार्त्तिकतात्पर्यटीका

अनित्यताभावाच्च सर्वमनित्यमिति न दोष इति। यस्य सन् धर्मी स्वं तद्योगादनित्यं स्यात् स एव कदाचिन्नास्तीत्यत आह—अनित्यत्वं नाम धर्मः सोऽसति धर्मिणि न भवतीति। स्यादेतत्—उत्पत्तिविनाशधर्मकत्वावगतावनित्यतायोगाद् घटादि भवत्वनित्यं तेनैव दृष्टान्तेन सत्त्वादाकाशादयोऽपि भविष्यन्त्यनित्या इति देशयति—अथ पुनरिति। परिहरति—तस्याप्युत्तरपदसिद्ध्या तत्पदार्थस्य नित्यत्वस्य सिद्धेरिति ॥ २८ ॥

## वृत्तिः

समाधत्ते—(नित्यस्येति)।

नित्यस्य नित्यत्वविशिष्टस्य। नित्यत्वस्य न प्रत्याख्यानमिति फलितम्, यथोपलब्धि उपलब्ध्यनतिक्रमेण, तथा च धर्मिग्राहकमानेन लाघवसहकृतेनाकाशादेर्नित्यत्वव्यवस्थापनादिति (क) ॥ २८ ॥

समाप्तं सर्वानित्यत्वनिराकरणप्रकरणम् ॥ ७ ॥

(क) पञ्चम्यर्थो 'न प्रत्याख्यान'मित्यत्रान्वेति।

## न्यायभाष्यम्

अयमन्य एकान्तः—

### (सू०)—सर्वं नित्यं पञ्चभूतनित्यत्वात् ॥ २९ ॥

भूतमात्रमिदं सर्वं तानि च नित्यानि भूतोच्छेदानुपपत्तेरिति ॥ २९ ॥

### (सू०)—नोत्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥

उत्पत्तिकारणं चोपलभ्यते(१) विनाशकारणं च, तत् सर्वनित्यत्वे व्याहन्यते इति ॥ ३० ॥

## न्यायवार्त्तिकम्

अयमपर एकान्तः—

सर्वं नित्यं पञ्चभूतनित्यत्वात्। भूतमात्रमिदं सर्वं तानि च नित्यानि भूतोच्छेदानुपपत्तेः सर्वं नित्यमिति ॥ २९ ॥

नोत्पत्तिविनाशकारणोपलब्धेः। उत्पत्तिकारणं भावानामुपलभ्यते विनाशकारणं च। तदुभयं नित्यत्वे न स्यात्, न हि नित्यं नाम जायते विनश्यति वा ॥ ३० ॥

## न्यायवार्त्तिकतात्पर्यटीका

अयमपर एकान्तः—

सर्वं—त्वात् ( सू० २९ )॥ सर्वं नित्यम्। कस्मात्? पञ्चभूतनित्यत्वात्। पञ्चभूतात्मकं खल्वेतद् गोघटादिकार्यमुपलभ्यते। व्यपदिशन्ति हि मृद् घटो मृच्छरीरमिति। भूतानि च नित्यानि तेषामुच्छेदस्य नैयायिकैरनभ्युपगमात्। तेन भूतानां गोघटादीनां नित्यतेति पूर्वः पक्षः ॥ २९ ॥

भूतेभ्यो भौतिकानि भिन्नानि। न हि परमसूक्ष्माः परमाणवो गोघटादयः, परमाणुवत्तेषामतीन्द्रियत्वे सर्वाग्रहप्रसङ्गादित्युक्तं द्वितीयेऽध्याये। तस्माद् ग्रहणाग्रहणविरुद्धधर्माध्यासयोगादन्ये भौतिका भूतेभ्यः। तथा च तेषामुत्पत्तिविनाशकारणोपलब्धेर्न नित्यत्वं भूतनित्यत्वेऽपीति सिद्धान्तमाह—

नोत्पत्तिविनाशकारणोपलब्धेः इति ॥ ( सू० ३० )॥ (क)

## वृत्तिः

सर्वनित्यत्वे न प्रेत्यभावादिसिद्धिरतस्तन्निराकरणप्रकरणम्। तत्राक्षेपसूत्रम्—( सर्वं नित्यं पञ्चभूतनित्यत्वात् )।

---

(१) भूतानाम्—इति पु० पा०।

(क) एतत्सूत्रसमानाकारकं सूत्रं तृतीयेऽध्याये द्वितीयाह्निकेऽपि। सूत्रस्यावतरणिकातिरिक्ता टीका नास्ति।

न्यायभाष्यम्

## (सू०)—तल्लक्षणावरोधादप्रतिषेधः ॥ ३१ ॥

यस्योत्पत्तिविनाशकारणमुपलभ्यते इति मन्यसे, न तद् भूतलक्षणहीनमर्थान्तरं गृह्यते, (१) भूतलक्षणावरोधाद् भूतमात्रमिदमित्ययुक्तोऽयं प्रतिषेध इति ॥ ३१ ॥

न्यायवार्त्तिकम्

(२)तल्लक्षणावरोधादप्रतिषेधः। यदिदमुत्पद्यते विनश्यतीति च मन्यसे, न तद् भूतलक्षणहीनं गृह्यते, (३)भूतलक्षणावरोधात् सर्वं नित्यमिति। (४)सर्वं नित्यं च ब्रुवाणो न किञ्चिज्जायते न विनश्यतीति (५)प्रतिपद्येत, तत्प्रतिपत्तौ च हिताहितप्राप्तिपरिहारार्थोऽस्य परिस्पन्दो व्यर्थ आपद्येत। सर्वस्य च पक्षीकरणाद् दृष्टान्ताभावः। वाक्योपादानं च व्याहतम्—यदिदं वाक्यं परप्रतिपादनायोपादीयते सर्वं नित्यं पञ्चभूतनित्यत्वादिति, अनेन वाक्येनायं किं करोति? किमसिद्धं साधयति, उत सिद्धं निवर्तयति? यदि तावदसिद्धं साधयति, केयं सिद्धिर्वाक्येन प्रतिपाद्यते? यदि विज्ञानं? व्याहतं भवति सर्वं—नित्यं विज्ञानं च जायत इति। अथ प्रतिपत्तिर्न क्रियते, का तर्हि सिद्धिः, या प्रवर्तमानं साधनं करोति; अवश्यं कारकेणापूर्वं किञ्चिन्निष्पाद्यं तन्निष्पत्तेर्व्याघातः कारकत्वं वा निवर्तते, न हि नित्यस्य किञ्चित् कर्त्तव्यमस्ति। अथ सिद्धं निवर्तयतीति पक्ष आश्रीयते? एतस्मिन्नपि पक्षे नित्यं निवर्तते चेति व्याघातः। अथ तिरोभवतीति? तिरोभावेऽप्यवश्यमपूर्वोत्पत्तिः पूर्ववस्तुविनाशो वाऽभ्युपेय इति सर्वथा न व्याघातान्मुच्यसे, यत्प्रागनुपलब्धरूपं पश्चादुपलभ्यते तस्यावश्यमपूर्वोत्पत्तिर्वा पूर्ववस्तुविनाशो वाऽभ्युपेय इति तदभ्युपगमे च व्याघातः ॥ ३१ ॥

न्यायवार्त्तिकतात्पर्यटीका

भूतसारूप्येण तादात्म्यं मन्यमानः पुनरपि पूर्वपक्षवाद्याह—

तल्ल—धः ( सू० ३१ ) ॥ तल्लक्षणावरोधाद् गोघटादीनां भूतनित्यत्वेन नित्यत्वाप्रतिषेधः ॥ ३१ ॥

वृत्तिः

सर्वं नित्यं भूतत्वान्मेयत्वाद्वा, तत्र दृष्टान्तप्रदर्शनाय पञ्चभूतनित्यत्वादित्युक्तम्, तेन परमाण्वाकाशदृष्टान्तता लभ्यते ॥ २९ ॥

समाधत्ते—( नोत्पत्तिविनाशकारणोपलब्धेः )।

सर्वनित्यत्वं न युक्तं घटादीनाम्, उत्पत्तिविनाशकारणानां कपालसंयोग-मुद्गरपातादीनाम् उपलब्धेस्तथा चोत्पादविनाशावावश्यकाविति ॥ ३० ॥

(१) 'भूतलक्षणाविरोधात्'। इति ख०। (२) 'तल्लक्षणावबोधात्' इति क-ख-धृतपाठान्तरम्।
(३) 'भूतलक्षणावबोधात्' इति क-खधृतपाठान्तरम्।
(४) 'सर्वं नित्यमिति च' इति क-ख०। तत्र धृतं पाठान्तरं गृहीतम्।
(५) 'प्रतिपद्यते' इति ख०।

## न्यायभाष्यम्

## (सू०)—नोत्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥

कारणसमानगुणस्योत्पत्तिः कारणं (१) चोपलभ्यते। न चैतदुभयं नित्यविषयम्, न चोत्पत्तितत्कारणोपलब्धिः शक्या प्रत्याख्यातुम्, न चाविषया काचिदुपलब्धिः। उपलब्धिसामर्थ्यात् कारणेन समानगुणं कार्यमुत्पद्यते इत्यनुमीयते, स खलूपलब्धेर्विषय इति। एवं च तल्लक्षणावरोधोपपत्तिरिति।

उत्पत्तिविनाशकारणप्रयुक्तस्य ज्ञातुः प्रयत्नो दृष्ट इति। प्रसिद्धश्चावयवी तद्धर्मा। उत्पत्तिविनाशधर्मा चावयवी सिद्ध इति।

## न्यायवार्त्तिकम्

यत्पुनरेतद् भूतलक्षणावरोधात् सर्वं नित्यमिति, नान्यथा तदुपपत्तेः—भूतलक्षणयोगोऽन्यथा सम्भवतीति।

नोत्पत्तितत्कारणोपलब्धेः। उत्पत्तिकारणोपलब्धेः कारणसमानगुणोत्पत्तिश्च दृश्यते कारणं च दृश्यते न चैतदुभयं नित्यविषयम्, न हि नित्यस्योत्पत्तिर्नापि नित्यस्य कारणमस्ति, अस्ति चैतदुभयम्, तस्मात् कारणसमानगुणं कार्यमुत्पद्यत इति कारणसमानगुणोत्पादे च कार्यभूतलक्षणावरोधः सिध्यतीति। विभक्तन्यायं चैतत् व्यक्ताद् व्यक्तानां प्रत्यक्षप्रामाण्यादित्येतस्मिन् सूत्रे (सू० ११।१।४)। अव्यापकश्चायं हेतुः पञ्चभूतनित्यत्वादिति। कथं? कर्मादीनामव्याप्तेः

## न्यायवार्त्तिकतात्पर्यटीका

भूतसाम्यं गोघटादीनां भूतकार्यत्वेऽप्युपपद्यमानं न भूतात्मकत्वमवगमयतीत्याशयवानाह—

नोत्पत्तितत्कारणोपलब्धेः (सू० ३२) ॥ इति। अपि च यद्युत्पत्तिविनाशौ न भावानां वस्तुसन्तौ कथं प्रेक्षावतामभिमतोत्पत्तिकारणे अनभिमतविनाशकारणे च तदर्थिनां प्रवृत्तिरित्याह—उत्पत्तिविनाशकारणेति। अपि चाव्यापको हेतुरित्याह—

## वृत्तिः

पुनः साङ्ख्य आह—(तल्लक्षणावरोधादप्रतिषेधः)।

उक्तः प्रतिषेधो न, नित्यस्य परमाण्वादेर्यल्लक्षणं भूतत्वादि घटादौ तदवरोधात् तत्सत्त्वात्। तथा चोत्पादादिप्रत्ययो भ्रान्त इति भावः ॥ ३१ ॥

दूषयति—(नोत्पत्तितत्कारणोपलब्धेः)।

अनित्यत्वनिषेधो न युक्तः, उत्पत्तेस्तत्कारणात्तत्प्रमापकादुपलब्धेः। तथा चोत्पाद-

---

(१) उत्पत्तिकारणम्—इति पु० पा०

## न्यायभाष्यम्

शब्दकर्मबुद्ध्यादीनां चाव्याप्तिः। पञ्चभूतनित्यत्वात् तल्लक्षणावरोधाच्चेत्यनेन शब्द-कर्म-बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्नाश्च न व्याप्ताः तस्मादनेकान्तः।

स्वप्नविषयाभिमानवन्मिथ्योपलब्धिरिति चेत् भूतोपलब्धौ तुल्यम्। यथा स्वप्ने विषयाभिमान एवमुत्पत्तिकारणाभिमान इति। एवं चैतद् भूतोपलब्धौ तुल्यं (१)पृथिव्याद्युपलब्धिरपि स्वप्नविषयाभिमानवत् प्रसज्यते।

## न्यायवार्त्तिकम्

कर्मबुद्धिशब्दादयः पञ्चभूतनित्यत्वादित्यनेन न व्याप्ता इति। ज्ञातुः प्रयत्नदर्शनाच्च व्याघातः—उत्पत्तिविनाशप्रयुक्तस्य ज्ञातुः प्रयत्नो दृष्टः, सर्वनित्यत्वे च न युक्तः। प्रसिद्धश्चावयवी तद्धर्मा—उत्पत्तिविनाशधर्मा चावयवी प्रतिपादितः, अतोऽयुक्तमेतत्। कथमव्यापकोऽनेकान्तः? पक्षस्यान्तद्वयेऽवस्थानात् पक्षो हि सर्वं नित्यमिति, तच्च सर्वं (२) भूतलक्षणयुक्तम्, अन्यथा च, तत्पक्षान्तद्वयेऽवस्थानात् न सर्वं भूतलक्षणयुक्तमित्यनेकान्तः।

स्वप्नविषयाभिमानवन्मिथ्योपलब्धिरिति चेत्—अथ मनुषे यदिदमुत्पद्यते विनश्यति चेति तन्न तत्त्वतोऽस्ति, असत्ये तस्मिन्नभिमानो भवति उत्पन्नं विनष्टमिति, यथा न स्वप्ने विषयाः सन्ति अथ च विषयाभिमानो भवतीति? न, प्रमाणाभावात्—यदिदं गवादि (३) घटाद्युत्पत्तिविनाशयुक्तमुपलभ्यते एतन्नास्तीति नासत्त्वप्रतिपादकं प्रमाणमभिधीयते, न चाप्रामाणिकं शक्यं

## न्यायवार्त्तिकतात्पर्यटीका

शब्दकर्मबुद्ध्यादीनां चाव्याप्तिः। अव्यापकश्च (४) अनेकान्त उक्तः, पक्षो हि सर्वं नित्यमिति, तस्मिन् सत्त्वासत्त्वाभ्यामनेकान्तः न एकः सत्त्वासत्त्वलक्षणः अन्तोऽस्येत्यनेकान्त इति। तदेतद्वार्त्तिककारो वक्ष्यत्यर्थदृष्ट्या पक्षस्यान्तद्वयेऽवस्थानादिति। हेतोरन्तद्वये सत्त्वासत्त्वरूपे पक्षस्यावस्थानादिति योजना।

असति बाधके मिथ्यात्वकल्पनायामतिप्रसङ्ग इत्यमुमर्थं शङ्कानिराकरणाभ्यामाह—स्वप्नविषयेत्यादि। भाष्योक्तमर्थमुक्त्वा स्वयं वार्त्तिककार आह—(क) सर्वस्य चेति। यावद् येन प्रतिपाद्यत इति। प्रतिपादनेन क्रियत इत्यर्थः। शेषमतिरोहितार्थम्॥ ३२॥

---

(१) 'द्युपृथिव्या'—इति ल-ज०। (२) 'भूतलक्षणम्' इति ख०। 'भूतलक्षणयुक्तमुक्तम्' इति क-खधृतपाठान्तरम्। (३) 'घटाद्युत्पत्तिविनाशी युक्तमुपलभ्यते' इति ख०। 'घटादिव्यक्तमुपलभ्यत' इति क-ख-धृत-पाठान्तरम्। (४) 'अनेकान्त' इति क०।

(क) 'सर्वस्य च' इति 'यावद् येन प्रतिपाद्यते' इति च वार्त्तिकग्रन्थभागौ मुद्रितपुस्तकयोर्नोपलभ्येते।

## न्यायभाष्यम्

पृथिव्याद्यभावे सर्वव्यवहारविलोप इति चेत् तदितरत्र समानम्—उत्पत्तिविनाशकारणोपलब्धिविषयस्याप्यभावे सर्वव्यवहारविलोप इति, सोऽयं नित्यानामतीन्द्रियत्वादविषयत्वाच्चोत्पत्तिविनाशयोः स्वप्नविषयाभिमानवदित्यहेतुरिति ॥ ३२ ॥

अवस्थितस्योपादानस्य धर्ममात्रं निवर्तते धर्ममात्रमुपजायते स खलूत्पत्तिविना-

## न्यायवार्त्तिकम्

प्रतिपत्तुम् । यथा च चित्तव्यतिरेकिणो विषयास्तथा (क) उपरिष्टाद्वक्ष्यामः । (१) यदि स्वप्नविषयाभिमानवदुत्पत्तिविनाशाभिमानः (१*) अथ भूतोपलब्धिरपि स्वप्नविषयाभिमानवत् प्रसज्यते । पृथिव्याद्यभावे सर्वव्यवहारविलोप इति चेत्—अथ मन्यसे यदि पृथिव्यादीनि भूतानि न सन्ति ननु पृथिव्याद्याश्रयो व्यवहार उच्छिद्यत इति ? तदितरत्र समानम्—यदि व्यवहारोच्छेदभयाद् भूतानि प्रतिपद्यन्ते तत एवोत्पत्तिविनाशावपि प्रतिपद्यस्व । न ह्युत्पत्तिविनाशावन्तरेण कश्चन व्यवहारः सिध्यतीति । नित्यानां द्रव्याणामतीन्द्रियत्वात् अविषयत्वाच्चोत्पत्तिविनाशयोः—यन्नित्यं तदतीन्द्रियम्, अविषयश्चोत्पत्तिविनाशयोः ; तेन स्वप्नविषयाभिमानवत्तदभिमान इत्ययुक्तम् । उत्पत्तिविनाशाभिमान इति च ब्रुवतोत्पत्तिविनाशयोर्विषयो वक्तव्यः । न च सर्वनित्यवादिनामुत्पत्तिविनाशयोर्विषयोऽस्ति । विषयं च प्रत्याचक्षाणेन तदनुकारी विपर्ययप्रत्ययो हेय इति ॥ ३२ ॥

अपरे तु सर्वं नित्यमित्येतदन्यथा वर्णयन्ति—व्यवस्थितस्योपादानस्य धर्ममात्रं निवर्त्तते धर्ममात्रमाविर्भवति यच्च निवर्तते तन्निवृत्तमप्यस्तीति यच्चाविर्भवति तत्प्रागप्याविर्भावादस्ति ।

## न्यायवार्त्तिकतात्पर्यटीका

तदेवं सांख्यानां मतमपास्य स्वायंभुवानां मतमपाकर्तुमुपन्यस्यति—अपरे सर्वं नित्यमित्यन्यथा वर्णयन्ति । त्रिविधः खल्वयं धर्मिणः परिणामो धर्म-लक्षणावस्थारूपः । तद् यथा सुवर्णं धर्मि, तस्य परिणामो वर्धमानरुचकादिः धर्मस्य तु लक्षणपरिणामोऽनागतादिः । यदा खल्वयं सुवर्णकारो वर्धमानकं भङ्क्त्वा रुचकं रचयति तदा वर्धमानको वर्त्तमानलक्षणं हित्वा अतीतलक्षणमापद्यते, रुचकं त्वनागतलक्षणं हित्वा वर्त्तमानतामापद्यते ; वर्त्तमानतापन्न एव तु

## वृत्तिः

विनाशप्रतीतेः प्रामाणिकत्वान्न तन्निषेधः इतरथा कादाचित्कत्वप्रतीत्यनुपपत्तेः । न चाविर्भावात्तदुपपत्तिस्तस्यैवानित्यत्वे सर्वनित्यत्वव्याघातात् । विवेचयिष्यते चेदं स्पष्टतरमुपरिष्टात् ॥ ३२ ॥

---

(१) 'यदि स्वप्नविषयाभिमानः' इति ख० ।

(क) उपरिष्टादिति बाह्यार्थभङ्गनिराकरणप्रकरणे चतुर्थाध्यायद्वितीयाह्निके इत्यर्थः ।

न्यायभाष्यम्

शयोर्विषयः। यच्चोपजायते तत्प्रागप्युपजननादस्ति, यच्च निवर्तते तन्निवृत्तमप्यस्तीति, एवं च सर्वस्य नित्यत्वमिति ?

## न व्यवस्थानुपपत्तेः ॥ ३३ ॥

अयमुपजनः इयं निवृत्तिरिति(१) व्यवस्था नोपपद्यते, उपजातनिवृत्तयोर्विद्यमानत्वात्। अयं धर्म उपजातोऽयं निवृत्त इति सद्भावाविशेषादव्यवस्था, इदानीमुपजननिवृत्ती नेदानीमिति कालव्यवस्था नोपपद्यते सर्वदा विद्यमानत्वात् अस्य धर्मस्योप-

न्यायवार्त्तिकम्

न व्यवस्थानुपपत्तेरिति। शेषं भाष्ये। यच्च निवर्तते तन्निवृत्तमप्यस्तीति ब्रुवाणो भवान् प्रष्टव्यो भवति किमुक्तं भवति (२) निवृत्तमिति (२*) यदि ब्रूषे पूर्वमुपलब्धं पश्चान्नोपलभ्यत इति। अथ सतोऽनुपलब्धिः किंकृता ? यद्यावरणादिकृता, तदावरणाद्युपलभ्येत। उक्तं

न्यायवार्त्तिकतात्पर्यटीका

रुचको नवपुराणभावमापद्यमानोऽवस्थापरिणामवान् भवति। नवपुराणावस्थाश्च वर्त्तमानलक्षणाश्रया लक्षणपरिणामाः, सोऽयं त्रिविधः परिणामो धर्मिणः। धर्मलक्षणावस्थाश्च धर्मिणो भिन्नाश्चाभिन्नाश्च। तथा च ते धर्म्यभेदान्नित्याः भेदाच्चोत्पत्तिविनाशविषयत्वमित्युभयमुपपन्नम्। ननु यद्युपजनापायधर्मकत्वं धर्मिणां हन्तोत्पत्तेः प्राक् तेषामसत्त्वाद् विनाशाच्चोर्ध्वमसत्त्वात् कथं सर्वनित्यत्वसिद्धिरित्यत आह—यच्चोपजायते तत् प्रागप्युपजनादस्ति धर्मिरूपेणेति शेषः। तन्निवृत्तमप्यस्तीति, अत्रापि धर्मिरूपेणेति शेषः। निराकरोति—

न व्यवस्थानुपपत्तेः ( सू० ३३ )॥ उपजनापाययोः स्वरूपतः कालतो विशेषतः संबन्धितोऽनागतत्वादिव्यवस्थानुपपत्तिरित्यर्थः। एतदुक्तं भवति न तावद् भेदाभेदौ परस्परपरीहारव्यवस्थितधर्मावेकत्र समाविशतः। तस्मादुपजनापायव्यवस्थायै भेदं धर्मलक्षणावस्थानां धर्मिण इच्छता तेषामनित्यत्वमभ्युपेतव्यम्।

सांख्यवत्सत्कार्याभ्युपगमेन तु नित्यत्वव्यवस्थापने वार्त्तिककार आह—यच्च निवर्त्तते तन्निवृत्तमप्यस्तीति ब्रुवाण इति। सुगमम् ॥ ३३ ॥

वृत्तिः

उत्पादविनाशप्रत्ययस्य भ्रान्तत्वं स्यादित्याशङ्क्याह—( न व्यवस्थानुपपत्तेः )।

(१) अयं भागः वि-पु० नास्ति।

(२) इदं ख-वार्त्तिके नास्ति।

न्यायभाष्यम्

जननिवृत्ती नास्येति व्यवस्थानुपपत्तिः, उभयोरविशेषात्। अनागतोऽतीत इति च कालव्यवस्थानुपपत्तिः, वर्तमानस्य सद्भावलक्षणत्वात्। अविद्यमानस्यात्मलाभ उपजनो विद्यमानस्यात्महानं निवृत्तिरित्येतस्मिन् सति नैते दोषाः। तस्माद् यदुक्तं प्रागप्युपजनादस्ति निवृत्तं चास्ति तदयुक्तमिति ॥ ३३ ॥

अयमन्य एकान्तः—

## सर्वं पृथग् भावलक्षणपृथक्त्वात् ॥ ३४ ॥

सर्वं नाना न कश्चिदेको भावो विद्यते। कस्मात्? भावलक्षणपृथक्त्वात्—भावस्य लक्षणमभिधानम्, येन लक्ष्यते भावः स समाख्याशब्दः, तस्य पृथग्विषयत्वात्।

न्यायवार्त्तिकम्

यात्र यत्पूर्वमनुपलब्धं पश्चादुपलभ्यते तस्यापूर्वविशेषोत्पादः पूर्वविशेषप्रच्यवोऽभ्युपेय इति, तदभ्युपगमे च व्याघातः। यच्चोक्तं यच्चाविर्भवति तत् प्रागप्याविर्भावादस्ति, तन्न व्याघातात्—आविर्भवति विद्यते चेति व्याहतम्। अथाविर्भावोऽभिव्यक्तिः, तथापि पूर्वदोषानिवृत्तिः अभिव्यक्तिरसती (१) भवतीति ॥ ३३ ॥

( इति सर्वनित्यत्वनिराकरणम् )

अयमपर एकान्तः—

सर्वं पृथग् भावलक्षणपृथक्त्वात्। भावस्य लक्षणं शब्दः लक्ष्यतेऽनेन भाव इति। सर्वो भावसमाख्याशब्दोऽनेकविषयः यथा कुम्भ इति भावसमाख्याशब्दोऽनेकस्मिन्नवयवसमूहे वर्तत

न्यायवार्त्तिकतात्पर्यटीका

अयम् अपि अन्य एकान्तो बौद्धानाम्—

सर्वं—क्त्वात् ( सू० ३४ )॥ सर्वं पृथक्, कस्मात्? भावलक्षणपृथक्त्वात्। न रूपाद्यतिरिक्तं द्रव्यं नाम किंचिदस्ति नाप्यवयवातिरिक्तः कश्चिदस्त्यवयवीति सौत्रान्तिका वैभाषिकाश्च प्रतिपेदिरे।

वृत्तिः

सार्वलौकिकप्रमात्वेन सिद्धस्यापि भ्रमत्वशङ्कायां प्रमाभ्रमव्यवहारविलोपः स्यात् इत्यर्थः ॥ ३३ ॥

समाप्तं सर्वनित्यत्वनिराकरणप्रकरणम् ॥ ८ ॥

अथ प्रसङ्गात्सर्वपृथक्त्वप्रकरणम्। तत्र पूर्वपक्षसूत्रम्—( सर्वं पृथग् भावलक्षणपृथक्त्वात् )।

(१) 'भवति' इति क-पु० नास्ति।

### न्यायभाष्यम्

सर्वो भावसमाख्याशब्दः समूहवाची, कुम्भ इति संज्ञाशब्दो गन्ध-रस-रूप-स्पर्शसमूहे बुध्न-पार्श्व-ग्रीवादिसमूहे च वर्त्तते, (१) निदर्शनमात्रं चेदमिति ॥ ३४ ॥

## नानेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥

(क) अनेकविधलक्षणैरिति (२) मध्यमपदलोपी समासः। गन्धादिभिश्च गुणैर्बुध्नादिभिश्चावयवैः सम्बद्ध एको भावो निष्पद्यते, गुणव्यतिरिक्तं च द्रव्यमवयवातिरिक्तश्चावयवीति। विभक्तन्यायं चैतदुभयमिति ॥ ३५ ॥

### न्यायवार्त्तिकम्

इति। यथा कुम्भशब्दः एवमन्येऽपि शब्दा इति। अस्य प्रयोगः कुम्भशब्दोऽनेकविषयः एकपदत्वात् सेनाशब्दवदिति। पदश्रवणादनेकार्थावगतेः—यस्मात् पदश्रुतेरनेकोऽर्थोऽवगम्यते यथा सेनेति॥३४॥

नानेकलक्षणैरेकभावनिष्पत्तेः। अनेकलक्षणैरिति मध्यमपदलोपी समासोऽनेकविधलक्षणैरिति। गन्धादिभिश्च गुणैर्बुध्नादिभिश्चावयवैः सम्बद्ध एको भाव उत्पद्यते, अतः शब्दादेकावगतौ शेषोऽनुक्तोऽप्यवगम्यत इति। गुणव्यतिरिक्तो गुणीति अवयवव्यतिरिक्तश्चावयवीति विभक्त-

### न्यायवार्त्तिकतात्पर्यटीका

(ख) वार्त्तिकम्—अस्य प्रयोग इति। कुम्भशब्दोऽनेकविषय इति पारमार्थिकानेकविषयः, काल्पनिकं तु कुम्भस्यैकत्वं न वार्यते। तथा चैकपदमित्येकपदे न व्यभिचारः, तस्यापि पारमार्थिकानेकविषयत्वादित्यर्थः ॥ ३४ ॥

तान्निराकरोति—

नानेकलक्षणैरेकभावनिष्पत्तेः ( सू० ३५ )॥ अनेकविधैर्लक्षणैः सम्बद्धस्यैकस्य भावस्य घटादेरवयविनो निष्पत्तेरिति ॥ ३९ ॥

### वृत्तिः

सर्वं वस्तु पृथक् नाना। लक्ष्यतेऽनेनेति लक्षणं समाख्या, तस्याः पृथक्त्वम् पृथगर्थकत्वम्। तथा च प्रयोगः—घटादिः समूहरूपः वाच्यत्वात् सेनावनादिवत्। अतीन्द्रिये गगनादौ मानाभावादात्मनः शरीरानतिरेकात् गुणकर्मणोराश्रयाभेदाद्विशेषसमवाययोर्मानाभावादभावस्य तुच्छत्वान्न व्यभिचारः।

यद्वा घटादिकं स्वस्मादपि पृथक् भावलक्षणानां गन्धरसादीनां तत्तदवयवानां च पृथक्त्वात् घटादेश्च तदभेदादिति भावः ॥ ३४ ॥

---

(१) 'निर्देशमात्रं' इति ल०। (२) 'मध्य-' इति फ०।

(क) 'अनेकलक्षणैः' इति पाठः फ-पुस्तके सूत्रपदानुसारेण शोधितः, आदर्शपुस्तकान्तरेषु दृष्टः 'अनेकविधलक्षणैः' इत्याकारस्तु सूत्रे लुप्तमध्यमपदप्रदर्शनार्थं भाष्यकारेणोक्त इति सम्भाव्यते। (ख) अयं वार्त्तिकग्रन्थः ( ९७५ पृः ) "समूहे भावशब्दप्रयोगादिति चेत्" इत्यतः परमादर्शपुस्तकयोर्मुद्रितः।

## न्यायभाष्यम्

अथापि—

### लक्षणव्यवस्थानादेवाप्रतिषेधः ॥ ३६ ॥

न कश्चिदेको भाव इत्ययुक्तः प्रतिषेधः। कस्मात्? लक्षणव्यवस्थानादेव। यदिह लक्षणं भावस्य संज्ञाशब्दभूतं तदेकस्मिन् व्यवस्थितं, यं कुम्भमद्राक्षं तं स्पृशामि (१)यमेवास्प्राक्षं तं पश्यामीति नाणुसमूहो गृह्यते इति। अणुसमूहे चागृह्यमाणे यद् गृह्यते तदेकमेवेति।

अथाप्येतदनूक्तम् नास्त्येको भावो यस्मात्समुदायः, एकानुपपत्तेर्नास्त्येव समूहः—नास्त्येको भावो (२)यस्मात्समूहे(२*) भावशब्दप्रयोगः; एकस्य चानुपपत्तेः

## न्यायवार्त्तिकम्

न्यायमेतत् (क)। यत् पुनरेकपदत्वादनेकविषयः कुम्भादिशब्द इति? तन्न, दृष्टान्ताभावात्—न हि कश्चिच्छब्दोऽनेकविषयोऽस्ति, सेनादिशब्दानाम् (ख)अनेकविषयत्वेनासिद्धेः। यथा चैकविषयः

## न्यायवार्त्तिकतात्पर्यटीका

अथापीति अपि चेत्यर्थः।

लक्ष—धः ( सू० ३६ )॥ अणुसमूहे चागृह्यमाण इति परमसूक्ष्मत्वेनातीन्द्रियत्वादित्यर्थः।

अथाप्येतदनूक्तमिति अपि च भावलक्षणपृथक्त्वादिति हेतुमुक्त्वा बौद्धेन पश्चादेतदुक्तम्। किं तदुक्तमित्यत आह—नास्त्येको भावो यस्मात् समुदाय इति। एतदनूक्तं दूषयति—एकानुपपत्तेर्नास्त्येव समूहः। अनूक्तं विवृणोति—नास्त्येको भावो यस्मात् समूहे भावशब्दप्रयोगः। अस्य दूषणं विवृणोति—एकस्यानुपपत्तेरिति। एतत् प्रपञ्चयति—

## वृत्तिः

समाधत्ते—( नानेकलक्षणैरेकभावनिष्पत्तेः )

अनेकलक्षणैः अनेकस्वरूपै रूपरसादिभिस्तत्तदवयवैश्च विशिष्टस्यैव भावस्य निष्पत्तेः (३)उत्पत्तेरित्यर्थः। तथा चैकस्य धर्मिणः प्रत्यक्षादिप्रमाणसिद्धत्वात् तस्य च चाक्षुषत्वरासनत्वादिविरुद्धधर्माध्यस्तरूपरसाद्यात्मकत्वाभावादवयवानां च कारणत्वात् कार्यकारणयोरभेदासम्भवाच्च न तत्तदात्मकत्वं घटादेः सम्भवतीति भावः॥ ३५ ॥

(१) 'यं चास्प्राक्षम्' इति टि-फ-ज०।
(२) "एकस्यानुपपत्तेः समूहे" इति टि०।
(३) 'उत्पत्तेः' इति भ-पुस्तके नास्ति।
(क) २।१।३६ सूत्र-भाष्यादाविति शेषः। (ख) 'अनेकविषयत्वेन' इति अनेकविषयत्वेन रूपेणेत्यर्थः। सेनादिशब्दानामनेकविषयकत्वस्यासिद्धेरिति तु फलितार्थः।

### न्यायभाष्यम्

समूहो नोपपद्यते एकसमुच्चयो हि समूह इति। व्याहतत्वादनुपपन्नं—नास्त्येको भाव इति यस्य प्रतिषेधः प्रतिज्ञायते, समूहे भावशब्दप्रयोगादिति हेतुं ब्रुवता स एवाऽभ्यनुज्ञायते, एकसमुच्चयो हि समूह इति। समूहे भावशब्दप्रयोगादिति च समूहमाश्रित्य प्रत्येकं (१)समूहिप्रतिषेधो नास्त्येको भाव इति। सोऽयमुभयतो व्याघाताद् यत्किञ्चनवाद इति ॥ ३६ ॥

### न्यायवार्त्तिकम्

सेनादिशब्दस्तथोक्तमिति—सर्वस्य पक्षीकरणाद् दृष्टान्ताभावः। आधाराधेयभावेनानुपक्तानां रूपादीनामवयविनश्च ग्रहणादन्यथासिद्धः। नञः प्रसज्यप्रतिषेधपर्युदासविषयत्वेनावस्थानाच्च (२) विरुद्धः—अनेकमित्ययं नञः प्रयोगः, स चायं प्रसज्यप्रतिषेधपर्युदासविषयत्वेन प्रतिषेधात् प्रकल्प्यते। यदि तावत् प्रसज्यप्रतिषेध एको न भवतीति यदेकत्र प्रतिषिध्यते तदन्यत्र भवति एवं च व्याघातः। अथ पर्युदासपक्षः ? एकस्मादन्यदनेकमिति एवमप्येकमभ्युपगतं भवति, न ह्यसत्येकस्मिन् तस्मादन्यदनेकं सिद्ध्यतीति ॥ ३९ ॥

इतश्च—

(३)लक्षणव्यवस्थानादेवाप्रतिषेधः ॥ ३६ ॥ (४)न हि कश्चिदेको भाव इत्ययुक्तः पक्षः(४*)। कस्मात् ? लक्षण(५)व्यवस्थापनात्, न हि कुम्भ इत्युक्तेऽनेकोऽर्थोऽवगम्यते। कथं नावगम्यते ? एकवचनान्तत्वात्—एकवचनान्त एष शब्दः कुम्भ इति। न च बहुष्वेकवचनं युक्तम्। प्रैष-सम्प्रतिपत्त्योरेकविषयत्वात् कुम्भमानयेति प्रैष एकविषयो भवति। इतरोऽपि कुम्भशब्दात् प्रतिपद्यैकं कुम्भमानयति, ते एते प्रैषसम्प्रतिपत्ती एकविषये ज्ञापयतः कुम्भशब्देनैकोऽर्थोऽभिधीयत इति। यांस्तु रूपादीनवयवान् प्रतिपद्यसे स न शब्दार्थः, किन्त्वनुषङ्गः,

### न्यायवार्त्तिकतात्पर्यटीका

एकसमुच्चयो हीति। नास्त्येको भाव इति यस्य भावस्यैकत्वप्रतिषेधः प्रतिज्ञायते, समूहे भावशब्दप्रयोग इति ब्रुवता स एवाभ्यनुज्ञायते। ननु समूहोऽभ्यनुज्ञायते न त्वेको भाव इत्यत आह—एकसमुच्चयो हि समूह इति। तदनेन प्रतिज्ञया हेतोर्व्याघात उक्तः। संप्रति—प्रतिज्ञाया हेतुना व्याघात इत्याह—समूहे भावशब्दप्रयोगादिति चेत्।

स्यादेतत्, घटादिशब्देभ्यो रूपादीनां बुध्नादीनां च बहूनामवगमात् कथमेकार्थतेत्यत आह—आधाराधेयभावेति। यदि नानार्थताऽपि भवति घटादिशब्दानां तथापि प्रत्येकमेकत्वं तदर्थानामशक्यापह्नवमिति न पूर्वपक्षिणोऽभिमतसिद्धिरिति। उपेत्य

(१) 'प्रतिषेधो' इति वि०। (२) 'निरूपः' इति—क-ख-धृतपाठान्तरम्। (३) 'तल्लक्षण'—इति क-ख-वार्त्तिकपाठः। (४) 'इत्ययमयुक्तः प्रतिषेधः'—इति क-ख-वार्त्तिकपाठः। (५) 'व्यवस्थानात्'—इति क-ख-धृतपाठान्तरम्।

## न्यायवार्त्तिकम्

तन्नान्तरीयकत्वादिति। (क)समूहे भेदस्य चानवस्थानात् यत्रावस्थानं तदेकं (ख)गवादिघटादि-द्रव्याणि समुदितानि प्रतिपद्यमानेन समूहोऽभ्युपेयते स चायं समूह इयन्ति द्रव्याणि एतानि (१)घटादिभावेनावस्थितानीति न (२)व्यवतिष्ठतेऽस्य भेदो(३)ऽल्पतरतमत्वेन, यत्तत् परमल्पं तदभेद्यं ततो निवर्तत इति। यतश्चायं भेदो निवर्तते तदेकम्। एकं च प्रत्याचक्षाणेनानेकमपि प्रत्याख्येयम् एक(४)समुच्चयत्वादनेकस्य। अथ मन्यसे यं तमभेद्यं परमाणुं प्रतिपद्यसे स रूपादीनां समुदाय इति, चत्वारि वा द्रव्याणि पृथिव्यादीनि समुदितानि परमाणुरिति ? एतस्मिन् वै दर्शने ये रूपादयः समुदितास्ते परमाणुरिति, यत्परमाणौ रूपं स कस्य समुदाय इति वक्तव्यम्। एवं शेषेषु गुणेषु। चत्वारि द्रव्याणि समुदितानि परमाणुरिति ब्रुवाणेन चतुष्टयस्य एकसमुच्चय-निमित्तत्वात् यदेकं पृथिव्यादि स कस्य समुदाय इति वक्तव्यम्। अथानन्तं समुदायं प्रतिपद्यसे अष्टौ द्रव्याणि समुदितानि परमाणुरिति शास्त्रं व्याहतं भवति कामेऽष्टद्रव्यको(५)ऽणुरशब्द इति। एकानुपपत्तौ नानेकोपपत्तिरित्येतद्धेयम्। यश्चायं हेतुः समूहे भावशब्दप्रयोगादिति उभयतो

## न्यायवार्त्तिकतात्पर्यटीका

तूच्यते अनेकार्थत्वमप्यत्र न संभवतीति। समूहे भेदस्य चानवस्थानादिति। यदि (ग)समूहमात्रमेवं न त्वेकं किंचिदस्ति तथा सति घटलक्षणे समूहे भेद्यमाने नाल्पतरतमादिभेदः प्रतीयेत, घटादिकपालशर्कराचूर्णपरमाणूनां समूहत्वेनानन्तावयवत्वादयं महानयमल्पोऽल्पतर इति विभागो न स्यात्। तस्मादनेन तारतम्यं समर्थयमानेन क्वचित् समूहनिवृत्तिर्वाच्या। न चासावसमूहमेकमन्तरेणेत्येकोऽभ्युपेयत इत्यर्थः। उक्तमर्थमविद्वान् शङ्कते—अथ मन्यस इति। रूपादीनां समुदाय इति चत्वारि वा द्रव्याणीति चावान्तरदर्शनभेदविवक्षया द्रष्टव्यम्। उक्तार्थदर्शनेनोत्तरम्—एतस्मिन् वै दर्शन इति। अथानन्तं समुदायं प्रतिपद्यस इति निराकृतस्यापि पुनराशङ्का आगमविरोधमापादयितुम्। एकानुपपत्तौ नानेकोपपत्तिरिति। यत्तदनेकमुक्तमेतत्स्याज्यमिति। शेषं भाष्यव्याख्यया व्याख्यातम्॥ ३६॥

## वृत्तिः

हेतुमाह—( लक्षणव्यवस्थानादेवाप्रतिषेधः )

लक्षणस्यार्थाद्भावानां घटपटादीनां व्यवस्थानात् व्यवस्थितत्वाद् (६)एवाप्रतिषेधः।

---

(१) 'गवादि'—इति क-ख-धृतपाटान्तरम्। (२) 'व्यवतिष्ठन्ते' इति क०। (३) 'अन्यतर'—इति क-ख-धृतपाठान्तरम्। (४) 'समुच्चयादनेकस्य' इति ख, 'समुदायाद-' इति क-ख-धृतपाठान्तरम्। (५) '-ऽणुशब्द'—इति क-ख-धृतपाठान्तरम्। (६) 'एकत्वाप्रति'—इति भ०।

(क) 'समूहभेदस्य' इति मुद्रितपाठः। टीका-गृहीतः 'अनेकार्थत्वमप्यत्र न सम्भवती'त्यंशः मुद्रित-पुस्तकेऽनुपलभ्यमानः इतः पूर्वं भवितुमर्हति। (ख) 'गवादिघटादी'ति चेतनाचेतनभेदेन द्विविधमुदाहरण-मुपात्तम्। 'गवादी'ति पाठान्तरम्, प्रमादादुभयमपि मुद्रितमिति वा बोध्यम्। (ग) 'समूहमात्रमेव' इति पाठश्चेत् स्पष्टोऽर्थः।

न्यायभाष्यम्

अयमपर एकान्तः—

## सर्वमभावो भावेष्वितरेतराभावसिद्धेः ॥ ३७ ॥

यावद्भावजातं तत्सर्वमभावः। कस्मात्? भावेष्वितरेतराभावसिद्धेः। 'असन् गौरश्वात्मना' अनश्वो गौः 'असन्नश्वो गवात्मना अगौरश्वः' इत्यसत्प्रत्ययस्य (१)प्रतिषेधस्य च भावशब्देन सामानाधिकरण्यात् सर्वमभाव इति ॥ ३७ ॥

न्यायवार्त्तिकम्

व्याघातान्न किञ्चिदेतत्। कथमुभयतः? न कश्चिदेको भावः समूहे भावशब्दप्रयोगादिति प्रतिज्ञाहेत्वोर्व्याघातः। यस्मादेकार्थानुपपत्तौ न समूह उपपद्यत इति समूहं चाश्रित्यैकं प्रत्याचक्षाणेन समूह एव प्रत्याख्यातो भवतीति सोऽयमुभयतो व्याघातात् यत्किञ्चनवाद इति। शेषं भाष्ये ॥ ३६ ॥

( इति सर्वपृथक्त्वनिराकरणप्रकरणम्। )

अथायमपर एकान्तः—

सर्वमभावो भावेष्वितरेतराभावसिद्धेः (२)। यावद् भावजातं तत्सर्वमभावः। कस्मात्? भावेष्वितरेतराभावसिद्धेः। असत्प्रत्ययप्रतिषेधाभ्यां भावशब्दसामानाधिकरण्यात्

न्यायवार्त्तिकतात्पर्यटीका

संप्रति शून्यतावादिनमुत्थापयति—अयमपर एकान्तः।

सर्व—द्धेः ( सू० ३७ ) ॥ सर्वमभाव इति प्रतिज्ञा। अत्र हेतुः—भावेष्वितरेतराभावसिद्धेरिति। सर्वमिदं प्रमाणप्रमेयप्रमातृप्रमितिरूपमभावस्तुच्छं भावेष्वितरेतराभावसिद्धेरिति। वार्त्तिककारो व्याचष्टे—असत्प्रत्ययभावप्रतिषेधाभ्यां भावशब्दसामानाधिकरण्यात्। प्रमाणादयः खल्वमी परस्परानात्मकतया असदिति प्रत्ययस्य नञश्च गोचरा

वृत्तिः

पृथक्त्वव्यवस्थापनं नेत्यर्थः। कपालसमवेतद्रव्यत्वादिकं हि घटादेर्लक्षणं कपाले घट इत्यादिप्रतीतिसिद्धम्। न चेदं समूहात्मकत्वे सम्भवति, एवं लक्षणस्य घटादिस्वरूपस्य यमहमद्राक्षं तमहं स्पृशामीति प्रत्यक्षेण व्यवस्थितत्वात् परमाणोश्चाप्रत्यक्षत्वान्न तत्सम्भवः। किं च समूहलक्षणव्यवस्थितेरेव नोक्तं युक्तम्। समूहो हि नानाव्यक्तिसमुदायः, स च नैकव्यक्तेरनभ्युपगमे सिध्यतीति भावः ॥ ३६ ॥

समाप्तं सर्वपृथक्त्वनिराकरणप्रकरणम् ॥ ९ ॥

(१) 'प्रतिषेधस्य' इति टि-पु० नास्ति।
(२) 'इतरेतरसिद्धेः—इति क-ख-पुस्तपाठान्तरम्।

## न्यायभाष्यम्

प्रतिज्ञावाक्ये पदयोः प्रतिज्ञाहेत्वोश्च व्याघातादयुक्तम्। अनेकस्याशेषता सर्व-शब्दस्यार्थो, भावप्रतिषेधश्चाभावशब्दस्यार्थः। पूर्वं सोपाख्यम् उत्तरं निरुपाख्यं तत्र

## न्यायवार्त्तिकम्

सर्वमभावः अनुत्पन्नप्रध्वस्तपटवत्—सर्वो भावशब्दोऽसत्समानाधिकरणः प्रतिषेधसमानाधि-करणश्च प्रध्वस्तपटवत् यथा नास्ति पट इति। कथं नास्ति कदा च नास्तीति ? स्थाल्या-द्यात्मनाऽनुत्पद्यमानो ध्वस्तश्चेति। सोऽयं घटशब्दोऽसत्प्रत्ययसमानाधिकरणो घटस्यात्यन्ता-सत्त्वं प्रतिपादयति। तथा च सर्वे भावा असत्प्रत्ययसमानाधिकरणास्तस्मात् सर्वमभाव इति ॥ ३७ ॥

प्रतिज्ञापदयोः प्रतिज्ञाहेत्वोश्च व्याघातः—सामानाधिकरण्यमभिन्नविभक्तिमत्त्वमेकविभक्त्यु-च्चारणमिति भावाभ्युपगमात् तच्छब्दाभ्युपगमाच्च विरुद्धः। 'यत्सर्वमिति मन्यसे तदभाव' इति ?

## न्यायवार्त्तिकतात्पर्यटीका

इत्यनुभूयन्ते। अतस्तद्वाचिनां शब्दानां तत्सामानाधिकरण्यम्। ततः प्रमाणादयोऽसन्तः अनुत्पन्नप्रध्वस्तपटवत्। अपि चामी भावा नित्या अनित्या वा ? नित्यत्वे सर्वसामर्थ्यरहितस्या-सत्त्वम्। न हि नित्यं क्वचित्कार्य उपयुज्यते क्रमाक्रमानुपपत्तेरित्युक्तम्। अनित्यत्वे तु विनाशस्वभावाश्चेद् द्वितीयादिक्षण इव प्रथमक्षणेऽपि न स्युः। सत्त्वे वा नामी विनाश-स्वभावाः। अतत्स्वभावत्वे वा क्षणान्तरेऽपि न विनश्येयुः। नो खलु नीलं स्वकारणादुपजातं जातु कारणसहस्रैरपि शक्यं पीतं कर्त्तुमिति विनाशस्वभावकत्वमकामेनापि अनित्यानामेषितव्यम्। तस्माद् भावानां शून्यतैव पारमार्थिकी कल्पनया त्ववस्तुसत्या सन्त इवावभासन्त इति युक्त-मुत्पश्यामः। तथा च सर्वे भावा इति, सर्वे भावशब्दा इत्यर्थः। प्रयोगश्च सर्वे भावशब्दा असद्विषयाः असत्प्रत्ययप्रतिषेधाभ्यां सामानाधिकरण्यात्। अनुत्पन्नप्रध्वस्तपटशब्दवत् ॥ ३७ ॥

अत्र तावदुत्सूत्रं भाष्योक्तं दूषणं वार्त्तिककार आह—प्रतिज्ञापदयोः प्रतिज्ञाहेत्वोश्च व्याघात इति। अभिन्नविभक्तिकत्वमभिन्नार्थकविभक्तिकत्वं न त्वभिन्नविभक्तिकत्वमेव भिन्न-

## वृत्तिः

सर्वशून्यत्वेन कार्यकारणभावासम्भव इति तन्निराकरणप्रकरणमारभते। तत्र ज्ञान-विषयत्वमभावत्वव्याप्यं न वेति संशये पूर्वपक्षसूत्रम्—( सर्वमभावो भावेष्वितरेतरा-भावसिद्धेः )

सर्वं विवादास्पदम् अभावः तुच्छम्। तत्र प्रत्यक्षमानमाह—भावेष्विति, भाव-त्वाभिमतेषु घटादिषु अभावत्वसिद्धेः घटः पटो नेत्यादिप्रतीत्या सर्वेषामभावत्व-सिद्धेः ॥ ३७ ॥

## न्यायभाष्यम्

समुपाख्यायमानं कथं निरुपाख्यमभावः स्यादिति ? (१)न जात्वभावो निरुपाख्यो ऽनेकतयाऽशेषतया शक्यः प्रतिज्ञातुमिति। सर्वमेतदभाव इति(१*)चेत्—यदिदं सर्वमिति मन्यसे तदभाव इति ? एवं चेत् अनिवृत्तो व्याघातः, अनेकमशेषं चेति (२)नाभावे प्रत्ययेन शक्यं भवितुम्। अस्ति चायं प्रत्ययः सर्वमिति, तस्मान्नाभाव इति।

प्रतिज्ञाहेत्वोश्च व्याघातः—सर्वमभाव इति भावप्रतिषेधः प्रतिज्ञा, भावेष्वितरेतराभावसिद्धेरिति हेतुः। भावेष्वितरेतराभावमनुज्ञायाश्रित्य च (३)इतरेतराभावसिद्धया सर्वमभाव इत्युच्यते। यदि सर्वमभावो भावेष्वितरेतराभावसिद्धेरिति नोपपद्यते। अथ भावेष्वितरेतराभावसिद्धिः, सर्वमभाव इति नोपपद्यते।

## न्यायवार्त्तिकम्

नासति तत्प्रत्ययेन भवितुं शक्यम्। न च भावप्रत्ययेनाभाव इति च भावः प्रतिषिध्यते, नासत्युत्तरपदार्थे नञः प्रयोग इति प्रसज्यप्रतिषेधपर्युदासाभ्यां पूर्ववत् प्रसङ्गः—यथाऽनेकपदेऽनित्यपदे चैवं सर्वपदेऽभावपदे च व्याघात ऊह्यः। शेषं भाष्ये।

सर्वासत्त्वे विभक्तिस्वभावावधारणं वक्तव्यम्—यदि च सर्वमभावो विभक्तिः किंस्वभाविकेति वक्तव्यमेतत्। असत्यां च विभक्तावभिन्नविभक्तिकत्वं सामानाधिकरण्यमिति व्याहतम्। असत्प्रत्ययप्रतिषेधसामानाधिकरण्यमिति ब्रूषे, सर्वमभाव इति च व्यावर्तयसि न ह्यसदधिकरणं भवति। अधिकरणं हि नाम यद्यत्र वर्तते, तच्चाभावे नास्तीति। सूत्रेण चाभिसम्बन्धः—

## न्यायवार्त्तिकतात्पर्यटीका

विभक्तिकानामपि सामानाधिकरण्यात्। यथा चैत्रः पठतीति, यथा च न त्वां तृणाय मन्य इति। नासति तत्प्रत्ययेन भवितुमिति। न ह्यत्यन्तासन्निरुपाख्यं सर्वमिति वा भाव इति वा अभिधानस्य गोचरः। उपपादितं हि द्वितीयसूत्र एव यथाऽसद्वाऽनिर्वचनीयं वा न ख्यातिगोचरोऽपि तु सदेव सदन्तरात्मना। तथा च कुतोऽत्यन्तासतः कल्पनागोचरत्वमपीति। शेषं भाष्य इति प्रतिज्ञाहेत्वोर्व्याघातो भाष्ये प्रपञ्चित इति। उत्सूत्रमुक्त्वा भाष्यकारः सौत्रं दूषणं वक्तुमाह—सूत्रेण चाभिसंबन्धो दूषणस्य।

(१) अयं भागः वि० (B.) पु० नास्ति।

(२) 'नाभावप्रत्ययेन' इति ख-ग-ज०।

(३) 'इतरेतराभावसिद्धौ'—इति ग० भा०।

## न्यायभाष्यम्

सूत्रेण चाभिसम्बन्धः ।

### न स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥

न सर्वमभावः । कस्मात् ? स्वेन भावेन सद्भावाद्भावानाम् । स्वेन धर्मेण भावा भवन्तीति प्रतिज्ञायते । कश्च स्वो धर्मो भावानाम् ? द्रव्यगुणकर्मणां सदादिसामान्यम् , द्रव्याणां क्रियावदित्येवमादिर्विशेषः, स्पर्शपर्यन्ताः पृथिव्या इति च ; प्रत्येकं चानन्तो भेदः । सामान्यविशेषसमवायानां च विशिष्टा धर्मा गृह्यन्ते ।

## न्यायवार्त्तिकम्

न स्वभावसिद्धेर्भावानाम् इति । स्वेन भावेन भावा भवन्तीति सूत्रार्थः । किं पुनरनेन सूत्रेण क्रियते ? पूर्वसूत्रविरोधश्चोद्यते । कथमिति ? भावेष्वितरेतराभावसिद्धेरित्यभावो भवताऽभिधीयते, तथा चाभिदधानः (१) स्वभावतो भावानभ्युपैषि, विशेषणवैयर्थ्यं च भावेष्वितरेतराभावसिद्धेरिति(२) सर्वासत्त्वे ह्येवमेव वक्तव्यम् , न सन्ति भावाः, न पुनरेवं वक्तुं युक्तम् इतरदितरन्न(३) भवतीति । इतरदिति(४) चायं विधानशब्दः, न च सर्वस्याभावे विधीयमानं वस्तु सम्भवति यदितरशब्दवाच्यं स्यादिति । इतरवाच्यतां चाभ्युपगम्येतरदितरन्न प्रतिषिध्यत इति स्वभावसिद्धिरभ्युपगता भवति ।

कश्च स्वो भावो भावानां द्रव्यादीनाम् ? सदादि सामान्यं क्रियावदादिर्विशेषः स्पर्शपर्यन्ताः पृथिव्याः प्रत्येकमनन्तो भेदः—सामान्यविशेषसमवायादीनां च सामान्यो वैशेषिकश्चान्तर्गणिकोऽनन्तो भेद इति । सोऽयमभावस्य निरुपाख्यत्वात् सम्प्रत्यायकः स्वभावभेदो न स्यात् , अस्ति त्वसौ, (५) तस्मान्न सर्वमभाव इति ।

## न्यायवार्त्तिकतात्पर्यटीका

न स्वभावसिद्धेर्भावानाम् ( सू० ३८ ) ॥ सर्वमभाव इति नास्ति । कस्मात् ? स्वभावसिद्धेर्भावानां स्वभावो धर्मो द्रव्यादीनां सदादिः । अथ वा स्वभावः स्वरूपं भावानां येनामी भावाः स्वभावाद्व्यावर्त्तन्ते । यद्वा, असन्निति प्रत्ययस्य गव्यश्वात्मनेति विशेषणात् , अगौरित्यस्य गां परिहृत्याश्वादिभिः संबन्धाद् गोभावसिद्धेरेवमश्वादिष्वपीति स्वभावसिद्धेर्भावानां नाभाव इत्यर्थः । न स्वभावसिद्धेरिति सूत्रमनूद्य वार्त्तिककारः स्वरूपमात्रेण व्याख्याय प्रश्नपूर्वकं तात्पर्यमस्य दर्शयति—पूर्वसूत्रस्येति । कश्च स्वो भाव इत्यादिना

(१) 'चातिदधान.'—इति क-ख-धृतपाठान्तरम् ।
(२) 'इतरेतरासिद्धेः'—इति क-ख-धृतपाठान्तरम् ।
(३) 'इतरदितरवन्न'—इति क-ख-धृतपाठान्तरम् ।
(४) 'इतरत्रदिति'—इति क-ख-धृतपाठान्तरम् ।
(५) 'भस्ति त्वयं'—इति क-ख-धृतपाठान्तरम् ।

## न्यायभाष्यम्

सोऽयमभावस्य निरुपाख्यत्वात् सम्प्रत्यायकोऽर्थभेदो न स्यात्? अस्ति त्वयम्, तस्मान्न सर्वमभाव इति।

अथवा न स्वभावसिद्धेर्भावानामिति स्वरूपसिद्धेरिति। गौरिति प्रयुज्यमाने शब्दे जातिविशिष्टं द्रव्यं गृह्यते, नाभावमात्रम्। यदि च सर्वमभावः गौरित्यभावः प्रतीयेत, गोशब्देन चाभाव उच्येत। (१) यस्मात्तु गोशब्दप्रयोगे द्रव्यविशेषः प्रतीयते नाभावस्तस्मादयुक्तमिति।

अथ वा न स्वभावसिद्धेरिति। असन् गौरश्वात्मनेति गवात्मना कस्मान्नोच्यते? अवचनाद् गवात्मना गौरस्तीति स्वभावसिद्धिः, अनश्वोऽश्व इति वा गौरगौरिति वा कस्मान्नोच्यते? अवचनात् स्वेन रूपेण विद्यमानता द्रव्यस्येति विज्ञायते।

## न्यायवार्त्तिकम्

अथवा स्वभावसिद्धेरिति गौरिति प्रयुज्यमाने नाभावः प्रतीयते किन्तु जातिविशिष्टं द्रव्यं, यदि च सर्वमभावः स्यात् गौरिति प्रयुक्तेऽभावो गम्येत, न त्वभावो गम्यते, तस्मान्न सर्वमभाव इति।

अथवा स्वभावसिद्धेरिति असन् अश्वो गवात्मना अनश्वो गौरगौरिति कस्मान्नोच्यते इति अवचनाद् गौरिति(२) अगौर्गौरित्युक्ते व्याहतं भवति। यदि व्याघातभयादगौर्गौरिति नोच्यते? हन्त तर्हि सिद्धो भावः। कथं तर्हि अयं प्रतिषेधोऽगौरश्व इति?। व्यतिरेक-

## न्यायवार्त्तिकतात्पर्यटीका

सिद्धो भाव इत्यन्तेन सूत्रस्य व्याख्यानत्रयं भाष्यकारीयं वार्त्तिककारो दर्शयति। सामान्यो धर्मः समानो नित्यत्वादिरित्यर्थः। प्रश्नपूर्वकमसत्प्रत्ययप्रतिषेधसामानाधिकरण्यं भावस्योपपादयति—कथं तर्हीति। असच्छब्दः खल्वभावविशेषणं सदेवाभिधत्ते, एवमसत्प्रत्ययोऽप्यभावविशेषणं सदेवालम्बते, यथा शुक्लशब्दः शुक्लगुणविशिष्टे पटे वर्त्तते; तथा चासत्प्रत्ययाभिधानयोरुपपन्नं भाववाचिना पदेन सामानाधिकरण्यमित्यर्थः। भावश्च कश्चिन्नित्यः कश्चिदनित्यः, तत्र नित्यस्यार्थक्रिया-

## वृत्तिः

सिद्धान्तसूत्रम्—(न स्वभावसिद्धेर्भावानाम्)

---

(१) 'तस्मात् तु' इति ग०।

(२) 'गौरस्तीति'—इति क ख-धृतपाठान्तरम्।

## न्यायभाष्यम्

(१) अव्यतिरेकप्रतिषेधे च भावेन (२) असत्प्रत्ययसामानाधिकरण्यम्(१*) भावे (३) संयोगादिसम्बन्धो व्यतिरेकः। अत्र अव्यतिरेकः अभेदाख्यसम्बन्धः (४) तत्प्रतिषेधे सदा च असत्प्रत्ययसामानाधिकरण्यम्, यथा न सन्ति कुण्डे बदराणीति। असन् गौरश्वात्मना अनश्वो गौरिति च गवाश्वयोरव्यतिरेकः प्रतिषिध्यते गवाश्वयोरेकत्वं नास्तीति। तस्मिन् प्रतिषिध्यमाने भावेन गवा सामानाधिकरण्यमसत्प्रत्ययस्य असन् गौरश्वात्मनेति, यथा न सन्ति कुण्डे बदराणीति कुण्डे बदरसंयोगे प्रतिषिध्यमाने सद्भिरसत्प्रत्ययस्य सामानाधिकरण्यमिति ॥ ३८ ॥

## न्यायवार्त्तिकम्

प्रतिषेधे भावेनासत्प्रत्ययस्य सामानाधिकरण्यमिति—यथा न सन्ति कुण्डे बदराणीति कुण्डबदरयोः सम्बन्धः प्रतिषिध्यते न कुण्डे बदरसद्भावः ॥ ३८ ॥

## न्यायवार्त्तिकतात्पर्यटीका

कारित्वमुपपादितं क्षणभङ्गभङ्ग एव। अनित्योऽपि न विनाशस्वभावो भावः, किं तु स्वकारणादयं सत्स्वभावो जातः, कारणान्तरात्तु विनश्यति। यत्तूक्तं नीलं शक्यं न पीतं कर्त्तुमिति, तत्र ब्रूमः—शक्य एव नीलः पटः पीतः कर्त्तुम्। आमश्यामो घटो वह्निसंयोगाद्रक्तः। अथ नीलत्वं न पीतत्वं शक्यं कर्त्तुं, ननु भावोऽपि नाभावः कर्त्तुं शक्य इति। यथैव कुम्भाधिकरणे श्यामरक्तत्वे पर्यायेण भवतः, एवं कपालाधिकरणौ कुम्भभावाभावावित्यदोषः ॥ ३८ ॥

## वृत्तिः

भावानां पृथिव्यादीनां स्वभावस्य गन्धादेः सत्त्वादेश्च सिद्धेः। न हि तुच्छस्य गन्धरूपादिकं सत्त्वेन प्रतीतिर्वा सम्भवति ॥ ३८ ॥

---

(१) 'अव्यतिरेकप्रतिषेधे च भावानाम्' इति ल-ज०।
'अव्यतिरेके प्रतिषेधे च भावानाम्' इति ग०।
'अव्यतिरिक्तः प्रतिषेधे च भावानामसत्प्रत्ययसामानाधिकरण्यम्' इति टि०। फ-पु० पाठो गृहीतः।

(२) 'असत्प्रत्ययस्य सामा'—इति भा०।

(३) 'असंयोगादिसम्बन्धः'—इति ज० ग०।

(४) 'तत्प्रतिषेधे सदाऽसत्प्रत्ययसामानाधिकरण्यम्।' इति ल०। अयमंशः ग-भा-पु० नास्ति। असत्प्रत्ययसामानाधिकरण्यं यथा न सन्ति कुण्डे बदराणीति—इति ल-पुस्तक-धृतपाठान्तरम्।
'प्रत्ययसामानाधिकरण्यम्' इति ज०। फ-पु० पाठो गृहीतः।

न्यायभाष्यम्

## न स्वभावसिद्धिरापेक्षिकत्वात् ॥ ३९ ॥

अपेक्षाकृतमापेक्षिकम्। ह्रस्वापेक्षाकृतं दीर्घं दीर्घापेक्षाकृतं ह्रस्वं, न स्वेनात्मनाऽवस्थितं किञ्चित्। कस्मात्? अपेक्षासामर्थ्यात्। तस्मान्न स्वभावसिद्धिर्भावानामिति ॥ ३९ ॥

## व्याहतत्वादयुक्तम् ॥ ४० ॥

यदि ह्रस्वापेक्षाकृतं दीर्घं, (१)ह्रस्वमनापेक्षिकम्। (१*) किमिदानीमपेक्ष्य ह्रस्वमिति गृह्यते? अथ दीर्घापेक्षाकृतं ह्रस्वं, दीर्घमनापेक्षिकम्? एवमित-

न्यायवार्त्तिकम्

न स्वभावसिद्धिरापेक्षिकत्वात्। न स्वभावसिद्धिरापेक्षिकी, यतः न स्वेनात्मना किञ्चित् सिद्धमिति। यथा दीर्घत्वह्रस्वत्वे परापरे चेति ॥ ३९ ॥

व्याहतत्वादयुक्तम्। यदि ह्रस्वापेक्षाकृतं दीर्घं? ह्रस्वमनापेक्षिकम्। अथ दीर्घापेक्षाकृतं ह्रस्वं? दीर्घमनापेक्षिकं, परस्परापेक्षयोश्च यदपेक्ष्येतरज्जायते तदनापेक्षिकमिति उभयो-

न्यायवार्त्तिकतात्पर्यटीका

स्वभावसिद्धेरिति यदुक्तं तदाक्षिपति शून्यतावादी—

न स्वभावसिद्धिरापेक्षिकत्वात् ( सू० ३९ )॥ सर्व एव हि भावा भिन्नस्वभावाः, भिन्नत्वं च तेषामन्यापेक्षम्। तथा हि नीलं भिन्नं पीतापेक्षया न तु स्वभावतः, एवं ह्रस्वत्वदीर्घत्वपरत्वापरत्वपितापुत्रत्वादयः परस्परापेक्षा द्रष्टव्याः। यच्च परापेक्षं तन्न स्वाभाविकं यथा जपाकुसुमापेक्षं स्फटिकस्य रक्तत्वमित्याक्षेपार्थः ॥ ३९ ॥

समाधत्ते—

व्याहतत्वादयुक्तम् ( सू० ४० )॥ तद् व्याचष्टे यदीति। ननु यद्यनेन क्रमेणोभया-

वृत्तिः

पुनः शङ्कते—( न स्वभावसिद्धिरापेक्षिकत्वात् )

न हि सर्वेषां भावानामेकः स्वभावः सम्भवति आपेक्षिकत्वात् भिन्नत्वात्। भिन्नस्य (२)एकस्वभावत्वे स्वस्मादपि भेदापत्तेः।

यद्वा इतरसापेक्षत्वात्, एतदपेक्षयाऽयं नीलतरः एतदपेक्षया ह्रस्व इति (३)प्रतीतिः। यच्च सापेक्षं तदवस्तु, यथा जपासापेक्षं स्फटिकारुण्यम् ॥ ३९ ॥

(१) इदं ल-ग-ज-वि (B.)-पुस्तकेषु नास्ति।

(२) 'एक-' इति भ-पु० नास्ति।

(३) 'प्रतीतेः' इति भ०।

## न्यायभाष्यम्

रेतराश्रययोरेकाभावे (१) अन्यतराभावादुभयाभाव (१*) इति (२) अपेक्षाव्यवस्थाऽनुपपन्ना ।

स्वभावसिद्धावसत्यां समयोः परिमण्डलयोर्वा द्रव्ययोरापेक्षिके दीर्घत्वह्रस्वत्वे कस्मान्न भवतः ? अपेक्षायामनपेक्षायां च द्रव्ययोरभेदः । यावती द्रव्ये अपेक्षमाणे तावती एवानपेक्षमाणे नान्यतरत्र भेदः । आपेक्षिकत्वे तु सत्यन्यतरत्र विशेषोपजनः स्यादिति ।

## न्यायवार्त्तिकम्

रभावः एकस्याभावादिति । अपेक्षायामनपेक्षायां च द्रव्ययोर्न भेदः यावती एव द्रव्येऽपेक्षमाणे तावती एव(३) अनपेक्षमाणे अपि न ह्यन्यतरत्र भेदः । अतिशयग्रहणं कथं यदि द्रव्ययोर्द्वयोरभेदः अपेक्षमाणयोरनपेक्षमाणयोर्दीर्घह्रस्वप्रत्ययः तर्हि न प्राप्नोति ? न न प्राप्नोति द्वयोर्ग्रहणेऽतिशयस्य ग्रहणात्—द्वयोस्तावद् द्रव्ययोः प्रत्यर्थनियते द्वे ह्येव बुद्धी भवतः, अत एकस्मिन् विद्यमानमतिशयं गृह्णाति एकस्मिन् विद्यमानं च ह्रस्वत्वम्, सोऽयमुभयदर्शने प्रतिसन्धत्ते, प्रतिसन्धानप्रत्ययजा त्वस्य बुद्धिरुत्पद्यते अस्माद्दीर्घमदोऽस्माददो ह्रस्वमिति, न पुनर्वस्तुन उत्पादानुत्पादाविति । (४)स्वभावसिद्धौ चासत्यामपेक्षा न प्राप्नोति—यदि स्वभावसिद्धिमन्तरेणापेक्षा-

## न्यायवार्त्तिकतात्पर्यटीका

भावो भवति भवतु सिद्धमेव नः समीहितमित्यत आह—अपेक्षायामनपेक्षायां चेति । परिमाणभेदो हि दीर्घत्वं ह्रस्वत्वं च स च भावानामौत्पत्तिकः केवलं तस्यातिशयानतिशयौ परस्परग्रहणाधीनौ । तथा हीक्षुयष्टेर्वेणुयष्टितो ह्रस्वत्वं पूर्वसंख्यायोगिहस्तपरिमितत्वमनतिशयः, वेणुयष्टेर्दीर्घत्वमतिशयः परसंख्यायोगिहस्तपरिमितत्वं तच्चेदं प्रतियोगिनिरूपणाधीननिरूपणम् । न तु प्रतियोग्यधीनोत्पत्तीति न वस्तुधर्मोऽयं परापरापेक्षः । भिन्नत्वं च भेदः, स च वस्तुविशेषणं नोत्पत्तौ वस्त्वन्तरमपेक्षते किं तु स्वनिरूपणे । एवं पितृत्वमपि व्यवस्थिता जनकशक्तिरेव, सा जन्यनिरूपणाधीननिरूपणा न तु तदधीनोत्पत्तिः । विपञ्चितं चैतदस्माभिर्ब्रह्मतत्त्वपरी(समी ?)क्षायाम् । परत्वापरत्वादयस्त्वपेक्षाबुद्धिनिमित्ततया परापेक्षोत्पत्तिका अपि लोकयात्रां वहन्तो न शक्याः प्रत्याख्यातुम् । न चैतावता तदधिकरणं भावो न निरपेक्ष इति सर्वमवदातम् । स्यादेतत् । अपेक्षामात्रमेव दीर्घत्वादयो भविष्यन्ति, कृतमेषां वस्तुस्वभावेनेत्यत आह—स्वभावसिद्धौ चासत्यामिति । अपेक्षासामर्थ्यम् अपेक्षाप्रयोजन-

(१) 'अन्यतराभाव' इति ग० ।
(२) 'दीर्घापेक्षा-' इति ख-ग-झा० ।
(३) 'द्रव्ये' इत्यधिकम्' इति क-ख-टिप्पणि: ।
(४) 'स्वभावसिद्धावसत्यां'—इति क-ख-धृतपाठान्तरम् ।

## न्यायभाष्यम्

किमपेक्षासामर्थ्यमिति चेत्? द्वयोर्ग्रहणेऽतिशयग्रहणोपपत्तिः। द्वे द्रव्ये पश्यन्नेकत्र विद्यमानमतिशयं गृह्णाति तद्दीर्घमिति व्यवस्यति, यच्च हीनं गृह्णाति तद्ध्रस्वमिति व्यवस्यतीति। एतच्चापेक्षासामर्थ्यमिति ॥ ४० ॥

## न्यायवार्त्तिकम्

भेदाद्दीर्घादिभेदा भवन्ति सर्वमपेक्ष्य सर्वस्य सर्वत्र तथाभूतः प्रत्ययः स्यात्, न च रूपरसगन्धस्पर्श-प्रत्ययेष्वपेक्षासामर्थ्यमस्ति। न च परिमण्डलौ परमाणू उपलभमान ईश्वरः परमाणुमपेक्ष्य परमाण्वन्तरे दीर्घह्रस्वादिप्रत्ययान् करोति, अतो नापेक्षाकृताः प्रत्यया इति।

सर्वमभाव इति सर्वथा चायं वादो व्याहतः। कुतो (क) व्याघातः? आदौ तावत् (१) प्रमाणोत्पत्त्यनुत्पत्ती सर्वमभाव इति ब्रुवाणः प्रमाणं पर्यनुयोज्यः। यदि ब्रूते? व्याहतं भवति। अथ नाभिधत्ते? अर्थोऽस्य न सिध्यति प्रमाणाभावात्। सर्वमभाव इति वाक्यं तस्य यद्यभिधेयमर्थं प्रतिपद्यते पूर्ववद् व्याघातः। अथ न प्रतिपद्यते? (२) वर्णोच्चारण-मात्रमनर्थकमिति। सर्वमभाव इति च वाक्यस्य(३) प्रतिपादयितारं प्रतिपत्तारं च यदि प्रतिपद्यते(४) पूर्ववद्व्याघातः। सर्वमभाव इति सर्वं भाव इति च वाक्ये, यद्यनयोरर्थभेदं प्रतिपद्यते? व्याहतं भवति। अथ न प्रतिपद्यते? विशेषोपादानं व्यर्थम्। सोऽयं सर्वा-भाववादो यावद्यावद्विचार्यते तावत्तावदुपपत्तिं न सहत इति ॥ ४० ॥

( सर्वशून्यतानिराकरणम्। )

## न्यायवार्त्तिकतात्पर्यटीका

योगः। स्वयं वार्त्तिककारो दूषणान्याह—सर्वथा चायं व्याहत इति। निगद-व्याख्यातम् ॥ ४० ॥

## वृत्तिः

समाधत्ते—( व्याहतत्वादयुक्तम् )

सापेक्षत्वस्य तुच्छत्वव्याप्तेर्व्याहतत्वादसिद्धत्वात्। न वा घटादेः सापेक्षत्वं सम्भवति। किं च सापेक्षत्वं सापेक्षं न वा? (५)आद्ये तस्य तुच्छत्वान्न साधकत्वम्। अन्त्ये तस्यैव सत्यत्वात् कुतः सर्वशून्यत्वमिति भावः ॥ ४० ॥

समाप्तं सर्वशून्यतानिराकरणप्रकरणम् ॥ १० ॥

---

(१) 'प्रमाणोपपत्त्यनुपपत्ती'—इति क-ख-धृतपाठान्तरम्।
(२) 'सर्वोच्चारण'—इति क-ख-धृतपाठान्तरम्।
(३) 'वाक्यार्थं'—इति क-ख-धृतपाठान्तरम्।
(४) '-पाद्यते'—इति क-ख-धृतपाठान्तरम्।
(५) 'आद्यस्य' इति ख०

न्यायभाष्यम्

अथेमे ( १ ) सङ्ख्यैकान्तवादाः—

सर्वमेकं सदविशेषात् ।

न्यायवार्त्तिकतात्पर्यटीका

उत्तरसूत्रावतारपरं भाष्यम्—अथैते संख्यैकान्तवादाः संख्या एकान्तो येषु वादेषु ते तथोक्ताः । अथ शून्यतावादानन्तरं ते परीक्ष्यन्त इत्यर्थः । तत्र प्रथमं ब्रह्माद्वैतमुत्थापयति—सर्वमेकम् । कुतः ? सदविशेषात् ।

इदमस्याऽऽकूतम् । न तावदयं नामरूपप्रपञ्चः प्रकाशाद्भिन्नः सन् प्रकाशितुमर्हति, जड़स्य स्वयंप्रकाशासंभवात् । न च प्रकाशयोगात् प्रकाशत इति युक्तम् । न खल्वान्तरेण प्रकाशेनास्य कश्चिद् योगः संभवति । विषयविषयिभावः संबन्ध इति चेन्न, तत्राकिंचित्करस्य विषयित्वासंभवात् । न चार्थे ज्ञानं फलं जनयतीति सांप्रतम् अतीतानागतयोरर्थयोस्तदसंभवात् ; न च न तयोर्विषयभावः । तस्माज् ज्ञानाद्भिन्नस्य नामरूपप्रपञ्चस्य न प्रकाशसंभव इति ज्ञानस्यैवायं विवर्त्त इति युक्तमुत्पश्यामः । न च प्रकाशात्मानो घटादय एवोदयव्ययधर्मिणः परस्परव्यावृत्ताः सन्त्विति सांप्रतं, तद्व्यावृत्तिग्रहे प्रमाणाभावात् । स हि यद् यतो व्यावर्त्तते तदुभयग्रहे गृह्यते । न च विज्ञानानि विलक्षणानि स्वरूपमात्रावस्थितानि परस्परवार्त्तानभिज्ञानि ज्ञानान्तरमपि ग्रहीतुमुत्सहन्ते प्रागेव स्वस्माद् व्यावर्तयितुम् । न च निषेध्यनिषेधाधिकरणग्रहणकारणको व्यावृत्तिग्रहः स्वकारणेन समसमयोत्पादो भवितुमर्हति, तादृशोः सव्येतरविषाणवत्कार्यकारणभावाभावात् । न चैकं विज्ञानं क्षणिकं निषेध्यनिषेधाधिकरणे गृहीत्वा पश्चान्निषेधं गृह्णातीति युक्तं, क्षणिकस्याक्रमस्य क्रमवद्व्यापारायोगात् । न चैकं विज्ञानं निषेध्यनिषेधाधिकरणे गृह्णाति अथ ज्ञानान्तरं निषेधतीति युक्तं चैत्रगृहीतेऽपि तस्मिन् मैत्रस्य निषेधज्ञानप्रसङ्गात् । न च ज्ञानस्वरूपग्रह एवास्य निषेधग्रह इति सांप्रतम् । एवं हि स भवेद् यदि स्वरूपतदन्यव्यावृत्त्योरेकत्वं भवेत् । तत्र व्यावृत्तिस्वभावो वा भावो भावस्वभावा वा व्यावृत्तिः ? तत्र पूर्वस्मिन् कल्पे व्यावृत्तेस्तुच्छत्वात् तत्स्वभावा भावास्तुच्छाः स्युः । ततश्च वचोभङ्ग्यन्तरेण शून्यवादप्रसङ्गः । उत्तरस्मिंस्तु कल्पे विधिरूपो भाव एव व्यावृत्तिरिति विधिरूपतया च ते न व्यावर्त्तन्त इति न व्यावृत्ता भावाः परस्परं परमार्थतः ; तदिदमुक्तम्—सदविशेषादिति । अनाद्यनिर्वचनीयाविद्यानिबन्धनं तु भावानां भेदं न व्यासेधामः । न च ज्ञातुरपि ज्ञानेन्द्रियं ग्राहकमस्ति प्रमाणमुक्तादेव विशेषात् । तस्मान्न ज्ञेयानां परस्परतश्च ज्ञानाच्च भेदः । नापि ज्ञातुर्ज्ञानादस्ति भेदः, नापि ज्ञानानामन्योन्यस्य, तस्मात् प्रकाश एव स्वयं प्रकाशः कूटस्थनित्य आनन्दघनोऽनाद्यविद्योपदर्शितविविधविचित्रनामरूपप्रपञ्चो ब्रह्मेत्यद्वैतसिद्धिः । अत एव श्रुतयो भवन्ति—

(१) 'सङ्ख्यैकान्ता' इति ख-ग-ज-भा० ।

## न्यायभाष्यम्

सर्वं द्वेधा नित्यानित्यभेदात्। सर्वं त्रेधा ज्ञाता ज्ञानं ज्ञेयमिति। सर्वं चतुर्द्धा प्रमाता प्रमाणं प्रमेयं प्रमितिरिति। एवं यथासम्भवमन्येऽपीति। तत्र परीक्षा—

## न्यायवार्त्तिकम्

अथेमे संख्यैकान्तवादाः—सर्वमेकं सदविशेषादित्येवमादि भाष्ये। तेषां प्रतिषेधद्वारकं सूत्रम्—

## न्यायवार्त्तिकतात्पर्यटीका

"एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥"

इत्येवमादिकाः।

तदेवमैकान्तिकमेकत्वमुपन्यस्य द्वित्वमैकान्तिकमाह—सर्वं द्वेधा। कुतः? नित्यानित्यभेदात्। न हि नित्यानित्याभ्यामन्यो राशिरस्ति यमाश्रित्य पदार्थास्त्रित्वादिके व्यवतिष्ठेरन्निति। मतान्तरमाह—सर्वं त्रेधा। तदेव दर्शयति—ज्ञाता ज्ञेयं ज्ञानमिति। (क)ज्ञप्तिरपि ज्ञायमानत्वाज् ज्ञेयान्नातिरिच्यत इति भावः। मतान्तरमाह—सर्वं चतुर्धा। दर्शयति—प्रमाता प्रमाणं प्रमेयं प्रमितिरिति। यदि प्रमितिर्नाम तत्त्वं प्रमाणादिभिन्नं नाश्रीयते प्रमायाः प्रधानक्रियाया अभावात् कथं प्रमात्रादयः। कथं च प्रधानक्रियामन्तरेणैकवाक्यता स्यात् कारकवैचित्र्यं वा? प्रमायाः फलत्वावस्थाया उपरि प्रमेयव्यपदेशं न वारयामः। न चैतावता तत्त्वान्तरं न भवति। एवं यथासंभवमन्येऽपीति, प्रकृतिपुरुषाविति वा पञ्चस्कन्धा इति वा पशुपाशतदुच्छेदेश्वरा इति वेत्यादयः। तत्र परीक्षां संख्यैकान्ततानिराकरणरूपान्तां दर्शयति सूत्रेण।

## वृत्तिः

अथ सङ्ख्यैकान्तवादनिराकरणप्रकरणम्। तत्र भाष्यम्—"अथेमे सङ्ख्यैकान्तवादाः, सर्वमेकं सदविशेषात्, सर्वं द्वेधा नित्यानित्यभेदात्, सर्वं त्रेधा ज्ञाता ज्ञेयं ज्ञानमिति, सर्वं चतुर्धा प्रमाता प्रमाणं प्रमेयं प्रमितिरिति, एवं यथासम्भवमन्येऽपीति।" तत्र यथा नित्यत्वानित्यत्वलक्षणधर्माभ्यां द्वैधम्, तथा (१)सत्त्वेनैक्यमिति स्पष्टोऽर्थः।

परे त्वेवं व्याचक्षते—एकमित्यद्वैतवादः। तथा च ब्रह्मैवैकं निर्विशेषं सत्यं सर्वमन्यन्मिथ्या।

(१) 'सत्त्वेनैकम्' इति भ०।
(क) ज्ञप्तिरिति ज्ञानसाधनमुच्यते।

## न्यायभाष्यम्

### सङ्ख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥ ४१ ॥

यदि साध्यसाधनयोर्नानात्वम्, एकान्तो न सिद्ध्यति व्यतिरेकात्। अथ

## न्यायवार्त्तिकम्

संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम्। संख्यैकान्तानामसिद्धिः कारणस्य प्रतिज्ञातार्थव्यतिरेकात्—सर्वमेकमिति प्रतिज्ञां कृत्वा यदि प्रतिज्ञेयव्यतिरिक्तं साधनं ब्रवीति एकान्तो न सिध्यति तच्च साधनं प्रतिज्ञायाश्चार्थ इति द्वैतम्। एवं द्वैतादिष्वपीति। अथ

## न्यायवार्त्तिकतात्पर्यटीका

संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ( सू० ४१ )। अनवयवेन सर्वं चेदेकं द्वेधा त्रेधा चतुर्धा चेति प्रतिज्ञार्थः, तदतिरिक्तं साधनं वाच्यम्। न हि साध्यमेव साधनं भवति। तथा च साधनस्य तदतिरेकान्न संख्यैकान्तसिद्धिः। न च किंचिदपि स्वसंवेदनमस्ति ज्ञानप्रदीपादीनामपि परसंवेद्यत्वात्। यथा च ज्ञानातिरिक्तोऽप्यर्थो विषयस्तथा विज्ञानवाद-निरासावसरे वक्ष्यते। न च विज्ञानादर्थस्य भेदोऽशक्यग्रहः। तथा हि नीलमुपलभ इत्य-नहङ्कारास्पदमश्वेतादिरूपं नीलं प्रत्यात्ममनुभवगोचरः एवं नीलादीनामपि परस्परम्। अन्यथा घटमानयेति देशितो नयने निमील्य शयीत; शयीथा इति देशिते तोयमाहरेत्, कस्यचित् कुतश्चित्कथंचिद्विवेचकाभावात्। न चानिर्वचनीयानाद्यविद्यानिबन्धनोऽयं भेदव्यवहार इति सांप्रतम्। अनिर्वचनीयख्यातेः पूर्वमेव निराकृतत्वात्। तस्मात्सर्वजनसंवेदनसिद्धोऽयं भेदप्रत्ययो न कारणमुखनिरीक्षणेन युक्तो निराकर्तुम्। अपि तु स्पष्टदृष्टात्कार्याद्भेदप्रत्यय-लक्षणात्तादृशं तत्कारणं कल्पनीयं यादृशेन तत्कारणेन प्रपञ्चप्रत्ययोऽप्रत्यूहमुत्पद्येत। तच्च प्रत्यक्षमेव। तथा हि तन्नीलं परिच्छिन्दत्पीतादिभ्योऽस्य भेदं परिच्छिनत्ति संयुक्तविशेषणता-लक्षणादिन्द्रियार्थसन्निकर्षात्। नीलं हि नीलमित्यनुभवन् पीतादिकं च पीतादिकमित्यनुभवन् स्मरन् वा शक्नोति निषेध्यनिषेधाधिकरणतया समाकलयितुं रूपमात्रेणागृहीतपरस्परभेदमपि।

## वृत्तिः

यद्वा, सर्वं प्रपञ्चजातम् एकं द्वैतशून्यं सदविशेषात्, घटः सन् पटः सन्निति प्रतीतेः घटाभिन्नसदभिन्नपटस्य घटादभेदसिद्धेः। श्रुतिरपि 'एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन' इत्यादि। 'अन्येऽपि' इत्यनेन रूप-संज्ञा-संस्कार-वेदनानुभवाः पञ्च स्कन्धा इति सौत्रान्तिका इत्यादिसमुच्चयः।

एतेष्वाक्षेपेषु सिद्धान्तसूत्रम्—( सङ्ख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् )

### न्यायभाष्यम्

साध्यसाधनयोरभेदः ? एवमप्येकान्तो न सिध्यति साधनाभावात्, न हि (१) हेतुमन्तरेण कस्यचित्सिद्धिरिति ॥ ४१ ॥

## न कारणावयवभावात् ॥ ४२ ॥

न सङ्ख्यैकान्तानामसिद्धिः कस्मात् ? कारणस्यावयवभावात्। अवयवः कश्चित् साधनभूत इत्यव्यतिरेकः। एवं द्वैतादीनामपीति ॥ ४२ ॥

### न्यायवार्त्तिकम्

प्रतिज्ञेयव्यतिरिक्तं साधनं नास्ति ? एवमप्येकान्तोऽस्य (क) वा न सिध्यति साधनाभावात् न साध्यं साधनमिति ॥ ४१ ॥

न कारणावयवभावात्। कारणस्य साध्यावयवत्वादित्ययं(२) सूत्रार्थः। साध्यावयव

### न्यायवार्त्तिकतात्पर्यटीका

न हि तत्र भेदेन प्रथत इत्यभेदेन प्रथेत। येनानयोर्नीलपीतयोर्गृहीतस्वरूपयोरवध्यवधिमद्भावो न स्यात्। तथा च तौ गृहीत्वा प्रत्यक्षेण शक्योऽनयोर्भेदो ग्रहीतुमित्यसांप्रतमेतत्।

अन्योन्यसंश्रयाद्भेदो न प्रमान्तरसाधनः।
तस्मिन्निदं नायमयंमिति भेदं विना न धीः ॥

एतेन प्रमातुरपि प्रमाया भेदो व्याख्यातः। प्रमातारश्चानेकविधसुखदुःखोपभोगव्यवस्थानाद्बधिरान्धकाणादिकोविदजाल्मसंसारिमुक्तविभागोपपत्तेश्च भेदवन्तोऽनुमीयन्ते एकस्मिन्नपर्यायेण विरुद्धधर्मसंसर्गासंभवात्। कल्पनया कथंचित्संभाव्यमानोऽप्ययं गोमयपायसीयन्यायमावहति। तदेवं प्रत्यक्षविरोधादनुपपन्नार्थाः श्रुतय एकमेवाद्वितीयमित्याद्याः प्रथमां वृत्तिमुल्लङ्घ्य जघन्यामवलम्बन्ते 'यजमानः प्रस्तर आदित्यो वै यूप' इत्यादिवदिति। यदाह भगवान् जैमिनिः—गुणवादस्त्विति। तत्सिद्धिरिति चेति। तस्मान्नाद्वैतमिति ॥ ४१ ॥

साध्यात्साधनस्य भेदेन च संख्यान्तरैकान्ता (३)अप्यपहतार्था इत्युक्तम्। अत्र पूर्वपक्षवाद्याह—

न कारणावयवभावात् ( सू० ४२ )॥ तद्व्याचष्टे—कारणस्य साध्यावयवभावात्।

### वृत्तिः

सङ्ख्यैकान्ता न सिद्ध्यन्ति कारणस्य प्रमाणस्य अनुपपत्तेः, उपपत्तौ वा न सङ्ख्यैकान्तः साधनस्य साध्यातिरिक्तस्यापेक्षितत्वात् ॥ ४१ ॥

---

(१) 'तमन्तरेण'-इति ज-ग०। 'तदुत्तरेण' इति झा०। 'साधनमन्तरेण' इति फ०। (२) 'साध्यावयवत्वादि साधनं नास्ति एवं सत्येकान्तो ह्ययं'—इति क-ख-धृतपाठान्तरम्। (३) 'अप्यपाकृता-' इति क-तात्पर्यधृतपाठान्तरम्।

(क) अत्र वा-शब्दार्थश्चिन्त्यः।

## न्यायभाष्यम्

# निरवयवत्वादहेतुः ॥ ४३ ॥

कारणस्यावयवभावादित्यहेतुः। कस्मात्? सर्वमेकमित्यनपवर्गेण प्रतिज्ञाय कस्यचिदेकत्वमुच्यते, तत्र व्यपवृक्तोऽवयवः साधनभूतो नोपपद्यते। एवं द्वैतादिष्वपीति।

## न्यायवार्त्तिकम्

एव साधनम्, एवं च सति साध्यव्यतिरिक्तं साधनं नोक्तं भवति न चासाधना सिद्धिरिति ॥ ४२ ॥

निरवयवत्वादहेतुः। साध्यावयव एव कारणमित्ययमहेतुः निरवयवत्वात् प्रतिज्ञार्थस्य। सर्वमेकमित्येतस्मिन् प्रतिज्ञार्थे न किञ्चिदपवृज्यते अनपवर्गेण सर्वं पक्षीकृतमिति सर्वस्य निरवयवस्य पक्षीकरणान्न हेतुरस्ति, न च साध्यं हेतुर्भवितुमर्हतीति। आत्मनि च क्रिया विरुध्यते।

## न्यायवार्त्तिकतात्पर्यटीका

एकस्य द्व्यादीनां वा कश्चिदेकदेशः साधनं तथा च न संख्यान्तरं न च साधनभाव इत्यर्थः ॥ ४२ ॥

निराकरोति—

निरवयवत्वादहेतुः (सू. ४३)॥ अवयवभावादिति यदि साध्यस्य कश्चिदवयवो भवेन्न संख्यैकान्तः स्यादिति सर्वमेकमित्येतस्मिन् प्रतिज्ञार्थे न किंचिद् अपवृज्यते व्यावर्त्तते यतस्तत्साधनं न स्यादित्यर्थः। अथ कस्मान्न साध्यमेव हेतुरित्यत आह—आत्मनि चेति।

## वृत्तिः

आक्षिपति—( न कारणावयवभावात् )

न सङ्ख्यैकान्तस्यासिद्धिः कारणस्य प्रमाणस्य अवयवभावात् उक्तस्यैकदेशत्वादवयवावयविनोश्च (१)भेदाभावादिति भावः (१*) ॥ ४२ ॥

दूषयति—( निरवयवत्वादहेतुः )

उक्तो हेतुर्न युक्तः सर्वस्यैव पक्षत्वेनावशिष्टस्याभावात्, पक्षैकदेशस्य हेतुत्वासम्भवादिति भावः। श्रुतिस्तु ब्रह्मैक्यपरेति।

(१) 'भेदाभावः' इति भ०।

## न्यायभाष्यम्

ते खल्विमे सङ्ख्यैकान्ता (१) यदि विशेषकारितस्यार्थभेदविस्तारस्य प्रत्याख्यानेन वर्त्तन्ते, प्रत्यक्षानुमानागमविरोधान्मिथ्यावादा भवन्ति। अथाभ्यनुज्ञानेन वर्त्तन्ते? समानधर्मकारितोऽर्थसंग्रहो विशेषकारितश्चार्थभेद इति एवमेकान्तत्वं जहतीति। ते खल्वेते (२) तत्त्वज्ञानप्रविवेकार्थमेकान्ताः परीक्षिता इति ॥ ४३ ॥

## न्यायवार्त्तिकम्

यत्तत्प्रतिपाद्यं तदेव प्रतिपादकमिति न युक्तं, न कर्म करणं भवितुमर्हतीति। ते खल्विमे संख्यैकान्ता यदि विशेषकारितस्यार्थभेदस्य प्रत्याख्यानेन वर्तन्ते मिथ्यावादा भवन्ति प्रत्यक्षानुमानागमविरोधित्वात्—प्रत्यक्षोऽयं गवादिघटादिभेदः अनुमानतोऽपि गम्यते अन्यदन्येनानुमीयते, आगमतोऽपि गम्यते प्रतिपन्नः प्रतिपादयिता अप्रतिपन्नः प्रतिपाद्य(३) इति। अथाभ्यनुज्ञानेन वर्तन्ते? तथाप्येकान्तत्वं जहति। अथ सामान्यकारितोऽभेदः विशेषकारितश्च भेद इति प्रतिपद्यते? तथापि न किञ्चिद्बाध्यते। न च भेदमन्तरेण सामान्यं लब्धावकाशमिति।

## न्यायवार्त्तिकतात्पर्यटीका

चो हेतौ। अपि चैते संख्यैकान्ताः प्रत्यक्षादिप्रमाणविरोधान्मिथ्यावादा इत्याह—ते खल्विमे संख्यैकान्ता इति। खलुशब्दः समुच्चये, वक्रकोटरपाण्यादिविशेषकारितो योऽर्थभेदः स्थाणुपुरुषादिः तत्प्रत्याख्यानेनेत्यर्थः। अथ विशेषकारितार्थभेदाभ्यनुज्ञानेन वर्तते तथाऽप्येकान्तत्वं जहति एकत्वादिसंख्याया अनैकान्तिकत्वमित्यर्थः। अथ सामान्यकारित इति संज्ञामात्रमङ्गीक्रियते न पुनरस्या ऐकान्तिकत्वमित्यर्थः। तदस्माकमभिमतमेवेत्याह—तथाऽपि न किंचिद्बाध्यत इति। येऽप्याहुः सत्तासामान्यमेव तत्त्वं भेदास्तु काल्पनिका इति तान् प्रत्याह—न च भेदमन्तरेणेति। यथाहुः—

निर्विशेषं न सामान्यं भवेच्छशविषाणवद् इति।

## वृत्तिः

एतच्च नास्मभ्यं रोचते, सत्त्वेनैक्यस्य नित्यानित्यभेदात् द्वैविध्यादेश्चाभ्युपगतत्वादनित्यस्याप्यनुमानस्य नित्यानित्यसाधकत्वे विरोधाभावात्। कथमितरथा षट्पदार्थौ

---

(१) 'यदि'—इति ज-ग०-पु० नास्ति।

(२) 'तव ज्ञान'—इति वि० (B.)।

(३) 'प्रतिपद्यते' इति क-ख-धृतपाठान्तरम्।

## न्यायभाष्यम्

प्रेत्यभावानन्तरं फलम्, तस्मिन्—

### सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ॥ ४४ ॥

पचति दोग्धीति सद्यः फलमोदनपयसी, कर्षति वपतीति कालान्तरे फलं

## न्यायवार्त्तिकम्

(१)सामान्यं प्रतिपद्यमानेन भेदोऽभ्युपगन्तव्यः, (२)भेदं च प्रत्याचक्षाणेन सामान्यमपि प्रत्याख्येयम्। विशेषानाधारस्य सामान्यस्याविषयत्वात्। ते खल्विमे संख्यैकान्तास्तत्त्वज्ञानप्रविवेकाय परीक्षिता इति ॥ ४३ ॥

( इति संख्यैकान्तवादप्रकरणम् )

प्रेत्यभावानन्तरं फलमुद्दिष्टं, तस्मिन्—

सद्यः कालान्तरे च फलनिष्पत्तेः संशयः। काचित् क्रिया सद्यःफला, यथा पचति दोग्धीति, तस्याः सद्यः फलमोदनपयसी क्रियानन्तरं भवत इति, काचित् कालान्तरफला, यथा

## न्यायवार्त्तिकतात्पर्यटीका

स्यादेतत् प्रेत्यभावपरीक्षायां क एषामवसरो यदेते एकान्तवादाः परीक्ष्यन्त इत्यत आह—त इति।

अद्वैतादिष्वेकान्तेषु प्रेत्यभावो न तात्त्विको भवेदपि तु काल्पनिकः। न केवलं प्रेत्यभावोऽपि तु षोडशापि पदार्थाः। तस्मादेतेषां यत्तत्त्वज्ञानं तस्य प्रविवेकार्थं ज्ञेयप्रविवेकेन ज्ञानप्रविवेक इति तदर्थमेते परीक्षिता इति तदनेन प्रबन्धेन प्रेत्यभावः परीक्षितः ॥ ४३ ॥

अथोद्देशक्रमानुरोधात् फलमिदानीं परीक्ष्यते। तत्राग्निहोत्रादीनां फलमनन्तरभावि कालान्तरभावि वेति संशयः। एतदुक्तं भवति। कर्मानन्तरं दुःखं च लोकपंक्त्यादि चोपलभ्यते, प्रशंसन्ति हि लौकिका धार्मिकोऽयं साधुतम इति, तत्किमेतावदेवास्य फलमस्तु अथामुष्मिकं स्वर्गादीति। किं प्राप्तं स्वर्गादिफलत्वे कर्मणः स्वरूपेणाकारणत्वाच् चिरनिवृत्ते तस्मिंस्तदुत्पत्तेः

## वृत्तिः

सप्तपदार्थी च सिध्येदिति। तस्माद् द्वैतवादनिराकरणपरत्वे एव प्रकरणं सङ्गच्छत इति सङ्क्षेपः ॥ ४३ ॥

समाप्तं सङ्ख्यैकान्तवादनिराकरणप्रकरणम् ॥ ११ ॥

(१) 'सामान्यं च प्रतिपद्यमानेन'—इति क-ख-धृतपाठान्तरम्।

(२) 'भेदं वा'—इति क-ख-धृतपाठान्तरम्।

### न्यायभाष्यम्

(१)शस्याधिगम इति। अस्ति चेयं क्रिया अग्निहोत्रं जुहुयात् स्वर्गकाम इति एतस्याः

### न्यायवार्त्तिकम्

कृष्यति वपतीति, तस्याः कालान्तरे फलं न क्रियानन्तरं शस्याधिगम इति। अस्ति चेयं क्रिया

### न्यायवार्त्तिकतात्पर्यटीका

अपूर्वकल्पनायां च प्रधानाङ्गापूर्वाणि भूयांसि कल्पनीयानि। न च तान्युत्पन्नमात्राणि जनयन्ति फलमिति तत्सहकार्यन्तराणि कल्पनीयानीत्यदृष्टकल्पनागौरवात् तदनन्तरदृष्टफलाबाधनाच्च नामुष्मिकं फलं स्वर्गादि, अपि त्वनन्तरदृश्यमानमेव। तत्रापि दुःखफलत्वे उपदेशव्याघाता-ल्लोकपङ्क्तिलाभख्यात्यादिकमेव फलं, तच्च सुखहेतुतया कथंचित्स्वर्गादिपदेनो(२)च्यते। दृष्टो हि सुखहेतौ स्वर्गपदप्रयोगो लोके यथा चन्दनं स्वर्गः सूक्ष्माणि वासांसि स्वर्ग इति प्राप्तम्। एवं प्राप्ते ब्रूमः— स्वर्गपदस्य तावदर्थवादतः,

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥

इति सुखं प्रति वाचकत्वमवधारितम्। न च तद्वाचकत्वेनैव चन्दनादौ तत्प्रयोगोपपत्तावनेकार्थत्व-कल्पना युक्ता। यदाहुरन्यायश्चानेकार्थत्वमिति। तस्मान्मुख्योऽयं स्वर्गशब्द उक्तभेदे सुखे। तथा च 'स्वर्गकाम' इत्यत्र मुख्यार्थसंभवे नोपचरितार्थता युक्ता। न चानेकादृष्टकल्पना-भयान्मुख्यार्थपरित्यागो न्याय्यः, प्रमाणसिद्धे नियोगपर्यनुयोगानुपपत्तेः। यथाऽऽहुः—

श्रुतसिद्ध्यर्थमश्रुतोपलब्धौ यत्नवता भवितव्यं न तु श्रुतशैथिल्यमादरणीयमिति। तथा—

प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि।

न चानन्तरदृश्यमानं लोकपङ्क्त्यादि होमाद्यनुष्ठानफलमपि तु तदुपलम्भफलम्। अदाम्भिकानां

### वृत्तिः

अथावसरतः फले परीक्षणीये संशयमाह—(सद्यः कालान्तरे च फलनिष्पत्तेः संशयः) पाकादिक्रियायाः सद्यःफलकत्वस्य, कृष्यादेः कालान्तरफलकत्वस्य दर्शनाद् अग्निहोत्रहवनादेर्हिंसादेर्वा फलं साद्यस्कं कालान्तरीयं वेति संशयः॥ ४४॥

---

(१) 'सस्याधिगमः' इति ख-ग-भा०।
(२) 'स्वर्गादिफलत्वेने'ति क-पुस्तकधृतपाठान्तरम्।

## न्यायभाष्यम्

फले संशयः। न सद्यः कालान्तरोपभोग्यत्वात् (क)। स्वर्गः फलं श्रूयते, तच्च भिन्नेऽस्मिन्देहभेदादुत्पद्यते इति। न सद्यः ग्रामादिकामानामारम्भ(१)फलमिति ॥ ४४ ॥

## न्यायवार्त्तिकम्

अग्निहोत्रं जुहुयादिति। तस्याः फले सन्देहः—किमियं सद्यस्तापादिफला उत कालान्तरफला। न सद्यः (२)कालान्तरोपभोग्यत्वात् (ख)। स्वर्गः फलं श्रूयते। (ग)देशितया च क्रियया नानर्थिकया शक्यं भवितुम्। न चायं तापादिकामोऽग्निहोत्रं जुहोति तेनावगम्यते तां हवनादिक्रियामपेक्षमाणादात्ममनःसम्बन्धात्, विशुद्धेनाभिसन्धिना अनुगृहीतादात्मनि धर्म उत्पद्यत इति। स च कालान्तरेऽप्रतिबध्यमानशक्तिः देशाद्यनुगृहीतः फलं ददाति। तच्च पतिते तस्मिन् देहे भवति देहान्तरापन्नस्यातो न सद्य इति ॥ ४४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

प्रच्छन्नमनुतिष्ठतामपि लोकपङ्क्त्यादेरभावात्। तस्मात् सुष्ठूक्तं—न सद्यः कालान्तरोपभोग्यत्वादिति।

वार्त्तिकं—सद्यस्तापादिफलेति। अतद्गुणसंविज्ञानोऽयं बहुव्रीहिस्तापादीति। तेन लोकपंक्त्यादिकमुच्यते। स्वर्गः फलं श्रूयते इत्ययुक्तम्। स्वर्गकाम इति स्वर्गस्य पुरुषविशेषणत्वेन श्रवणादसाध्यत्वादत आह—देशितया च क्रियया नानर्थिकया भवितव्यम्। आप्तोपदेशः खल्वयमुपदेशस्य कर्मणोऽभिमतोपायतामाह। तत्र कर्मणोऽभिमतापेक्षायां पुरुषविशेषणस्याप्यपेक्षितत्वात्साध्यत्वमिति सिद्धम्। एवं हि लोकपङ्क्त्यादिरग्निहोत्राद्यनुष्ठानसाध्यो भवेद् यदि तत्कामस्य स्वर्गकामस्येवाग्निहोत्राद्यनुष्ठानं देश्येत। न चैतदस्तीत्याह—न च तापादिकाम इति। लोकपङ्क्त्यादिकाम इत्यर्थः। शेषमतिरोहितार्थम् ॥ ४४ ॥

## वृत्तिः

तत्रैहिककीर्त्यादीनामेव फलत्वसम्भवे नादृष्टादिकल्पनमिति पूर्वपक्षे सिद्धान्तसूत्रम्—(न सद्यः कालान्तरोपभोग्यत्वात्) कालान्तरोपभोग्यत्वेन प्रतिपादनादित्यर्थः। स्वर्गो हि फलं श्रूयते, स च दुःखासम्भिन्नसुखम्, न चैहिकं सुखं तथा। एवं हिंसादेस्तत्तन्नरकोपभोगः फलं, श्रूयते चेह तत्सम्भव इति भावः ॥ ४५ ॥

(१) '-फलमपीति' इति क०। (२) 'न सद्यः फलम्—' इति क-खधृतपाठान्तरम्।

(क) बहुषु पुस्तकेषु वृत्तौ तात्पर्यपरिशुद्धौ च सूत्रत्वेन गृहीतमपि इदं न्यायसूचीनिबन्धे सूत्रत्वेन न गृहीतमिति भाष्येऽन्तर्भावितम्। एवं च वृत्तौ सूत्रसंख्याधिक्यम्।

(ख) वार्त्तिके सूत्ररूपेण मुद्रितमपीदं वाक्यं भाष्यरूपेणात्र मुद्राप्यते।

(ग) 'चोदितया' इति क-खवार्त्तिकयोर्मुद्रितम्।

न्यायभाष्यम्

## कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ॥ ४५ ॥

ध्वस्तायां प्रवृत्तौ प्रवृत्तेः फलं न कारणमन्तरेणोत्पत्तुमर्हति, न खलु वै विनष्टात्कारणात्किञ्चिदुत्पद्यते इति ॥ ४५ ॥

## प्राङ् निष्पत्तेर्वृक्षफलवत् तत् स्यात् ॥ ४६ ॥

यथा फलार्थिना वृक्षमूले सेकादि परिकर्म क्रियते, तस्मिंश्च प्रध्वस्ते पृथिवीधातुरब्धातुना संगृहीत आन्तरेण तेजसा पच्यमानो रसद्रव्यं (१) निर्वर्तयति, स द्रव्यभूतो रसो वृक्षानुगतः पाकविशिष्टो व्यूहविशेषेण सन्निविशमानः पर्णादि फलं निर्वर्तयति, एवं परिषेकादि कर्म चार्थवत्। न च विनष्टात् फलनिष्पत्तिः। तथा प्रवृत्त्या संस्कारो धर्माधर्मलक्षणो जन्यते, स जातो निमित्तान्तरानुगृहीतः कालान्तरे फलं निष्पादयतीति। उक्तश्चैतत् 'पूर्वकृतफलानुबन्धात्तदुत्पत्ति'रिति ॥ ४६ ॥

न्यायवार्त्तिकम्

कालान्तरेणानिष्पत्तिर्हेतुविनाशात(२)। व्यावृत्ते हवने व्यावृत्ते च पूर्वशरीरे देहान्तरे फलं श्रूयते, तच्च विनष्टात् कारणाद् युक्तमिति ॥ ४५ ॥

प्राङ् निष्पत्तेर्वृक्षफलवत् तत् स्यात(३)। न ब्रूमो विनष्टात् कारणात् कार्यमुत्पद्यते, अपि तु अग्निहोत्रहवनादिलक्षणया क्रियया यथोक्तेन विधिना धर्मो जन्यत इत्युक्तम्, तस्मात् फलमिति, यथा फलार्थिना वृक्षस्य मूलसेकादिकर्म क्रियते; न च मूलसेकाद् विनष्टात् फलेन युक्तं भवितुम्, अपि तु मूलसेकादिकर्म कृतं भोक्तुः कर्मापेक्षं पृथिव्यादिधातुमनुगृह्णाति स

न्यायवार्त्तिकतात्पर्यटीका

काला—शात् ( सू० ४५ ) (क) ॥

प्राङ्—स्यात् ( सू० ४६ ) ॥

भाष्यम्—तथा प्रवृत्त्या संस्कारो धर्माधर्मलक्षणो जन्यत इति। नैष पुरुषसंस्कारः स्नानादिजन्य इव बोद्धव्योऽपि तु पुरुषधर्मतामात्रेण संस्कार इत्युच्यते; परमार्थतस्त्वयं धर्मः पुरुषाश्रयोऽपि कर्मणा फले जनयितव्ये तस्यावान्तरव्यापार इति ॥ ४६ ॥

(१) 'निवर्त्तयति' इति वि-टि०। (२) '-निष्पत्तेर्हेतुविनाशात्' इति क-ख-धृतपाठान्तरम्।
(३) '-वृक्षफलवच्च स्यात्' इति क-ख-धृतपाठान्तरम्।
(क) सूत्रमिदं तात्पर्यकारेण न व्याख्यातम्।

## न्यायभाष्यम्

तदिदं प्राङ् निष्पत्तेर्निष्पद्यमानम्—

### (१) नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात् ॥ ४७ ॥

प्राङ् निष्पत्तेर्निष्पत्तिधर्मकं नासत्, उपादाननियमात्। कस्यचिदुत्पत्तये किञ्चिदुपादेयं न (२) सर्वं सर्वस्येत्यसद्भावे नियमो नोपपद्यते इति। न सत्, प्रागुत्पत्तेर्विद्यमानस्योत्पत्तिरनुपपन्नेति। (३) न, सदसत् सदसतोर्वैधर्म्यात्

## न्यायवार्त्तिकम्

उपगृहीत आन्तरेण तेजसा पच्यमानो रसद्रव्यमभिनिर्वर्तयति, तद्रसद्रव्यं वृक्षमाफलात् सद्य उपसर्पति, तस्मात् पर्णादिफलं निर्वर्तते। एवं च सति विनष्टात् मूलसेकात् फलनिर्वृत्तिः, न च मूलसेकादिवैयर्थ्यमिति ॥ ४६ ॥

तदिदं प्राङ्निष्पत्तेः—

नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात्। प्राङ् निष्पत्तेरुत्पत्तिधर्मकं नासत् उपादाननियमात्; (४) असत्त्वे समाने उपादाननियमो न प्राप्नोति। सदपि न भवति; (५)विद्यमानस्योत्पत्तिर्व्याहतेति, अस्ति चोत्पद्यते चेति व्याहतम्। न सदसत्, सदसतोर्वैधर्म्यात्

## न्यायवार्त्तिकतात्पर्यटीका

इदमिदानीं चिन्त्यते किमेतत्फलमुत्पत्तेः प्रागसद्वा सद्वा सदसद्वाऽनुभयं वेति। अत्र समस्तपक्षाक्षेपेण फलाभावमभिधित्सुः पूर्वपक्षयति। तदिदं फलं निष्पत्तेः प्राक्। (क)

नास—र्म्यात् (सू० ४७)॥ नासन्न सन्न सदसत्। सदसत् कस्मान्न

## वृत्तिः

शङ्कते—( कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ) कालान्तरेण तत्तत्कर्मणः फलं न सम्भवति हेतोस्तत्कर्मणो विनाशात् ॥ ४६ ॥

समाधत्ते—( प्राङ् निष्पत्तेर्वृक्षफलवत् तत् स्यात् ) स्वर्गादिनिष्पत्तेः प्राक् तत् द्वारं स्यात्। दृष्टान्तमाह—वृक्षफलवत्। यथा मूलसेकादिनाशेऽपि तदधीनावयवोप-

---

(१) 'नासन्न सन्नं सदसदसत्सतोर्वैधर्म्यात्' इति ज०। (२) 'सर्वम्' इति टि पु० नास्ति। (३) 'सदसत् न' इति ग-ज भा०। (४) 'असत्वेन समानेन'—इति क-खधृतपाठान्तरम्। 'असत्त्वसमाने' इति ख०। (५) 'विद्यमानस्योत्पादो व्याहन्यते'—इति क-खधृतपाठान्तरम्।

(क) अत्र भाष्यवार्त्तिकपदे व्युत्क्रम्य गृहीते, अन्वयस्त्वनयोः तात्पर्यपरिगृहीतसूत्राश्रेणेति बोध्यम्।

## न्यायभाष्यम्

सदित्यर्थाऽभ्यनुज्ञा, असदिति अर्थप्रतिषेधः, एतयोर्व्याघातो वैधर्म्यं व्याघातादव्यतिरेकानुपपत्तिरिति ॥ ४७ ॥

प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा। कस्मात्? (क)

## उत्पादव्ययदर्शनात् (ख) ॥ ४८ ॥

## न्यायवार्त्तिकम्

सदित्यर्थाभ्यनुज्ञा, असदिति तस्य प्रतिषेधः, अभ्यनुज्ञाप्रतिषेधयोः सामानाधिकरण्यमनुपपन्नम्। तस्मान्न सदसदपि। नाप्युभयविपरीतं कार्यं युज्यते, तस्य स्वरूपानिर्देशादिति, न हि तस्य स्वरूपं शक्यं निर्देष्टुमिति ॥ ४७ ॥

प्रागुत्पत्तेरुत्पत्तिधर्मकमसदिति अद्धा—सत्यमिति। कस्मात्?

उत्पादव्ययदर्शनात्। वस्तुनः प्रागनुपलब्धरूपस्य पश्चादुपलब्धिर्या साऽसदुत्पादे सति युज्यते, विनाशश्चोपलब्धरूपस्य पुनरनुपलब्धिरिति। न चैतत् सर्वनित्यवादिनः सम्भवति। न हि सत्पक्ष उत्पादो न च विनाश इति। उत्पादविनाशौ च प्रत्याचक्षाणेन लोको हेयः।

## न्यायवार्त्तिकतात्पर्यटीका

भवतीत्यत आह—सदसतोर्वैधर्म्यात्, परस्परविरुद्धधर्मत्वात्। धर्मः स्वभावः, विरोधादित्यर्थः। अथानुभयं कस्मान्न भवतीत्यत आह—नाप्युभयविपरीतमिति ॥ ४७ ॥

सिद्धान्त्याह—प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा।

ननु नासदुत्पद्यते न सन्निरुध्यत इत्याचक्षते सांख्याः, तत्कथमेतदित्यत आह—

उत्पादव्ययदर्शनात् (सू ४८)। यथा नित्यस्वरूपायाश्चितिशक्तेर्नोत्पादो न च व्यय एवं फलस्यापि नित्यस्य तौ न स्यातामित्यर्थः। न हि सत्पक्ष इति सत्कार्यपक्ष

## वृत्तिः

चर्यादिद्वारबलेन फलोत्पत्तिस्तथा प्रकृतेऽपि यागादिनाशेऽपि तज्जन्यादृष्टरूपद्वारसत्त्वान्न स्वर्गाद्युत्पत्तिविरोधः ॥ ४७ ॥

ननु कार्यकारणभाव एव न विचारसह इत्याशङ्कते—(नासन्न सन्न सदसत्

---

(क) ४८तमसूत्रस्य अवतरणिकाव्यतिरिक्तं भाष्यं नोपलभ्यते। न्यायसूचीनिबन्धसम्मतोऽयं सूत्रपाठः। वृत्तिकार-तात्पर्यपरिशुद्धिकारमते विशेषस्तु स्फुट एव।

(ख) "प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा उत्पादव्ययदर्शनादि'त्येकमेव सूत्रमिति केचित्' इति क-ख-वार्त्तिकपुस्तकसम्पादकाः।

## न्यायवार्त्तिकम्

अथ लोकोऽयं प्रवर्तमानः किमर्थं प्रवर्तते ? ननु चायं प्रवर्तते इदमाप्स्यामि इदं हास्यामीति ? सत्यमेवं प्रवर्तते न पुनः सत्कार्यवादिनः किञ्चिद्धेयमुपादेयं वा विद्यते। प्रतिज्ञादीनां चावयवानामुपादानं व्यर्थम् उत्पादव्ययप्रत्याख्यानात्—न किञ्चित् जायते न किञ्चिद् विनश्यतीति अवयवानामुपादानं व्यर्थं (१) यदि सत्कार्यप्रतिपत्त्यर्थं, प्रतिपत्तेर्विद्यमानत्वाद् व्यर्थमुपादानम्। न हि यद् यस्य लोके भवति स तदुपादानमुपादत्ते इति। अथाज्ञान(२)तिरोभावमात्रार्थमुपादानमिति, एतदपि तादृगेव। न हि अनुपजातविशेषस्याज्ञाननिवृत्तिर्युक्तेति। अथाभिव्यक्त्यर्थमुपादानमिति ? केयमभिव्यक्तिर्नाम ? या उपादानेन क्रियते ? यदि कार्यम् ? व्याहतम्। अथ कार्यधर्मः ? तथाप्यनिवृत्तो व्याघातः। अथोपलब्धिकार्यविषयाभिव्यक्तिः सा क्रियत इति ? न मुच्यसे (३)व्याघातात्। अथ कारणात्मनावस्थितस्य कार्यात्मनाऽवस्थानमभिव्यक्तिः, एवमप्यनिवृत्तो व्याघातः, कार्यात्मनावस्थानमसद्भवतीति। अथ कारणस्य संस्थानविशेषोऽभिव्यक्तिः ? संस्थानविशेषोऽभूत्वा भवतीति व्याघातः। अथास्ति, व्यर्थमुपादानम्। अथ कारणस्य स्वलक्षणपुष्टिरभिव्यक्तिः, न अपूर्वाभ्यागमाभावे स्वलक्षणपुष्टिशब्दार्थं पश्याम इति व्यर्थमुपादानम्। स्वलक्षणपुष्टिश्च पूर्वमभूत्वा पश्चाद् भवतीति (४)व्याघातान्न मुच्यसे(४)। एवं येन येन कल्पेनाभिव्यक्तिरभिधीयते तेन तेन सत्कार्यं बाधत इति ॥ ४८ ॥

## न्यायवार्त्तिकतात्पर्यटीका

इत्यर्थः। न किंचिज्जायत इति। न प्रतिज्ञावाक्यात् किंचित्तत्त्वज्ञानं संभवति। किञ्चिच्च संदेहादि न विनश्यतीति अज्ञानतिरोभावः संशयविपर्ययतिरोभावः। कारणस्य हि प्रधानस्य लक्षणं महान् लक्ष्यते हि महता प्रधानमिति। एवं तस्याप्यहङ्कारस्तस्य पुष्टिः स्थूलतेत्यर्थः। पश्चाद्भवतीति केवलकारणावस्थायाः पश्चादिति ॥ ४८ ॥

## वृत्तिः

सदसतोर्वैधर्म्यात् ) प्राङ् निष्पत्तेरित्यनुवर्त्तते। फलमित्यध्याहर्तव्यम्। तथा चोत्पत्तेः प्राक् फलं नासत्, असत उत्पत्तौ शशशृङ्गादेरप्युत्पत्तिः स्यात्, स्याच्च सिकतादावपि तैलम्। न वा सत्, सत उत्पत्तिविरोधात्। अत एव न सदसत्, सदसतोः सत्त्वासत्त्वलक्षणवैधर्म्यात् ॥ ४८ ॥

---

(१) अतः परम् 'उत्पादव्ययवादिनः'—इति क्वचिदधिकम् इति क-खवार्त्तिकसम्पादकाः।

(२) '-तिरोभावार्थमुपा'—इति ख०।

(३) 'उपघातात्'—इति क-खधृतपाठान्तरम्।

(४) 'व्याघातः'—इति क-खधृतपाठान्तरम्।

## न्यायभाष्यम्

यत्पुनरुक्तं प्रागुत्पत्तेः कार्यं नासदुपादाननियमादिति—

### बुद्धिसिद्धं तु तदसत् ॥ ४९ ॥

इदमस्योत्पत्तये समर्थं न सर्वमिति प्रागुत्पत्तेर्नियतकारणं कार्यं बुद्ध्या

## न्यायवार्त्तिकम्

यत्पुनरेतत् नासदुपादाननियमादिति ?

बुद्धिसिद्धं तु तदसत्। नायं सत्त्वादुपादाननियमोऽपि तु सामर्थ्यात्—इदमनेन (१) शक्यं निर्वर्त्तयितुं (१) नेदमनेनेत्येवं बुद्धिसिद्धं कार्यं कृत्वा यद्व यस्योत्पत्तये समर्थं, तत् तस्योपादीयते ; न सर्वं सर्वस्य, न सर्वस्मात् सर्वमुत्पद्यमानं दृष्टमिति। अथोत्पत्तिनियमेन कार्यनियमेन कार्यकारणनियमं प्रतिपद्यते, तेनापि कार्यकारणशब्दयोरर्थो वाच्यः। किमुक्तं भवति कारणमिति ? किमुक्तं च भवति कार्यमिति ? ननु करोतीति कारणं क्रियत इति कार्यम्। यद्यभिव्यक्तिः ? पूर्ववत् प्रसङ्गः। अथ विद्यमानेष्वपि करोत्यर्थो दृष्ट इति मन्यसे, यथा केशान् कुरु पृष्ठं कुर्विति ; न तद्विद्यमानानां हि (२)रचनाविशेषः केशानामविद्यमानः क्रियते, पश्चात् पृष्ठस्यापि मलापगमोऽविद्यमान इति, न (३)विद्यमाने कारणार्थं जात्वपि पश्याम इति तस्मादसदेतत्।

## न्यायवार्त्तिकतात्पर्यटीका

यच्चोक्तमुपादाननियमादिति तत्र यदि पुरुषस्योपादाननियमः पदार्थान् तन्तूनेवोपादत्ते न वीरणकटार्थो वीरणमिति ततस्तदुपादानानां तत्र तत्र कार्ये सामर्थ्यपरिज्ञानात् तच्च सामर्थ्यमानुमानिकं तदिदमुच्यते।

बुद्धिसिद्धं तु तदसत् (सू ४९) इति। तदसद्भावि कार्यमनेनैव कारणेन जन्यते नान्येनेत्यनुमानाद्व बुद्धिसिद्धमेवेत्यर्थः। अथासत्कार्यपक्षे तन्तव एव पटस्योपादानं न वीरणादीत्ययं नियमो न स्यादिति ब्रूषे तदयुक्तम्। असत्त्वाविशेषेऽपि स्वकारणादुत्पन्नं किंचिदेव किंचित्कार्यं जनयितुं समर्थं नान्यदित्ययं स्वभावविशेषादुपपद्यत इति। अपि च सत्कार्यपक्षे प्रधानोपादानत्वाद्विश्वस्य तस्य चाभेदात् कारणात्मकत्वाच्च कार्यजातस्य सर्वं सर्वात्मकमितीदमिदं नेदमिदानीं नेदमिति नियमो न स्यात् कस्यचित् कुतश्चिद्विवेकहेतोरभावात्।

## वृत्तिः

समाधत्ते—( प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा उत्पादव्ययदर्शनात् ) उत्पत्तिधर्मकम्, उत्पत्तिधर्मकत्वेनोपलभ्यमानं घटादिकमुत्पत्तेः प्रागसदिति अद्धा तत्त्वम्, उत्पादनाशयोः

(१) 'निर्वर्त्तयितुं शक्यं'—इति क-खधृतपाठान्तरम्।
(२) 'वचनाविशेषः' इति ख०।
(३) 'विद्यमानं' इति ख०।

## न्यायभाष्यम्

सिद्धमुत्पत्तिनियमदर्शनात्। तस्मादुपादाननियमस्योपपत्तिः सति तु कार्ये प्रागुत्पत्तेरुत्पत्तिरेव नास्तीति ॥ ४९ ॥

## न्यायवार्त्तिकम्

यदि ह्यसत् क्रियत इति, खरस्य विषाणं किं न क्रियत इति ? क एवमाह न क्रियत इति, यत् तत् खरस्य विषाणं तत्र क्रियत इति। अथ कस्मात् खरः विषाणस्य कारणं न भवतीति ? एतत् न जानीमः कस्मात् न भवतीति, न पुनः खरेण विषाणं क्रियमाणं दृष्टमित्यतोऽवसीयते। एतेन शशविषाणं व्याख्यातम्। न तदसत्त्वात् न क्रियते किं तु कारणाभावादिति। न चाऽसत्त्वमुत्पत्तौ हेतुः, अपि तु सतोऽनुत्पत्तेरसदुत्पद्यत इति। असत्त्वात् खरविषाणं नोत्पद्यत इति ब्रुवाणः स्वसिद्धान्तं बाधते। न हि भवत्पक्षे खरविषाणं नास्ति सत्त्वे चासत्त्वे च समाने यस्य कारणमस्ति तदुत्पद्यत इति। सत्कार्यवादिनश्चैवं सर्वलोकव्यवहार उच्छिद्यत इत्युक्तम् नापूर्वं जायते न पूर्वं विनश्यतीति। (१) अथासत्कार्ये किं प्रमाणम् ? न सत्त्वे न चासत्त्वेऽनुमानमस्ति धर्मिण्यविप्रतिपत्तेः ? क तर्हि विवादः ? यदुभयपक्षसम्प्रतिपन्नं तस्य धर्मेषु तदुभयपक्षसम्प्रतिपन्नाः तन्तवस्तान् प्रति पक्षा विभज्यन्ते। एके तावद् ब्रुवते—तन्तुमात्रं पट इति। अपरे तु तन्तवः संस्थानविशेषेणावस्थिता इति। अपरे तु तन्तव एव कार्यात्मना

## न्यायवार्त्तिकतात्पर्यटीका

तस्मादस्ति रासभेऽपि विषाणमिति। तत्र तस्यासत्त्वं ब्रुवाणः स्वसिद्धान्तं बाधत इत्याह—असत्त्वाच्च खरविषाणं नोत्पद्यत इति ब्रुवाण इति। सत्त्वे चासत्त्वे च समाने यस्य कारणत्वमस्ति तदुत्पद्यत इति गुड़जिह्विका। परमार्थतस्त्वसत्त्वे कारणसामर्थ्यनियमादुत्पत्तिनियमः कल्पते, सर्वात्मना सर्वस्य सत्त्वे तु न नियमहेतुरस्तीत्युक्तप्रायम्। देशयति—अथासत्कार्ये किं प्रमाणम् ? न ह्यनुमानमस्मिन्नर्थे प्रमाणं भवितुमर्हति आश्रयासिद्धेः। नापि प्रत्यक्षं, तेनाप्यसतः स्वातन्त्र्येणानिरूपणादिति भावः। विदिताभिप्राय उत्तरमाह—नासत्त्वे न सत्त्वेऽनुमानमस्ति। यथाऽस्माकमाश्रयासिद्धिदोषादसत्त्वे कार्यस्य नानुमानम् एवं भावेऽपि कार्यस्य सत्त्वे नानुमानमाश्रयासिद्धेरेव। कुतस्तर्ह्यनुमानमित्यत आह—धर्मिण्यविप्रतिपत्तेः अनुमानमस्तीति योजना। तथा सत्याश्रयोऽस्य सिध्यतीत्यर्थः। पुनः पृच्छति—क्वेति। यदि धर्मिण्यविप्रतिपत्तिः क तर्हि विवादः ? उत्तरं यदुभयेति। धर्म्यधिकरणान् सत्कार्यवादिनामेव वादान्विभजते—तान् प्रतीति। तन्तुमात्रं पट इति तन्तुभ्योऽभिन्न इत्यर्थः। कार्यात्मनेति। कार्यं कारणाद्भिन्नाभिन्नमित्यर्थः। असत्कार्य-

(१) 'असत्कार्यवादे'—इति क-ग्रधृतपाठान्तरम्।

## न्यायवार्त्तिकम्

अवतिष्ठन्ते इति। अपरेषां (१) धर्मान्तराविर्भावतिरोभावाविति। अपरे तु (२) शक्तिविशिष्टास्तन्तवः पट इत्याहुः। तदेवं विभक्तेषु पक्षेषु तन्तुमात्रेषु तावद्व्यतिरेकः साधयितव्यः। स चोपपादित इति। येऽपि संस्थानविशेषेणावस्थितान् तन्तून् पट इति वर्णयन्ति, तान् प्रति साधनं—प्रागुपलब्धिकालात् संस्थानविशेषशून्याः तन्तवः तत्कारणत्वात् तुर्यादिवदिति। एतेन कार्यात्मनाऽवतिष्ठन्त इति व्याख्यातम्, तथा धर्मान्तराविर्भावतिरोभावाविति। अत एव शक्तिविशेषावस्थितास्तन्तव इति ब्रुवाणः किञ्चिदपि न बाधत इति तान् प्रति न साधनमुच्यत इति। य एवार्थो (३) बुद्धिसिद्धं तदसदिति स एवार्थः शक्तिविशेषावस्थितास्तन्तव इति सर्वेषु चैव पक्षेषु नापूर्वोत्पादमन्तरेण पटबुद्धिः सम्भवतीति व्याघातोऽनिवार्यः। विद्यमानाभिव्यक्त्यर्थास्तन्तवः तदर्थिना नियमेनोपादानात् खनित्रादिवत् ? विद्यमानस्याभिव्यक्तिरसतीति अभिव्यक्तिवत् कार्येऽपि प्रसङ्गः, (४) एवं चोक्तोत्तरमेतत्। यत् पुनरेतदुपादाननियमादिति, उपादानं च कारणम्, न च सति कारणार्थं पश्याम इति पूर्ववत् प्रसङ्गः। यदपि खनित्रादिवदिति ? न च खनित्राद्युदकार्थमुपादीयते, अपि तु आवरणविगमार्थम्। आवरणविगमश्च विभागः। स चाभूत्वा भवतीति असिद्धो दृष्टान्तः। अथ विभागं न प्रतिपद्येत ? सोऽप्यप्रतिपन्नविभागो विभागप्रत्ययोत्पत्तिकारणं पर्यनुयोज्यः। अथाप्राप्तिमात्रात् विभागप्रत्ययं प्रतिपद्यते ? साप्यप्राप्तिः किं प्राप्तेरभाव उत प्राप्तेरन्येति ? किञ्चातः ? यदि प्राप्तेरभावोऽप्राप्तिः, साऽप्राप्तिः कुतो भवतीति वक्तव्यम्। यद्धि प्राप्तिविरोधनिमित्तं तद्विभाग इति नाभावो विभागस्य।

## न्यायवार्त्तिकतात्पर्यटीका

पक्षस्तु स्वाभिमतः स्फुटत्वादवान्तरप्रतिबन्धभावाच्च नोपन्यस्तः। उपपादित इति द्वितीयाध्याये। प्रागुपलब्धिकारणादिति। कारणव्यापारात् प्रागित्यर्थः। संस्थानविशेषशून्यतामात्रविवक्षया तुर्यादिदृष्टान्तो न तु प्रागभावो विवक्षितः। शक्तिविशेषावस्थिता इति। कारणव्यापारात् प्रागिति शेषः। अत्र सिद्धसाधनं वयमपि ब्रूमहे, स्वव्यापारात् पटोत्पत्तिनिमित्तात् प्राक् तन्तवः शक्तिविशेषावच्छिन्ना एवेति परेषां सत्कार्यसाधनमुपन्यस्यति। विद्यमानाभिव्यक्त्यर्थास्तन्तवस्तदर्थिना नियमेनोपादानात् खनित्रादिवत्। यथा हि—खनित्रं विद्यमानमेवोदकं मृदपनयनेन व्यनक्तीति। तदेतद् दूषयति—विद्यमानस्याभिव्यक्तिरसतीति व्यक्तिवत्कार्येऽपि प्रसङ्गः। यथा व्यक्तेरसत्या एवोत्पादस्तथा कार्यस्याप्यसत एवोत्पाद इत्यर्थः। खनित्रादिवदिति दृष्टान्तः साध्यविकल इत्याह—यदपीति। साऽप्राप्तिः कुतो भवतीति वक्तव्यमिति। प्राप्तिः खलु संयोगः, स च गुणः, गुणश्च द्रव्यविनाशाद्विनश्येद्

(१) 'धर्माधर्माविर्भाव'—इति ख०।
(२) 'शक्तिविशिष्टान् तन्तून् पट'—इति क-खधृतपाठान्तरम्।
(३) 'बुद्धिसिद्धः' इति ख०।
(४) 'सर्वे' इति ख०।

## न्यायवार्त्तिकम्

यद्ध यत्र प्रतिषिध्यते तदन्यत्र भवतीत्युक्तम्। अप्राप्तिश्च द्वयी—असंश्लेषः संश्लिष्टानां विगमश्च। तत्र यः संश्लिष्टानां विगमः स विभाग इति। तं च खनित्रादीनि कुर्वन्ति। अथ प्राप्तेरन्याऽप्राप्तिः। सापि द्वयी, तत्रापि पूर्ववत् प्रसङ्गः। अथ भिन्नदेशोत्पत्तिं विभागं प्रतिपद्येत, भिन्नदेशे इमे उत्पन्ने इति विशेषणोपादानान्न भिन्नदेशोत्पत्तिर्विभाग इति उत्पन्ने उत्पन्नमिति भिन्नदेशतया भिन्नमिति विभागाद्ध विभक्तमिति। तान्येतानि (१) भिन्नप्रत्ययनिमित्तानि प्रत्ययभेदादनुमेयानि। न हीमे पर्यायशब्दा भिन्नमुत्पन्नं विभक्तं चेति। भिन्नदेशोत्पत्तेश्च प्रतिषिद्धत्वान्न भिन्नदेशोत्पत्तिर्विभाग इति। क्षणिकत्वाद्ध विभागस्य विभागप्रत्ययोत्पत्तिर्न युक्तेति चेत्? न, सामान्याभिव्यक्तिसंयोगविनाशाभ्यामेव प्रत्ययोत्पत्तिकालानुभवात्—पूर्वं तावत् स्वकारणादुत्पन्नो विभागः सामान्यं व्यनक्ति सामान्याभिव्यक्त्युत्तरकालं (२) विभागप्रत्ययं करोति संयोगं च विनाशयति, संयोगविनाशोत्तरकालं (२*) संयोगाख्यधात्मकाद्ध (३) विनश्यतीति। तदेवमनेकक्षणानुभवादुत्पन्नमात्रो विभागो ध्वंसत इत्यसिद्धम्। तदेवं व्यवस्थितमेतदसदुत्पद्यत इति ॥ ४९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

विरोधिगुणान्तराद्वा। तत्र तावदावरणद्रव्यमाम्रियमाणं वोदकं न विनष्टं, येन तयोः संयोगो विनश्येत्, ततस्तद्विरोधिगुणान्तरोत्पादो वक्तव्यः। स एव च संयोगविरोधी गुणो विभाग इत्युच्यत इत्यर्थः। प्राप्तेरभावोऽप्राप्तिरितिपक्षं दूषयित्वा पर्युदासपक्षमाशङ्क्य दूषयति—अथ प्राप्तेरिति। पुनः शङ्कते—अथ भिन्नदेशोत्पत्तिमिति। न च वयं संयोगं विभागं वा गुणमुपेमः। किं तु भिन्नदेशोत्पन्न एव द्रव्ये विभागो निरन्तरोत्पन्न एव संयोग इत्यर्थः। निराकरोति—भिन्नदेश इति। विशेषणोपादानान्न भिन्नदेशोत्पत्तिर्विभागः। कस्माद्ध? उत्पन्ने उत्पन्नमिति भिन्नदेशतया भिन्नमिति विशेषणं हि स्वानुरक्तं प्रत्ययं विशेष्ये जनयति, न त्वन्यानुरक्तम्। न खलु नीलं विशेषणमुत्पले रक्तप्रत्ययं जनयत्यभ्रान्तस्येत्यर्थः। अपि च क्षणभङ्गं भावानां व्यासेधद्भिरस्माभिर्भिन्नदेशोत्पत्तेः प्रतिषेधान्न भिन्नदेशोत्पत्तिर्विभागः। शङ्कते—क्षणिकत्वाद्विभागस्येति। उत्पद्य हीन्द्रियसन्निकर्षाद्विभागेन स्वविषयं ज्ञानं जनयितव्यम्। न चैतावन्तं कालमसावस्ति क्षणिकत्वेनोत्पन्नापवर्गित्वादित्यर्थः। निराकरोति—न सामान्याभिव्यक्तीति। एतद्विभजते—पूर्वं तावदुत्पन्नो विभागः सामान्यं व्यनक्तीति। स्वकारणसमवायः सत्तासमवायो वा उत्पत्तिः। तद्विशिष्ट उत्पन्न इत्युच्यते। येषां सामान्य-

(१) 'भेदप्रत्ययनिमित्तानि' इति ख०। 'प्रत्ययभेदनिमित्तानि'—इति क ख-धृतपाठान्तरम्।

(२) अयमंशः क-पु० नास्ति।

(३) 'संयोगाद्ध द्व्यात्मकात्'—इति ख०।

## न्यायभाष्यम्

# आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः ॥ ५० ॥

मूलसेकादि परिकर्म फलं चोभयं वृक्षाश्रयम्, कर्म चेह शरीरे, फलं चामुत्र (१) इत्याश्रयव्यतिरेकादहेतुरिति ॥ ५० ॥

## न्यायवार्त्तिकम्

आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः। यच्च मूलसेकादि कर्म यच्च पर्णादि फलं तदुभयं वृक्षाश्रयम्। कर्म त्विह कर्मफलं चान्यत्रेति आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यसिद्धो दृष्टान्तः ॥ ५० ॥

## न्यायवार्त्तिकतात्पर्यटीका

ग्रहपुरःसरं विशेषज्ञानं, तन्मते न सामान्यं व्यनक्ति, तदुत्तरकालं च स्वप्रत्ययं जनयतीत्युक्तम्। एतदुक्तं भवति न वयं बौद्धा इव पूर्वापरकालमात्रावस्थितिलक्षणां क्षणिकतां विभागादीनामाचक्ष्महे, किं त्वाशुतरविनाशलक्षणां, सा च द्वित्रादिक्षणस्थायिनां चिरस्थायिभ्यो घटादिभ्यो व्यावृत्तात्मा शक्या वक्तुमिति ॥ ४९ ॥

देहाद्यतिरिक्तमात्मानं नित्यं परलोकिनमसन्तं मन्यमान आह—

आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः (सू. ५०)। मूलसेकफलोत्पादयोरेकवृक्षाश्रयत्वम्। कर्मणस्तु होमादेराश्रयः शरीरम्। न चामुष्मिकस्य स्वर्गादेः शरीरमाश्रयः तस्मिन्नष्टेऽस्य भावात्। तस्मादाश्रयव्यतिरेकात् स्वर्गादेर्वृक्षफलोत्पत्तिवदित्ययं दृष्टान्तः स्वर्गफलत्वे होमस्याहेतुरित्यर्थः ॥ ५० ॥

## वृत्तिः

प्रमितत्वात्। इदानीं पट उत्पन्न इदानीं पटो विनष्ट इति प्रत्ययात्; सतस्तु नोत्पत्तिसम्भवः, उत्पन्नस्य पुनरुत्पादप्रसङ्गात्। यद्यपि नाशस्य न तत्र हेतुत्वं तथाऽप्यनुत्पन्नभावस्य नाशायोगादुत्पादसाधकत्वेन नाश उक्तः ॥ ४९ ॥

असत उत्पत्तौ नियमो न स्यादित्यत आह—( बुद्धिसिद्धं तु तदसत् ) तत् कार्यम् असत् प्रागभावप्रतियोगि, 'बुद्धिसिद्धम्' बुद्ध्या विषयीकृतम्। तथा हि इह तन्तुषु पटो भविष्यतीति ज्ञात्वा कुविन्दः प्रवर्त्तते, न तु पटोऽस्तीति ज्ञात्वा, तथा सति सिद्धत्वेन ज्ञाते इच्छाभावात् प्रवृत्त्यनुपपत्तेः। सिकतादौ तु (२)पटो भविष्यतीति न ज्ञायते, किन्तु

(१) 'उत्पत्त्याश्रय'—इति वि०।

(२) 'तैलम्' इति ख०।

न्यायभाष्यम्

## प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥ ५१ ॥

प्रीतिरात्मप्रत्यक्षत्वादात्माश्रया, तदाश्रयमेव कर्म धर्मसंज्ञितं, धर्मस्यात्मगुणत्वात् तस्मादाश्रयव्यतिरेकानुपपत्तिरिति ॥ ५१ ॥

## न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात् ॥ ५२ ॥

पुत्रादि फलं निर्दिश्यते न प्रीतिः, 'ग्रामकामो यजेत' 'पुत्रकामो यजेते'ति तत्र यदुक्तं प्रीतिः फलमित्येतदयुक्तमिति ॥ ५२ ॥

न्यायवार्त्तिकम्

प्रीतेरात्माश्रयत्वादप्रतिषेधः इति । आश्रयव्यतिरेकोऽसिद्ध इति सूत्रार्थः यत्रैव कर्म तत्रैव कर्मफलमिति ॥ ५१ ॥

न (क) पुत्रस्त्रीपशुपरिच्छदहिरण्यान्नादि(१)फलनिर्देशात् । पुत्रादिफलत्वेन निर्दिश्यते न पुत्राद्यात्मनि वर्त्तत इति ॥ ५२ ॥

न्यायवार्त्तिकतात्पर्यटीका

अस्त्यात्मा स्वर्गोपभोगसमर्थः शरीरादिव्यतिरिक्तः कर्त्तेत्युपपादितमित्याशयवानाह—

प्रीतेरात्माश्रयत्वादप्रतिषेधः ( सू. ५१ ) । (ख) अस्तु स्वर्गाद्यात्माश्रयं, तथाऽप्यव्यापको हेतुः पुत्रादिफलेभ्यो निवृत्तेरिति । देशयति—

न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात् ( सू. ५२ ) । (ग) परिहरति—

वृत्तिः

न भविष्यतीति ज्ञायते एव । कुत इति चेत् ? अनुभवं पृच्छ । किञ्च त्वन्मतेऽपि कुतो न ज्ञायते ? तत्र पटाभावादिति चेत् कथमिदं निरणायि ? पटात् पूर्वं तन्तुसिकतयोस्तुल्यत्वात् । तन्तुत्वेनाश्रयतेति चेत् ? तन्तुत्वेन कारणतेत्येव स्यात्, प्रवृत्त्यनुरोधात् ॥ ५० ॥

नन्वस्तु हेतुफलभावस्तथापि वृक्षफलवदिति दृष्टान्तवैषम्यान्नादृष्टसिद्धिरित्याशयेन शङ्कते—( आश्रयव्यतिरेकाद् (घ) वृक्षफलवदित्यहेतुः ) प्राङ् निष्पत्तेर्वृक्षफलवदित्यहेतुः । कुतः ? आश्रयव्यतिरेकात्, येन कायेन कर्म कृतं तस्य नाशात् । वृक्षस्थले तु (२) तस्य वृक्षस्य सत्त्वात् सलिलसेकादिकं परिकर्मोपयुज्यते इत्यभिमानः ॥ ५१ ॥

(१) '-न्नादिषु'—इति क-ख-घृत-पाठान्तरम् । (२) 'तस्य' इति ल-पु० नास्ति ।
(क) वार्त्तिके मूलसूत्रतः पदानां क्रमविपर्ययो विशेषः । न्यायसूचीनिबन्धसम्मतः पाठो गृहीतः ।
(ख) ५१-सूत्रे अवतरणिकातिरिक्ता टीका नास्ति ।
(ग) ५२-सूत्रे अवतरणिकातिरिक्ता टीका नास्ति ।
(घ) वृत्तिकृन्मते सूत्रे उत्पत्तिपदं नास्तीति द्रष्टव्यम् । अयमेव पाठः साधीयस्तया प्रतिभाति ।

### न्यायभाष्यम्

## तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः ॥ ५३ ॥

पुत्रादिसम्बन्धात् फलं प्रीतिलक्षणमुत्पद्यते इति पुत्रादिषु फलवदुपचारः, यथान्ने प्राणशब्दो 'अन्नं वै प्राणाः' इति ॥ ५३ ॥

### न्यायवार्त्तिकम्

तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः। पुत्रादिसम्बन्धात् फलं प्रीतिर्भवति, तत्कारणत्वात् पुत्रादि फलशब्देनाभिधीयते, यथान्नसाधनाः प्राणाः, अन्नं वै (१)प्राणा इति। उपचारश्च प्राणाभावात् लोकप्रयुक्तवाक्यानुविधानेन क्रियत इति ॥ ५३ ॥

( इति फलपरीक्षाप्रकरणम् )

### न्यायवार्त्तिकतात्पर्यटीका

तत्संबन्धात्फलनिष्पत्तेस्तेषु फलवदुपचारः (सू. ५३)। स्वर्गोऽपि तावत् स्वर्गतया न काम्यते, किं तु भोग्यतया, एवं सति कैव कथा पुत्रादिषु। तेऽपि भोग्यतयैव काम्यन्ते, न तु स्वरूपं भोग्यमिति तत्साध्यं सुखं भोग्यम्। तस्मात् पुत्रादिसंबन्धात्तदुत्पत्तेः सुखोत्पत्तेः तेषु यथा फलशब्दप्रयोगस्तथा तेषु पुत्रादिष्वित्यर्थः। सूत्रार्थकथनेनैव भाष्यवार्त्तिके व्याख्याते ॥ ५३ ॥

### वृत्तिः

समाधत्ते—( प्रीतेरात्माश्रयत्वादप्रतिषेधः ) आश्रयव्यतिरेकादिति हेतुर्न युक्तः, प्रीतेः सुखस्य स्वर्गिशरीरावच्छेदेन जायमानस्यात्मवृत्तित्वाद् यागादिसामानाधिकरण्यादित्यर्थः ॥ ५२ ॥

क्वचित् सामानाधिकरण्यसम्भवेऽपि सर्वत्र न तथेति शङ्कते—( न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात् ) पुत्रादीनां (२)फलत्वेन निर्देशात्(२) सामानाधिकरण्यं न सम्भवतीति भावः ॥ ५३ ॥

(१) 'प्राणिनः प्राणा'—इति क-ख-धृतपाठान्तरम्।

(२) 'फलनिर्देशात्' इति भ०।

## न्यायभाष्यम्

फलानन्तरं दुःखमुद्दिष्टम्, उक्तं च 'बाधनालक्षणं दुःख'मिति। तत् किमिदं प्रत्यात्मवेदनीयस्य सर्वजन्तुप्रत्यक्षस्य सुखस्य प्रत्याख्यानम्, आहोस्विदन्यः कल्प इति ?

अन्य इत्याह। कथम् ? न वै सर्वलोकसाक्षिकं सुखं शक्यं प्रत्याख्यातुम्। अयं तु जन्ममरणप्रबन्धानुभवनिमित्ताद् दुःखान्निर्विण्णस्य दुःखं जिहासतो दुःखसंज्ञा-

## न्यायवार्त्तिकम्

फलानन्तरं दुःखमुद्दिष्टं (१) लक्षितं च—बाधनालक्षणं दुःखम् (क) इति। तत् किमिदं सर्वलोकसाक्षिकस्य सुखस्य (२) प्रत्याख्यानम् आहोस्विदन्यः कल्प इति। अन्य इत्याह। कथम् ? न वै सर्वलोकसाक्षिकं सुखं शक्यं प्रत्याख्यातुम्। अयन्तु जन्ममरणप्रबन्धानुभवनिमित्ताद् दुःखात् निर्विण्णस्य दुःखभावनोपदेशः। कथं नामायं सर्वं दुःखमिति भावयेत्

## न्यायवार्त्तिकतात्पर्यटीका

फलानन्तरं दुःखपरीक्षणम्। तत्रेयं परीक्षा भवतु दुःखं बाधनालक्षणमनुभूयमानम्। यत्पुनरिदं सुखं प्रत्यात्ममनुकूलवेदनीयं तत्कथं दुःखमनुभवविरोधात्। शरीरेन्द्रियबुद्धयश्च यदि दुःखहेतुतया दुःखं, कस्मात् सुखहेतुतया सुखमेव न भवन्ति ? सेयमतिभीरुता सकललोकयात्राविरोधिनी। यथाऽऽहुः—न हि मृगाः सन्तीति शालयो नोप्यन्ते। न हि भिक्षवः सन्तीति स्थाल्यो नाधिश्रीयन्त इति।

तस्मान्मांसार्थीव कण्टकानुद्धृत्य मांसमश्नन्नानर्थं कण्टकजन्यमाप्नोतीत्येवं प्रेक्षावान् दुःखमुद्धृत्येन्द्रियादिसाधनं सुखं भोक्ष्यते। सन्ति च विविधदुःखपरिवर्जनहेतवो दृष्टाः परिदृष्टसामर्थ्या अन्वयव्यतिरेकाभ्यामित्यभिप्रायवान् पूर्वपक्षी गुड़जिह्विकया संशयान इव पृच्छति—तत् किमिदमिति। सिद्धान्तिन उत्तरम्—अन्य इत्याह सूत्रकार इति। तेनैवाभिप्रायेण पूर्वपक्षी पृच्छति—कथम्। उत्तरम्—न वै सर्वलोकसाक्षिकमिति। अयं तु दुःखभावनोपदेशः किमर्थमित्यत आह भाष्यकारः—दुःखहानार्थः। किंभूतस्य दुःखहानमित्यत आह—जन्ममरणप्रबन्धस्य अनुभवः प्राप्तिः तन्निमित्ताद्, दुःखोपदेशपरिशीलनेन निर्विण्णस्य अलंप्रत्ययवतः, अत एव दुःखं जिहासत इति योजनीयम्। स्वाभिप्रायेण पूर्वपक्षी पृच्छति—

(१) 'उक्तं च' इति क-ख-धृतपाठान्तरम्।

(२) 'सर्वलोकस्य'—इति क-ख-धृतपाठान्तरम्।

(क) १ अ, १ आ, सू २१।

## न्यायभाष्यम्

भावनोपदेशो दुःखहानार्थ इति। कया युक्त्या? सर्वे खलु सत्त्वनिकायाः सर्वाण्युत्पत्तिस्थानानि सर्वः पुनर्भवो बाधनानुषक्तो दुःखसाहचर्याद्बाधनालक्षणं दुःखमित्युक्तमृषिभिः, दुःखसंज्ञाभावनमुपदिश्यते अत्र च हेतुरुपादीयते—

### विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः ॥ ५४ ॥

जन्म जायते इति शरीरेन्द्रियबुद्धयः शरीरादीनां (१) च संस्थानविशिष्टानां प्रादुर्भाव उत्पत्तिः। विविधा च बाधना, हीना मध्यमा उत्कृष्टा चेति। उत्कृष्टा नारकिणाम्, तिरश्चां तु मध्यमा, मनुष्याणां तु हीना, देवानां हीनतरा वीतरागाणां च। एवं सर्वमुत्पत्तिस्थानं विविधबाधनानुषक्तं पश्यतः सुखे तत्साधनेषु च शरीरेन्द्रिय-

## न्यायवार्त्तिकम्

भावयंश्च विरज्येत विरक्तो मुच्यते इति। कथं पुनरयं सर्वं दुःखमिति भावयति? सर्वे सत्त्वनिकायाः सर्वः पुनर्भवः सर्वमुत्पत्तिस्थानं दुःखसाहचर्याद् दुःखमित्युक्तमृषिभिः।

दुःखभावनमुपदिश्यते, तत्र च हेतुरुपादीयते—

विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिरिति। तत्र जायत इति जन्म शरीरेन्द्रियबुद्धयो व्यपदिश्यन्ते शरीरादीनां प्रादुर्भाव उत्पत्तिः, जन्मन उत्पत्तिः जन्मोत्पत्तिः।

## न्यायवार्त्तिकतात्पर्यटीका

कया युक्त्या? उत्तरम्—सर्वे खलु सत्त्वनिकाया इति। उत्पत्तिः सुखदुःखहेतुभूता विषयसंपत्तिः, तस्याः स्थानानि भुवनानि। आ सत्यलोकादा चावीचेरिति। एतदुक्तं भवति—यदि दुःखवर्जनेन शक्यते सुखमुपादातुं ततस्तादृशं सुखमनुकूलवेदनीयं कः प्रज्ञावान् प्रजह्यात्। न च तादृशमस्ति सुखं क्वचिदपि सर्वस्य दुःखाविनाभाविनः केवलस्योपादातुमशक्यत्वात्। न हि मधुविषसंपृक्तमन्नं विषमपहृत्य शक्यं मधुमात्रमुपादातुमिति। तस्मान्नेदं सुखस्य प्रत्याख्यानमपि तु सुख एव दुःखभावनमुपदिश्यते। अत्र हेतुरुपादीयते ऋषिणा—

विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः (सू. ५४)।

## वृत्तिः

यद्यपि पुत्रादीनामैहिकफलत्वात् (२)तत्राश्रयव्यतिरेकभावाच्छङ्कैव न, तथाऽपि यत्र जन्मान्तरीयधनादिकमपि फलं स्यात् तत्रापि नानुपपत्तिरित्याशयेनाह—(तत्सम्बन्धात्

(१) 'च' इति फ-भा-ग पु० नास्ति।

(२) 'तत्रान्वयव्यति'—इति ख०।

## न्यायभाष्यम्

बुद्धिषु दुःखसंज्ञा व्यवतिष्ठते। दुःखसंज्ञाव्यवस्थानात् सर्वलोकेष्वनभिरतिसंज्ञा भवति। अनभिरतिसंज्ञामुपासीनस्य सर्वलोकविषया तृष्णा विच्छिद्यते, तृष्णा-प्रहाणात्सर्वदुःखाद्विमुच्यते इति। यथा विषयोगात्पयो विषमिति बुध्यमानो नोपादत्ते, अनुपाददानो मरणदुःखं नाप्नोति ॥ ५४ ॥

दुःखोद्देशस्तु न सुखस्य प्रत्याख्यानम्, कस्मात् ?

### न सुखस्यान्तरालनिष्पत्तेः (१) ॥ ५५ ॥

न खल्वयं दुःखोद्देशः सुखस्य प्रत्याख्यानम्। कस्मात्? सुखस्यान्तराल-निष्पत्तेः। निष्पद्यते खलु बाधनान्तरालेषु सुखं प्रत्यात्मवेदनीयं शरीरिणां, तदशक्यं प्रत्याख्यातुमिति ॥ ५५ ॥

## न्यायवार्त्तिकम्

विविधा च बाधना हीना मध्यमोत्कृष्टा चेति। शेषं भाष्ये। अनेनाभिप्रायेण (क)दुःखोपदेशो न सुखं (२)प्रत्याख्यातुम् ॥ ५४ ॥

न सुखस्याप्यन्तराल(३)निष्पत्तेः। यस्माद्बाधनान्तराले सुखमुत्पद्यमानं प्रत्यक्ष-दृष्टमिति ॥ ५५ ॥

## न्यायवार्त्तिकतात्पर्यटीका

जन्मन उत्पत्तिः, सा दुःखमेव भावयितव्या विविधबाधनायोगादिति। ॥ ५४ ॥

कस्मात् पुनर्दुःखमेव स्वरूपतो न भवतीत्यत आह—

न सुखस्यान्तरालनिष्पत्तेः ( सू० ५५ )। न खल्वयं दुःखोद्देशो दुःखकथनं सुखस्य प्रत्याख्यानम् ॥ ५५ ॥

## वृत्तिः

फलनिष्पत्तेस्तेषु फलवदुपचारः ) तत्सम्बन्धात् पुत्रादिसम्बन्धात्, फलनिष्पत्तेः प्रीत्युत्पत्तेः, तेषु पुत्रादिषु फलवदुपचारः फलत्वेन व्यपदेशः, यथा 'अन्नं वै प्राणिनां प्राणा' इति ॥ ५४ ॥

समाप्तं फलपरीक्षाप्रकरणम् ॥ १२ ॥

---

(१) 'सुखस्याप्यन्तरालनिष्पत्तेः'—इति टि०।

(२) 'प्रत्याख्यातम्' इति ख०।

(३) -'निर्वृत्तेः'—इति क-ख-धृतपाठान्तरम्।

(क) क-वार्त्तिके 'दुःखो(द्दे)शो' इति मुद्रितम्।

## न्यायभाष्यम्

अथापि—

### बाधनाऽनिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ॥ ५६ ॥

सुखस्य, दुःखोद्देशेनेति प्रकरणात् पर्येषणं प्रार्थना विषयार्जनतृष्णा, पर्येषणस्य दोषो यदयं वेदयमानः प्रार्थयते (१) तच्चास्य प्रार्थितं न सम्पद्यते, सम्पद्य वा विपद्यते, न्यूनं वा सम्पद्यते, बहुप्रत्यनीकं वा सम्पद्यते इति एतस्मात्पर्येषणदोषान्नानाविधो मानसः सन्तापो भवति एवं वेदयतः पर्येषणदोषाद्बाधनाया अनिवृत्तिः। बाधनाऽनिवृत्तेर्दुःखसंज्ञाभावनमुपदिश्यते (२)। अनेन कारणेन दुःखं जन्म न तु सुखस्याभावादिति।

## न्यायवार्त्तिकम्

इतश्च—

बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः। सुखस्य दुःखोद्देशेनेति प्रकरणात् यस्मादयं वेदयन् इदं मे सुखसाधनमिदं मे दुःखसाधनमिति सुखसाधनमाप्तुं दुःखसाधनं हातुं

## न्यायवार्त्तिकतात्पर्यटीका

इतश्च दुःखसंज्ञाभावनं न सुखस्य प्रत्याख्यानं दुःखोद्देशेनेत्याह—

बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः (सू० ५६)। यस्मादिदं मे सुखसाधनमिति वेदयन् प्रार्थयते सुखसाधनम्। तच्च उक्ताद् बहुप्रकाराद्बाधनाहेतुरिति दुःखभाव-

## वृत्तिः

अथ क्रमप्राप्तं दुःखं परीक्षणीयं, तत्र च 'बाधनालक्षणं दुःखम्' इत्युक्तम्, तदर्थस्तु—दुःखत्वजातिमत्त्वमित्युक्तं, तच्च शरीरादौ दुःखेऽव्याप्तमित्याशङ्कयाह—(विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः) जननयोगाद् जन्म शरीरादिकं, तदुत्पत्तिस्तत्सम्बन्धः विविधबाधनायोगाद् दुःखमिति व्यपदिश्यते, न तु वास्तवमेव तद् दुःखम्। तथा च विविधदुःखानुषक्ततया हेयत्वार्थं दुःखमिति भावनीयमुपदिश्यते ॥ ५५ ॥

ननु दुःखभावनेन किं सुखं प्रत्याख्यायते, न चैतत् शक्यमत आह—(न सुखस्यान्तरालनिष्पत्तेः) दुःखानां मध्ये सुखस्याप्युत्पत्तेस्तत्प्रत्याख्यानस्याशक्यत्वात् ॥ ५६ ॥

---

(१) 'तत्र'—इति ग-ज-भा-फ०।

(२) 'उद्दिश्यते'—इति ग-ज-भा०।

## न्यायभाष्यम्

अथाप्येतदनूक्तम्—

"कामं कामयमानस्य यदा कामः (१) समृध्यति ।
अथैनमपरः कामः क्षिप्रमेव प्रबाधते ॥"

(२) "अपि चेदुदनेमि समन्ताद् (३) भूमिमिमां लभते सगवाश्वाम् । न स तेन धनेन धनैषी तृप्यति (४) किन्नु सुखं धनकामे ॥" इति ॥ ५६ ॥

## न्यायवार्त्तिकम्

प्रयतते सुखसाधनानां प्राप्तये चास्य यतमानस्यानेकविधस्तापोऽनुपप्लवते । ततस्तापानुभवात् सर्वं दुःखमित्युच्यते, न (५) सुखस्याभावादिति । अयमेव चार्थो मुनिना श्लोकेन वर्णितः—

कामं कामयमानस्य यदा कामः समृध्यति ।
अथैनमपरः कामः क्षिप्रमेव प्रबाधते ॥ इत्येवमादि ॥ ५६ ॥

## न्यायवार्त्तिकतात्पर्यटीका

नयोपदेशनमिति । कामं काम्यं कामयमानस्य यदा कामः समृध्यति संपन्नो भवति । अथानन्तरमेनं पुरुषमपरः काम इच्छा क्षिप्रं बाधते, स्वर्गादिप्राप्तावपि स्वाराज्यादि कामयते । एवं तत्प्राप्तौ प्राजापत्यादीति अस्येच्छा तदुपायप्रार्थनादिना दुःखेन प्रबाधत इत्यर्थः । समन्तादुदनेमि यथा भवति तथा भूमिं लभत इति योजना ॥ ५६ ॥

## वृत्तिः

ननु सुखदुःखसम्बन्धाविशेषात् सुखभावनमेव किन्नेष्यत इत्यत्राह—( बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ) दुःखभावनस्य न प्रतिषेधः, वेदयतः सुखसाधनत्वं जानतः पर्येषणदोषात् पर्येषणे सुखार्थं प्रवर्त्तने दोषात् । सुखार्थं प्रवर्तमानो हि

---

(१) 'समृध्यते' इति ल-ग-भा० ।

(२) 'अपि चेदुदनेमिं समन्ताद्' इति ल-ज० ।

(३) 'भूमिमालभते'—इति ग० । 'भूमिं लभते' इति फ० ।

(४) 'किन्तु'—इति वि-टि-ज० ।

(५) 'सुखस्याविर्भावादिति'—इति क-ख-धृतपाठान्तरम् ।

## न्यायभाष्यम्

# दुःखविकल्पे सुखाभिमानाच्च ॥ ५७ ॥

दुःखसंज्ञाभावनोपदेशः क्रियते। अयं खलु सुखसंवेदने व्यवस्थितः सुखं परमपुरुषार्थं मन्यते, न सुखादन्यन्निःश्रेयसमस्ति सुखे प्राप्ते चरितार्थः कृतकरणीयो भवति। मिथ्यासङ्कल्पात्सुखे तत्साधनेषु च विषयेषु संरज्यते, संरक्तः सुखाय घटते, घटमानस्यास्य जन्मजराव्याधिप्रायणानिष्टसंयोगेष्टवियोगप्रार्थितानुपपत्तिनिमित्तमनेकविधं यावद् दुःखमुत्पद्यते, तं दुःखविकल्पं सुखमित्यभिमन्यते। सुखाङ्गभूतं दुःखम्, न दुःखम् (१) अनासाद्य शक्यं सुखमवाप्तुं, तादर्थ्यात्सुखमेवेदमिति सुखसंज्ञोपहतप्रज्ञो जायस्व म्रियस्व (२) चेति संधावतीति संसारं

## न्यायवार्त्तिकम्

दुःखविकल्पे सुखाभिमानाच्च। यश्च सुखार्थं यतमानस्य दुःखविकल्पो भवति तं सुखाङ्गभावात् सुखमित्यभिमन्यमानः पुनस्तदुपादत्ते पुनः पुन (३) र्जायत (४) इति न संसारमतिवर्तते (४*) तस्याः सुखसंज्ञायाः प्रतिपक्ष उपदेशोऽयं (५) क्रियते सर्वं (५*) दुःखमिति।

## न्यायवार्त्तिकतात्पर्यटीका

नन्वयं यद्यप्यन्तराले सुखान्यनुभवति, तथाऽपि दुःखसंभेदमाकलयन् अनुपदिष्टोऽपि स्वयमेव निवर्त्स्यति कृतमस्य दुःखभावनोपदेशेनेत्यत आह—

दुःखविकल्पे सुखाभिमानाच्च (सू. ५७)। शास्त्रशिष्टानां विवेकिनां खलु विविधबाधनानुषङ्गाद् अनवयवेन सुखमात्रं दुःखमेवेति विनिश्चयोऽक्षिपत्रकल्पा हि ते। तद्द यथेषीकतूलसंपर्कादप्यक्षिपत्रं दूयते, न गात्रावयवान्तराणि, तथा मृदुचित्ततया विवेकिनो दूयन्ते, अविवेकिनस्तु प्रणयकलहकुपितकुरङ्गशावलोचनाङ्गनाऽलक्तकरसार्द्रपादपल्लवपातमपि शिरसि रहसि सुखमभिमन्यमाना घनपुलककञ्चुकाञ्चिततनवः सान्द्रानन्दाश्रुप्लुतनयना निर्वृण्वन्तीति तान् प्रत्ययमुपदेशोऽर्थवानित्यर्थः। जायस्व म्रियस्व चेति संधावतीति।

(१) 'अनापाद्य'—इति ख-ग-ज०।
(२) 'सन्धावेति' इति ख-ग-झ०।
(३) '-निवर्त्तते' इति ख०।
(४) 'न संसारमभिवर्तते'—इति क-ख-धृतपाठान्तरम्।
(५) 'क्रियत इति सर्वं' इति ख०।

## न्यायभाष्यम्

नातिवर्त्तते। तदस्याः सुखसंज्ञायाः प्रतिपक्षो दुःखसंज्ञाभावनमुपदिश्यते, दुःखानुसङ्गाद् दुःखं जन्मेति, न सुखस्याभावात्।

यद्येवं कस्माद् दुःखं जन्मेति नोच्यते ? सोऽयमेवं वाच्ये यदेवमाह दुःखमेव जन्मेति तेन सुखाभावं ज्ञापयतीति जन्म विनिग्रहार्थीयो वै खल्वयमेवशब्दः। कथम् ? न दुःखं जन्म स्वरूपतः, किं तु दुःखोपचारात्; एवं सुखमपीति एतदनेनैव (१) निर्वर्त्यते न तु दुःखमेव जन्मेति ॥ ५७ ॥

## न्यायवार्त्तिकम्

यद्येवं कस्माद् दुःखं जन्मेति नोच्यते ? सोऽयमेवं वक्तव्ये यदाह दुःखमेवेति तेन सुखाभावं ज्ञापयति। यदपि तदन्तराले सुखमुपजायते तदपि दुःखमेव दुःखानुषङ्गात्, नाभावादिति। जन्मविनिग्रहार्थीयो वै खल्वयमेव शब्दः—जन्मनोऽनेन विनिग्रहं शास्ति सर्वं दुःखमिति भावयन् दुःखसाधनानि नोपादत्ते, अनुपाददानो विमुच्यते इति ॥ ५७ ॥

( इति दुःखपरीक्षाप्रकरणम् )

## न्यायवार्त्तिकतात्पर्यटीका

पुनर्जायते पुनर्म्रियते जनित्वा म्रियते मृत्वा जायते तदिदं संधावनव्यापारप्रचय इत्यर्थः।

चोदयति—कस्माद् दुःखं जन्मेति नोच्यत इति। यदि दुःखभावनोपदेशो जन्मनि एवं सत्येवकारः किमर्थ इत्यर्थः। परिहरति—जन्मविनिग्रहार्थीय इति। विनिग्रहो विनिवृत्तिः स एवार्थः प्रवर्तत इति जन्मविनिग्रहार्थीयः। यथा च मत्वर्थीय इति। एतदुक्तं भवति—जन्म दुःखमेवेति भावयितव्यं नात्र मनागपि सुखबुद्धिः कर्तव्या (२) अनेकानर्थपरंपरायाम् अपवर्गप्रत्यूहप्रसङ्गादिति ॥ ५७ ॥

## वृत्तिः

अर्जनपालनादौ विविधाभिर्बाधनाभिरुपतप्यतेऽतो दुःखभावनं वैराग्यहेतुतयोपदिश्यते ॥ ५७ ॥

---

(१) 'निवर्त्त्यते' इति ज०। 'वर्त्तते' इति टि०।
(२) 'अनेकार्थपरम्परःपातेन' इति क–तात्पर्यघृतपाठान्तरम्

## न्यायभाष्यम्

(१) दुःखोद्देशानन्तरमपवर्गः, स प्रत्याख्यायते—

### ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ॥ ५८ ॥

ऋणानुबन्धान्नास्त्यपवर्गः—"जायमानो ह वै ब्राह्मणस्त्रिभि (२) र्ऋणै (३) र्ऋणवान् जायते, ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य" (क) इति ऋणानि, तेषामनुबन्धः स्वकर्मभिः सम्बन्धः, कर्मसम्बन्धवचनात् "जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ चे"ति "जरया ह (४) वा एष तस्मात् (५) सत्राद्वि-मुच्यते मृत्युना ह वे"ति' ऋणानुबन्धादपवर्गानुष्ठानकालो नास्तीत्यपवर्गाभावः।

## न्यायवार्त्तिकम्

दुःखोद्देशानन्तरमपवर्गः (६) स प्रत्याख्यायते—

ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः इत्यनेन सूत्रेण। ऋणानुबन्धान्नास्त्यपवर्गः। शेषं भाष्ये। अनुबन्धः सदा करणीयता, नायमृणानुबन्धात् कदाचित् मुच्यते जन्मप्रभृति यावत्

## न्यायवार्त्तिकतात्पर्यटीका

दुःखोद्देशानन्तरमपवर्गः उद्दिष्टो लक्षितश्चेति शेषः। स प्रत्याख्यायते—

ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः (सू० ५८)। तद्व्याचष्टे भाष्यकारः। ऋणानुबन्धादिति। अस्ति हि—"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोहेन मोक्षमिच्छन् व्रजत्यधः" ॥ ऋणत्रयापाकरणेनैव वयःसमाप्तेर्मोक्षनिवेशक्षणो नास्तीत्यप-

## वृत्तिः

ननु दुःखमनुभवतः स्वत एव निवृत्तिसम्भवात् दुःखभावनोपदेशो व्यर्थ इत्यत आह (दुःखविकल्पे सुखाभिमानाच्च)—दुःखस्य विविधः कल्पो यत्र तादृशे प्रतिपिद्ध-हिंसाभोजनमैथुनादौ प्रवृत्तिर्मा भूदित्ययमुपदेश इति भावः ॥ ५८ ॥

समाप्तं दुःखपरीक्षाप्रकरणम् ॥ १३ ॥

---

(१) 'दुःखोपदेशानन्तरम्' इति ल-ग-भा०।
(२) 'ऋणैः' इति नास्ति टि०।
(३) 'ऋणवान्' इति ल-ग-ज-भा०।
(४) 'वा' इति नास्ति ल-ग-ज-भा०।
(५) 'सत्राद्' इति नास्ति टि०।
(६) 'सम्प्रत्याख्यायते' इति ख०।

## न्यायभाष्यम्

क्लेशानुबन्धान्नास्त्यपवर्गः क्लेशानुबद्ध (१) एवायं म्रियते, क्लेशानुबद्धश्च जायते, नास्य क्लेशानुबन्धविच्छेदो गृह्यते।

प्रवृत्त्यनुबन्धान्नास्त्यपवर्गः—जन्म प्रभृत्ययं यावत्प्रायणं वाग्बुद्धिशरीरारम्भेणाविमुक्तो गृह्यते, तत्र यदुक्तं 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग' इति, तदनुपपन्नमिति ॥ ५८ ॥

अत्राभिधीयते। यत्तावदृणानुबन्धादिति ऋणैरिव ऋणैरिति—

**प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ॥ ५९ ॥**

ऋणैरिति नायं प्रधानशब्दः। यत्र खल्वेकः प्रत्यादेयं ददाति, द्वितीयश्च प्रतिदेयं गृह्णाति तत्रास्य दृष्टत्वात् प्रधानमृणशब्दः। न चैतदिहोपपद्यते, प्रधानशब्दा-

## न्यायवार्त्तिकम्

प्रायणमिति। क्लेशानुबन्धादपवर्गो नास्ति—क्लेशानुबद्ध एवायं जायते, क्लेशानुबद्ध एवायं म्रियते इति। प्रवृत्त्यनुबन्धादपवर्गो नास्ति—न कर्म करोति ॥ ५८ ॥

यत्तावदृणानुबन्धादिति—

प्रधानशब्देनानुपपत्तेर्गुण(२)शब्देनानुवादो निन्दाप्रशंसोपपत्तेः इति। (क)ऋणेति नायं प्रधानशब्दः प्रत्यादेयदान-प्रतिदेयग्रहणासम्भवात्। यत्र खलु एकः

## न्यायवार्त्तिकतात्पर्यटीका

वर्गाभाव इत्यर्थः। क्लेशानुबन्धान्नास्त्यपवर्गः। नानुच्छिन्ननिदानः संसारः शक्य उच्छेत्तुमित्यर्थः। प्रवृत्त्यनुबन्धादित्यस्यापीयमेव व्याख्या ॥ ५८ ॥

एवं पूर्वपक्षयित्वा सिद्धान्तमुपक्रमते—अत्राभिधीयते यत्तावदृणानुबन्धादिति। जायमान इत्यस्य प्रधानार्थतानुपपत्त्या गुणशब्दत्वं साधयितुं दृष्टान्तलाभाय ऋणशब्दस्य प्रथमं गुणशब्दत्वमाह—प्रधानशब्दानुपपत्तेरिति।

प्रधा—त्तेः ( सू० ५९ )। तद्व्याचष्टे—ऋणैरिति। नायं प्रधानशब्द इति।

(१) 'एवासौ' इति टि०।
(२) '-शब्देनायमर्थवादो'—इति क-खधृतपाठान्तरम्।
(क) क-ख-वार्त्तिकपुस्तकयोः 'ऋणेति' इत्ययमंशो'ऽधिक'तया पादटीकायां मुद्रापितः। भाष्ये 'ऋणै'रिति।

## न्यायभाष्यम्

नुपपत्तेः, गुणशब्देनायमनुवाद ऋणैरिव ऋणैरिति। (क) प्रयुक्तोपमं चैतद् (१) यथाऽग्निर्माणवक इति—अन्यत्र दृष्टश्चायमृणशब्द इह प्रयुज्यते, यथाऽग्निशब्दो माणवके। कथं गुणशब्देनानुवादः? निन्दाप्रशंसोपपत्तेः। कर्मलोपे ऋणीव ऋणादानान्निन्द्यते, कर्मानुष्ठाने च ऋणीव ऋणदानात्प्रशस्यते स एवोपमार्थ इति।

## न्यायवार्त्तिकम्

प्रत्यादेयं ददाति इतरः प्रतिदेयं गृह्णाति तत्रायमृणशब्दः प्रधानं भवति, अन्यत्र भाक्त इति। तस्माद् गुणशब्देनायमनुवाद इति। यथा अग्निर्माणवक इति। तत्राग्निशब्दो दहनादिसमर्थे तेजोविशेषे वर्तते, स तत्र वर्तमानः तत्सामान्यादतथाभूते माणवके प्रयुज्यते 'अग्निर्माणवक' इति। न पुनरग्निशब्दो माणवकसमानाधिकरणो दहनादिसमर्थं माणवकं प्रतिपादयति, अपि तु येऽग्नेः पिङ्गलपाटलत्वादयो धर्माः तत्सम्बन्धिनं माणवकं प्रतिपादयति, तद्द्वारकश्च प्रयुज्यमानोऽयं शब्दो गुणोपकरणत्वाद् गौणो भवति। तथा च ऋणशब्दः। (२) अप्रयुक्तोपमञ्चेदं वाक्यम् 'ऋणवान् जायते' इति। उपमाऽत्र लुप्ता द्रष्टव्या, ऋणवानिव जायत इति क उपमानार्थः? अस्वातन्त्र्यम्; ऋणवान् यथा अस्वतन्त्रः एवमयं जायमानः कर्मसु अस्वतन्त्रो वर्तत इति। जायमान इति चायं गुणशब्द एव, न मुख्यः सम्भवति। न हि मातृतः कुमारे जायमाने लोहितपाणिपादास्येऽध्ययनादिकर्मोपपत्तिरिति अतो गृहस्थे जायमाने इति। किं पुनर्गृहस्थस्य जायमानेन कुमारेण

## न्यायवार्त्तिकतात्पर्यटीका

ऋणवानिवास्वतन्त्रस्तेषु तेषु कर्मसु नाधिकारीति निन्दा। तदभावे तु स्वतन्त्र इति प्रशंसा। एवं जायमान इति गुणशब्दो न मुख्य इति। कस्मात् पुनर्न

## वृत्तिः

अथ क्रमप्राप्ततयाऽपवर्गः परीक्षणीयः, तत्र च तदर्थकप्रवृत्तिकालाभावात्तदभाव इति पूर्वपक्षयति—( ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ) ऋणाद्यनुबन्धादपवर्गानुष्ठान-कालाभावादपवर्गाभावः स्यात्। तथा च श्रूयते—"जायमानो ह वै ब्राह्मणस्त्रिभि-र्ऋणैर्ऋणवान् जायते, ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः" इति। ऋषिभ्यः ऋषिऋणेभ्यः ब्रह्मचर्येण मुच्यते। देवेभ्यो देवऋणेभ्यो यज्ञेन मुच्यते, प्रजयाऽपत्येन, पितृभ्यः पितृणेभ्यो मुच्यते। ऋणापाकरणेनैव जीवनापगमः, तथा च

(१) 'यथा' इति ज-पु० नास्ति।

(२) 'प्रयुक्तोपमं चेदम्' इति ख०।

(क) 'प्रयुक्तोपमम्' इति सकलादर्शपुस्तकानुसारेण मुद्रितम्। न्यायवार्त्तिके तु 'अप्रयुक्तोपमम्' इति दृश्यते। क-पुस्तके तु अप्रयुक्तोपममिति वार्त्तिकानुसारेण मुद्रितम्।

## न्यायभाष्यम्

जायमान इति गुणशब्दो विपर्ययेऽनधिकारात्। जायमानो ह वै ब्राह्मण इति (१) च गुणशब्दो गृहस्थः सम्पद्यमानो जायमान इति ; यदायं गृहस्थो जायते तदा कर्मभिरधिक्रियते मातृतो (२) जायमानस्यानधिकारात्। यदा तु मातृतो जायते कुमारो न तदा कर्मभिरधिक्रियते अर्थिनः शक्तस्य चाधिकारात्। अर्थिनः कर्मभिरधिकारः (३) कर्मविधौ कामसंयोगस्मृतेः 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्येवमादि। शक्तस्य च (३*) प्रवृत्तिसम्भवात् (४) शक्तस्य कर्मभिरधिकारः प्रवृत्तिसम्भवात्। (४*) शक्तः खलु विहिते कर्मणि प्रवर्त्तते नेतर इति। उभयाभावस्तु प्रधानशब्दार्थे। मातृतो जायमाने कुमारे उभयमर्थिता शक्तिश्च न भवतीति।

## न्यायवार्त्तिकम्

सामान्यम् ? क्रियासम्बन्धः अग्निहोत्रादिहवनक्रियासम्बन्धसामान्याद् गृहस्थो जायत इति। यथा मातृतः कुमारको जायमानः शरीरादिभिः सम्बध्यते एवमग्निहोत्रहवनादिक्रियासम्बन्धसामान्येन जायत इति। कस्मात् ? शक्तस्यार्थिनश्च कर्मभिरधिकारात्, शक्तश्चार्थी च कर्मभिरधिक्रियते। मातृतः कुमारके जायमाने न शक्तिः न चार्थितेति, उभयं तु गृहस्थे जायमाने, तस्माद् गृहस्थो जायमानोऽभिधीयत इति।

## न्यायवार्त्तिकतात्पर्यटीका

मुख्य इत्यत आह—मातृतो जातमात्रस्यैवानधिकारात्। कस्मादनधिकार इत्यत आह—अर्थिनः शक्तस्य चाधिकारात्। कस्मादर्थिन इत्यत आह—कर्मविधौ अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादौ कामसंयोगश्रुतेः। न च बालकः सुखदुःखप्राप्तिपरिहारकामोऽपि विवेकेन स्वर्गपुत्रपश्वन्नादि कामयत इति। शक्तस्य च प्रवृत्तीति। न ह्यशकनीयमर्थमशक्तं प्रति

## वृत्तिः

श्रूयते 'तदेतत् सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च, जरया ह वा एष तस्माद्विमुच्यते मृत्युना च' इति। ऋणापाकरणमन्तरेण च न तत्र प्रवृत्तिः। तथा च स्मर्यते—

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥" (क)

(१) 'च-शब्दो' ल-ग-ज-भा०।
(२) 'जातमात्रस्या-' इति टि०।
(३) अयमंशः टि-पु० नास्ति।
(४) अयमंशः टि-पु० नास्ति।
(क) मनुसं० ६ अ: श्लो: ३५।

## न्यायभाष्यम्

न भिद्यते च लौकिकाद्वाक्याद्वैदिकं वाक्यं प्रेक्षापूर्वकारिपुरुषप्रणीतत्वेन। तत्र (१) लौकिकस्तावदपरीक्षकोऽपि न जातमात्रं कुमारकमेवं ब्रूयादधीष्व यजस्व ब्रह्मचर्यं चरेति। कुत (२) एवम् ऋषिरुपपन्नानवद्यवादी उपदेशार्थेन प्रयुक्त उपदिशति? न खलु वै (३) नर्त्तकोऽन्धेषु प्रवर्त्तते न (४) गायको बधिरेष्विति।

उपदिष्टार्थविज्ञानं चोपदेशविषयः। यश्चोपदिष्टमर्थं विजानाति तं प्रत्युपदेशः क्रियते, न चैतदस्ति जायमानकुमारक इति। गार्हस्थ्यलिङ्गं च मन्त्रब्राह्मणं कर्माभिवदति। यच्च मन्त्रब्राह्मणं कर्माभिवदति तत्पत्नीसम्बन्धादिना गार्हस्थ्यलिङ्गेनोपपन्नम्, तस्माद् (५) गृहस्थोऽयं जायमानोऽभिधीयते इति।

अर्थित्वस्य (६) चाविपरिणामे जरामर्यवादोपपत्तिः।

## न्यायवार्त्तिकम्

अर्थित्वस्याविपरिणामे जरामर्यवादोपपत्तिः—यच्चेदं ब्राह्मणमाजरसं कर्मभिः सम्बन्धं शास्ति तदन्यथा सम्भवतीति अर्थित्वस्याविपरिणामे जरामर्यवादोपपत्तिः (७) यदार्थित्वाविपरिणामः (७*) यदार्थित्वं (८) विपरिणतं भवति (८*) तदानेन अग्निहोत्रं सन्न्यसनीयम्।

## न्यायवार्त्तिकतात्पर्यटीका

वेद आप्तोपदेशरूपो विधातुमर्हति। न च बालकः शक्तोऽविद्वत्त्वादिना। अत एव तिर्यग्-देवर्षिपङ्गुशूद्रत्र्यार्षेयाणामनधिकारः सामर्थ्याभावात्। न केवलं वैदिकोऽयमीदृशो व्यवहारोऽपि तु लौकिकोऽपीत्याह—न भिद्यते चायं लौकिकात्। तद् व्याचष्टे—लौकिकस्तावदिति। उपपन्नानवद्यवादीति। उपपन्नं प्रमाणेन अनवद्यं पुनरुक्तदोषेण अनपेक्षितमुपदेष्टव्यं यत्र भवति तदित्यर्थः। न्यायप्राप्तमिममर्थं लिङ्गदर्शनमुपोद्वलयतीत्याह—गार्हस्थ्यलिङ्गं च मन्त्रब्राह्मणं कर्माभिवदतीति। गार्हस्थ्यस्य लिङ्गं पत्नी यस्मिन् कर्मणि तत्तथोक्तम्। "पत्न्य-वेक्षितमाज्यं भवति" "पत्न्य उद्गायन्ति" "क्षौमे वसानावग्नी आदधीयाता"मित्येवमादि।

तदनेन गार्हस्थ्यात् पूर्वावस्था तावदृणानुबद्धा न भवतीत्युक्तम्। संप्रत्युत्तरावस्थापि न ऋणानुबद्धेत्याह—यदा चार्थिनोऽधिकारस्तदा अर्थित्वस्याविपरिणामे जरामर्यवादोपपत्तिः। तेन यदुक्तमृणापाकरणेन वयःपर्यवसानान्नास्ति मोक्षावसरस्तदपाकृतं भवति।

---

(१) 'लौकिकस्तु वेदपरीक्षकोऽपि' इति टि०। (२) 'एष ऋषिः' इति ख-ग-भा०। (३) 'निवर्त्तकोऽन्धेषु' इति टि०। (४) 'गायनो' इति फ-ज-ग०। (५) 'गृहस्थो जायमानो' इति टि०। (६) 'चापरिणामे'—इति वि-टि०। (७) 'यदार्थित्वविपरिणामः' इति ख०। (८) 'यदा ह्यर्थित्वं विपरीतं भवति'—इति क-ख-धृतपाठान्तरम्।

## न्यायभाष्यम्

यावच्चास्य फलेनार्थित्वं न विपरिणमते न निवर्तते तावदनेन कर्मानुष्ठेयमित्युपपद्यते जरामर्यवादस्तं प्रतीति। जरया ह वेत्यायुषस्तुरीयस्य चतुर्थस्य प्रव्रज्यायुक्तस्य वचनं 'जरया ह वा एष एतस्माद्विमुच्यते' इति। आयुषस्तुरीयं चतुर्थं प्रव्रज्यायुक्तं जरेत्युच्यते, तत्र हि प्रव्रज्या विधीयते; (१)अत्यन्तजरासंयोगे जरया ह वेत्यनर्थकम्। 'अशक्तो विमुच्यते' इत्येतदपि नोपपद्यते, स्वयमशक्तस्य वाह्यां शक्तिमाह—'अन्तेवासी वा जुहुयाद् ब्रह्मणा स परिक्रीतः, क्षीरहोता वा जहुयाद्धनेन स परिक्रीत' इति।

## न्यायवार्त्तिकम्

आयुषस्तुरीयभागं प्रव्रज्यायुक्तमाह जरेति। यावज्जीवसंयोगे हि जरया ह वा इत्यनर्थकं (२)यस्मात् स्वयमशक्तस्य बाह्या शक्तिर्विहिता सत्यर्थित्वे अन्येन हवनं शास्ति। यदा पुनरर्थित्वं विपरिणतं तदा सन्न्यासो विधीयत इति। कस्मात् पुनरेतदेवमुच्यते सत्यर्थित्वे अग्निहोत्रहवनमिति? कर्मविधौ कामसंयोगश्रुतेः—यस्मात् सर्वस्मिन् कर्मणि कामविधिः श्रूयते स्वर्गकाम इति (३) यथोपदिष्टार्थः विद्वांश्चोपदेशविषयः, यश्चोपदिष्टमर्थं विजानाति तं प्रत्युपदेशः क्रियते न गायनो बधिरेषु प्रवर्तते न नर्त्तकोऽन्धेषु, न चोपदेशविज्ञानं बालकेष्वस्ति तस्मान्न तं (४)प्रत्युपदिश्यत इति। न भिद्यते च लौकिकात्—लौकिकोऽपि तावदपरीक्षको न जातमात्रं कुमारकमेवं ब्रूयाद् अधीष्व यजस्व ब्रह्मचर्यं चरेति। कुत एवमृषिरुपपन्नानवद्यवादी ब्रूयादिति।

## न्यायवार्त्तिकतात्पर्यटीका

अविपरिणामपदार्थव्याख्यानं न निवर्तत इति। तुरीयस्येत्यस्य व्याख्यानं चतुर्थस्येति। प्रायेण पञ्चसप्ततिवर्षेष्वतिवाहितेषु अर्थतृष्णा तनूभवति। अत्यन्तसंयोगे तु जरया ह वेत्यनर्थकम्। मृत्युना वेत्यनेनैव सिद्धेरिति शेषः। यद्युच्यते अशक्ततोपलक्षणमेतज्जरया ह वा मृत्युना वेति, तेन कस्यानर्थक्यमित्यत आह—अशक्तो विमुच्यत इत्येतदपि नोपपद्यत इति।

वार्त्तिकम्—यावज्जीवसंयोगे हि जरया ह वेत्यनर्थकमिति। मृत्युना वेत्यनेनैव गतार्थत्वादित्यनुक्त्वा भाष्योक्ता द्वितीया युक्तिरभिहिता वार्त्तिककृता—यस्मात्स्वयमशक्तस्येत्यनेन।

---

(१) 'अत्यन्तसंयोगे' इति वि-टि०।

(२) 'यस्मादयमंश'—इति ख०।

(३) 'यथोपदिष्टार्थम्' इति ख०।

(४) 'प्रत्युपदेशः' इति ख०।

## न्यायभाष्यम्

अथापि विहितं वानूद्येत कामाद्वार्थः परिकल्प्येत ? विहितानुवचनं न्याय्यमिति। ऋणवानिवास्वतन्त्रो गृहस्थः कर्मसु प्रवर्त्तते इत्युपपन्नं वाक्यस्य

## न्यायवार्त्तिकम्

अथापि विहितं वा अनूद्येत (१) कामाद्वा अर्थः कल्प्येतेति। विहितानुवचनं न्याय्यम्, तत्रानुपपन्नप्रमाणकस्यार्थस्याभिधानं कामतः प्रकल्प्येत। यो ह्यर्थः प्रमाणतो (२)न सम्भवति(२*) तस्य यदभिधानं तत्र कामतः प्रकल्पनं सम्भवति यथा जायमानः कुमारकः ऋणवान् भवतीति। उपपन्नप्रमाणकस्याभिधानमनुवचनम्, यथा जायमानशब्दो (३) गृहस्थवचन इति। कथमवगम्यते गृहस्थ इति ? यज्ञसाधनत्वात्, यस्मात् यजमानो यज्ञाङ्गं भवति। साधने तु प्रयत्नव्यापारो दृष्टः न फले यथा पाकसाधनेषु काष्ठादिषु न पाके न लोष्टादिषु (४) असाधनेषु। शेषं भाष्ये ॥ ५९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

यज्ञसाधनत्वादिति। यज्ञकर्तृत्वादित्यर्थः। एतदेव स्फुटयति। यस्माद्यजमानो यज्ञाङ्गं भवति। यथाऽऽह भगवान् जैमिनिः—'पुरुषश्च कर्मार्थत्वा'दिति।

स्यादेतत्। यद्यपि गृहस्थस्य यज्ञादिविधानान्तराणि सन्ति तथाऽपि जायमानस्त्रिभिर्ऋणैरिति वाक्यं बालस्यापि यज्ञादि विधास्यतीत्येतां शङ्कां विमर्शपूर्वमपाकरोति—अथापि विहितं वा अनूद्येत कामाद्वाऽर्थः प्रकल्प्येतेति। न तावज्जायमानो ह वै इति वाक्ये विधिविभक्तिरस्ति, तेन सिद्धानुवादः स्वरसतः प्रतीयते। यदि तु तस्यार्थस्य सिद्धिर्वाक्यान्तराद्वा प्रमाणान्तराद्वा कथमपि न कल्पेत, ततो 'वचनानि त्वपूर्वत्वा'दिति न्यायाद्विधित्वमस्य कल्प्येत; सन्ति तु शतशस्तदर्थविधायकानि वाक्यानि विभक्तिमन्तीति को जात्वस्य स्वेच्छामात्रेण विधित्वं कल्पयेत् ? तस्माद्विहितानुवचनमेव न्याय्यमिति जायमानशब्दो जघन्यवृत्तिरिति युक्तमुत्पश्यामः। स्यादेतत्। जायमानशब्दोऽनुपचरितार्थः स्वभावतो मातुरुदराद्विभागमाह। स कथंचिदनुवादानुरोधेन जघन्यवृत्तिः कल्पनीयः। तद्वरं मुख्यार्थानुरोधेन विधानमेव

## वृत्तिः

एवं क्लेशानुबन्धादपि, पुरुषो हि रागादिभिस्तत्तत्कर्माण्यारभमाणः क्लेशानुबद्ध एव दृश्यते, तत् कथमपवर्गः ? एवं प्रवृत्त्यनुबन्धादपि, पुरुषो हि वाग्बुद्धिशरीरैस्तत्तत्कर्माणि आरभमाणो धर्माधर्मौ यावज्जीवमुपार्जयन् कथमपवृज्यतामिति ॥ ५९ ॥

(१) 'कामार्थत्वादर्थः' इति क-ख-धृतपाठान्तरम्।
(२) 'यावदभिधानं न सम्भवति' इति ख०।
(३) 'गृहस्थ इति' इति ख०।
(४) 'साधनेषु' इति ख०।

### न्यायभाष्यम्

सामर्थ्यम्। फलस्य (१) हि साधनानि प्रयत्नविषयो न फलं, तानि सम्पन्नानि फलाय (२) कल्पन्ते। विहितं च जायमानम्, विधीयते च (३)जायमानं, तेन यः सम्बद्ध्यते सोऽयं जायमान इति।

प्रत्यक्षविधानाभावादिति चेन्न, प्रतिषेधस्यापि प्रत्यक्षविधानाभावादिति। प्रत्यक्षतो विधीयते गार्हस्थ्यं ब्राह्मणेन, यदि चाश्रमान्तरमभविष्यत्तदपि (४)व्यधास्यत

### न्यायवार्त्तिकतात्पर्यटीका

कल्प्यताम्। एवं सति श्रुतिरनुरोधिता भवति। अस्ति च बालकस्यापि फलोत्पादनयोग्यता, तदात्मनः फलं प्रति समवायिकारणत्वात्। तेन यद्यपि जातमात्रस्य फलसाधनानुष्ठानयोग्यता नास्ति, तथाऽपि फलोत्पादं प्रति योग्यताऽस्ति, फलेन च प्रयोजनं न तत्साधनेनेत्यत आह—फलस्य साधनानि हि प्रयत्नविषयो न फलमिति। अयमभिसंधिः—विधिर्हि स्वव्यापारे कर्तृतया पुरुषं नियुङ्क्ते, प्रयत्नश्चास्य व्यापारः संभवति विषये न शक्यो निवर्त्तयितुमिति स्वविषयमपेक्षते। न चास्य साक्षात्फलं विषयो भवितुमर्हति, उद्देश्यतामात्रेण तु भवेत्। नैतावता प्रयत्नोऽस्य निर्वृणोति यावदयं साक्षादभिनिर्वर्तनीयं न प्राप्नोति। तदुपायस्य साक्षादभिनिर्वर्त्तनीय इति फलोद्देशप्रवृत्तस्य पुरुषप्रयत्नस्य निर्वृणोति यावदुपायो विषयः। न च बालकस्य तदुपायमविदुषस्तत्र सामर्थ्यमस्ति। असमर्थश्चाकर्त्ता कथमात्मानं प्रयत्नेन व्याप्नुयात्। अव्याप्नुवंश्च कथमधिकारीति जायमानशब्दो जघन्यवृत्तिरेव न्याय्य इति सिद्धम्। विहितं च जायमानमिति ऋणवाक्यात् प्राक्, विधीयते च ऋणवाक्यादूर्ध्वमित्यर्थः।

यदुक्तं तत्र हि प्रव्रज्या विधीयत इति, तदमृष्यमाण आह—प्रत्यक्षविधानाभावादिति चेत्। शङ्कां निराकरोति—न प्रतिषेधस्यापि विधानाभावात्। शङ्कां विभजते—प्रत्यक्षत इति। परमाप्तो हि भगवानीश्वरोऽनुकम्पया भूतोपदेशाय प्रवृत्तो यद्गार्हस्थ्यमेवाश्रममुपदिशति ततोऽवगच्छामो न सन्त्याश्रमान्तराणि भूतेभ्यो हितानीत्यर्थः। अत

### वृत्तिः

समाधत्ते—( प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः )। जायमान इत्याद्यनुवादो (५)हि न प्रधानशब्दः, न हि जायमानः कर्मण्यधिक्रियते; तथा च

(१) 'हि' इति फ-पुः नास्ति। (२) 'कल्प्यन्ते' इति ग०। (३) 'जायमानम्' इति भाः पुः नास्ति। (४) 'व्याधास्यत्' इति ख-ग-भा०। (५) 'हि प्रधान्' इति भ०।

## न्यायभाष्यम्

प्रत्यक्षतः, प्रत्यक्षविधानाभावान्नास्त्याश्रमान्तरमिति। न, प्रतिषेधस्यापि प्रत्यक्षतो विधानाभावात्। न प्रतिषेधोऽपि वै ब्राह्मणेन प्रत्यक्षतो विधीयते—न सन्त्याश्रमान्तराणि एक एव गृहस्थाश्रम इति प्रतिषेधस्य प्रत्यक्षतोऽश्रवणादयुक्तमेतदिति।

अधिकाराच्च विधानं विद्यान्तरवत्। यथा शास्त्रान्तराणि स्वे स्वेऽधिकारे प्रत्यक्षतो विधायकानि (१) नार्थान्तराभावाद् एवमिदं ब्राह्मणं गृहस्थशास्त्रं स्वेऽधिकारे प्रत्यक्षतो विधायकं नाश्रमान्तराणामभावादिति।

## न्यायवार्त्तिकतात्पर्यटीका

एवाहुः ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद् गार्हस्थ्यस्येति। निराकरणं विभजते—न प्रतिषेधस्येति। स्मृतीतिहासपुराणानि तावदविवादं विदधति चातुराश्रम्यमुपलभ्यन्ते, यदि प्रत्यक्षया श्रुत्या प्रतिषिध्यन्ते ततस्तद्विरोधेनौदुम्बरीसर्ववेष्टनवत् तन्नाप्रमाणानि स्युः। न च तत्प्रतिषेधः श्रुतेः साक्षादवगम्यते। तस्मात् स्मृत्यादिविहितं चातुराश्रम्यमप्रतिषिद्धं श्रुत्या न शक्यं परित्यक्तुमित्यर्थः।

न चाविधानेन तत्प्रतिषेधानुमानमित्याह—अधिकाराच्चेति। गार्हस्थ्योपदेशस्याधिकारात्तस्यैव विधानं नाश्रमान्तरस्य, न त्वाश्रमान्तराभावात्। न हि व्याकरणं शब्दं व्युत्पादयत् प्रमाणाद्यभावमाक्षिपति।

अपि च मा भूत् प्रत्यक्षविधानं, श्रुतौ ससाधनापवर्गाभिधानानि चातुराश्रम्याभिधानानि च प्रत्यक्षाण्युपलभ्यन्ते वचनानि, तान्यपूर्वत्वाद्विधानानि अपवर्गस्य ससाधनस्य चातुराश्रम्यस्य

## वृत्तिः

भाष्यम्—'यदा तु मातृतो जायते कुमारको न तदा कर्मभिरधिक्रियते, अर्थिनः शक्तस्य चाधिकारात्' इति। 'जायमान' इत्यनेन को वा व्यावर्तनीयः? न ह्यजातस्य प्रसक्तिरस्ति, येनासौ व्यावर्त्तनीयः, तथा च भाष्यं—'जायमान इति गुणशब्दो विपर्ययेऽनधिकारात्' इति। तथा च जायमान इत्यनेनोपनीत उच्यते, तस्य ब्रह्मचर्यादावधिकारात्। अग्निहोत्रादौ च गृहस्थस्याधिकारः, 'क्षौमे(२)वसाना वाधीयताम्' इति श्रुतेः।

एवमृणशब्दोऽपि न मुख्यः, न ह्यत्र प्रत्यादेयं कश्चन ददाति; परन्तु ऋणापाकरणवदावश्यकत्वख्यापनाय तथोक्तम्। लाक्षणिकशब्दप्रयोगे बीजमाह—निन्दाप्रशंसोपपत्तेः। ऋणानपाकरणतदपाकरणाभ्यामिवाग्निहोत्राद्यकरणतत्करणाभ्यां निन्दाप्रशंसे उपपद्येते।

(१) 'मानान्तराभावात्' इति वि०।
(२) 'वसानौ वाधीयताम्' इति भ०।

## न्यायभाष्यम्

ऋग्ब्राह्मणं चापवर्गाभिधाय्यभिधीयते। ऋचश्च ब्राह्मणानि चापवर्गाभिवादीनि भवन्ति। ऋचश्च तावत्—

"कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो (१) द्रविणमिच्छमानाः।
अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः॥"(२)

"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः।
परेण नाकं निहितं गुहायां विभ्राजते यद् यतयो विशन्ति॥"(३)

"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥"(४)

अथ ब्राह्मणानि—

"त्रयो धर्मस्कन्धाः—यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासीति तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्वे एवैते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति।"(५)

"एतमेव प्रव्राजिनो (६)लोकमिच्छन्तः प्रव्रजन्ती"ति।

## न्यायवार्त्तिकतात्पर्यटीका

च भविष्यन्तीत्याह—ऋग् ब्राह्मणं चापवर्गाभिधाय्यभिधीयत इति। मृत्युमिति प्रेत्यभावमित्यर्थः। परं कर्मभ्य इति कर्मपरित्यागमपवर्गसाधनं सूचयति। अमृतत्वमिति चापवर्गो दर्शितः। सूचितं कर्मत्यागमपवर्गसाधनं श्रुत्यन्तरेण विशदयति। न कर्मणा न प्रजयेति। परेण नाकमिति। नाकमित्यविद्यामुपलक्षयति। अविद्यातः परमित्यर्थः। निहितं गुहायामिति लौकिकप्रमाणागोचरत्वं दर्शयति। तमसः परस्तादिति। अविद्या तमः तस्य परस्तात्। आदित्यवर्णमिति। नित्यप्रकाशमित्यर्थः। तदनेनेश्वरप्रणिधानस्यापवर्गोपायत्वमुक्तम्।

ऋच उदाहृत्य ब्राह्मणमुदाहरति—अथ ब्राह्मणानीति। 'यज्ञ' इत्यादिना गृहस्थाश्रमो दर्शितः, 'तप एवे'ति वानप्रस्थाश्रमः, ब्रह्मचारीति ब्रह्मचर्याश्रमः। एषामभ्युदयलक्षणं फलमाह—सर्वे एवैत इति। चतुर्थाश्रममाह—ब्रह्मसंस्थ इति। तथा क्रतुरिति। क्रतुः

(१) 'द्रविणमीहमानाः' इति क्वचिद् दृश्यते।
(२) वाजसनेय सं० ३१।१८।
(३) तैत्तिरीय-आरण्यके ३।१२।७।
(४) श्वेताश्वतरश्रुती ३।८।
(५) छान्दोग्योपनिषदि—( प्र० २। ख० २३ )।
(६) 'लोकमभीप्सन्तः' इति ल-ज-ग-भा०।

## न्यायभाष्यम्

अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति (१) तत्क्रतुर्भवति (२) यत्क्रतुर्भवति (३) तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते।"

इति कर्मभिः संसरणमुक्त्वा प्रकृतमन्यदुपदिशन्ति 'इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो (४)भवति न तस्य प्राणा उत्क्रामन्ति (५) इहैव (६)समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीति'।

तत्र यदुक्तमृणानुबन्धादपवर्गाभाव इत्येतदयुक्तमिति। 'ये चत्वारः पथयो देवयाना' इति च चातुराश्रम्यश्रुतेरैकाश्रम्यानुपपत्तिः ॥ ५९ ॥

फलार्थिनश्चेदं ब्राह्मणं 'जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ चे'ति कथम्?

## समारोपणादात्मन्यप्रतिषेधः ॥ ६० ॥

## न्यायवार्त्तिकम्

कथं पुनरिदं गम्यते फलार्थिन एतद् ब्राह्मणं भवतीति?—अधिकाराच्च विधानं विद्यान्तरवत्।

समारोपणादात्मन्यप्रतिषेधः। यस्मान्निवृत्ते फलार्थित्वे समारोपणं विधीयते ॥ ६० ॥

## न्यायवार्त्तिकतात्पर्यटीका

संकल्पः। कामयमानो य आसीत् स एव अथाकामयमानो भवति। 'अकामयमानः' कामं परिहरन् तत्परिहारसिद्धौ। (क) सोऽकामयंस्तस्य व्याख्यानं—निष्काम इति। आत्मकाम इति कैवल्योपेतात्मकामः। तत्प्राप्त्या आप्तकामो भवति। न तस्य प्राणा इति। शाश्वतो भवतीत्यर्थः। प्रकृतमुपसंहरति—तत्र यदुक्तमिति। अपरामपि चातुराश्रम्याभिधायिनीं श्रुतिमाह—ये चत्वार इति ॥ ५९ ॥

इतश्च फलार्थिन एष जरामर्यवाद इत्याह—फलार्थिनश्चेति। पृष्ट्वा सूत्रं पठति—कथम्। समारोपणादात्मन्यप्रतिषेधः (सू० ६०)॥ आत्मनि अग्नीनां समारोपणाद्

(१) 'तथाक्रतुः' इति ख-ग-ज-झा०।
(२) 'यथाक्रतुः' इति ख-ग-ज-झा०।
(३) अत्र तथा-इति अधिकम् झा०।
(४) 'भवति' इति फ-पु नास्ति।
(५) अयमंशः क-पु नास्ति।
(६) 'समवनीयन्ते' इति ज०।
(क) 'योऽकामः तस्य' इति पाठः समाप्यते।

## न्यायभाष्यम्

'प्राजापत्यामिष्टिं निरूप्य तस्यां (१) सर्ववेदसं हुत्वा आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजे'दिति श्रूयते। तेन विजानीमः (२) प्रजावित्तलोकैषणाभ्यो व्युत्थितस्य निवृत्ते फलार्थित्वे समारोपणं विधीयते इति।

एवं च ब्राह्मणानि (क) 'सोऽन्यद् व्रतमुपाकरिष्यमाणो याज्ञवल्क्यो मैत्रेयीमिति होवाच प्रव्रजिष्यन्वा अरे अहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्या सहान्तं करवाणीति। अथाप्युक्तानुशासनासि मैत्रेयि एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजेति' ॥ ६० ॥

## न्यायवार्त्तिकतात्पर्यटीका

ऋणानुबन्धेनापवर्गस्य अप्रतिषेधः। तदनेन च्छलेन प्रत्यक्षविधानं प्रव्रज्याया अपि दर्शितम्। एषणाव्युत्थितस्य विपर्यस्तबुद्धेः अलमाभिरेषणाभिरनर्थहेतुभिरिति कृतबुद्धेः, अत एव निवृत्ते फलार्थित्वे समारोपणमात्मन्यग्नीनां विधीयत इति।

एवं ब्राह्मणानीति यदैषणाभ्यो व्युत्थितस्य प्रव्रज्याविधानं तदा तदभिधायीनि ब्राह्मणान्युपपन्नानीत्यर्थः ॥ ६० ॥

## वृत्तिः

न चानुष्ठानकालाभावः 'जरया विमुच्यते' इत्युक्तेः। न च जरयाऽशक्तिरुपलभ्यते, 'अन्तेवासी वा जुहुयात् ब्रह्मणा हि स परिक्रीतः' इत्यादिनाऽशक्तस्याऽपि विधानात्। तस्मादायुषश्चतुर्थभागो जरेत्युच्यते, किं च जरामर्यवादः कामनाभिप्रायेण। तथा च भाष्यम्—अर्थित्वस्य चापरिणामे जरामर्यवादोपपत्तिः' इति। अर्थित्वं कामना, तदपरिणामे तदनाशे कर्मकरणाभिप्रायेण जरामर्यवाद उपपद्यते ॥ ६० ॥

ननु काम्यानां कामनाविरहेण त्यागसम्भवेऽपि नित्यानां कथं त्यागः? श्रूयते हि —'यावज्जीवमग्निहोत्रं जुहुयात्' इति। तत्राह—( समारोपणादात्मन्यप्रतिषेधः ) अपवर्ग-प्रतिषेधो न युक्तः, अग्नीनामात्मनि समारोपणविधानात्। (३)तथा च श्रूयते—

(१) 'सार्ववेदसं' इति ख-ग-ज-झा०।
(२) 'प्रजावित्तलोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीति इति भ०।
(३) 'तथाच' इति नास्ति भ०।

(क) क-पुस्तके 'सोऽन्यद्' इत्यादि 'प्रवव्राजे'त्यन्तग्रन्थस्थाने 'अन्यद्व्रतमुपाकरिष्यन्' मैत्रेयीतिहोवाच याज्ञवल्क्यः प्रव्रजिष्यन् वा अरे अहमस्मात् स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणी'ति।

अथापि 'इत्युक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वमितिहोक्त्वा याज्ञवल्क्यो विजहारे'ति'' इति पाठो गृहीतः। अयमेव साधीयान् सम्भाव्यते। तद्बीजन्तु तत्रैव ( वङ्गीयसाहित्यपरिषत्प्रकाशित न्यायदर्शने चतुर्थखण्डे पत्राङ्कः २९५ ) द्रष्टव्यम्।

## न्यायभाष्यम्

### पात्रचयान्तानुपपत्तेश्च फलाभावः ॥ ६१ ॥

जरामर्ये च कर्मण्यविशेषेण कल्प्यमाने सर्वस्य पात्रचयान्तानि कर्माणीति प्रसज्यते, तत्रैषणाव्युत्थानं न श्रूयेत। "एतद्ध स्म वै तत्पूर्वे (१) ब्राह्मणा अनूचाना(१) विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीति"। एषणाभ्यश्च व्युत्थितस्य पात्रचयान्तानि कर्माणि नोपपद्यन्ते इति नाविशेषेण कर्त्तुः (२)प्रयोजकं फलं भवतीति।

## न्यायवार्त्तिकम्

पात्रचयान्तानुपपत्तेश्च फलाभावः। यस्मान्निवृत्तेऽर्थित्वे प्रव्रजितानां पात्रचयान्तानि

## न्यायवार्त्तिकतात्पर्यटीका

पात्रचयान्तानुपपत्तेश्च फलाभावः ( सू० ६१ )॥ प्रवृत्ते खलु यजमाने यज्ञपात्राणि यजमानस्य शरीरे यथावयवं निधायान्त्येष्टिः क्रियते। तत्र जरामर्यें कर्मण्यविशेषेण कल्प्यमाने सर्वस्य पात्रचयान्तानि कर्माणीति प्रसज्येत, मरणपर्यन्तानि कर्माणीति प्रसज्येतेत्यर्थः। नन्विष्यत एव पात्रचयान्तत्वं कर्मणामित्यत आह—तत्रैषणाव्युत्थानमिति। तस्मान्नाविशेषेण कर्त्तुः प्रयोजकं फलं भवतीति। फलाभाव इत्यस्य सूत्रावयवस्याविशेषेण फलस्य कर्तृप्रयोजनकत्वाभाव इत्यर्थः। तदनेनैषणाव्युत्थानश्रुतिविरोधो दर्शितः।

तदेवं चातुराश्रम्यस्य श्रुतिरुक्ता। संप्रति स्मृत्यादयोऽपि चातुराश्रम्यस्योपदेशकाः

## वृत्तिः

'प्राजापत्यामिष्टिं निरूप्य तस्यां (३)सार्ववेदसं हुत्वाऽऽत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेत्' इति। अत एव—'चत्वारः पथयो देवयाना' इति चातुराश्रम्यश्रुतिरपि सङ्गच्छते ॥ ६१ ॥

नन्वग्निहोत्रस्याप्रतिबन्धकत्वेऽपि तत्फलं स्वर्ग एवापवर्गप्रतिबन्धकः स्यादत्राह—( पात्रचयान्तानुपपत्तेश्च फलाभावः )।

---

(१) 'ब्राह्मणा अनूचाना' इति क-ज-पु० नास्ति।

(२) 'प्रयोजकफलं' ख-ज-ग०।

(३) 'सर्ववेदसं दत्त्वात्मन्यग्नीन्' इति भ०।

## न्यायभाष्यम्

चातुराश्रम्यविधानाच्चेतिहास-पुराण-धर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः। तदप्रमाणमिति चेद् न, प्रमाणेन प्रामाण्याभ्यनुज्ञानात्—प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते 'ते वा खल्वेते अथर्वाङ्गिरस एतदितिहासपुराणमभ्यवदन्नितिहासपुराणं पञ्चमं वेदानां वेद इति'। तस्मादयुक्तमेतदप्रामाण्यमिति। अप्रामाण्ये च धर्मशास्त्रस्य प्राणभृतां व्यवहारलोपाल्लोकोच्छेदप्रसङ्गः।

## न्यायवार्त्तिकम्

कर्माणि न क्रियन्ते। यदि चेदं ब्राह्मणमविशेषेण प्रवर्तते तेन सर्वत्र पात्रचयान्तानि कर्माणि प्रसज्यन्त इति। शेषं भाष्ये ॥ ६१ ॥

## न्यायवार्त्तिकतात्पर्यटीका

सन्तीत्याह—चातुराश्रम्यविधानाच्चेति। शङ्कते—तदप्रमाणमिति चेत्। जगन्निर्मातुः परमकारुणिकस्य सर्वज्ञस्याप्तभवतः परमेश्वरस्यागमो भवतु प्रमाणमाप्तोक्तत्वात्। मनुव्यासादीनां त्वाप्तत्वानिश्चयात्कथं तत्प्रणीतानां प्रामाण्यनिश्चय इत्यर्थः। उत्तरं 'न प्रमाणेने'ति। स्यादेतत्। भवतु वेदेनाभ्यनुज्ञानादितिहासपुराणप्रामाण्यं, धर्मशास्त्राणां तु मन्वादिप्रणीतानां कुतः प्रामाण्यनिश्चय इत्यत आह—अप्रामाण्ये चेति। सर्वजनपरिग्रहात् तेषामपि प्रामाण्यमित्यर्थः। बुद्धादिस्मृतयस्तु वेदनिन्दितैर्म्लेच्छादिभिः परिगृहीता न

## वृत्तिः

ज्ञानिनः फलस्य स्वर्गस्याभावः। अग्निहोत्रं हि पात्रचयान्तम्। पात्राणि अग्निहोत्रपात्राणि, तेषां चयः प्रेतस्य यजमानस्याङ्गेषु विन्यासः—(क)मुखे घृतपूर्णां स्रुचमिति क्रमेण, भिक्षोस्तदनुपपत्तेः, तेन तत्परित्यागात्; अग्निहोत्रफलाभावेऽपि ज्योतिष्टोमगङ्गास्नानादि(१)फलानां प्रतिबन्धकत्वं स्यादतो हेत्वन्तरसमुच्चयाय चकार उपन्यस्तः। तथा च प्रारब्धातिरिक्तकर्मणां ज्ञानादेव क्षय इत्याशयः।

---

(१) 'हिंसादिफलानां' इति भ०।

(क) 'शिरसि कपालानि इडां दक्षिणायां च' इति कात्यायनसूत्रम्। "आज्यपूर्णां दक्षिणायां स्रुचं मुखे स्थापयेत्। तथायमाज्यपूर्णं स्रुवं नासिकायाम्। पादयोः प्रागग्रामधरारणिम्, तथायामुत्तरारणिमुरसि। सव्यपार्श्वे दक्षिणाग्रं शूर्पम्, दक्षिणपार्श्वे दक्षिणाग्रं चमसम्, ऊरुद्वयमध्ये उलूखलं मुसलमधोमुखम्, तत्रैव च नमोविलीकां(?) च स्थापयेत्" इति कर्मप्रदीपः।

## न्यायभाष्यम्

द्रष्टृप्रवक्तृसामाण्याच्चाप्रामान्यानुपपत्तिः। ये एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च, ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति।

विषयव्यवस्थानाच्च यथाविषयं प्रामाण्यम्। अन्यो मन्त्रब्राह्मणस्य विषयोऽन्यश्चेतिहासपुराणधर्मशास्त्राणामिति। यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, लोकव्यवहारव्यवस्थानं धर्मशास्त्रस्य विषयः। तत्रैकेन (१)न सर्वं व्यवस्थाप्यते इति यथाविषयमेतानि प्रमाणानीन्द्रियादिवदिति ॥ ६१ ॥

## न्यायवार्त्तिकतात्पर्यटीका

त्वार्यैरिति न ताः प्रमाणं भवितुमर्हन्तीत्यर्थः। द्रष्टृवक्तृसामान्याच्चाप्रामाण्यानुपपत्तिः। य एव वेदस्य द्रष्टारोऽनुष्ठातारश्च तदर्थस्य, त एवेतिहासादीनां प्रवक्तारः प्राचेतसकृष्णद्वैपायनमनुप्रभृतयः। अपि च वैदिकानि कर्माणि स्मार्तामितिकर्तव्यतामपेक्षन्ते, स्मार्तानि च वैदिकानि मन्त्रादीनीति। सर्वमेतदप्रामाण्ये धर्मशास्त्राणां नोपपद्यते। यद्यपि च मन्वादयोऽपि धर्मज्ञानवैराग्यैश्वर्यशालितया अनुभूयाप्युपदिशन्तीति संभवति, तथाऽपि वेदमूलकत्वमेवेतिहासपुराणादीनां युक्तम्। तथा हि—"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः। स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥" इत्यादिभिः स्ववचनप्रपञ्चैः आत्मा (२)बोद्धा वेद एवार्पितस्तैरिति। अथायमितिहासादिगोचरोऽर्थः कस्मात् प्रत्यक्षप्रतीतेन वेदेन नोच्यत इति तदनभिधानादवगच्छामो नूनमयमनभिमतो वेदानां कर्तुरिति निराकृतोऽप्ययं पुनर्निराक्रियते दार्ढ्यार्थं विषयव्यवस्थानाच्चेत्यनेन ॥ ६१ ॥

## वृत्तिः

श्रूयते हि—

'तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति,' एवम् 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'। (मुण्डकोपनिषत्)

स्मर्यते च—

'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन' इति।

इत्थं च कामनाशून्यस्य प्रजानुत्पादोऽपि नापवर्गविरोधी। तथा च श्रूयते—'एतद्ध स्म वै पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां

(१) 'न'—इति ज-ग पु० नास्ति।

(२) 'बद्धा' इति ख०।

## न्यायभाष्यम्

यत्पुनरेतत् क्लेशानुबन्धस्याविच्छेदादिति—

**सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः ॥ ६२ ॥**

यथा सुषुप्तस्य (१)खलु स्वप्नादर्शने रागानुबन्धः सुखदुःखानुबन्धश्च विच्छिद्यते तथापवर्गेऽपीति। एतच्च ब्रह्मविदो मुक्तस्यात्मनो रूपमुदाहरन्तीति ॥ ६२ ॥

## न्यायवार्त्तिकम्

यत्पुनरेतत् क्लेशसन्ततेरविच्छेदादिति ?

सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः। यथा सुषुप्तस्य स्वप्नादर्शने क्लेशानुबन्धो विच्छिद्यते सुखदुःखसाधनानुबन्धश्च तथा मुक्तस्यापीति, तच्च योगिनो मुक्तस्य रूपमुदाहरन्तीति ॥ ६२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

यदप्युक्तं क्लेशानुबन्धस्याविच्छेदादिति तद् दूषयति—

सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः ( सू. ६२ ) ॥ तद् व्याचष्टे—सुषुप्तस्य खल्विति। लोकसिद्धतया सुषुप्तावस्थोदाहृता। महाप्रलयावस्थायामपि क्लेशमुक्ता एवात्मानः, केवलमसौ न लोकसिद्धेति नोदाहृता। एतावांस्तु मुक्तावस्थायां विशेषः—यदस्यां क्लेशवासनाऽपि नास्ति। सुषुप्तावस्थायां प्रलयावस्थायां च क्लेशविच्छेदेऽपि तद्वासनाऽस्तीति ॥६२ ॥

## वृत्तिः

नोऽयमात्मा(क) लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्यं चरन्ति' इति।

अन्ये तु फलाभावः फलस्य मुमुक्षून् प्रति अग्निहोत्रादौ प्रयोजकत्वाभावः, तथा सति भिक्षूणामपि पात्रचयान्तं स्यादित्यर्थ इत्याहुः ॥ ६२ ॥

क्लेशानुबन्धं दूषयति—( सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः। )

स्वप्नादर्शनकाले सुषुप्तस्य यथा हेत्वभावेन दुःखाभावस्तथाऽपवर्गेऽपि रागाद्यभावेन दुःखाभावः स्यात् ॥ ६३ ॥

---

(१) 'तु' इति वि०।

(क) 'अयं लोक' इति भाष्यधृतपाठो युक्तः।

न्यायभाष्यम्

यदपि प्रवृत्त्यनुबन्धादिति—

## न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ॥ ६३ ॥

प्रक्षीणेषु रागद्वेषमोहेषु प्रवृत्तिर्न प्रतिसन्धानाय। प्रतिसन्धिस्तु पूर्वजन्मनिवृत्तौ पुनर्जन्म, तच्चादृष्टकारितं, तस्यां प्रहीणायां पूर्वजन्माभावे जन्मान्तराभावोऽप्रतिसन्धानमपवर्गः।

कर्मवैफल्यप्रसङ्ग इति चेद् न, कर्मविपाकप्रतिसंवेदनस्याप्रत्याख्यानात्। पूर्वजन्मनिवृत्तौ पुनर्जन्म न भवतीत्युच्यते, न तु कर्मविपाकप्रतिसंवेदनं प्रत्याख्यायते, सर्वाणि पूर्वकर्माणि ह्यन्ते जन्मनि विपच्यन्त इति ॥ ६३ ॥

न्यायवार्त्तिकम्

यदपि प्रवृत्त्यनुबन्धादिति—

न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य। विद्यमाना प्रवृत्तिः क्लेशमन्तरेण प्रतिसन्धानाय न भवतीति धर्माधर्मकारणं न भवतीति यावदुक्तं स्यात्। प्रतिसन्धिस्तु पूर्वजन्मनिवृत्तौ पुनर्जन्म, तच्च तृष्णाकारितम्। एतच्चोक्तं 'वीतरागजन्मादर्शना'दिति सूत्रे। 'कर्मवैफल्यप्रसङ्ग इति चेत् न, कर्मविपाकप्रतिसंवेदनस्याप्रत्याख्यानात्'—न ब्रूमो विद्यमाने कर्मणि मुच्यत इति, अपि तु कर्माणि अन्ते जन्मनि विपच्यन्ते ॥ ६३ ॥

न्यायवार्त्तिकतात्पर्यटीका

यदपि प्रवृत्त्यनुबन्धादिति तत्राह—

न प्रवृत्तिः प्रतिसंधानाय हीनक्लेशस्य ( सू ६३ ) देहिनः(क)। तद् व्याचष्टे—क्षीणेषु रागद्वेषमोहेषु सत्यपि न प्रवृत्तिः स्वप्रतिसंधानाय। उपपादितमिदमस्माभिर्यथा दोषतुषावनद्धाः कर्मतण्डुला जन्माङ्कुराय कल्पन्ते न केवला इत्यर्थः। शङ्कते—कर्मवैफल्येति। वैफल्ये शास्त्रस्य कर्मणां फलसाधनताप्रतिपादकस्याप्रामाण्यप्रसङ्ग इति भावः। निराकरोति—न कर्मविपाकेति। विपाकः फलं तस्य प्रतिसंवेदनं भोगः ॥ ६३ ॥

वृत्तिः

प्रवृत्त्यनुबन्धादपवर्गाभावं दूषयति—( न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य )।

(क) सूत्रान्तिमपदेनास्यान्वयः।

## न्यायभाष्यम्

### न क्लेशसन्ततेः स्वाभाविकत्वात् ॥ ६४ ॥

नोपपद्यते क्लेशानुबन्धविच्छेदः, कस्मात् ? क्लेशसन्ततेः स्वाभाविकत्वात् । अनादिरियं क्लेशसन्ततिः, न चानादिः शक्य उच्छेत्तुमिति ॥ ६४ ॥

अत्र कश्चित् परीहारमाह—

### प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविकेऽप्यनित्यत्वम् ॥ ६५ ॥

यथाऽनादिः प्रागुत्पत्तेरभाव उत्पन्नेन भावेन निवर्त्यते, एवं स्वाभाविकी क्लेशसन्ततिरनित्येति ॥ ६५ ॥

## न्यायवार्त्तिकम्

न क्लेशसन्ततेः स्वाभाविकत्वात् । नोपपद्येत क्लेशसन्ततेर्विच्छेदः । कुतः ? क्लेशसन्ततेः स्वाभाविकत्वात्—अनादिरियं क्लेशसन्ततिः स्वभावतः प्रवृत्ता, न चासावुच्छेत्तुं शक्येति ॥ ६४ ॥

प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविकेऽप्यनित्यत्वम् । यथा प्रागुत्पत्तेरभावोऽनादिरथ च भावेन (१) निवर्त्यते एवमनादिः क्लेशसन्ततिरतत्त्वज्ञस्य तत्त्वज्ञानेन विरोत्स्यत इति ॥ ६५ ॥

## न्यायवार्त्तिकतात्पर्यटीका

पूर्वपक्षवाद्याह—

न क्लेशसंततेः स्वाभाविकत्वात् ( सू ६४ ) ॥ सिद्धान्त्येकदेशी ब्रूते—

प्रागु—त्वम् ( सू ६५ ) ॥ दध्यादेरुत्पत्तेः प्राक् क्षीरादिषु योऽभावस्तस्यानित्यत्ववदिति योजना ॥ ६५ ॥

## वृत्तिः

क्लिश्यन्तेऽनेनेति क्लेशो रागादिः, तद्विरहिणो या प्रवृत्तिः सा प्रतिसन्धानाय प्रतिबन्धाय न भवति, धर्माधर्मौ न जनयतीत्यर्थः ॥ ६४ ॥

क्लेशाभावमसहमानः शङ्कते—( न क्लेशसन्ततेः स्वाभाविकत्वात् ) । क्लेशसन्ततेरुच्छेदो न युक्तः स्वाभाविकत्वात् ॥ ६५ ॥

(१) 'विरुध्यते'—इति क्रा-खधृतपाठान्तरम् ।

## न्यायभाष्यम्

अपर आह—

**अणुश्यामताऽनित्यत्ववद्वा ॥ ६६ ॥**

यथाऽनादिरणुश्यामता अथ चाग्निसंयोगादनित्या, तथा क्लेशसन्ततिरपीति। सतः खलु धर्मो नित्यत्वमनित्यत्वं च, (१) तत्त्वं भावे (२) अभावे भाक्तमिति। अनादिरणुश्यामतेति हेत्वभावादयुक्तम्। अनुत्पत्तिधर्मकमनित्यमिति नात्र हेतुरस्तीति ॥ ६६ ॥

## न्यायवार्त्तिकम्

अणुश्यामताऽनित्ववद्वा यथा अणोः श्यामता अनादिश्च अनित्या च एवं क्लेशसन्ततिरपीति। सतः खलु धर्मो नित्यत्वमनित्यत्वं चेति नित्यानित्यत्वे अवधारयद्भिरुक्तं, तत्तु अभावे भाक्तमिति। का पुनरिह भक्तिः? नित्यमकारणम्, अकारणश्च प्रागभावः, अनित्यं भूत्वा न भवति। न च (३) प्रागभावो भावे सति(३) भवति एतत् सामान्यम्। यत्पुनरेतद् अनादिरणुश्यामतेति, हेत्वभावादयुक्तम्—अनुत्पत्तिधर्मकमनित्यं नात्र हेतुरस्ति इति ॥ ६६ ॥

## न्यायवार्त्तिकतात्पर्यटीका

अपरस्त्वेकदेशी भावमेव दृष्टान्तयतीत्याह—

अणुश्यामताऽनित्यत्ववद्वा ( सू ६६ )॥ यदेतच्छ्यामं रूपं तदन्नस्येत्यागमः, पार्थिवानां परमाणूनां श्यामतामनादिमाह—अन्नपदेन मृदोऽभिधानादिति भावः।

अत्र प्रथममेकदेशिनं दूषयति—सतः खल्विति। द्वितीयमेकदेशिनं दूषयति—अनादिरणुश्यामतेति हेत्वभावान्न युक्तम्। अणुश्यामता कार्या पृथिवीरूपत्वात् लोहितादिवदिति प्रत्युतानित्यताहेतुरस्ति। पुरुषप्रयत्नजलोहितादिरूपवैलक्षण्येन त्वस्याप्रयत्नपूर्वकत्वमात्रेणानादित्वाभिधानमिति नागमविरोधः ॥ ६६ ॥

## वृत्तिः

एकदेशी समाधत्ते—( प्रागुत्पत्तेरभावानित्यत्ववत् स्वाभाविकेऽप्यनित्यत्वम्। अणुश्यामतानित्यत्ववद् वा )।

प्रागुत्पत्तेरभावानित्यत्ववत् प्रागभावानित्यत्ववत् अनादेः परमाणुश्यामताया विनाशवद्वा तद्विनाशः ॥ ६६ ॥ ६७ ॥

---

(१) 'तत्त्वभावे भावे' इति ज०।

(२) 'अभावे'—इति नास्ति टि०।

(३) 'प्रागभावाभावे सति'—इति ख०।

## न्यायभाष्यम्

अयं तु समाधिः—

### न, सङ्कल्पनिमित्तत्वाच्च रागादीनाम् ॥ ६७ ॥

कर्मनिमित्तत्वादितरेतरनिमित्तत्वाच्चेति समुच्चयः। मिथ्यासङ्कल्पेभ्यो रञ्जनीय-कोपनीय-मोहनीयेभ्यो राग-द्वेष-मोहा उत्पद्यन्ते, कर्म च सत्त्वनिकायनिर्वर्तकं नैयमिकान् रागद्वेषमोहान्निर्वर्त्तयति, नियमदर्शनात्। दृश्यते हि कश्चित्सत्त्वनिकायो रागबहुलः (१)कश्चिद् द्वेषबहुलः (१) कश्चिन्मोहबहुल इति। इतरेतरनिमित्ता च रागादीनामुत्पत्तिः। मूढो रज्यति मूढः कुप्यति रक्तो मुह्यति कुपितो मुह्यति।

## न्यायवार्त्तिकम्

अयं तु समाधिः—

न सङ्कल्पनिमित्तत्वाच्च रागादीनाम्। कर्मनिमित्तत्वादितरेतरनिमित्तत्वाच्चेति चार्थः। अनुभूतविषयप्रार्थना सङ्कल्प इत्युक्तम्। मिथ्यासङ्कल्पेभ्यो रञ्जनीयकोपनीय-मोहनीयेभ्यो रागादयः प्रादुर्भवन्ति। कर्म च निकायनिर्वर्तकं सङ्कल्पापेक्षं रागादीन् जनयति।

## न्यायवार्त्तिकतात्पर्यटीका

तदेवमेकदेशिनौ दूषयित्वा परमसमाधिमाह—अयं तु समाधिः।

न संकल्पनिमित्तत्वाच्च रागादीनाम् (सू ६७)॥ चकारमनुक्तसमुच्चयार्थं व्याचष्टे—कर्मनिमित्तत्वादितरेतरनिमित्तत्वाच्च। समुच्चयोऽनुक्तस्येति शेषः। तत्र संकल्पनिमित्तत्वादिति विभजते—मिथ्यासंकल्पेभ्य इति। यद्यप्यनुभूतविषयप्रार्थना संकल्पः, तथाऽपि तस्य पूर्वभागोऽनुभवो ग्राह्यः प्रार्थनाया रागत्वात्। तेन मिथ्यानुभवः संकल्प इत्यर्थः। नन्वेकस्मान्मिथ्याज्ञानात् कुतः कार्यवैचित्र्यमित्यत आह—रञ्जनीयकोपनीयमोहनीयेभ्य इति। भव्यगेयादिषु पाठात्कर्त्तरि कृत्यः। मोहनीयः संकल्पो मिथ्याज्ञानसंस्कारः। कर्मनिमित्तत्वं रागादीनां विभजते—कर्म चेति। निकायेन जातिरुपलक्ष्यते। इतरेतरनिमित्तत्वं रागादीनामाह—इतरेतरेति। स्यादेतत्—भवन्त्वनित्याः क्लेशाः, तथाऽपि यदेषां निर्वर्त्तकं

## वृत्तिः

अनित्यत्वं विनाशिभावत्वं, न च तत् प्रागभावे, न चाणुश्यामताऽनादिः, तथा च भाष्यम्—'अनादिरणुश्यामतेति हेत्वभावादयुक्तम्' इति। अतो मतद्वयमुपेक्ष्य सिद्धान्तमाह—( न सङ्कल्पनिमित्तत्वाच्च रागादीनाम् )।

(१) 'कश्चिद्द्वेषबहुलः' इति टि-पु० नास्ति।

## न्यायभाष्यम्

सर्वमिथ्यासङ्कल्पानां तत्त्वज्ञानादनुत्पत्तिः कारणानुत्पत्तौ च कार्यानुत्पत्तेरिति रागादीनामत्यन्तमनुत्पत्तिरिति। अनादिश्च क्लेशसन्तति(१)रित्ययुक्तम्, सर्वे इमे खल्वाध्यात्मिका भावा अनादिना प्रबन्धेन प्रवर्त्तन्ते शरीरादयः, न जात्वत्र कश्चिदनुत्पन्नपूर्वः प्रथमत उत्पद्यतेऽन्यत्र तत्त्वज्ञानात्। न चैवं सत्यनुत्पत्तिधर्मकं किञ्चिद्व्ययधर्मकं प्रतिज्ञायते इति। कर्म च सत्त्वनिकायनिर्वर्तकं तत्त्वज्ञानकृतान्मिथ्यासङ्कल्पविघाताच्च रागाद्युत्पत्तिनिमित्तं भवति, सुखदुःख(२)संवित्तिः फलं तु भवतीति ॥ ६७ ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये चतुर्थाध्यायस्याऽऽद्यमाह्निकम्।

## न्यायवार्त्तिकम्

दृष्टो हि कश्चित् सत्त्वनिकायो रागबहुलो यथा पारावतादिः। कश्चित् क्रोधबहुलो यथा सर्पादिः। कश्चित् मोहबहुलो यथाऽजगरादिः। यदि कर्म रागादीन् निर्वर्तयेत् सर्वदा रागादिर्भवेदित्यनिर्मोक्ष-

## न्यायवार्त्तिकतात्पर्यटीका

मिथ्याज्ञानं तस्य निवृत्तिहेतोरभावात् स एव क्लेशानुबन्धादपवर्गाभाव इत्यत आह—सर्वमिथ्यासंकल्पानामिति। अपि च अनादिः क्लेशसंततिरित्ययुक्तम्। कुतः? सर्व इमे आध्यात्मिका भावा इति। आत्मानमधिकृत्य प्रवर्त्तमानाः शरीरेन्द्रियादयो भवन्त्याध्यात्मिका इति। अथ यत्नादीनामपि निवृत्तिः इन्त्वानुत्पत्तिधर्मकाणामपि निवृत्तिप्रसङ्ग इत्यत आह—न चैवं सत्यनुत्पत्तिधर्मकं किञ्चिदिति। रागादीनामुत्पत्तिधर्मकाणामेव व्ययधर्मकत्वाभ्युपगमादित्यर्थः। ननु मा भूवन्मिथ्याज्ञाननिमित्ता रागादयो मिथ्याज्ञाननिवृत्तौ; ये पुनरमी कर्मनिमित्तास्तेषां कुतो निवृत्तिः? न च कर्मनिवृत्तौ रागादिनिवृत्तिः रागादिमतः कर्मनिवृत्तेरभावात्, तस्मान्न मोक्ष इत्यत आह—कर्म च (क)निकायनिर्वर्त्तकं तत्त्वज्ञानकृतान्मिथ्याज्ञानरूपसंकल्पविघातान्न रागाद्युत्पत्तिनिमित्तं भवति। सर्वरागादीनां मिथ्याज्ञानमेव निमित्तम्। कर्माणि तु निकायनियमेन रागादीन् प्रवर्तयन्तीति कर्मनिमित्तत्वमुक्तमिति भावः। ननु यथा रागादयः सत्यपि कर्मणि मिथ्याज्ञाननिवृत्त्या निवर्तन्ते एवं सत्यपि कर्मणि मिथ्याज्ञाननिवृत्त्या फलमपि मा भूदित्यत आह—सुखदुःखसंवित्तिः फलं तु भवतीति।

---

(१) 'इत्यप्युक्तम्'—ज-ज-झा०।

(२) —'संवित्तिफलं तु' इति ल-ग-ज-झा०।

(क) भाष्ये 'सत्त्वनिकाये'ति।

## न्यायवार्त्तिकम्

प्रसङ्गः ? न (१)कारणवैकल्यात्—सङ्कल्पाद्यपेक्षं कर्म रागादिकारणम्, न निरपेक्षमिति। सुखादीनामपि तर्हि (२)कर्म कारणं न प्राप्तम् ? न, निरपेक्षत्वात् कर्म सुखादिषु कर्तव्येषु (३)सङ्कल्पं नापेक्षते अपि तु स्वकारणसन्निधानापेक्षं सुखादि करोति, यथोत्क्षेपणादिकर्म नोदनाद्यपेक्षं संस्कारं करोति अनपेक्षं तु संयोगविभागाविति। परस्परनिमित्तत्वं च रागादीनां दृष्टम्—रक्तो मुह्यति रक्तः कुप्यति कुपितो मुह्यति (४)रज्यते च, मूढः(४*) कुप्यति रज्यते चेति। यदपीदमुच्यते अनादिः क्लेशसन्ततिरिति, तन्न, अविशेषात्—यथानादिः क्लेशसन्ततिरेवमाध्यात्मिका भावाः सर्वेऽनादिना प्रबन्धेन प्रवर्तन्ते, न जातु अनुत्पन्नपूर्वं किञ्चिदुत्पद्यते। न चैवं किञ्चिदनुत्पत्तिधर्मकं (५)व्ययधर्मकं प्रतिज्ञायते अनुत्पन्नपूर्वं तु तत्त्वज्ञानं केवलमुत्पद्यते, नान्यः कश्चिदाध्यात्मिको भाव इति ॥ ६७ ॥

( इत्यपवर्गपरीक्षाप्रकरणम्। )

इति—औद्द्योतकरे न्यायवार्त्तिके चतुर्थस्याध्यायस्याद्यमाह्निकम्।

## न्यायवार्त्तिकतात्पर्यटीका

(क)संकल्पाद्यपेक्षं कर्म रागादिकारणमिति। यज्जातीयस्य जन्मनो यत्कर्म कारणं तज्जन्मोचितामेव मिथ्याज्ञानवासनामभिव्यनक्तीति तद्द्वारेण रागादीनां कारणं भवति। चोदयति—सुखादीनामिति। यथा मिथ्याज्ञानसहायं कर्म रागादिहेतुः, एवं तत्सहायं फलहेतुरिति चरमदेहस्य तत्त्वज्ञानवतः सदपि कर्म फलकारणं न स्यादित्यर्थः। परिहरति—न निरपेक्षत्वादिति। कर्माशयप्रपञ्चमुच्छेत्तुममूढोऽप्यसक्तोऽप्यद्विष्टोऽपि मूढ इव सक्त इव द्विष्ट इव तत्फलं भुङ्क्त इति रागाद्यनपेक्षं कर्म स्वफलं जनयति, तेनासौ फलोपभोगो न बन्धहेतुः; मूढादीनां बन्धहेतुफलोपभोगः, स च तादृशो रागादिसहायैः कर्मभिः क्रियते, न रागादिनिरपेक्षैरित्यवदातम् ॥ ६७ ॥

इति मिश्र-श्रीवाचस्पतिविरचितायां न्यायवार्त्तिकतात्पर्यटीकायां
चतुर्थाध्यायस्याद्यमाह्निकम् ॥ १ ॥

## वृत्तिः

नोक्तं युक्तम्। कुतः ? रागादीनां सङ्कल्पनिमित्तत्वात्। सङ्कल्पो मिथ्याज्ञानं निमित्तं येषां तथा च तत्त्वज्ञानेन मिथ्याज्ञाननिवृत्तौ रागादिनिवृत्तिर्युज्यत एवेति भावः ॥ ६८ ॥

समाप्तमपवर्गपरीक्षाप्रकरणम्।

इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ चतुर्थाध्यायस्याऽऽद्यमाह्निकम्।

---

(१) 'कारणवैफल्यात्—इति क-खधृतपाठान्तरम्। (२) 'कर्मकारणकत्व' इति ख०। (३) 'संकल्पान्' इति ख०। (४) इदं क-पुस्तके नास्ति। (५) 'व्यक्तधर्मकं' इति क-खधृतपाठान्तरम्। इदं ख-पुस्तके नास्ति।

(क) इतः पूर्वमादर्शपुस्तकयोर्दृश्यमानः 'वार्त्तिकमित्यादिकर्मादत्वा'दित्यन्तोऽंशः १०१८-१९ अङ्कित पत्रयोः सन्निवेशितः।

# न्यायदर्शनम्

## अथ चतुर्थाध्यायस्य द्वितीयमाह्निकम्।

—:o:—

### न्यायभाष्यम्

(१) किं नु खलु भोः यावन्तो विषयास्तावत्सु प्रत्येकं तत्त्वज्ञानमुत्पद्यते, अथ क्वचिदुत्पद्यत इति। कश्चात्र विशेषः? न तावदेकैकत्र यावद्विषयमुत्पद्यते ज्ञेयानामानन्त्यात्। नापि क्वचिदुत्पद्यते, यत्र नोत्पद्यते तत्रानिवृत्तो मोह इति मोहशेषप्रसङ्गः। न चान्यविषयेण तत्त्वज्ञानेनान्यविषयो मोहः शक्यः प्रतिषेद्धुमिति।

### न्यायवार्त्तिकम्

तदिदं तत्त्वज्ञानमुत्पद्यमानं किं विषयमात्रे भवति आहोस्विद्विषयविशेष इति। विषयमात्रे तावदशक्यं तत्त्वज्ञानेन भवितुम्। कुतः? विषयाणामानन्त्यात्। विषयविशेषेऽपि

### न्यायवार्त्तिकतात्पर्यटीका

तदेवं संशयप्रमाणप्रमेयाणि परीक्षितानि। प्रयोजनादयोऽपि यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्ग (४१८ पृः) इत्यतिदेशेन परीक्षिता इति षोडशापि प्रमाणादयः परीक्षिताः। तेषां तत्त्वज्ञानं निःश्रेयसाधिगमहेतुरित्युक्तम्। तत्रापि प्रमेयतत्त्वज्ञानं साक्षान्निःश्रेयसहेतुरितरेषां तु तत्त्वज्ञानाङ्गतयेत्युक्तम्। इदमिहेदानीं परीक्ष्यते—किं प्रत्येकमात्मादीनां प्रमेयाणां तत्त्वज्ञानं निःश्रेयसाधिगमहेतुरुताहो कस्यचिदेषामेकदेशस्येति। तामिमां परीक्षामवतारयति भाष्यकारः—किं नु खलु भो यावन्तो विषयाः प्रमेयाणि तावत्सु प्रत्येकमिति। प्रतिप्राणभृन्नेदं यावन्त आत्मानः यावन्ति चेन्द्रियाणि चेत्यर्थः। पार्श्वस्थः पूर्वपक्षिणं पृच्छति—कश्चात्र विशेषः। पूर्वपक्षिण उत्तरं—न तावदेकैकत्रेति। समुदायैकदेशाभ्यामनुपपत्तेः प्रमाणादितत्त्वज्ञाना-

### वृत्तिः

अथ शास्त्रस्य परमं प्रयोजनमपवर्गः, स चोद्दिष्टो लक्षितः परीक्षितोऽप्यकिञ्चित्करः कारणानिरूपणात्। नन्वभिहितमेव दुःखादिसूत्रे, कारणनाशक्रमेण दुःखाभावो-

(१) 'किन्न खलु' इति न०।

## न्यायभाष्यम्

मिथ्याज्ञानं वै खलु मोहो न तत्त्वज्ञानस्यानुत्पत्तिमात्रम्। तच्च मिथ्याज्ञानं यत्र विषये प्रवर्त्तमानं संसारबीजं भवति स विषयस्तत्त्वतो ज्ञेय इति।

किं पुनस्तन्मिथ्याज्ञानम्? अनात्मन्यात्मग्रहः, अहमस्मीति मोहोऽहङ्कार इति। अनात्मानं खल्वहमस्मीति पश्यतो दृष्टिरहङ्कार इति। किं पुनस्तदर्थजातं यद्विषयोऽहङ्कारः? शरीरेन्द्रियमनोवेदनाबुद्धयः। कथं तद्विषयोऽहङ्कारः संसारबीजं

## न्यायवार्त्तिकतात्पर्यटीका

न्निःश्रेयसाधिगम इत्ययुक्तमिति पूर्वः पक्षः। सिद्धान्तमाह—मिथ्याज्ञानं वै खलु मोह इति। वै-शब्दः (क)खलु पूर्वपक्षाक्षमायां, खलुशब्दो हेत्वर्थे। अयुक्तः पूर्वपक्षो यस्मान्मिथ्याज्ञानं मोह इति। न तत्त्वज्ञानमज्ञाननिवृत्तिमात्रेण निःश्रेयसोपयोगि, अपि तु संसारनिदानोच्छेदद्वारेण इष्टेनैव। न च तत्त्वाज्ञानं संसारहेतुरपि तु मिथ्याज्ञानम्। तदुच्छिन्दद्विरोधितया तत्त्वज्ञानमपवर्ग हेतुरिति। भवत्वेतत्तथाऽपि पूर्वपक्षस्य किमायातमित्यत आह—तच्च मिथ्याज्ञानं यत्र विषये प्रवर्त्तमानमिति। स्वसंबन्धिनो ह्यात्मादयो विपर्ययेण परिच्छिन्नाः संसारहेतव इति तद्विषयमेव मिथ्याज्ञानमपनेयं नात्माद्यन्तरविषयं ज्ञानं, तेन तत्र मिथ्याज्ञानं मा निवर्तिष्ट निवर्त्ततां वा स्वात्मादिदृष्टान्तेन, न तु तस्य संसारनिवृत्तिं प्रत्युपयोगः। यस्य तूपयोगस्तत्र तत्त्वज्ञानं न दुष्करमिति। पृच्छति—किं पुनस्तन्मिथ्याज्ञानम्। सन्ति खलु वादिनां नाना विप्रतिपत्तयः। केचिदाहुः—विधूतविविधनामरूपप्रपञ्चोपप्लवविशुद्धचिदानन्द(१)घनाद्वैत-ब्रह्म-साक्षात्कारस्तत्त्वज्ञानमिति। अन्ये तु सत्त्वपुरुषान्यताख्यातिम्। धर्मपुद्गलनैरात्म्यज्ञानमित्यपरे। शरीरेन्द्रियाद्यनित्यव्यतिरिक्तनित्यात्मदर्शनमिति वृद्धाः। तदेवं विप्रतिपत्तेः प्रश्नः। उत्तरम्—अनात्मन्यात्मग्रहोऽहमस्मीति मोहोऽहङ्कारः। न तावदद्वैतानन्दघनात्मज्ञानं तत्त्वज्ञानम्, भेदस्य प्रत्यक्षसिद्धस्यासति बाधकेऽपह्नोतुमशक्यत्वात्। न च प्रकाशानन्दावात्मधर्मावात्मातिरिक्तावात्मस्वभावौ भवितुमर्हतः। 'सत्यं विज्ञानमानन्दं ब्रह्मे'ति श्रुतिरानन्दचैतन्यशक्त्यभिप्राया। भेद एव च तद्वत्तया कथंचित् सामानाधिकरण्यमुपपद्यते। अभेदे त्वानन्दविज्ञानयोस्तत्पदयोः पर्यायतया सहप्रयोगानुपपत्तिः। न च प्रकृष्टप्रकाशः सवितेत्यत्र प्रकृष्टप्रकाशयोरभेदोऽप्रकाशस्यापि प्रकर्षसंभवात्, अप्रकृष्टस्यापि खद्योतादेः प्रकाशसंभवात्। तस्माद्यत्किंचिदेतत्। सत्त्वपुरुषान्यताख्यातिस्तु सत्त्वस्यैव प्रकृतेरसंभवाद्युक्ता सत्कार्यवादमूलत्वात्प्रधानसद्भावस्य तन्निराकरणेनैव निराकरणम्। धर्मपुद्गलनैरात्म्ये तु क्षणभङ्गभङ्गे नित्यात्मसद्भावकथनेन निराकृते। तस्मात्सूक्तमनात्मन्यात्मग्रहोऽहमस्मीति मोहोऽहंकार इति। अतएव सर्वस्यैव-

(१) 'प्रकाशानन्दे'ति आदर्शधृतं पाठान्तरम्।

(क) 'खलु'शब्दोऽयं प्रमादादापतितः सम्भाव्यते।

## न्यायभाष्यम्

भवति ? अयं खलु शरीराद्यर्थजातमहमस्मीति व्यवसितः तदुच्छेदेनात्मोच्छेदं मन्यमानोऽनुच्छेदतृष्णापरिप्लुतः पुनः पुनस्तदुपादत्ते, तदुपाददानो जन्ममरणाय यतते, तेनावियोगान्नात्यन्तं दुःखाद्विमुच्यते इति। यस्तु दुःखं दुःखायतनं दुःखानुषक्तं सुखं च सर्वमिदं दुःखमिति पश्यति स दुःखं परिजानाति। परिज्ञातं च दुःखं प्रहीणं भवत्यनुपादानात् सविषान्नवत्। एवं दोषान् कर्म च दुःखहेतुरिति पश्यति। (१) न चाप्रहीणेषु दोषेषु दुःखप्रबन्धोच्छेदेन शक्यं भवितुमिति दोषान् जहाति, प्रहीणेषु च दोषेषु न प्रवृत्तिः प्रतिसन्धानायेत्युक्तम्।

प्रेत्यभावफलदुःखानि च ज्ञेयानि व्यवस्थापयति कर्म च दोषांश्च प्रहेयान्। अपवर्गोऽधिगन्तव्यस्तस्याधिगमोपायस्तत्त्वज्ञानम्। एवं चतसृभिर्विधाभिः प्रमेयं विभक्तमासेवमानस्याभ्यस्यतो भावयतः सम्यग्दर्शनं यथाभूतावबोधस्तत्त्वज्ञानमुत्पद्यते।

एवं च—

### दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ॥ १ ॥

## न्यायवार्त्तिकतात्पर्यटीका

मात्माशीः कृमेरपि—'मा न भूवं भूयास'मिति। सोऽयमीदृशोऽभिनिवेशः शरीरादीनामात्मत्वेनाध्यवस्यतो भवति नात्मतत्त्वविदुषः। स खल्वहिनिर्ल्वयनीमिवाहि(क)स्ततो व्यतिरिक्तं शरीरादि पश्यन्न तत्र स्निह्यति, स्नेहविरहान्न तप्यते नाप्यनुशोचतीति। अतत्त्वज्ञानवतः संसारं दर्शयित्वा तत्त्वज्ञानवतः संसारनिवृत्तिमाह—यस्तु दुःखमिति। तदेवमुक्तेन प्रकारेण मोहतत्त्वज्ञानयोः संसारापवर्गहेतुभावो यस्मात् तस्मान्मोक्षमाणैः प्रेत्यभाव-फल-दुःखानि च ज्ञेयानि व्यवस्थापयतीत्यादिपूर्वोपसंहारः। आसेवमानस्याभ्यस्यतो भावयत इति पर्यायकथनं भावनादार्ढ्योपदर्शनार्थम्।

अर्थगतिं परिशोध्यात्रार्थे सूत्रं पठति—

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ( सू. १ )॥

## वृत्तिः

ऽपवर्ग इतीति चेत् ? सत्यम्, मिथ्याज्ञानापगमहेतुर्नाभिहितः। तत्त्वज्ञानं तत्र हेतुरिति चेत् ? कस्य तत्त्वं ज्ञातव्यमित्यभिधानीयमित्याशयेन तत्त्वज्ञानपरीक्षा, सैव चाह्निकार्थः। तत्र च षट् प्रकरणानि आदौ तत्त्वज्ञानोत्पत्तिप्रकरणम्, अन्यानि च यथायथं वक्ष्यन्ते।

---

(१) 'न वा प्रहीणेषु' इति ज०।

(क) अहिनिर्ल्वयनी अहिनिर्मोकः।

## न्यायभाष्यम्

शरीरादिदुःखान्तं प्रमेयं दोषनिमित्तं तद्विषयत्वान्मिथ्याज्ञानस्य। तदिदं तत्त्वज्ञानं तद्विषयमुत्पन्नमहङ्कारं निवर्त्तयति समानविषये तयोर्विरोधात्। एवं तत्त्वज्ञानाद् 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग' इति। स चायं शास्त्रार्थसंग्रहोऽनूद्यते नापूर्वो विधीयते इति ॥ १ ॥

## न्यायवार्त्तिकम्

तत्त्वज्ञानविषयत्वेन योऽवतिष्ठते स विभज्य वचनीयः। तत्र विषयान्तराणामात्मादिप्रमेयव्यतिरेकिणां निराकरणं प्रमेयविशेषविषयत्वात् सूत्रस्य—यत्तदात्मादिसूत्रं न तेन प्रमेयमात्रमभिधीयते, प्रमेयमात्राभिधाने हि आत्मादिग्रहणं व्यर्थम्, अपि तु प्रमेयविशेषः, यस्तत्त्वज्ञानविषयत्वेन व्यवतिष्ठमानः संसार(१)व्यवच्छेदहेतुर्भवति, यश्च मोहविषयत्वात् संसारं प्रतनोति स तत्त्वतो ज्ञेय इति। तस्मिन् अयं प्रश्नः—किं नु खलु भो यावन्तो विषयाः तावत्सु तत्त्वज्ञानं प्रत्येकमुत्पद्यते अथ क्वचिदुत्पद्यते इति ? न तावत् प्रत्येकम्, आत्मादेरानन्त्यात्। किमिदमानन्त्यम् ? इयत्ताप्रत्ययाविषयत्वम्। अथ क्वचिदुत्पद्यते ? यत्र नोत्पद्यते तत्त्वज्ञानं तत्रानिवृत्तो मोहः, यत्र मोहस्तत्र रागद्वेषाविति रागद्वेषमोहाश्च बन्धनमित्यनिर्मोक्षप्रसङ्गः। अथ मन्यसे अन्यविषयं मोहं निवर्तयति ? एवं च सत्यपवर्गः प्राणिमात्रे(२) प्राप्नोति। न हि कश्चित् प्राणी कस्यचिदर्थस्य तत्त्वं न वेति। न, मोहार्थापरिज्ञानात्—न तत्त्वज्ञानस्यानुत्पत्तिमात्रं मोहोऽपि तु मिथ्याज्ञानं मोहः, तच्च मिथ्याज्ञानं यस्मिन् विषये प्रवर्तमानं संसारबीजं भवति स विषयस्तत्त्वतो ज्ञेय इति। किं पुनस्तन्मिथ्याज्ञानम् ? अनात्मन्यात्मप्रत्यय इति। शेषं भाष्ये ॥

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः। शरीरादिदुःखान्तं प्रमेयं दोषनिमित्तं, तद्विषयत्वान्मिथ्याज्ञानस्य; तद्विषये तत्त्वज्ञानमुत्पन्नं तद्विषयमहङ्कारं निवर्तयति समाने विषये तयोर्विरोधात्। सर्वं चैतदुक्तं द्वितीयसूत्रे इति ॥ १ ॥

## न्यायवार्त्तिकतात्पर्यटीका

शास्त्रार्थसंग्रहोऽनूद्यते शास्त्रतात्पर्यग्रहो द्वितीयसूत्रेणानूद्यत इत्यर्थः।

किं नु खलु भो इति भाष्यं, तदनुपपन्नम्, यतो न विषयमात्रज्ञानमपवर्गहेतुरपि तु प्रमेयतत्त्वज्ञानमित्यत आह वार्त्तिककारः—तत्र विषयान्तराणामिति। यावन्तो विषया इति न विषयमात्राभिप्रायमपि तु प्रमेयाभिप्रायमित्यर्थः। सुगममन्यद्वार्त्तिकम् ॥ १ ॥

(१) '—विच्छेदहेतुः' इति ख०।

(२) 'भवति'—इति क-ख-धृतपाठान्तरम्।

### न्यायभाष्यम्

(१) प्रसङ्ख्यानानुपूर्वी तु खलु—

## दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः ॥ २ ॥

कामविषया इन्द्रियार्था इति रूपादय उच्यन्ते। ते मिथ्या सङ्कल्प्यमाना रागद्वेषमोहान् प्रवर्त्तयन्ति, तान्पूर्वं प्रसञ्चक्षीत। तांश्च प्रसञ्चक्षाणस्य रूपादिविषयो मिथ्यासङ्कल्पो निवर्तते। तन्निवृत्तावध्यात्मं शरीरादि प्रसञ्चक्षीत। तत्प्रसङ्ख्याना-

### न्यायवार्त्तिकम्

दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः। कामा विषया इन्द्रियार्था रूपादय उच्यन्ते। तत्र ते विषया मिथ्या सङ्कल्प्यमाना रागादीन् जनयन्ति। कः पुनरेषां मिथ्यासङ्कल्पः? असाधारणप्रत्ययोत्पत्तिनिमित्तत्वेन व्यवसायो 'ममैवैत' इति। तान् साधारणतया (२)प्रतिसञ्चक्षीत—नैते मम दैवचौराग्निदायादसाधारणा इति। एवमेतत्य (३)प्रतिसञ्चक्षाणस्य यो व्यवसायस्तद्विषयो मोहः स निवर्तत इति। तन्निवृत्तावध्यात्मं शरीरादीन् प्रतिसञ्चक्षीत।

### न्यायवार्त्तिकतात्पर्यटीका

शरीरादिष्वनात्मस्वात्मबुद्धिर्निवर्तनीयेत्युक्तं, तत्र प्रथमं कस्मिन्नात्मबुद्धिर्निवर्तनीयेत्यपेक्षायामाह—प्रसंख्यानानुपूर्व्या (क)तु खलु। प्रसंख्यानं समाधिजं तत्त्वज्ञानं, तच्च विषये दुष्करमिति तत्रैव प्राथमिकस्य प्रथमं प्रयत्नो युक्तः॥

### सूत्रम्—

दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः ( सू. २ )॥ मिथ्याज्ञानं संकल्पस्तेन विषयीकृता इत्यर्थः। कामाः काम्याः ॥ २ ॥

### वृत्तिः

तत्र सिद्धान्तसूत्रम्—( दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः )।

अहङ्कारोऽहमित्यभिमानः, स च शरीरादिविषयको मिथ्याज्ञानमुच्यते, तच्च दोषनिमित्तानां शरीरादीनां तत्त्वस्यानात्मत्वस्य ज्ञानान्निवर्त्तते। आत्मत्वेन हि शरीरादौ मुह्यन् (४) रञ्जनीयेषु रज्यति कोपनीयेषु कुप्यति।

केचित्तु दोषनिमित्तानां रागादीनां तत्त्वज्ञानाद् बलवदनिष्टानुबन्धित्वज्ञानादहङ्कारस्य तदभिलाषस्य निवृत्तिरित्यर्थ इत्याहुः ॥ १ ॥

---

(१) 'प्रसङ्ख्यानानुपूर्व्या तु' इति ख-ग-ज०।
(२) 'प्रतिचक्षीत' इति ख०, 'प्रसञ्चक्षीत' इति ख-धृतपाठान्तरम्।
(३) 'प्रतिचक्षाणस्य' इति ख०, 'प्रसञ्चक्षाणस्य' इति क-ख-धृतपाठान्तरम्।
(४) 'रञ्जनीयत्वात्' इति भ०।
(क) अयं तृतीयान्तपाठः मुद्राप्रमादकृत इति केषाञ्चिदभिप्रायः।

न्यायभाष्यम्

दध्यात्मविषयोऽहङ्कारो निवर्त्तते। सोऽयमध्यात्मं बहिश्च विविक्तचित्तो विहरन् मुक्त इत्युच्यते ॥ २ ॥

अतः परं काचित्संज्ञा हेया काचिद्भावयितव्येत्युपदिश्यते, नार्थनिराकरणमर्थोपादानं वा। कथमिति?—

## तन्निमित्तं त्ववयव्यभिमानः ॥ ३ ॥

तेषां दोषाणां निमित्तं त्ववयव्यभिमानः। सा च खलु स्त्रीसंज्ञा (१)सपरिष्कारा पुरुषस्य, पुरुषसंज्ञा च स्त्रियाः (२)सपरिष्कारा निमित्तसंज्ञा अनुव्यञ्जनसंज्ञा

न्यायवार्त्तिकम्

किं पुनः (क)प्रसंख्यानं? शरीरादिषु नैते आत्मान इति व्यतिरेकदर्शनं प्रसंख्यानम्। सोऽयमध्यात्मं बहिश्च विविक्तचित्तो विहरन् मुक्त इत्युच्यते। एतच्च त आहुः—

"जीवन्नेव विद्वान् संहर्षायासाभ्यां मुच्यते" इति ॥ २ ॥

अतः परं काचित्संज्ञा भावयितव्या काचिद्धेया इत्युपदिश्यते। नार्थनिराकरणं नार्थोपादानं, किं तु यथाव्यवस्थित एव विषये किञ्चिद्भावनीयं किञ्चित् निराकरणीयमिति।

तन्निमित्तं त्ववयव्यभिमानः। तेषां दोषाणां निमित्तमवयव्यभिमानः। तत्रावयवीति संज्ञा भावनीया स्त्री-संज्ञा हेया सपरिष्कारा पुरुषस्य। परिष्कारो बन्धनम्। स्त्रियाः पुरुषसंज्ञा

न्यायवार्त्तिकतात्पर्यटीका

अन्ये खलु अवयविसंज्ञां निवर्तयन्तोऽवयविनमेव प्रत्याचक्षते तान् प्रत्याचक्षाण आह— अतः परं काचिदिति। सूत्रम्—

तन्निमित्तं त्ववयव्यभिमानः (सू. ३) ॥ निमित्तं दन्तत्वादि, तद्विशिष्टा विषयाः संज्ञाः, प्रियायाः कामुको दन्तोष्ठनासिकादीनवयवाननुभावयन् तस्यां सक्तो भवति। व्यञ्जनान्यवयविनोऽवयवास्तैः सहोपलम्भात्तेषामनुव्यञ्जनं तत्साहश्यं तेन तदारोपः। तथा च स्त्रैणानां व्यवहारः—

वृत्तिः

ननु के तावदनुरञ्जनीया विषया येषु रज्यन् संसरतीत्यतो विवेकाय तानुपदिशति—( दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः )।

सङ्कल्पः समीचीनत्वेन भावनम्, तद्विषयीकृता रूपादयो दोषस्य रागादेर्निमित्तम्; सुन्दरोऽयमिति जानन् रज्यति, शत्रुरयमिति द्वेष्टि। ते रूपादयो हेयत्वेन भावनीयाः प्रथमम्, ततः शरीरात्मविवेकः ॥ २ ॥

(१) 'परिष्कारस्य' इति ख-ग-ज०। (२) ............ (२*) अयमंशः त्रि-पुस्तके नास्ति।

(क) अत्र 'प्रसंख्यान'पदवर्शनेन पूर्वत्रापि स एवार्थो युक्त इति क-ख-धृतपाठान्तरमेव साधीयः प्रतिभाति।

## न्यायभाष्यम्

च (२*)। निमित्तसंज्ञा—(१) रसनाश्रोत्रम्, दन्तोष्ठम्, चक्षुर्नासिकम्। अनुव्यञ्जनसंज्ञा—(२) इत्थं दण्डा इत्थमोष्ठाविति। सेयं संज्ञा कामं वर्धयति तदनुषक्तांश्च (३) दोषान् विवर्जनीयान्, वर्जनं त्वस्याः। भेदेनावयवसंज्ञा—केश-लोम-मांस-

## न्यायवार्त्तिकम्

सपरिष्कारेति। तत्रापि च द्वे संज्ञे निमित्तसंज्ञा(४) अनुव्यञ्जनसंज्ञा च। निमित्तसंज्ञा दन्तौष्ठमिति, दन्तादिषु दन्तत्वादिनिबन्धना संज्ञा (५) अर्थव्यञ्जनसंज्ञा (च) इत्थं दन्ता

## न्यायवार्त्तिकतात्पर्यटीका

द्रवत्कनकनिर्मलद्युतिरनङ्गलीलैकभूर्महेभकटविभ्रमस्तनभरालसाङ्गी यदि।
प्रिया न परिरभ्यते तुलितसिद्धसंजीविनी सहेमहि कुतोऽन्यथा विषमबाणबाणव्यथाम्॥
मदनसरितमेनां गाहमानो जनोऽयं जघनपुलिननाभीमण्डलावर्तरम्याम्।
मुखनलिनसनाथामुल्लसद्भ्रूलतोर्मिं चिरविरहहुताशायासमुज्झांचकार॥

विवेकिनस्त्वशुभसंज्ञां भावयन्तः प्राहुः—

मज्ज्ञामस्थ्नामथ प्लीह्नां यकृतां शकृतामपि।
पूर्णाः स्नायुशिरास्यूताः स्त्रियश्चर्मप्रसेविकाः॥

ऋषयोऽप्यूचुः—

स्थानाद्बीजादुपष्टम्भान्निष्पन्दान्निधनादपि।
कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः॥

## वृत्तिः

ननु सौन्दर्यादिकं पश्यतो रागादिर्ब्रह्मणोऽपि दुष्परिहरः, तदुक्तं 'चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम्' इति। अतो रागादिनिवृत्त्युपायं दर्शयिष्यन्नाह—

( तन्निमित्तं त्ववयव्यभिमानः )।

अवयविनि तरुण्यादिशरीरेऽभिमानः सपरिष्कारबुद्धिः, तन्निमित्तं रागादिनिमित्तम्। तथा च सा बुद्धिर्हेया, अत एव भाष्यादौ परिष्कारबुद्धि(क)रनुरञ्जनसंज्ञा, सा हेया, दोषदर्शनमशुभसंज्ञा सा भावनीयेति।

अनुरञ्जनसंज्ञा यथा—

"खेलत्खञ्जननयना परिणतबिम्बाधरा पृथुश्रोणी।
कमलमुकुलस्तनीयं पूर्णेन्दुमुखी सुखाय मे भविता॥" इति।

---

(१) 'रसनाश्रोत्रम्' इति ग-ज-ञु० नास्ति। (२) अत्र 'इत्थं दन्तौ' इति ख-ग-ज-झा० इत्थं दन्ता इति फ-पु० नास्ति। (३) 'दोषा विवर्जनीयाः' इति टि०। (४) 'अनु (अर्थ) व्यञ्जनसंज्ञा' इति क०। (५) 'अर्थव्यञ्जनसंज्ञा' इति ख०।

(क) भाष्यादावनुव्यञ्जनशब्द एव दृश्यते।

## न्यायभाष्यम्

शोणितास्थि-स्नायु-शिरा-कफ-पित्तोच्चारादिसंज्ञा ; तामशुभसंज्ञेत्याचक्षते । तामस्य भावयतः कामरागः प्रहीयते ।

सत्येव च द्विविधे विषये काचित्संज्ञा भावनीया काचित्परिवर्जनीयेत्युपदिश्यते, यथा विषसम्पृक्तेऽन्नेऽन्नसंज्ञोपादानाय विषसंज्ञा प्रहाणायेति ॥ ३ ॥

## न्यायवार्त्तिकम्

इत्थमोहाविति इत्थमित्यध्यारोपेण निमित्तस्य । सेयमध्यारोपेण (१) भाव्यमाना संज्ञा मोहः । स च रागादिकारणमिति हेयः । न पुनरवयवी निराकार्यः प्रमाणतस्तथाभावादिति ॥ ३ ॥

## न्यायवार्त्तिकतात्पर्यटीका

अशुभसंज्ञाभावनाप्रयोजनमाह—तामस्य भावयत इति । तत्किमिदानीमवयवानुव्यञ्जनसंज्ञयोर्विषयो नास्त्यशुभसंज्ञाविषय एव परमस्तीत्यत आह—सत्येव च द्विविधविषय इति । द्विविध एवासौ कामिनीलक्षणो विषयस्तथाऽपि रागादिप्रहाणार्थमवयवादिसंज्ञागोचरत्वं परित्यज्याशुभसंज्ञागोचरत्वमस्योपादीयते वैराग्योत्पादनायेत्यर्थः । अत्रैव दृष्टान्तमाह—यथा विषसंपृक्त इति । न हि विषमधुनी परमार्थतो न स्तः, अपि तु वैराग्याय विषसंज्ञा तत्रोपादीयत इत्यर्थः ॥ ३ ॥

## वृत्तिः

अशुभसंज्ञा यथा—

"चर्मनिर्मितपेशीयं मांसासृक्पूयपूरिता ।
अस्यां रज्यति यो मूढः पिशाचः कस्ततोऽधिकः ॥" इति ।

स्वशरीरादावप्यशुभसंज्ञैव भावनीया । एवं कोपनीयेऽपि ।

शुभसंज्ञा—

"मां द्वेष्ट्यसौ दुराचारो (१) दुष्टो निष्ठुरचेष्टितः ।
कण्ठपीठं कुठारेण च्छित्वाऽस्य स्यां सुखी कदा ॥"

अशुभसंज्ञा तु—

"मांसासृक्कीकसमयो देहः किं मेऽपराध्यति ।
एतस्मादपरः कर्ता कर्तनीयः कथं मया" इति ॥ ३ ॥

समाप्तं तत्त्वज्ञानोत्पत्तिप्रकरणम् ॥ १ ॥

---

(१) 'उच्यमाना' इति ख० ।

(२) 'दुष्टादिषु यथेष्टतः' इति भ० ।

## न्यायभाष्यम्

अथेदानीमर्थं निराकरिष्यता(१)ऽवयविनिराकरणमुपपाद्यते—

**विद्याऽविद्याद्वैविध्यात् संशयः ॥ ४ ॥**

सदसतोरुपलम्भाद्विद्या द्विविधा, सदसतोरनुपलम्भादविद्याऽपि द्विविधा। उपलभ्यमानेऽवयविनि विद्याद्वैविध्यात् संशयः, अनुपलभ्यमाने चाविद्याद्वैविध्यात् संशयः। सोऽयमवयवी यद्युपलभ्यते अथापि नोपलभ्यते न कथञ्चन संशयान्मुच्यते इति ॥ ४ ॥

## न्यायवार्त्तिकम्

अथेदानीमर्थं निराकरिष्यता अवयविन्युपपाद्यते(क)—

विद्याऽविद्याद्वैविध्यात् संशयः। सदसतोरुपलम्भात् द्विविधा विद्या। सदसतोरनुपलम्भात् अविद्याऽपि द्विविधैव। एवं चावयवी यद्युपलभ्यते अथ नोपलभ्यते न कथञ्चन

## न्यायवार्त्तिकतात्पर्यटीका

तदेवं स्वमतेन प्रसंख्यानोपदेशमुक्त्वा पराभिमतप्रसंख्यानं निराकर्त्तुमुपन्यस्यति —अथेदानीमर्थं निराकरिष्यता विज्ञानवादिना अवयविनिराकरणमुपपाद्यते। अर्थविशेषे खल्ववयवानुव्यञ्जनसंज्ञे। तत्रार्थमात्रस्याभावात्कुतोऽवयवानुव्यञ्जनसंज्ञे ? तन्निराकरणाय प्रथममवयवी निराक्रियते, पश्चात्परमाणुः। ततश्च ज्ञानमात्रमर्थरहितं सिद्धं भवतीत्यभिप्रायः।

तत्र संशयपूर्वकत्वादुपपादनस्य विचारस्य संशयं प्रथममाह—

विद्याऽविद्याद्वैविध्यात्संशयः (सू. ४)॥ उपलब्धिर्विद्या अनुपलब्धिश्चाविद्या, सच्चोपलभ्यते यथा तड़ागे तोयम्, असच्चोपलभ्यते यथा मरुमरीचिकायामुदकम्। सच्च नोपलभ्यते यथा चिरनिखातं भूमौ निध्यादि। असच्च नोपलभ्यते, यथा—भूतले हम्यमाने

## वृत्तिः

अत्र प्रसङ्गादवयविप्रकरणम्। वस्तुतस्तु शरीरे धर्मद्वयस्य सम्बन्धेऽप्येकं ध्येयमपरं हेयमिति निर्युक्तिकम्, अतोऽवयवी नास्ति किं तु परमाणुपुञ्ज इति तत्त्वं, तदेव मुमुक्षुभिर्भावनीयम्। परमाणुपुञ्ज इत्यप्यापाततः, परमाणोरप्यग्रे निराकरिष्यमाणत्वादिति सौगताशङ्कामपाकर्तुमयमारम्भः।

यद्यपि द्वितीयाध्याये व्यवस्थापित एवावयवी, तथाऽपि स्वयुक्तिदार्ढ्येन सौत्रान्तिकस्य वैभाषिकस्य चात्र प्रत्यवस्थानमिति।

---

(१) 'अवयव्युपपाद्यते' इति ख-ग-ज-भा०।

(क) निराकरणमिति कर्मपदमूह्यम्।

# तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ॥ ५ ॥

## न्यायभाष्यम्

तस्मिन्ननुपपन्नः संशयः। कस्मात्? पूर्वोक्तहेतूनामप्रतिषेधादस्ति द्रव्यान्तरारम्भ इति ॥ ५ ॥

## न्यायवार्त्तिकम्

संशयात् मुच्यते इति। तत्र तावदुक्तं न विद्याऽविद्याद्वैविध्यं संशयस्य कारणम्, उपलब्ध्यनुपलब्ध्योः पूर्वपदविशेषणत्वात् ॥ ४ ॥

तदसंशयः पूर्वहेतुप्रसिद्धत्वात्। तस्मिन्नवयविनि संशयो न युक्तः पूर्वोक्तानां हेतूनामप्रतिषेधात्। तत्र येऽवयविनोऽर्थान्तरभावे हेतव उद्दिष्टास्ते न शक्याः प्रतिषेद्धुमिति ॥ ५ ॥

## न्यायवार्त्तिकतात्पर्यटीका

तत्तुल्योपलम्भनयोग्यतो घटादिः। तदेवं विद्याऽविद्याद्वैविध्यादवयविनि संशयः। यद्यवयव्युपलभ्यते तथाऽपि संशयः, अथ नोपलभ्यते तथाऽपि संशय इत्यर्थः ॥ ४ ॥

तत्र सिद्धान्ती वक्ष्यमाणमप्यवयविनिराकरणहेतुं निराकरिष्यामीत्याशयवानाह—

तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ( सू. ५ ) ॥ (क)अवयविनः।

वार्त्तिककारस्तु स्वयं संशयं निराकरोति—न विद्याऽविद्याद्वैविध्यं संशयस्य कारणमिति ॥ ५ ॥

## वृत्तिः

तत्र संशयप्रदर्शनाय सूत्रम्—( विद्याऽविद्याद्वैविध्यात् संशयः )।

संशय इत्यस्य अवयविनीत्यादिः। अवयविनः प्रत्यक्षसिद्धत्वात्तदपलापो दुःशक इत्यत उक्तं—विद्येति। प्रमाभ्रमभेदेन ज्ञानद्वैविध्यात् ज्ञानत्वलक्षणसाधारणधर्मदर्शनाद् ज्ञानप्रामाण्यसंशयादवयविनि संशय इत्यर्थः ॥ ४ ॥

समाधत्ते—( तदसंशयः पूर्वहेतुप्रसिद्धत्वात् )।

तत्रावयविनि न संशयः पूर्वहेतुप्रसिद्धत्वात्, द्वितीयाध्यायोक्तयुक्तिभिरवयविनः प्रकर्षेण सिद्धत्वात् ॥ ५ ॥

(क) 'अवयविनः' इति तात्पर्यटीका सूत्रान्वयिनीति बोध्यम्।

## वृत्त्यनुपपत्तेरपि (१)न संशयः ॥ ६ ॥

### न्यायभाष्यम्

(२)वृत्त्यनुपपत्तेरपि तर्हि(२*) संशयानुपपत्तिर्नास्त्यवयवीति ॥ ६ ॥

तद्विभजते—

## (क) कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः ॥ ७ ॥

एकैकोऽवयवो न तावत् कृत्स्नेऽवयविनि वर्त्तते, तयोः परिमाणभेदादवयवान्तरसम्बन्धाभावप्रसङ्गाच्च। नाप्यवयव्येकदेशेन, न ह्यस्यान्ये अवयवा एकदेशभूताः सन्तीति ॥ ७ ॥

### न्यायवार्त्तिकम्

वृत्त्यनुपपत्तेरपि तर्हि न संशयः। वृत्त्यनुपपत्तेरपि तर्हि संशयानुपपत्तिः नास्त्येव ह्यवयवीति ॥ ६ ॥

तद्विभजते—

कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः। अवयवा अवयविनि वर्त्तेरन् अवयवी वा अवयवेषु। अवयवा अवयविनि वर्तमानाः कृत्स्नेन वर्तन्ते, एकदेशेन वा? तत्र तावदवयवा

### न्यायवार्त्तिकतात्पर्यटीका

पूर्वपक्षवाद्याह—वृत्त्यनुपपत्तेरिति।

वृत्त्य-यः ( सू० ६ ) ॥(क) कृत्स्नै-वः ( सू० ७ ) ॥ वृक्षस्तिष्ठति शाखादिषु शाखादयो वा वृक्ष इति लौकिकीं प्रतिपत्तिमनुरुध्यमानो विकल्पयति वार्त्तिककारः—अवयवा

### वृत्तिः

अवयविनि बाधकं शङ्कते—( वृत्त्यनुपपत्तेरपि (ख)तर्हि संशयानुपपत्तिः )। अपिरवधारणे। तर्हि संशयानुपपत्तिर्वृत्त्यनुपपत्तितोऽवयव्यभावादेव स्यादित्यर्थः।

वृत्त्यनुपपत्तिं विवृणोति भाष्यकारः—"कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः।" अवयवी हि एकैकावयवे कार्त्स्न्येन एकदेशेन वा? नाद्यः, विषमपरिमाणत्वात्, अन्त्येऽपि तेनैवावयवेनान्येन वा? नाद्यः, स्वस्मिन् वृत्तिविरोधात्, नान्त्यः, अवयवान्तरस्यावयवान्तरावृत्तेः।

(१) 'न संशयः' इति वि-टि-पु० नास्ति। 'तर्हि न संशयः' इति ल-ग-ज०। न्यायसूत्रोद्धारेऽप्येवम्।
(२) अयमंशः ल-ग-भा-पुस्तकेषु नास्ति।
(क) वृत्तिकृन्मते अस्य भाष्यसन्दर्भरूपतया पारमर्षसूत्रत्वाभावेन इतो सूत्रसंख्याह्रासः।
(ख) सूत्रे तु पाठभेदो दृश्यते।

## न्यायभाष्यम्

अथावयवेष्वेवावयवी वर्त्तते—

### (क) तेषु चावृत्तेरवयव्यभावः ॥ ८ ॥

न तावत्प्रत्यवयवं वर्त्तते, तयोः परिमाणभेदाद् द्रव्यस्य चैकद्रव्यत्वप्रसङ्गात् । (१) नाप्येकदेशैः सर्वेषु अन्यावयवाभावात् । तदेवं (२) न युक्तः संशयो नास्त्यवयवीति ॥ ८ ॥

## न्यायवार्त्तिकम्

अवयविनि (ख)कृत्स्नेन न वर्तन्ते, अवयवावयविनोः परिमाणभेदात् । अल्पपरिमाणोऽवयवो महापरिमाणश्चावयवीति अल्पपरिमाणेन महापरिमाणस्याव्याप्तिः । एकद्रव्यश्चावयवः प्राप्नोति एकावयविवृत्तित्वात् । न चैकद्रव्यं द्रव्यमविनश्यदाधारमस्ति । नाप्यवयव्येकदेशेन वर्तते । न ह्यस्यान्येऽवयवाः एकदेशभूताः सन्ति । तस्मिन्नपि चैकदेशेन वर्त्तमानोऽवयवः किमेकदेशेन वर्तते कृत्स्नेन वेति पूर्ववत् प्रसङ्गः ॥ ७ ॥

अथावयवेषु अवयवी वर्तते ?

तेषु चावृत्तेरवयव्यभावः । न तावत् प्रत्यवयवं कृत्स्नो वर्तते तयोः परिमाणभेदात् अवयविनश्च एकद्रव्यताप्रसङ्गात् । एकावयववृत्तित्वादेकद्रव्योऽवयवी प्राप्नोति, एकद्रव्यश्चावयवी एकेन द्रव्येणारभ्यत इति सततोत्पत्तिप्रसङ्गः । किञ्च एकद्रव्यत्वात् द्व्यणुक(३)मेकस्मिन्

## न्यायवार्त्तिकतात्पर्यटीका

अवयविनीति । एकद्रव्यश्चावयवः प्राप्नोति । कुतः ? एकावयविवृत्तित्वात् । भवतु को दोष इत्यत आह—न चैकद्रव्यं द्रव्यमविनश्यदाधारमस्ति । कृतकस्य नित्यत्वप्रसङ्गादिति शेषः । अवयव्येकदेशेनेति । अवयविनो य (ग)एकदेशास्तेनावयवोऽवयविनि वर्त्तत इत्यर्थः । न ह्यस्याऽवयविनोऽन्ये अवयवेषु एकदेशा अवयवाः सन्तीति ।

तेषु—वः ( सू ८ ) ॥ एकेनावयवेनारभ्यत इति सततोत्पत्तिप्रसङ्गः । संयोगाय

## वृत्तिः

तथाऽपि कथमवयव्यभाव इत्यत्र भाष्यम्—

"तेषु चावृत्तेरवयव्यभावः" । तेषु अवयवेषु पूर्वोक्तयुक्त्या वृत्तेरभावादवयवी नास्ति, न ह्यसाववृत्तिस्त्वयाऽभ्युपेयते इति भावः ।

सूत्रमेवेदमित्यपि वदन्ति ॥ ६ ॥

---

(१) 'नाप्येकदेशेन' इति ख-ग-भा-टि० । (२) 'न-इति वि-टि-ज-पु० नास्ति । 'युक्तः संशयः' इति टि० । (३) एकद्रव्ये यद् द्व्यणुकं—इत्यादशंशधृतं पाठान्तरम् ।

(क) वृत्तिकृन्मते अस्यापि भाष्यान्तर्गतत्वमिति वृत्तौ सूत्रसंख्याह्रासः । (ख) 'कृत्स्ने न वर्त्तन्ते' इति का-पुस्तक ॰प्रमादः । (ग) 'एकदेशस्तेन' इत्येव युक्तं न वेति चिन्तनीयम् ।

# पृथक् चावयवेभ्योऽवृत्तेः ॥ ९ ॥

## न्यायभाष्यम्

(१) अवयव्यभाव इति वर्त्तते। न चायं पृथगवयवेभ्यो वर्त्तते अग्रहणात् नित्यत्वप्रसङ्गाच्च। तस्मान्नास्त्यवयवीति (१*) ॥ ९ ॥

## न्यायवार्त्तिकम्

परमाणौ वर्तत इति कारणविभागविनाशाभावात् नित्यं प्राप्नोति। उत्पत्तिमच्च नित्यं चेति न दृष्टान्तोऽस्ति। अथाप्यवयवी एकदेशेन वर्तते, तथापि अवयविन आरम्भकावयवव्यतिरिक्ता-वयवाः प्राप्नुवन्ति, येऽवयवेषु वर्तन्त इति ॥ ८ ॥

पृथक् चावयवेभ्योऽवयवःप्रवृत्तेः(क)। नाप्यवयवव्यतिरेकेणान्यत्र वर्तते अग्रहणा-न्नित्यत्वप्रसङ्गाच्च। अवयवव्यतिरेकेणान्यत्र वर्तमान उपलभ्येत, नित्यश्च स्यादनाधारं द्रव्यं नित्यमिति ॥ ९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

किल चरमभाविने अवयवव्यापारस्तन्निमित्तानि चापेक्ष्यन्ते। एकद्रव्यस्योत्पत्तिं प्रति न संयोगापेक्षेति यावदवयवमवयव्युत्पद्येतेत्यवयव्यनवरुद्धो न कदाचिदवयवो दृश्येतेत्यर्थः ॥८॥

पृथक्—त्तेः ( सू ९ ) ॥ अवयवव्यतिरेकेण वर्त्तमानोऽवयव्युपलभ्येत, न चास्या-धारान्तरमुपलभ्यते, दृश्यमानश्चावयवो नाधिकरणमस्येति भवतैव वादिनाऽभ्युपगतमित्यभि-प्रायेणाह—नित्यश्च स्यात् ॥ ९ ॥

## वृत्तिः

नन्वास्तामवृत्तिरेवावयवीति शङ्कायां पूर्वपक्षिसूत्रम्—( पृथक् चावयवेभ्यो-ऽवृत्तेः )।

अवयवेभ्यः पृथक् अवयवी नास्तीति शेषः। 'तेषु चावृत्तेः' इत्यस्य सूत्रत्वे 'अवयव्यभावः' इत्यनुवर्त्तते। कुतः? अवृत्तेः। वृत्त्यभावेऽवयविनो नित्यत्व-प्रसङ्गः, न च नित्योऽवयव्युपलभ्यते, अतो नास्त्येवावयवीति भावः।

यद्वा, कृत्स्नैकदेशाभ्यामवयवी न वर्त्तते, किं तु स्वरूपेणैवेति शङ्कायां पूर्वपक्षिणः सूत्रं—पृथगिति। अवयवेभ्यः पृथगवयवी नास्ति, कुतः? अवृत्तेः अवृत्तित्वप्रसङ्गात्, तथा सति (२) नित्यत्वं स्यादिति भावः।

केचित्तु अवयवातिरिक्तोऽवयवी वर्ततामित्यत्र पूर्वपक्षिणः सूत्रं—पृथगिति। पूर्वोक्तयुक्त्याऽवयवेभ्यः पृथगप्यवृत्तेः ॥ ७ ॥

---

(१) अयमंशः ख-ग-ज पुस्तकेषु नास्ति।

(२) 'नित्यं' इति भ०।

(क) वार्त्तिकधृतसूत्रे पाठभेदो द्रष्टव्यः।

## न चावयव्यवयवाः ॥ १० ॥

### न्यायभाष्यम्

(१) न चावयवानां धर्मोऽवयवी। कस्मात्? धर्ममात्रस्य धर्मिभिरवयवैः पूर्ववत् सम्बन्धानुपपत्तेः (१*)। (क) पृथक् चावयवेभ्यो धर्मिभ्यो धर्मस्याग्रहणादिति समानम् ॥ १० ॥

### न्यायवार्त्तिकम्

न चावयव्यवयवाः। न चावयवानां धर्ममात्रमवयवी। कस्मात्? धर्मस्यावयविनो धर्मिभिरवयवैः पूर्ववत् सम्बन्धोऽनुपपन्नः। न चात्र धर्मिभ्योऽवयवेभ्योऽवयवी धर्मः पृथगुपलभ्यते नित्यत्वप्रसङ्गादिति च समानम्। अवयवी चैकदेशेन अवयवे वर्तत इति अवयवसमूहमात्रमवयवी प्राप्नोति। एकस्मिंश्चावयवे एकदेशेन वर्तमानोऽवयवी एकावयवोपलम्भात् एकदेशेनोपलब्धौ तत्स्थानेऽवयवी गृह्येत। न त्वेकतन्तुदर्शने पटोपलब्धिर्भवति। तदेवं मुक्तसंशयोऽभिधीयते नास्त्यवयवीति ॥ १० ॥

### न्यायवार्त्तिकतात्पर्यटीका

यस्तु मन्यते—'अवयवानां धर्ममात्रमवयवी न त्ववयवेभ्योऽत्यन्तं भिन्नोऽभिन्नो वा, भिन्नत्वे गवाश्ववद्धर्मधर्मिभावानुपपत्तेः, अभेदेऽपि धर्मरूपवत्तदनुपपत्तेश्च। तस्मात्कथंचिद्भिन्नोऽभिन्नश्च कथंचिद्धर्ममात्रमवयवानामवयवी'ति, तं प्रत्याह—

न चावयव्यवयवाः (सू १०)॥ न तावद्भेदाभेदौ परस्पराभावात्मानावेकत्र समवेत इत्युक्तम्। नाप्यात्यन्तिकेऽभेदे धर्मधर्मिभावः। तस्माद् यथाऽऽत्यन्तिकभेदेऽपि केषांचिदेव कार्यकारणभावः, तथा केषांचिदेव धर्मधर्मिभाव इत्येषितव्यम्। तथा च दूषणमित्यर्थः। अत्रयवी चैकदेशेनावयवे वर्त्तत इति अवयवसमूहमात्रमवयवी प्राप्नोतीति। अस्यायमर्थः—अवयवे हि वर्त्तमानोऽवयवीत्युच्यते। अवयव्येकदेशाश्चेदवयवेषु वर्त्तन्ते, एकदेशा एव तर्ह्यवयविनः। ते च नानेत्यवयवसमूहमात्रमवयवी प्राप्नोति। एकस्मिंश्चावयवे एकदेशेन वर्त्तमानोऽवयवीति न तावदवयवी क्वचिदवयवे वर्त्तत इति तदेकदेशानां तत्र तत्रावयवे वृत्तेः तावन्मात्रेण चावयविनो ग्रहणमिति यत्रैवास्यैकदेशो वर्त्तते तत्रैव ग्रहीतव्यः। तथा चैकस्मिन् तन्तौ पटैकदेशो वर्त्तत इति तन्तावेकस्मिन् पटो दृश्येतेत्यर्थः ॥ १० ॥

### वृत्तिः

नन्ववयवावयविनोस्तादात्म्यमेव सम्बन्धः स्यादत्राह—(न चावयव्यवयवाः)।

न हि तन्तुः पटः, स्तम्भो गृहमिति कश्चित् प्रत्येति, न वाऽभेदेनाऽऽधाराधेयभाव उपपद्यते ॥ ८ ॥

---

(१) अयमंशः ख-ग-ज-पुस्तकेषु नास्ति।
(क) इतः प्रभृति 'समानम्' इत्यन्तो ग्रन्थः ख-ग-ज-पुस्तकेषु नवमसूत्रभाष्यत्वेन पठितः।

न्यायभाष्यम्

## एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥ ११ ॥

किं प्रत्यवयवं कृत्स्नोऽवयवी वर्त्तते अथैकदेशेनेति नोपपद्यते प्रश्नः। कस्मात्? एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेः। कृत्स्नमित्यनेकस्याशेषाभिधानम्, एकदेश इति नानात्वे कस्यचिदभिधानम्। ताविमौ कृत्स्नैकदेशशब्दौ भेदविषयौ नैकस्मिन्नवयविन्युपपद्येते भेदाभावादिति ॥ ११ ॥

अन्यावयवाभावान्नैकदेशेन वर्त्तत इत्यहेतुः—

## (१)अवयवान्तरभावेऽप्यवृत्तेरहेतुः—॥ १२ ॥

अवयवान्तराभावादिति। यद्यप्येकदेशोऽवयवान्तरभूतः स्यात् तथाप्यवयवेऽवय-

न्यायवार्त्तिकम्

यत्तावदवयवा अवयविनि वर्तन्त इति? तन्न, अनभ्युपगमात्—न कारणं कार्यं वर्ततेऽपि तु कारणे कार्यमिति। यत् पुनरेतदवयव्यवयवेषु वर्तमान एकदेशेन वर्तते कृत्स्नेन वा वर्तत इति, तन्न;—

एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः। कृत्स्नमिति च एकदेश इति च भेदविषयावेतौ शब्दौ, न चैतावेकस्मिन्नुपपन्नौ। अनेकस्याशेषता कृत्स्नशब्दस्यार्थः, अशेषस्य कस्यचिदभिधानमेकदेशशब्दस्य, न चैतदिहोपपद्यते इति। तस्मान्नावयविनि कृत्स्नशब्दो नाप्येकदेशशब्द इति ॥ ११ ॥

(२)अवयवान्तरभावेऽप्यवृत्तेरहेतुः—अवयवान्तराभावादिति। यद्यवयवव्यतिरिक्तमवयवान्तरं प्रतिपद्येथाः, तथाप्यवयवोऽवयवे वर्तते नावयवीत्यहेतुः—अवयवान्तराभावात्

न्यायवार्त्तिकतात्पर्यटीका

सिद्धान्तवाद्याह—

एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ( सू ११ ) ॥ (क)

(३)अवयवान्तरभावेऽप्यवृत्तेरहेतुः ( सू १२ ) ॥ एकदेशेन वावयवी न स्वावयवेषु वर्त्तत इत्यत्र प्रतिज्ञार्थे अवयवान्तराभावादित्यहेतुः। कस्मात्? यद्यप्यवयवान्तरमवयविनो भवति तथाप्यवयवान्तराण्यवयविनोऽवयवान्तरेषु वर्त्तन्ते, किमायातमवयविवृत्तेरिति।

(१) 'अवयवान्तराभावेऽपी'ति ज-ग०। (२-३) 'अवयवान्तराभावेऽपि' इति क-ख०।

(क) एकादशसूत्रस्यावतारणातिरिक्ता टीका नास्ति।

## न्यायभाष्यम्

वान्तरं वर्त्तेत नावयवीति (१)अन्योऽवयवीति(१*)। अन्यावयवभावेऽप्यवृत्तेरवयविनो नैकदेशेन वृत्तिरन्यावयवाभावादित्यहेतुः।

वृत्तिः कथमिति चेत्? एकस्यानेकत्राश्रयाश्रितसम्बन्धलक्षणा प्राप्तिः। आश्रयाश्रितभावः कथमिति चेत्? यस्य यतोऽन्यत्रात्मलाभानुपपत्तिः स आश्रयः। न कारणद्रव्येभ्योऽन्यत्र कार्यद्रव्यमात्मानं लभते विपर्ययस्तु कारणद्रव्येष्विति।

नित्येषु कथमिति चेत्, अनित्येषु दर्शनात् सिद्धम्, नित्येषु द्रव्येषु कथमाश्रयाश्रयिभाव इति चेत्? अनित्येषु द्रव्यगुणेषु दर्शनादाश्रयाश्रितभावस्य नित्येषु सिद्धिरिति।

## न्यायवार्त्तिकम्

नैकदेशेन वर्त्तते इति। (२)एकं चानेकत्र वर्तते इति प्रतिजानानो नानुयोक्तव्यः, उभयेन व्याघातादित्युक्तम्। यद्यवयवी नैकदेशेन वर्तते न (क)कार्त्स्न्येन वर्तते अथ कथं वर्तत इति? वृत्तिरवयवेषु आश्रयाश्रयिभावः समवायाख्यः सम्बन्धः। स कथं भवतीति? यस्य यतोऽन्यत्रात्मलाभानुपपत्तिः (३)स तत्रैव वर्तत इति—न खलु कारणद्रव्येभ्योऽन्यत्र कार्यद्रव्यमात्मानं लभत इति। विपर्ययस्तु कारणद्रव्येषु,—न कारणानि कार्यद्रव्येषु आत्मानं लभन्त इति। कथं नित्येषु आश्रयाश्रयिभावः? अनित्येषु दर्शनात् सिद्धं नित्येषु,—यथाऽनित्यानि यत्रोपलभ्यन्ते तत्र वर्तन्ते तथा नित्यान्यपि यत्रोपलभ्यन्ते तत्र वर्तन्त इति। एतत् समानमनित्यानां नित्यैः।

## न्यायवार्त्तिकतात्पर्यटीका

एकश्चानेकत्र वर्त्तत इति प्रतिजानानः किं कार्त्स्न्येन किमेकदेशेनेति नानुयोक्तव्यः। कस्मात्? उभयेन कार्त्स्न्येन एकदेशेन वा नानात्वैकार्थसमवायिना एकस्यावयविनो व्याघातात्। एतदुपजीव्याह—यद्यवयवी नैकदेशेन वर्त्तते न कार्त्स्न्येन, अथ कथं वर्त्तत इति।

## वृत्तिः

सिद्धान्तसूत्रम्—(एकस्मिन् भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः)।

अवयवी कार्त्स्न्येन वा एकदेशेन वा वर्त्तत इति प्रश्नो न युक्तः, एकस्मिन्नवयविनि भेदाभावाद्भेदनियतशब्दप्रयोगस्यायुक्तत्वात्। अनेकस्याशेषता हि कार्त्स्न्यं, समुदायिनां किञ्चित्त्वमेकदेशत्वं, न चैकस्य तत्सम्भव इति भावः॥ ९॥

(१) अयमंशः फ-ज-टि-पु० नास्ति। (२) 'एवं' इति ख०, 'कथं' इति क-ख-धृतपाठान्तरम्।
(३) 'तत्' इति ख०।
(क) 'कृत्स्नो' इति क-पुस्तके, 'कृत्स्ने' इति च ख-पुस्तके पाठः। तात्पर्यसम्मतः-पाठोऽत्र गृहीतः।

## न्यायवार्त्तिकम्

रूपान्तरानिर्देशादिति चेत्—अथ मन्यसे यदि व्यतिरिक्तोऽवयवी भवति तस्यावयवरूपादिव्यतिरेकेणावयविनो रूपान्तरं निर्देष्टव्यम् यथाऽचित्रास्तन्तवः (१)पटं चित्रमारभन्त इति ? न, उपलभ्यमानरूपाद्याधारत्वात्—यदवयविनो रूपमुपलभ्यते तदस्य रूपं यथाऽवयवस्य, (२)कार्यकारणभावाभ्युपगमाच्चाऽविरुद्धः—अवयविनो रूपं निर्दिश्यतामिति ब्रुवाणेन अवयवावयविनौ तावदभ्युपगतौ तदभ्युपगमाच्च विरुद्धः एतावानेवायं विवाद इत्यभ्युपेतहानिः। उपेत्य (३)चित्रवादं ब्रूमः पटस्य चित्रं रूपमिति।

## न्यायवार्त्तिकतात्पर्यटीका

शङ्कते—रूपान्तरानिर्देशादिति चेत्। सोपहासं दृष्टान्तमाह—यथा अचित्रास्तन्तवः पटं चित्रमारभन्त इति। नैयायिकः किलाचित्रैस्तन्तुभिश्चित्रः पट अरभ्यत इत्यभ्युपेयते। तच्चैतदयुक्तम्। न तावच्चित्रं रूपमेकं पटसमवेतं स्ववचनविरोधात्। नाना हि चित्रमुच्यते, तत्कथमेकमिति। तेन यदुक्तं भवति (क)नानैकमिति तदुक्तं भवति चित्रमेकमिति। यदाहुः—

"चित्रं तदेकमिति चेदिदं चित्रतरं महदि"ति।

न च नीलपीतादय एव बहवोऽव्याप्यवृत्तयश्चित्रपदास्पदमिति सांप्रतम्, रूपादीनां व्याप्यवृत्तित्वात्। तेऽमी विवादाध्यासिता नीलपीतादयो व्यापनीया आश्रयवृत्तयो रूपजातीयत्वाच्छुक्लपटगतरूपवदिति। उपपन्न उपहासो यथा अचित्रास्तन्तवः पटं चित्रमारभन्त इति। निराकरोति—नोपलभ्यमानरूपाधारत्वात्। अवयविनो रूपं निर्दिश्यतामिति ब्रुवाणेनेति। अवयवोऽस्यास्तीत्यवयवी अवयवश्च कारणं तद्वानवयवी कार्यमिति कार्यकारणभावाभ्युपगमः कुतो भवति ? न च प्रसङ्गसाधनं नाम किंचिदस्ति प्रमाणम्। तर्कस्तु भवेत्। न चायं प्रमाणेनेतिकर्तव्यतां विना प्रमाणमर्थं साधयितुमर्हतीत्यर्थः। यदपि त्वयोपहासाभिप्रायेण पटरूपं चित्रं दृष्टान्तीकृतं तत्राभिप्रायस्तावत्तव यादृशस्तादृशो वा, वचनात्तावदयं दृष्टान्तः प्रतिभाति। दृष्टान्तश्च वादिप्रतिवादिनोरविवादविषय इति तत्साधनं व्यर्थम्। तथाऽपि उपेत्य चित्रवादं ब्रूमः त्वां प्रति चित्रं रूपं पटसंबन्धितया साधयामस्त्वदभिप्रायव्याजोपहासनिराकरणायेत्यर्थः। पटस्य चित्रं रूपमित्यनुभव एवात्राबाधितः प्रमाणमिति भावः।

बौद्धः स्वाभिप्रायमुद्घाटयति—

(१) 'पटमावमा-' इति क-ख-धृतपाठान्तरम्।

(२) 'कार्यकारणभावाच्च' इति ख०, 'कार्यकारणभावानभ्युपगमाच्च' इति क-ख-धृतपाठान्तरम्।

(३) 'चित्रविवादं' इति ख०।

(क) 'नानैक'मिति क-पुस्तके मुद्राप्रमादः।

## न्यायवार्त्तिकम्

अनेकत्वप्रसङ्ग इति चेत्—अथ मन्यसे चित्रं रूपमवयविनोऽभ्युपगच्छताऽनेकरूपोऽवयव्यभ्युपगतो भवति। न चैकं द्रव्यमनेकरूपम्, (१)नाप्यनेकस्मिन् एकमिति(१*) ? (२)न, चित्रशब्दस्यैकानेकविषयत्वात्(२*)—चित्रशब्देनैकं चाभिधीयते अनेकं च, चित्रं रूपं, चित्राणि रूपाणीति। न, एकस्मिन्नदृष्टत्वात्—न हि एकस्मिन् चित्रं दृष्टमिति ; न, अभ्युपेतहानेः ;—एकं चित्रमित्यनभ्युपगच्छतानेकं चित्रमिति हेयम्, एकचित्रसमुच्चयो ह्यनेकं चित्रमिति। अथानेकमचित्रं चित्रमित्युच्यते ? एवमप्यनिवृत्तो व्याघातः—अचित्रं चित्रमिति, यथाऽशुक्लं शुक्लमिति। अथाचित्राणि तन्तुरूपाणि संहत्य पटे (३)चित्रं रूपमुत्पादयन्तीति(३*) पक्ष आश्रीयते ? एवं चैतस्मिन्न किञ्चिद् बाध्यते। (४)पुटान्तरे प्रसङ्गश्चित्रप्रत्ययस्य—यस्य पटस्य एकं चित्रं पार्श्वं द्वितीयमविचित्रं, तेन यथैकस्मिन् पार्श्वे तं पटं पश्यत(५)श्चित्रमिति बुद्धिर्भवति

## न्यायवार्त्तिकतात्पर्यटीका

अनेकत्वप्रसङ्ग इति चेदिति। निराकरोति—न, चित्रशब्दस्यैकानेकविषयत्वात्। यदि नानैव चित्रमुच्येत ततः स्याद्विरोधः, किं त्वेकस्मिन्नपि चित्रपदं प्रयुज्यते। तस्मान्नैकत्वेनास्य विरोध इत्यर्थः। देशक आह—न, एकस्मिन्नदृष्टत्वात्। एकस्मिंश्चित्रग्राहिणोऽनुभवस्यादृष्टत्वात्। पुरुषविवक्षाधीनप्रवृत्तयस्तु शब्दाः क नाम दुर्लभा इति भावः। परिहरति—न, अभ्युपेतहानेरिति। न तावदनेकपदपर्यायश्चित्रशब्दोऽनेकं चित्रमित्यनेकपदेन सामानाधिकरण्यं प्रतिपत्तुमर्हति, पर्यायशब्दानां सहप्रयोगानुपपत्तेः। दृश्यते तु प्रयोगो 'ऽनेकं चित्र'मिति। तस्माद्यथा शुक्लानि नाना, तथा चित्राणि नानेत्यभ्युपेतव्यम्। तथा चैकं शुक्लमनभ्युपगच्छतो यथा शुक्लनानात्वाभ्युपगमो हीयते, एवमेवैकं चित्रमनभ्युपगच्छतश्चित्रनानात्वाभ्युपगमो हीयत इत्यर्थः। शङ्कान्तरमाह—अथानेकमचित्रमिति। निराकरोति—एवमपीति। शङ्कते—अथाचित्राणीति। परिहरति—एवं च न किंचिदिति। इष्यत एवास्माभिर्यथाऽवयवसमवेतैः सितहरितलोहितादिभिरसमवायिकारणैरवयविनि चित्रं रूपमारभ्यत इति। देशयति—पुटान्तर इति।

## वृत्तिः

इतश्च वृत्तिविकल्पो न युक्त इत्याह—(अवयवान्तरभावेऽप्यवृत्तेरहेतुः)।

अवयवी स्वावयवेषु नैकदेशेन वर्त्तते अवयवान्तराभावादिति यः परेषां हेतुः, स न युक्तः। कुतः ? अवयवान्तरभावेऽप्यवृत्तेः, अवयवान्तरसत्त्वेऽपि तस्यैव परं वृत्तिरायाति, न त्ववयविनोऽपीति।

---

(१) 'नाप्येकश्चिन्ननेकम्'—इति क-ख-धृतपाठान्तरम्। (२) 'न चित्रशब्दस्यानेकैकविषयत्वात्' इति ख०। (३) 'चित्ररूपमारभन्ते' इति क-ख-धृतपाठान्तरम्। (४) 'प्रटान्तरे' इति ख०। (५) 'चित्रपटबुद्धिर्भवति' इति क-ख-धृतपाठान्तरम्।

## न्यायभाष्यम्

तस्मादवयव्यभिमानः प्रतिषिद्ध्यते निःश्रेयसकामस्य, नावयवी, यथा रूपादिषु मिथ्यासङ्कल्पो न रूपादय इति ॥ १२ ॥

## न्यायवार्त्तिकम्

एवं (१)पुटान्तरेऽपि चित्रपटबुद्ध्या भवितव्यम्? भवतैवेदमुक्तम्—यस्य पटस्यैकं पार्श्वं चित्रं स तु पटो न चित्रः पार्श्वस्यापटत्वात्। चित्रप्रत्ययस्तत्र कस्मान्नेति चेत्? चित्राचित्राभ्यां पार्श्वाभ्यां पट आरभ्यमाणश्चित्रः पट इति यथा (२)पुटान्तरे चित्रप्रत्यय एवं चित्रप्रत्ययः (३)पुटान्तरेऽपि प्रसक्तः? न प्रसक्तः, एकस्य चित्ररूपस्यानारम्भकत्वात्—एकस्मिन् पार्श्वे चित्रं रूपं तत्कथमवयविनि रूपाद्यन्तरमारप्स्यत इति। एतावच्च शक्यं वक्तुम्—अवयवरूपाभ्यामवयविनि रूपान्तरमारभ्यत इति, तथोपलब्धेः। यद्ययमरूपोऽवयवी स्यात् नोपलभ्येत। (४)न तावदवयवरूपादवयविनो ग्रहणं युक्तम्(४*) वायोरप्युपलब्धिप्रसङ्गात्—यद्यन्यरूपादन्यस्योपलब्धिर्भवति वायोरप्युपलब्धिः प्राप्नोति, न चैतदस्ति। तस्मात् स्व-रूपादवयव्युपलभ्यते। उभयावयवदर्शनप्रतिसन्धानाच्चावयविनि रूपोपलब्धिर्भवति। न चैवं सत्यरूपोऽवयवीति—तस्मादवयव्यभिमानः प्रतिषिध्यते सपरिष्काररूपो नावयवीति, यथा रूपादिषु मिथ्यासंकल्पो न रूपादय इति। अयं चार्थो मुनिना श्लोकेन दर्शितः—

"इन्द्रियार्था ह्यनर्थाय यदि स्युरविकल्पिताः।
सर्वोऽनर्थेन युज्येत चरन्निन्द्रियगोचरः" ॥ इति ॥ १२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

पुटान्तरं पार्श्वान्तरम्। परिहरति—भवतैवेदमुक्तमिति। एकोऽपि गुण आरभत इति मत्वाशङ्कते—चित्रप्रत्ययस्तत्रेति। समाधत्ते—न प्रसक्त इति। ननु यच्चित्राचित्राभ्यामारब्धमवयविनो रूपं तदपि पीतादिवन्निर्दिश्यतां, न च शक्यं निर्देष्टुं तस्मान्नास्तीत्यत आह—एतावदिति। अनिर्वाच्यमप्यनुभूयमानमशक्यापह्नवम्। यथेक्षुक्षीरादीनां माधुर्यस्यान्तरं महदित्यर्थः। न तावदवयवरूपादवयविनो ग्रहणं युक्तमिति। न द्रव्यान्तररूपेण द्रव्यान्तरे चाक्षुषत्वं दृष्टम्। न खलु पृथिव्यादिरूपेण वायुश्चाक्षुष इत्यर्थः। प्रकृतमुपसंहरति—तस्मादिति। अविकल्पिता अविचारिता इत्यर्थः ॥ १२ ॥

---

(१) 'पटान्तरे'—इति ख०। (२) 'पटान्तरे'—इति ख०।
(३) 'पटान्तरे' इति ख०।
(४) 'न चावयवरूपाभ्यामन्यदवयविनो ग्रहणं युक्तम्' इति क-ख-धृतपाठान्तरम्।

## न्यायभाष्यम्

सर्वाग्रहणमवयव्यसिद्धेरिति(१)प्रत्यवस्थितोऽप्येतदाह—

**केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः ॥ १३ ॥**

यथैकैकः केशस्तैमिरिकेण नोपलभ्यते केशसमूहस्तूपलभ्यते, तथैकैकोऽणुर्नोपलभ्यते अणुसञ्चयस्तूपलभ्यते, तदिदमणुसमूहविषयं ग्रहणमिति ॥ १३ ॥

**स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः ॥ १४ ॥**

यथाविषयमिन्द्रियाणां पटुमन्दभावाद्विषयग्रहणानां पटुमन्दभावो भवति। चक्षुः खलु प्रकृष्यमाणं नाविषयं गन्धं गृह्णाति, निकृष्यमाणं च न स्वविषयात् प्रच्यवते। सोऽयं तैमिरिकः कश्चिच्चक्षुर्विषयं केशं न गृह्णाति, कश्चिद् गृह्णाति केशसमूहम्।

## न्यायवार्त्तिकम्

सर्वाग्रहणमवयव्यसिद्धेः इति प्रत्यवस्थितो(२)ऽथेदमाह—

केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः। यथा एकैकः [ केशः ? ] तैमिरिकेण नोपलभ्यते केशसमूहस्तूपलभ्यते, तथा एकैकशोऽणुर्नोपलभ्यते अणुसमूहस्तूपलभ्यत इति, तदिदमणुसमूहविषयं ग्रहणमिति ॥ १३ ॥

स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद् विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः। न हीन्द्रियं प्रकृष्यमाणं स्वविषयमतिक्रामति। न हि चक्षुः प्रकृष्यमाणं रसं गृह्णाति, नाप्यपकृष्यमाणं स्वविषयात् प्रच्यवते, अपि तु स्वविषय एवेन्द्रियस्य प्रकर्षाप्रकर्षापेक्षाणि पटुमन्दभावेन ग्रहणानि भवन्तीति। तत्र पटुग्रहणं—सामान्यविशेषतद्वतां ग्रहणमिति। (३)मन्दं तु ग्रहणं(३*) सामान्यमात्रालोचनमिति। सोऽयं तैमिरिकः कश्चित्

## न्यायवार्त्तिकतात्पर्यटीका

सर्वाग्रहणमवयव्यसिद्धेरित्यत्र प्रत्यवस्थितः पूर्वपक्षी अथेदमाहेति—

केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धेः (सू १३) ॥ इत्यादिसूत्रभाष्यवार्त्तिकानि पूर्वपक्षसिद्धान्तयोरतिरोहितार्थानि ॥ १३ ॥

स्ववि—त्तिः ( सू १४ ) ॥ (क)

---

(१) 'प्रत्यवस्थितेऽपीदमाह'—इति वि० ।...'प्येवमाह' टि० ।...'प्येतदाह' इति ग० झा० ।
(२) '-ऽप्येदमाह' इति ख० । (३) 'मन्दग्रहणं तु'—इति क-ख-धृतपाठान्तरम् ।
(क) चतुर्दशसूत्रं टीकाकृता न व्याख्यातम् ।

### न्यायभाष्यम्

उभयं ह्यतैमिरिकेण चक्षुषा गृह्यते। परमाणवस्त्वतीन्द्रिया इन्द्रियाविषयभूता न केनचिदिन्द्रियेण गृह्यन्ते, समुदितास्तु गृह्यन्ते, इत्यविषये प्रवृत्तिरिन्द्रियस्य प्रसज्येत। न जात्वर्थान्तरमणुभ्यो गृह्यते इति। ते खल्विमे परमाणवः सन्निहिता गृह्यमाणा अतीन्द्रियत्वं जहति, वियुक्ताश्चागृह्यमाणा इन्द्रियविषयत्वं न लभन्ते इति। सोऽयं द्रव्यान्तरानुत्पत्तावतिमहान् व्याघात इत्युपपद्यते द्रव्यान्तरं यद् ग्रहणस्य विषय इति।

सञ्चयमात्रं विषय इति चेन्न, सञ्चयस्य संयोगभावात्तस्य चातीन्द्रियस्याग्रहणादयुक्तम्। सञ्चयः खल्वनेकस्य संयोगः, स च गृह्यमाणाश्रयो गृह्यते नातीन्द्रियाश्रयः, भवति हीदमनेन संयुक्तमिति। तस्मादयुक्तमेतदिति।

### न्यायवार्त्तिकम्

चक्षुर्विषयं केशं न गृह्णाति, केशसमूहं च गृह्णाति, उभयं हि अतैमिरिकस्य चक्षुषो विषय इति। परमाणवस्त्वतीन्द्रिया दर्शनविषयत्वं न प्रतिपद्यन्ते। संहता ऐन्द्रियका असंहता अतीन्द्रिया इति महान् व्याघातः, अनुपजातविशेषाणां दर्शनविषयत्वानुपपत्तेः। तस्मादुत्पद्यतेऽवयवी यो दर्शनस्य विषय इति। (१)समुच्चयमात्रं दर्शनस्य विषय इति चेत्—अथ मन्यसे दर्शनस्य परमाणुसमुच्चयमात्रं विषयः, समुच्चिताः परमाणवो दर्शनस्य विषयतामुपयान्तीति ? न, समुच्चयस्य

### वृत्तिः

यद्वा, अवृत्तेर्वर्तनाभावस्य कृत्स्नैकदेशविकल्पो न हेतुः, कुतः ? अवयवान्तरस्यावयविभिन्नस्यावयवस्य भावेऽपि सत्त्वेऽपि (क)सम्भवात्। घटत्वादिवत् स्वरूपेणैवावयविनो वृत्तेः सम्भवात्, वृत्तेः कार्त्स्न्यैकदेशान्तरनियमो घटत्वादौ व्यभिचार्यप्रयोजकश्चेति भावः ॥ १० ॥

'तदसंशयः पूर्वहेतुप्रसिद्धत्वात्' इत्यनेन सर्वाग्रहणमवयव्यसिद्धेः इति पूर्वोक्तयुक्तिः स्मारिता। पूर्वपक्षी तां दूषयितुमुपक्रमते—( केशसमूहे तैमिरिकोपलब्धिवत् तदुपलब्धिः )।

(२)यथा तैमिरिकस्य तिमिरग्रस्तचक्षुषो नैकः केशः प्रत्यक्षः, किं तु तत्समूहः, एवमेकः परमाणुरप्रत्यक्षः, तत्समूहरूपो घटादिः प्रत्यक्षः स्यात् ॥ ११ ॥

---

(१) 'सञ्चयमात्रं'—इति ख०। (२) 'यथा'—इति ख-पु० नास्ति।

(क) सम्भवादिति कृत्स्नैकदेशविकल्पसम्भवादित्यर्थः।

## न्यायभाष्यम्

गृह्यमाणस्य चेन्द्रियेण विषयस्याऽऽवरणाद्यनुपलब्धिकारणमुपलभ्यते। (१) तस्मान्नेन्द्रियदौर्बल्यादनुपलब्धिरणूनाम्, यथा नेन्द्रियदौर्बल्याच्चक्षुषाऽनुपलब्धिर्गन्धादीनामिति(१*)॥ १४॥

## अवयवावयविप्रसङ्गश्चैवमा प्रलयात्॥ १५॥

यः खल्ववयविनोऽवयवेषु वृत्तिप्रतिषेधादभावः सोऽयमवयवस्यावयवेषु प्रसज्यमानः सर्वप्रलयाय वा कल्पेत, निरवयवाद्वा परमाणुतो निवर्त्तेत। उभयथा चोपलब्धिविषयस्याभावः, तदभावादुपलब्ध्यभावः। उपलब्ध्याश्रयश्चायं वृत्तिप्रतिषेधः, स आश्रयं व्याघ्नन् (२) आत्मघाताय कल्पत इति॥ १५॥

## न्यायवार्त्तिकम्

संयोगभावात्—समुच्चयोऽपि निरूप्यमाणः परमाणुसंयोगः, संयोगश्चोपलभ्यमानाश्रय उपलभ्यते—भवति हीदमनेन संयुक्तमिति। यश्च विषय उपलभ्यते तस्यानुपलब्धौ चावरणं कारणमुपलभ्यते, न तु परमाणव उपलब्धिलक्षणप्राप्ताः। तस्मान्न (३)तेषामावरणादेरग्रहणकारणा-(३*) दग्रहणमिति॥ १४॥

अवयवावयवि(४)प्रसङ्गश्चैवमा प्रलयात्। यश्चावयविनोऽवयवे वृत्तिविकल्पादभाव उक्तः सोऽवयवस्यावयवेषु प्रसज्यमानः प्रलयाद्वा निवर्त्तेत, निरवयवाद्वा परमाणुतो निवर्त्तेत।

## न्यायवार्त्तिकतात्पर्यटीका

अपि चायं वृत्तिविकल्प आश्रयव्याघातादयुक्त इत्याह—

अवयवावयविप्रसङ्गश्चैवमा प्रलयात् (सू १५)॥ अत्र त्रयः पक्षाः संभवन्ति। योऽयमवयवेषु अवयविवृत्तिविकल्पानुपपत्त्या अवयविनोऽभावप्रसङ्ग आपाद्यते, स आ प्रलयाद्वा निवर्त्तते, आ परमाणोर्वा, न क्वचिदपि निवर्त्तते इति। तत्र प्रथमद्वितीयविकल्पावाश्रित्येदं सूत्रम्। यथैव वृत्तिविकल्पः स्थूले घटादाववयवेषु तदवयवेष्विति तदभावात्प्रलये व्यवतिष्ठेत। न च तदा प्रलयः सर्वोपाख्याविरहितो दर्शनविषयः संभवतीति दर्शनविषयाभावादनाश्रयो विकल्प आत्मानमेव न लभते। उपलक्षणं चैतद् 'आ प्रलयादि'ति। आ परमाणोरित्यपि द्रष्टव्यम्। परमाणूनामप्यतीन्द्रियत्वेन दर्शनविषयत्वाभावादनाश्रयता विकल्पस्य तदवस्थैव। तदिदमुक्तं—निरवयवाद्वा परमाणुतो निवर्त्तेतेति।

---

(१) 'तस्मादयुक्तमेतत्'—इति वि०। (२) आत्मघाताय—इति ज०।

(३) 'तेषामनावरणादेरग्रहणकारणा'—इति क-ख-धृतपाठान्तरम्।

(४) -'प्रसङ्गश्चाप्रलयात्'—इति क-ख-धृतपाठान्तरम्।

### न्यायभाष्यम्

अथापि—

## न प्रलयोऽणुसद्भावात् ॥ १६ ॥

अवयवविभागमाश्रित्य वृत्तिप्रतिषेधादभावः प्रसज्यमानो निरवयवात्परमाणोर्निवर्त्तते न सर्वप्रलयाय कल्पते, निरवयवत्वं(१)तु परमाणो(२)र्विभागैरल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात्। लोष्टस्य खलु प्रविभज्यमानावयवस्याल्पतरमल्पतममुत्तरमुत्तरं भवति। स चायमल्पतरप्रसङ्गः यस्मान्नाल्पतरमस्ति यः परमोऽल्पस्तत्र निवर्त्तते, यतश्च नाल्पीयोऽस्ति तं परमाणुं प्रचक्ष्महे इति ॥ १६ ॥

### न्यायवार्त्तिकम्

कथमिति? यथाऽवयव्यवयवेषु वर्तमानः प्रत्येकं सर्वात्मना वा एकदेशेन वा वर्तेतेत्युक्तम्, तथाऽवयवोऽवयवेषु वर्तमानस्तदवयवोऽप्यवयवेषु इत्येवं यावत् परमाणुरिति, *यावद्वा प्रलयोऽनिवृत्तिर्वेति(३)सर्वथोपलब्धिविषयो नास्ति। उपलब्धिविषयं चाश्रित्यायं वादः—किमवयव्येकदेशेन वर्त्तते उत सर्वात्मना वर्त्तत इति। सोऽयमाश्रयं(४)व्याघ्नन्नात्मघाताय कल्पत इति।

न प्रलयोऽणुसद्भावात्। न चास्ति प्रलयोऽणुसद्भावात्। अयं च खलु विभज्यमानभेदस्तावद् वर्तते यावत् परमाणुरिति। परमाणुर्नाम विभागेऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात्—लोष्टस्य विभज्यमानावयवस्याल्पतरमल्पतममुत्तरमुत्तरं भवति, स चायमल्पतरप्रसङ्गो यतो निवर्तते यतो नाल्पीयोऽस्ति तं परमाणुं(५)प्रचक्ष्महे इति।

### न्यायवार्त्तिकतात्पर्यटीका

अथापीति, अपि चेत्यर्थः। अपि च प्रलयमभ्युपेत्येदमुक्तम् 'आ प्रलया'दिति। वस्तुतस्तु—

न प्रलयोऽणुसद्भावात् (सू १६)॥ निरवयवत्वे प्रमाणमाह—निरवयवत्वं तु परमाणोरिति।

### वृत्तिः

उत्तरयति—(स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः)।

इन्द्रियाणां पाटवे विषयग्रहणस्य पाटवं प्रकर्षः; इन्द्रियाणां मान्द्ये तद्ग्रहणस्य मान्द्यमपकर्षः। न तु पटुतरं चक्षुः शब्दं गृह्णाति—तदिदमुक्तं स्वविषयानतिक्रमेणेति। फलितार्थमाह—नाविषये प्रवृत्तिरिति। तथा च स्वाविषयं परमाणुं समूहत्वापन्नमपि कथं चक्षुर्गृह्णीयादिति भावः॥ १२॥

(१) 'खलु'—इति ल-ग-भा०। 'तु खलु'—इति ज०। (२) 'विभागेऽल्पतर'—इति क०। (३) 'सर्वोपलब्धि'-। (४) 'व्याघ्नन्नात्मव्याघाताय'—इति ख०। (५) 'प्राचक्ष्महे'—इति क-ख-धृतपाठान्तरम्।

*अस्य व्याख्यानं परपृष्ठे टीकायां द्रष्टव्यम्।

## न्यायभाष्यम्

# परं वा त्रुटेः ॥ १७ ॥

अवयवविभागस्यानवस्थानाद् द्रव्याणामसङ्ख्येयत्वात्(१)त्रुटित्वनिवृत्तिरिति ॥ १७ ॥

## न्यायवार्त्तिकम्

अथ न परमाण्वन्तो विभागः ? तेन—परं वा त्रुटेः। अवयवविभागस्याऽऽनन्त्यात् त्रुटिरमेयः प्राप्नोति, संख्यापरिमाणगुरुत्वैः। तावत्परिमाणस्त्रुटिः, इयदत्र गुरुत्वं वर्तते, इयन्तश्च परमाणवः संहतास्त्रुटिभावमापद्यन्त इति नावधारणं युक्तम्। किं कारणम्? यथैवानेकपरमाणुसंघातो हिमवान् संख्यापरिमाणगुरुत्वैरमेयः, तथा त्रुटिरपि भेदस्यानन्त्यात् प्रसज्यते। अथ प्रलयान्तो विभागः? सोऽपि न युज्यते, विभागस्य विभज्यमानहानानुपपत्तेः। न प्रलयान्तो विभागः, स चायं विभागो विभज्यमानाधारो(२)विभज्यमानश्च नास्ति विभागोऽस्तीति व्याघातः। विभज्यमानावयवं परमाणुं प्रतिपद्यमानेन सावयवः परमाणुः प्रतिपत्तव्यः। सावयवत्वे च परमाणुशब्दस्यार्थो वाच्यः—किमुक्तं भवति परमाणुरिति? ये च परमाणोरवयवास्ते

## न्यायवार्त्तिकतात्पर्यटीका

अथानन्त एवायमवयवावयविविभागः कस्मान्न भवतीत्यत आह—

परं वा त्रुटेः (सू १७)॥ त्रुटिस्त्रसरेणुरित्यनर्थान्तरम्। 'जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम्।' यदि त्रुटेः परं द्वित्रिपदकेऽवयवविभागो न व्यवतिष्ठते ततोऽवयवविभागस्यानवस्थानाद् द्रव्याणामसंख्येयत्वात्त्रुटित्वनिवृत्तिः, त्रुटिरपि सुमेरुणा तुल्यपरिमाणः स्यात्। न खल्वनन्तावयवत्वे कश्चिद्विशेष इत्यर्थः।

*वार्त्तिकम्—यावद्वा प्रलयोऽनिवृत्तिर्वेति। प्रलयपरमाणुपक्षे विकल्पनिवृत्तिर्नास्ति दर्शनविषयस्तु नास्तीत्यनाश्रयो विकल्पः। अनन्तावयवत्वे सर्वस्य विकल्पाघ्रातत्वे दर्शनविषयाभाव इत्यनाश्रयो विकल्प इत्यर्थः।*

संख्योदाहरणम्—इयन्तश्च (क)ते परमाणवः संहतास्त्रुटिभावमापद्यन्त इति। सावयवत्वे तु परमाणुशब्दस्यार्थो वक्तव्यः—किमुक्तं भवति परमाणुरिति? परमत्वविशिष्टो

(१) 'त्रुटिनि'—इति ज०। (२) 'विभज्यमानाधारश्च'—इति क-ख-धृतपाठान्तरम्।

* लिपिप्रमादादवागतस्तारकापुटितोऽयं ग्रन्थभागः पञ्चदशसूत्रीयवार्त्तिकव्याख्यानतया इत उत्कृष्य षोडशसूत्रावतारणात् पूर्व्वमेव सन्निवेशयितुं युज्यत इति नाशङ्कनीयम्; यतो नायं लिपिप्रमादः, परन्तु 'वार्त्तिक'मिति नामग्राहं सन्दर्भोद्धारदर्शनात् 'अथापीती'त्यादि-(षोडशसप्तदशसूत्रीय)-भाष्यव्याख्यानानन्तर्य्यं प्रतीत्या, तृतीयविकल्पाश्रय-सूत्र-व्याख्यानानन्तरमेव त्रिकल्पत्रयसंग्राहक-निरुक्त-वार्त्तिक-व्याख्यानाभिप्रायेण टीकाकृत एवेदं विच्छिद्य व्याख्यानमिति प्रतिभाति। किञ्च, स्थानविघटने उत्तरग्रन्थे पुनर्वार्त्तिकमिति नामग्रहणापेक्षा स्यात्। (क) ते इति वार्त्तिके नोपलभ्यते।

## न्यायभाष्यम्

अथेदानीमानुपलम्भिकः सर्वं नास्तीति मन्यमान आह—

### आकाशव्यतिभेदात् तदनुपपत्तिः ॥ १८ ॥

तस्याणोर्निरवयवस्य (१)नित्यस्यानुपपत्तिः। कस्मात्? आकाशव्यतिभेदात्। अन्तर्बहिश्चाणुराकाशेन समाविष्टो व्यतिभिन्नः, व्यतिभेदात्सावयवः, सावयवत्वादनित्य इति ॥ १८ ॥

## न्यायवार्त्तिकम्

किं समानपरिमाणा उत भिन्नपरिमाणा इति? यदि समानपरिमाणाः, अवयवावयविभावो दुरुपपादः। न हि वयं समानपरिमाणानां क्वचिदवयवावयविभावं पश्यामः। अथ भिन्नपरिमाणाः, न परमाणुः प्रतिषिध्यते, कार्यमिदं परमाणुरिति कृत्वा प्रतिषिध्यते ॥ १६-१७ ॥

इति अवयवावयविप्रकरणम्।

अथेदानीमानुपलम्भिकः सर्वं नास्तीति मन्यमान आह—आकाशव्यतिभेदात्तदनुपपत्तिः। आकाशेन परमाणुर्व्यतिभिन्नः व्यतिभेदादनित्यो घटवदिति।

## न्यायवार्त्तिकतात्पर्यटीका

अणुः परमाणुः यतः क्षोदीयो नापरमस्तीति यावत्। तस्मादपि चेत् क्षोदीयोऽन्यदस्ति नैष परमत्वविशिष्टोऽणुरित्यर्थः। अथ भिन्नपरिमाणाः परमाण्ववयवास्ततो न्यूनपरिमाणा इति यावत्। ततो न परमाणुः प्रतिषिध्यते परमाण्ववयवा एव परमाणवस्ते चानवयवत्वादकार्याः, त्वया च परमाण्वारब्धं कार्यं परमाणुरिति कृत्वा आरोप्य वृत्तिविकल्पेन प्रतिषिध्यत इति ॥ १६-१७ ॥

अथेदानीमानुपलम्भिकः तस्य व्याख्यानं सर्वं नास्तीति (क)मन्वान आह—

आका—त्तिः (सू० १८) ॥ आकाशव्यतिभेदात्तस्य परमाणोर्निरवयवस्यानुपपत्तिः। सावयवत्वे तु वृत्तिविकल्पात्तदभाव इति शून्यतैव तत्त्वं भावानाम्। अनाश्रितोऽपि विकल्पो यथालोकप्रतीति कल्पनामात्रनिर्मितस्तात्त्विकीं शून्यतां गमयति, मिथ्याज्ञानानामपि तत्त्वावगमहेतुत्वदर्शनात्। यथा दूराद्वनस्पतौ हस्तिप्रत्ययप्रवाहो वनस्पतितत्त्वप्रतिपत्तेर्हेतुः; यथा रेखागवयो वा गवयत्वप्रतिपत्तेरित्यादि बहूत्प्रेक्षितव्यमिति भावः।

## वृत्तिः

दोषान्तराभिधानाय सूत्रम्—( अवयवावयविप्रसङ्गश्चैवमा प्रलयात् )। एवमुक्तप्रकारेण वृत्तिविकल्पदोषोऽवयविन्यवयवे च प्रसक्त आ प्रलयात्। प्रलयोऽभावः, तथा च सर्वाभाव एव स्यान्न कस्यापि ग्रहणमिति साधूक्तं सर्वाग्रहणमवयव्यसिद्धेरिति।

(१) 'नित्यस्य'—इति ज-फ-पु० नास्ति। (क) 'मन्यमान'—इति भाष्यवार्त्तिकपदमर्थतोऽत्र धृतम्।

## न्यायभाष्यम्

# आकाशासर्वगतत्वं वा ॥ १९ ॥

अथैतन्नेष्यते—परमाणोरन्तर्नास्त्याकाशमित्यसर्वगतत्वं प्रसज्यत इति ॥ १९ ॥

# अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः ॥२०॥

'अन्त'रिति पिहितं कारणान्तरैः कारणमुच्यते। 'बहि'रिति च व्यवधायकमव्यवहितं कारणमेवोच्यते। तदेतत्कार्यद्रव्यस्य सम्भवति, नाणोरकार्यत्वात्। अकार्ये

## न्यायवार्त्तिकम्

आकाशासर्वगतत्वं वा। अथ परमाणोरन्तराकाशं नास्ति असर्वगतं तर्ह्याकाशं प्रसज्यतेऽन्तः परमाणूनामसम्बन्धात्।

आकाशव्यतिभेदादनित्यः परमाणुरित्यभिदधानो व्यतिभेदार्थं प्रष्टव्यः—किमुक्तं भवति आकाशव्यतिभेदादिति? यदि परमाण्वाकाशसम्बन्धो व्यतिभेदः, तदाऽत्र न किञ्चिद् बाध्यते। न हि आकाशसम्बन्धात् परमाणोर्नित्यत्वमनित्यत्वं वा प्रसज्यत इति। अथ सम्बन्धमात्रमेवानित्यताकारणं ब्रूयात्? तथाप्याकाशग्रहणं व्यर्थम्—सम्बन्धमात्रस्यानित्यतासाधकत्वात्। न हि कृतकत्वस्य साधनभावे देवदत्तकृतकत्वादिति युक्तं वक्तुम्। संयोगमात्रं चोत्तरसूत्रेणानूद्यते चरितार्थं संयोगोपपत्तेरिति, तदेतदेव पुनरुच्यते इति। तस्मान्नायं व्यतिभेदार्थः। अथ परमाण्वन्तःसम्बन्धो व्यतिभेदः? सोऽपि न युक्तः, अकार्यत्वात् परमाणोः।

[ अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः। ] अन्तर्बहिरिति कार्यस्य कारणान्तरवचनम्, अकार्यश्च परमाणुस्तस्मान्नान्तर्बहिरिति। अथ परमाण्वयवसम्बन्ध आकाशेन व्यतिभेदः? एतदपि तादृगेव, परमाणोरकार्यत्वान्न तस्यावयवा इति। अथ परमाण्वयवानां विभागो व्यतिभेदः? सोऽप्यकार्यत्वेनैव प्रत्युक्तः। कार्यस्यावयवा विभज्यन्ते, अकार्यश्च परमाणुरिति। तस्मान्नावयवविभागः। उपेत्य परमाणोरवयवान् न तद्विभागस्याकाशं

## न्यायवार्त्तिकतात्पर्यटीका

आका—वा (सू० १९) ॥ (क)

तदेतद्वार्त्तिककारो दूषयति—आकाशव्यतिभेदादनित्यः परमाणुरित्यभिदधानो व्यतिभेदार्थं प्रष्टव्य इति।

अन्त—वः (सू० २०) ॥

अन्तर्बहिरिति(ख)वचनं कार्यस्य कारणान्तरवचनमिति। 'कारणान्तरं' कारणविशेषः तस्य 'वचन'मित्यर्थः। उपेत्य परमाणोरवयवान्न तद्विभागस्याकाशं कारणमिति। आकाशव्यति-

(क) १९मसूत्रं टीकाकृता न व्याख्यातम्। (ख) 'वचन'मिति वार्त्तिके नोपलभ्यते'।

## न्यायभाष्यम्

हि परमाणावन्तर्बहिरित्यस्याभावः। यत्र चास्य भावोऽणुकार्यं तत्, न परमाणुः, यतो हि नाल्पतरमस्ति स परमाणुरिति ॥ २० ॥

## न्यायवार्त्तिकम्

कारणं, कर्मजो हि विभागः तस्याकाशमपि कारणमिति न न्यायोऽस्ति। आकाशं च विभागहेतुत्वेन प्रतिपद्यमानः सर्वभावानामनवस्थानं प्रतिपद्येत। न हि सन्निहिते विभागहेतावाकाशे भावानामवस्थानं युक्तम्। अथ सदप्याकाशं निमित्तान्तरमपेक्षते? तद्व्यतिरेकेणाकाशस्यापि तदुत्पत्तावस्ति सामर्थ्यमिति प्रमाणाभावः। अथान्तःछुषिरं व्यतिभेदः? एतदपि नास्ति, सर्वतोऽव्यवहितस्य यस्य मध्येऽवयवा न सन्ति तत्छुषिरम्, न च परमाणोरवयवाः सन्ति, कुतः छुषिरं व्यतिभेदः। न चान्या गतिरस्ति। तस्मादाकाशव्यतिभेदादिति शून्यमभिधानम्। यत् पुनरेतदाकाशमसर्वगतं प्रसज्यते अन्तःपरमाणुनाऽसम्बन्धादिति? न, सर्वगतार्थापरिज्ञानात्—नायं सर्वगतार्थो—यन्नास्ति, तेन सम्बन्ध इति; अपि तु यन्मूर्तिमत् तेन सर्वेण (क)सम्बध्यते इति सर्वगतत्वार्थः। न च परमाणोर्मध्यमस्ति। तस्मान्न तेनासम्बन्धादाकाशमसर्वगतं प्रसज्यत इति ॥ १८-२० ॥

## न्यायवार्त्तिकतात्पर्यटीका

भेदादित्याकाशहेतुकं व्यतिभेदं विभागमाह। न चाकाशं विभज्यमानयोर्द्रव्यान्तरयोर्विभागस्य कारणम्, अपि तु कर्मेत्यर्थः। सर्वतोऽव्यवहितस्य यस्य मध्ये अवयवा न सन्तीति, तत्सुषिरमिति। 'सर्वतोऽव्यवहितस्य' निरन्तरस्यावयविनः स्वावयवद्वारेण। एतदुक्तं भवति—यस्यावयवाः परितो निरन्तरमवस्थिता मध्ये च न सन्ति, तत्छुषिरमिति। यन्मूर्त्तिमत् तेन सर्वेण संबध्यते। मूर्त्तिमता सर्वेण संबद्धत्वं सर्वगतत्वं वदतो वार्त्तिककारस्याजसंयोगस्याभ्युपगमः प्रौढिवादतयेति लक्ष्यते ॥ १८-२० ॥

## वृत्तिः

अस्तु सर्वाभाव इत्यत्राह—( न प्रलयोऽणुसद्भावात् )। आश्रयनाशाद्यभावेन परमाणोर्नाशाभावेन तत्सम्भवात्।

यद्वा, नन्ववयवावयविप्रवाहस्त्वया प्रलयपर्यन्तं स्वीकार्यः, प्रलये च निखिलपृथिव्यादिनाशात् पुनः सर्गो न स्यादित्याशयेन शङ्कते—अवयवेति। समाधत्ते—नेति। न सकलपृथिव्यादिनाशः परमाणुसद्भावादित्यर्थः ॥ १३-१४ ॥

(क) 'तेन सर्वेण सम्बध्यते'—इति क-ख-धृतपाठानन्तरं टीकाकृता गृहीतमिति तदेवात्र सन्निवेशितम्। 'सम्बन्ध' इति तु का-ख-पुस्तकयोर्मुद्रितम्।

### न्यायभाष्यम्

## (१)शब्दसंयोगविभवाच्च सर्वगतम् ॥ २१ ॥

यत्र क्वचिदुत्पन्नाः शब्दा विभवन्त्याकाशे—तदाश्रया भवन्ति, मनोभिः परमाणुभिस्तत्कार्यैश्च संयोगा विभवन्त्याकाशे, नासंयुक्तमाकाशेन किञ्चिन्मूर्त्तद्रव्यमुपलभ्यते, तस्मान्नासर्वगतमिति ॥ २१ ॥

## अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः ॥ २२ ॥

(२)संसर्पता प्रतिघातिना द्रव्येण न व्युह्यते, यथा काष्ठेनोदकम्। कस्मात्? निरवयवत्वात्। (३)सर्पच्च प्रतिघाति न विष्टभ्नाति—नास्य क्रियाहेतुं गुणं प्रतिबध्नाति।

### न्यायवार्त्तिकम्

(क)सर्वसंयोगशब्दविभवाच्च सर्वगतम्। यस्मात् सर्वमूर्तिमद्भिः संयोगा विभवन्ति आकाशे तदाश्रया भवन्ति, शब्दाश्च स्वकारणसन्निधानादुपजायमानाः सर्व एवाकाशमाश्रयन्त इति सर्वगतमाकाशम् ॥ २१ ॥

अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः। सर्पता क्रियावता द्रव्येणाकाशं न व्युह्यते, सर्पतश्च क्रियावतो द्रव्यस्य क्रियाहेतुं गुणं न प्रतिबध्नाति। कस्मात्? अस्पर्शत्वात्।

### न्यायवार्त्तिकतात्पर्यटीका

शब्द—तम् (सू० २१) ॥ (ख)

स्यादेतत्—आकाशं चेत्सर्वगतं ततो मूर्तिमतां द्रव्याणां तेन प्रतिबन्धाद्गतेरावरणं व्यूहान्तरापादनं च जलौघस्येव नावादिना भवेत्, न चास्ति, तस्मान्न सर्वगतमित्यत आह—

अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः (सू० २२) ॥

यत एवाव्यूहाविष्टम्भावत एवाप्रत्यूहं विभुत्वमस्येत्यर्थः ॥ २२ ॥

### वृत्तिः

परमाणुरेव क इत्यत्राह—( परं वा त्रुटेः )।

त्रुटेः परं यदतिसूक्ष्मं तत् परमाणुः। वाशब्दोऽवधारणे। अथवा त्रुटेरवयवस्तदवयवो वा परमाणुरिति विकल्पार्थो वाशब्दः। यद्वा, त्रुटेः परं सूक्ष्मं परमाणुः, त्रुटावेव वा विश्राम इति विकल्पोऽभिमतः ॥ १५ ॥

समाप्तमवयवावयविप्रकरणम्।

---

(१) 'सर्वसंयोगशब्दविभवाच्च'—इति ज०। 'शब्दसंयोगविभवाच्च सर्वगत'मिति न्यायसूचीनिबन्धे। विश्वनाथसम्मतोऽप्ययं पाठः। (२) 'संयताप्रतिघातिना'—इति ज०। (३) 'संसर्पंश्च'—इति फ०। (क) अत्र वार्त्तिकसम्मतसूत्रपाठोऽन्यविध इति द्रष्टव्यम्। (ख) २१शसूत्रं टीकाकृता न व्याख्यातम्।

## न्यायभाष्यम्

कस्मात् ? अस्पर्शत्वात्। विपर्यये हि विष्टम्भो दृष्ट इति(१)स भवान् सावयवे स्पर्शवति द्रव्ये दृष्टं धर्मं विपरीते नाशङ्कितुमर्हति।

अण्ववयवस्याणुतरत्वप्रसङ्गादणुकार्यप्रतिषेधः। सावयवत्वे चाणोरण्ववयवोऽणुतर इति प्रसज्यते। कस्मात् ? कार्यकारणद्रव्ययोः परिमाणभेददर्शनात्। तस्मादण्ववयवस्याणुतरत्वम्, यस्तु सावयवोऽणुकार्यं तदिति। तस्मादणुकार्यमिदं प्रतिषिध्यते इति।

कारणविभागाच्च कार्यस्यानित्यत्वं, नाकाशव्यतिभेदात्। लोष्टस्यावयवविभागादनित्यत्वं, नाकाशसमावेशादिति ॥ २२ ॥

## न्यायवार्त्तिकम्

यत् स्पर्शवद् भवति तद् व्यूह्यते प्रतिबध्नाति च, न त्वेवंधर्मकमाकाशं तस्मादप्रतिघातीति। स भवान् सावयवे स्पर्शवति द्रव्ये दृष्टं धर्मं विपरीते नाशङ्कितुमर्हतीति। उक्तं चात्र—यदि परमाणुर्विभज्यते परमाणुर्न स्यात्। किं कारणम् ? विभागेऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानमिति। विनाशश्च परमाणोर्भवन् कारणविनाशाद्वा कल्प्येत, कारणविभागाद्वा। उभयं च नास्ति, परमाणोरकार्यत्वादित्युक्तम्। तस्मान्नाकाशव्यतिभेदादनित्यत्वमिति ॥ २२ ॥

## वृत्तिः

अथ विश्वस्य शून्यत्वात् क्व परमाणुसम्भावनेति मतनिराकरणाय निरवयवप्रकरणम्।

तत्र पूर्वपक्षसूत्रम्—( आकाशव्यतिभेदात्तदनुपपत्तिः )।

तस्य निरवयवस्याणोरनुपपत्तिः, कुतः ? आकाशव्यतिभेदात् अन्तर्बहिश्चाकाशसमावेशात्। तथा च सावयवः, ततश्चानित्य इति ॥ १६ ॥

अथ नाऽऽकाशव्यतिभेदस्तर्हि आकाशमसर्वगतं स्यादित्याह—( आकाशासर्वगतत्वं वा )। स्यादिति शेषः ॥ १७ ॥

समाधत्ते—( अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः )। अन्तःशब्दो बहिःशब्दश्च कार्यद्रव्यस्यावयवविशेषवाची, न चाकार्येऽवयवसम्भव इत्यर्थः। बहिरिति दृष्टान्तार्थम् ॥ १८ ॥

आकाशस्यासर्वगतत्वं स्यादित्यत्राह—( शब्दसंयोगविभवाच्च सर्वगतम् )। शब्दस्य संयोगस्य च यो विभवः, अथवा शब्दजनकसंयोगस्य यो विभवः सार्वत्रिकत्वं तस्मात् पुनः सर्वगतमाकाशमिति शेषः। सर्वदेशे शब्दोत्पत्त्या तज्जनकसंयोगानुमानात्सर्वमूर्तसंयोगित्वरूपं सर्वगतत्वं तस्य सिद्धम् ॥ १९ ॥

(१) 'स भवान्'—इति नास्ति ग० ख०। 'सावयव'—इति नास्ति फ०-ज०।

### न्यायभाष्यम्

## मूर्त्तिमतां च संस्थानोपपत्तेरवयवसद्भावः ॥ २३ ॥

परिच्छिन्नानां हि स्पर्शवतां संस्थानं त्रिकोणं चतुरस्रं समं परिमण्डलमित्युपपद्यते, यत्तत्संस्थानं सोऽवयवसन्निवेशः, परिमण्डलाश्चाणवस्तस्मात्सावयवा इति ॥२३॥

## संयोगोपपत्तेश्च ॥ २४ ॥

मध्ये सन्नणुः पूर्वापराभ्याम् अणुभ्यां संयुक्तस्तयोर्व्यवधानं कुरुते। व्यवधानेनानुमीयते पूर्वभागेन पूर्वेणाणुना संयुज्यते, परभागेन परेणाणुना संयुज्यते, यौ तौ पूर्वापरौ भागौ तावस्यावयवौ, एवं सर्वतः संयुज्यमानस्य सर्वतो भागा अवयवा इति।

यत्तावन्'मूर्तिमतां संस्थानोपपत्तेरवयवसद्भाव'इति ? अत्रोक्तम्। किमुक्तम् ? विभागेऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्र निवृत्तेरणवयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध इति।

### न्यायवार्त्तिकम्

मूर्त्तिमतां च संस्थानोपपत्तेरवयवसद्भावः। सावयवाः परमाणवो मूर्त्तिमत्त्वादिति—संस्थानवत्त्वाच्च सावयवा इति। संस्थानवत् सावयवं दृष्टं घटादि, संस्थानवन्तश्च परमाणवः, तस्मात् सावयवा इति ॥ २३ ॥

### न्यायवार्त्तिकतात्पर्यटीका

पुनः शून्यतावादी प्रत्यवतिष्ठते—

मूर्त्तिमतां च संस्थानोपपत्तेरवयवसद्भावः (सू० २३) ॥ वस्त्वर्थः सिद्धान्तं निवर्त्तयति। यद्यपि मूर्त्तिमतामिति संबन्धित्वमात्रेणोपात्तं सूत्रे, तथाऽपि हेतुपदतया वार्त्तिककारो व्याचष्टे—सावयवाः परमाणवो मूर्त्तिमत्त्वाद् घटादिवदिति। प्रयोगान्तरमाह—संस्थानवत्त्वादिति ॥ २३ ॥

### वृत्तिः

नन्वाकाशस्य सर्वसंयोगित्वे व्यूहन-विष्टम्भौ स्यातामत आह—( अव्यूहाविष्टम्भविभुत्वानि चाऽऽकाशधर्माः )।

व्यूहः प्रतिहतस्य परावर्तनम्, विष्टम्भः उत्तरदेशगतिप्रतिबन्धः, आकाशे तयोरभावः, निःस्पर्शत्वात्। विभुत्वं सर्वगतत्वम्। (१) यद्यप्येते सूत्रे शून्यतावादिमते न सङ्गच्छेते आकाशादेस्तैरनभ्युपगमात्, तथाऽपि त्वन्मत इति पूरयित्वा व्याख्येये ॥ २० ॥

(१) 'यद्येते'—इति म०।

## न्यायभाष्यम्

यत्पुनरेतत्संयोगोपपत्तेश्चेति ? स्पर्शवत्त्वाद्व्यवधानमाश्रयस्य चाव्याप्त्या भागभक्तिः। उक्तं चात्र स्पर्शवानणुः स्पर्शवतोरण्वोः प्रतिघाताद्व्यवधायको न सावयवत्वात्(१)। स्पर्शवत्त्वाच्च व्यवधाने सत्यणुसंयोगो नाश्रयं व्याप्नोतीति भागभक्तिर्भवति भागवानिवायमिति। उक्तं चात्र विभागेऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात् तदवयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध इति ॥ २४ ॥

मूर्तिमतां च संस्थानोपपत्तेः संयोगोपपत्तेश्च परमाणूनां सावयवत्वमिति हेत्वोः—

### अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥ २५ ॥

यावन्मूर्त्तिमद्यावच्च संयुज्यते तत्सर्वं सावयवमित्यनवस्थाकारिणाविमौ हेतू, सा चानवस्था नोपपद्यते। सत्यामनवस्थायां (२)सत्यौ हेतू स्याताम्, तस्मादप्रतिषेधोऽयं निरवयवत्वस्येति।

## न्यायवार्त्तिकम्

संयोगोपपत्तेश्च। अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः। सावयवत्वं संयोगित्वादिति सूत्रार्थः। नन्विदं सूत्रं संस्थानवत्त्वादित्यनेनैव चरितार्थं संयोगविशेषस्य संस्थानशब्देनाभिधानात्; (३)न चरितार्थं, अवयवसंयोगविशेषस्य (४)संस्थानत्वेनाभिधानात् संयोगमात्रं च संयोगशब्देनाभिधीयत इति न दोषः। तत्र मूर्तिर्नामा(५)व्यापिनो द्रव्यस्य षड्विधं परिमाणम्—अणु महद्दीर्घं ह्रस्वं परमह्रस्वं परमाण्विति। संस्थानं नाम प्रचयाख्यः संयोगः। संयोगोऽप्राप्तिपूर्विका प्राप्तिरिति। यत् तावत् मूर्तिमत्त्वात् सावयवा इति ?

## न्यायवार्त्तिकतात्पर्यटीका

सूत्रान्तरमनुवृत्तिसहितं पठति—

संयोगोपपत्तेश्च (सू० २४) इति ॥ २४ ॥

अन—धः (सू० २५) ॥ पौनरुक्त्यं देशयति—नन्विदमिति। परिहरति—न चरितार्थमिति। मूर्त्तिर्नामाव्यापिनो द्रव्यस्य षड्विधं परिमाणमिति। परमह्रस्वत्व-परमाणुत्वे परमसूक्ष्म एव द्रव्ये व्यवतिष्ठेते, व्यापि तु गृहीत्वा परममहत्त्वपरमदीर्घत्वाभ्यामष्टविधं परिमाणं भवति। परममहत्त्वपरमदीर्घत्वे च सर्वगतव्यापिनी इति न मूर्त्तिः। असर्वगतद्रव्यपरिमाणं मूर्त्तिरिति पारमर्षवचनात्। संस्थानं नाम प्रचयाख्यः संयोगो घटादिवृत्तिर्घटत्वादिजातिव्यक्तिहेतुरिति। 'संयोगः' संयोगमात्रं, न त्वप्राप्तिपूर्विका प्राप्तिरिति। तस्मादपौनरुक्त्यम्। तदेतच्छून्यतामतमपाकरोति—यत्तावन्मूर्त्तिमत्त्वादिति। शून्यतावादी प्रलयान्त-

(१) अतःपरं 'किन्तु स्पर्शवत्त्वात्'—इति ख०पु० अधिकम्। (२) 'अवस्थायाम्'—इति ज०। (३) 'न च'—इति ख०। (४) 'संस्थानवत्त्वेन'—इति ख०। (५) '...व्यापिद्रव्यस्य'—इति क-ख०।

## न्यायभाष्यम्

विभागस्य च(१)विभज्यमानहानिर्नोपपद्यते तस्मात्प्रलयान्तता नोपपद्यते इति।

## न्यायवार्त्तिकम्

सत्म, अनेकान्तात्—यः परमाणोरवयवः स मूर्तिमांश्च निरवयवश्चेत्यनेकान्तः। अथ मूर्तिमत्त्वात् तस्याप्यवयवाः सन्ति? एवं सति त्रुटिरमेयः प्राप्नोति, गुरुत्वसंख्यापरिमाणैरित्युक्तम् (क)। अथ तावन्मूर्तिमद्भिभज्यते यावदन्त इति? अन्तो निरवयव (२)इति वाक्यम्। अथान्तो विभागः? स न युक्तः, विभागस्य विभज्यमानैर्विनाऽनुपपत्तेरिति।

## न्यायवार्त्तिकतात्पर्यटीका

स्वाभिमानेनाह—अथ तावदिति। सिद्धान्त्याह—अन्तो निरवयव इति। प्रलयान्तत्वमधस्तान्निराकृतमिति भावः। नन्वधस्तान्निराकरणान्मा भूत्प्रलयान्तो विभागः, विभागान्तस्तु भविष्यति, किं परमाण्वन्ततायहेणेत्याशङ्कते—अथान्तो विभागः। निराकरोति—स न युक्त इति। नासति गुणिनि गुणोऽस्तीत्यर्थः। एतावन्तश्च कल्पाः सम्भविनः। तत्र प्रथमे कल्पे

## वृत्तिः

पूर्वपक्षी युक्त्यन्तरमाशङ्कते—( मूर्त्तिमतां च संस्थानोपपत्तेरवयवसद्भावः )।

परमाणोरिति शेषः। हेतुमाह—संस्थानोपपत्तेः, संस्थानवत्त्वात्। परमाणुर्हि परिमण्डलाकारः। संस्थानवत्त्वे मानं भङ्ग्या वदति—मूर्तिमतामिति। मूर्त्तत्वात् संस्थानवत्त्वमित्यर्थः। चः पूर्वोक्तहेतुं समुच्चिनोति। मूर्त्तत्वस्य समुच्चयार्थो वा चकारः॥ २१॥

युक्त्यन्तरमाह—( संयोगोपपत्तेश्च )।

अवयवसद्भाव इत्यनुवर्त्तते। संयोगवत्त्वादिति हेत्वर्थः। संयोगवत्त्वात् कथं सावयवत्वमिति चेत्? इत्थम्, संयोगस्याव्याप्यवृत्तित्वात्, अव्याप्यवृत्तित्वं चावच्छेदकभेदं विना नोपपद्यते। अवच्छेदकश्चावयव इति। ननु परमाण्ववयवेऽप्ययं दोषः स्यात्, तथा चानवस्थितपरम्पराप्रसङ्ग इति चेत्? त्यज तर्हि परमाणुव्यसनं, स्वीकुरु शून्यतावादम्। निरवयवमाकाशादिकमपि नास्तीति भावः॥ २२॥

---

(१) विभज्यमानहानानुपपत्तेः प्रलयाभावः, विभागोऽस्ति विभज्यमानं नास्तीत्येवमसत्यनवस्था न स्यात्सोऽयं विभागो विभज्यमानहानेनापि पद्यते'—इति टि०।

(२) 'इत्युक्तम्'—इति क०ख०धृतपाठान्तरम्।

(क) १अ०-सूत्र-वार्त्तिके ( १०५८ पृ० वा० पं० २ )।

## न्यायवार्त्तिकम्

एतावच्चैतत् स्यात्—परमाण्वन्तो विभागः प्रलयान्तो वा अनन्तो वा ? यदि परमाण्वन्तोऽनेकान्तः। व्याहतं भवति परमाणुर्मूर्तिमांश्च न च सावयव इति। कः पुनरत्र व्याघातः ? निरवयवं मूर्तिमन्तं च परमाणुं प्रतिपद्यसे, सावयव इति च ब्रवीषि। प्रतिपत्त्या व्याहन्यते। अनन्ते प्रलयान्ते च व्याघातः—त्रुटेरमेयत्वप्रसङ्गः, विभागस्य चानाधारत्वप्रसङ्गः। 'सावयवः' 'परमाणु'रिति च प्रतिज्ञापदे व्याहते। कथमिति ? सावयवशब्दस्यार्थः समानजातीयारब्धं समानजातीयाश्रितम् अवयवः तदाधार इति। सावयवः परमाणुरिति ब्रुवता कार्यविशेषः परमाणुरित्युक्तं भवति। कार्यविशेषः परमाणुश्चेति व्याहतम्। अथैकपरमाणुपूर्वकत्वं परमाणोः प्रतिपद्यसे, तथा च न परमाणुः सावयव इति नास्यावयवाः सन्ति, किं तु कृतकः परमाणुपूर्वकत्वात्। एतच्च न, दृष्टान्ताभावात्—एकं कारणमिति न दृष्टान्तोऽस्ति, एकेन चारभ्यमाणस्य परमाणोर्न कारणसामग्र्यपेक्षणमस्तीति न प्रागभावो युक्तः। यस्य प्रागभावो नास्ति तस्य चोत्पादोऽपि न युक्तः। अथैकशब्दपूर्वकत्वे सति शब्दादीनां प्रागभावादि प्रतिपद्यते ? तदप्यसिद्धम्—नैकं कारणमस्ति आश्रयाद्यपेक्षः शब्दः शब्दान्तरं करोतीति।

प्रतिपद्यापि चैकपरमाणुपूर्वकत्वं परमाणोः कः सावयवार्थः ? कतमस्तत्रावयवः कतमस्तत्रावयवीति ? अथ कारणमेवावयव इति ? न कार्यपरमाणुकाले कारणपरमाणुरस्तीति सावयवार्थो वक्तव्यः। मूर्तिमत्त्वात् सावयवः परमाणुरिति ब्रुवाणो विकल्पतः पुनः पर्यनुयोज्यः

## न्यायवार्त्तिकतात्पर्यटीका

अनैकान्तिकत्वव्याघातौ, द्वितीये विभागस्यानाधारत्वप्रसङ्गः, तृतीये त्रुटेरमेयत्वप्रसङ्ग इत्याह—एतावच्चैतत् कल्पजातं स्यादिति। परमाण्वन्ततां विभागस्य ब्रुवन्निरवयवं मूर्त्तिमन्तं परमाणुं प्रतिपद्यस इति। अनन्तत्वे तु त्रुटेरमेयत्वप्रसङ्गो व्याघातः। प्रलयान्तत्वे च विभागस्यानाधारत्वप्रसङ्गो व्याघातः। सावयवशब्दस्यार्थः समानजातीयावयवं न केवलं तदारब्धमपि तु तदाश्रितम्। तन्त्वाद्यारब्धं पटादिद्रव्यं तन्त्वाद्याश्रितं च। नन्वेवमपि कुतः सावयवत्वमित्यत आह—अवयवः तदाधारः तस्य समानजातीयारब्धस्य कार्यद्रव्यस्याधारः। (क)यस्मात्सावयवत्वं कार्यविशेषः तस्मात्सावयवाः परमाणव इत्यतिब्रुवता कार्यविशेषः परमाणुरित्युक्तं भवति। कार्यविशेषः परमाणुश्चेति व्याहतम्, आनन्त्ये तु त्रुटेरमेयत्वप्रसङ्गात्। (ख)सा खल्वनवयवस्य कल्पितस्य परमसूक्ष्मतया परमाण्वाख्या। तेन परमाणुरिति किमुक्तं भवति ?—अनवयवोऽकार्यश्चेति। सावयव इति किमुक्तं भवति ?—सावयवः कार्यश्चेति। प्रतिज्ञापदयोर्व्याघात इत्यर्थः। अथ मा भूत् त्रुटेरमेयत्वमित्येकपरमाणुपूर्वकत्वं परमाणोः प्रतिपद्यसे ? शेषमतिरोहितार्थम्।

(क) 'तस्मात्'—इति क-ख०। (ख) सा खल्वित्यादिग्रन्थो वार्त्तिकप्रतीक इव प्रतिभाति, न तु वार्त्तिके दृश्यते।

## न्यायवार्त्तिकम्

केयं मूर्तिः ? यया मूर्त्या मूर्तिमान् परमाणुरिति। सत्यां च मूर्तौ किमर्थान्तरमनर्थान्तरं वा परमाणोर्मूर्तिरिति ? यदि रूपादिविशेषो मूर्तिर्न भवत्पक्षे तया मूर्त्या मूर्तिमान् कश्चन। न च रूपादिव्यतिरिक्तं प्रमाणेन परमाणुं प्रतिपद्यसे, सर्वापकर्षप्राप्ता रूपादय एव परमाणुः, न च रूपादिभी रूपादयो रूपादिमन्तः, न चानर्थान्तरभावे मतुब्व्युत्पादनं पश्यामः। ननु दृष्टोऽनर्थान्तरभावेऽपि मतुप्प्रत्ययो यथा हस्तिमती सेनेति ? न दृष्ट इति ब्रूमः। यथा च(१)सेना अर्थान्तरं तथोक्तमिति। असति चार्थान्तरभूते परमाणावसत्यां च मूर्तौ सावयवाः परमाणवो मूर्तिमत्त्वादिति वाक्यस्यार्थो रूपादयो रूपादिमन्तो रूपादिमत्त्वादिति। एतेन पटो मूर्तिमत्त्वात् सावयव इति प्रत्युक्तम्। न च रूपादिव्यतिरिक्तं पटं प्रतिपद्यसे, न मूर्तिमत्त्वम्, अथ च मूर्तिमत्त्वात् सावयवः पट इति च ब्रवीषि। व्यतिरेकाभ्युपगमे व्याघातः, अनभ्युपगमे नार्थः सिध्यतीति ? दृष्टान्तस्योभयधर्मसिद्धत्वात् न पटे सावयवत्वं मूर्तिमत्त्वार्थ इति। एतेन सावयवाः परमाणवः संयोगोपपत्तेरिति व्याख्यातम्। संयोगस्याभ्युपगमे व्याघातः अनभ्युपगमे परमाणुत्वादिति हेत्वर्थः। संस्थानविशेषवत्त्वं तु असिद्धम्—य एवार्थः सावयवत्वादिति, स एवार्थः संस्थानविशेषवत्त्वादिति। अथ संस्थानमसर्वगतद्रव्यपरिमाणं प्रतिपद्येथाः, एवं सति मूर्तिमत्त्वेन संस्थानवत्त्वं चरितार्थमिति पृथग् न वक्तव्यम्—'मूर्त्तिमत्त्वात्' 'संस्थानविशेषवत्त्वाच्चे'ति। उक्तं चात्र विभागेऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात् अण्ववयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध इति।

यत् पुनरेतत् संयोगोपपत्तेर्मध्ये सन्नणुः पूर्वापराभ्यां(२)सम्बध्यमानः सावयवः। अयमेव चार्थः कारिकया(३)गीयते—

"षट्केन युगपद्(४)योगात् परमाणोः षडंशता।
षण्णां (क)समानदेशत्वात् पिण्डः स्यादणुमात्रकः॥" इति।

परमाणुर्युगपत् षड्भिः सम्बध्यमानः षडंशः प्राप्नोति, भिन्नदेशत्वात् सम्बन्धानाम्। अथ

## वृत्तिः

समाधत्ते—( अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः )।

पूर्वोक्तयुक्त्या परमाणोर्निरवयवत्वप्रतिषेधो न युक्तः, कुतः ? अनवस्थाकारित्वात्। प्रामाणिकीयमनवस्था स्यादत आह अनवस्थानुपपत्तेश्चेति। सर्वेषामनवस्थितावयवत्वे मेरुसर्षपयोस्तुल्यपरिमाणत्वापत्तिः, इत्थं च तत्संयोगावच्छेदका दिग्विभागाः, न तु शून्यता युक्ता निष्प्रमाणकत्वात्। प्रमाणसत्त्वे शून्यत्वविरोधात्, निष्प्रमाणकशून्यताभ्युपगमे किमपराद्धं पूर्णतयेति दिक्॥ २३॥

समाप्तं निरवयवप्रकरणम्॥

---

(१) 'सेनानर्थान्तरम्'—इति ख०। 'सेना(न)र्थान्तरम्' इति क-पुस्तके मुद्रितम्। (२) 'संबध्यमानः'—इति क-ख-धृतपाठान्तरम्। (३) 'अभिधीयते'—इति क-ख-धृतपाठान्तरम्। (४) 'योगे'—इति ख०।

(क) 'समानदेशत्वे' इति आदर्शपुस्तकयोर्मुद्राप्रमाद इति प्रतिभाति। "षण्णां समानदेशत्वादिति वाक्य"मित्याद्युत्तरग्रन्थदर्शनात् ( १०७०पृ: २पं० ) आकरग्रन्थे ( विज्ञप्तिमात्रतासिद्धौ विंशतिकाकारिकायां ) वसुबन्धुव्याख्यानदर्शनाच्च—"समानदेशत्वा"दित्येव प्रकृतः पाठो निर्णीतः।

## न्यायवार्त्तिकम्

समानदेशाः सर्वे संयोगाः षण्णां परमाणूनां ? पिण्डः परमाणुमात्रकः प्राप्नोति। यदि द्वे द्वे द्रव्ये अधिकृत्याभिधीयते (१)ततोऽभिन्नदेशाः। अथ परमाणूनां (२)सम्बन्धिनं परमाणुमधिकृत्याभिधीयते ? ततोऽनेकैः संयोगः समानदेश इति न किञ्चिद् बाध्यते।

यत् पुनरेतत्—समानदेशाः परमाणव इति, तन्न, अनभ्युपगमात्। देशा एव तावत् परमाणौ न सन्तीति कुतः समानदेशा भविष्यन्ति। न च किञ्चिद् द्रव्यं समानदेशमस्तीत्यसिद्धो दृष्टान्तः। (३)ननु कार्यकारणे संयोगिसमानदेशे यथा घटः पटेन सम्बध्यते तन्तुना तदंशुना च (४)तन्त्वाश्रयेणेत्यादि ? एतदनभ्युपगमेन प्रत्युक्तम्। समानदेशास्तत्र संयोगा इति न

## न्यायवार्त्तिकतात्पर्यटीका

यदि द्वे (५)द्रव्ये अधिकृत्याभिधीयत इति। मध्यस्य हि परमाणोरुपर्यधःपार्श्ववर्तिभिः परमाणुभिर्ये संयोगास्तत्र मध्यस्य पूर्वेण परमाणुना यः संयोगो नासौ मध्यपश्चिमपरमाण्वाश्रितः, एवं (६)मध्यमपरमाणुसंयोगो नैव मध्यमपूर्वपरमाण्वाश्रय इति। एवमन्यत्रापि द्रष्टव्यम्। षडपि भिन्नदेशा एवेति समानदेशत्वमसिद्धम्। अथ परमाणूनां संबन्धिनं परमाणुं मध्यम् अधिकृत्योच्यते तदाश्रिता हि संयोगाः षडपि भवन्तीति तत्राह—न किञ्चिद्बाध्यत इति।

स्यादेतत्—संयोगसमानदेशत्वेन परमाणवोऽपि संयुक्ताः समानदेशा इति पिण्डस्याणुमात्रत्वप्रसङ्ग इति परोक्तमनुवदति—यत्पुनरेतदिति। तद् दूषयति—तन्नेति। यत्र यत्समवेतं स तस्य देशो यथा रूपादीनां द्रव्यम्। न च परमाणवः क्वचित्समवयन्ति, किं तु तत्संयोगाः। तेन देशवतां संयोगानामस्तु समानदेशता, न तु परमाणूनामदेशत्वादित्यर्थः। देशयति—ननु कार्यकारणे इति। यथेह कुण्डे बदरमिति यथा बदरं कुण्डदेश एवं 'तदवयवास्तदवयवाः। न च समवाय एव देशदेशित्वनिबन्धनमपि तु संयोगोऽपि। न हीह कुण्डे बदरमिह पटे शुक्लत्वमिति वा आधार्याधारप्रत्ययो विशिष्यते। तस्माद्बहूनां द्रव्याणां समानदेशत्वदर्शनान्नासिद्धो दृष्टान्त इत्यर्थः। तद् दूषयति—एतदनभ्युपगमेन प्रत्युक्तम्। द्रव्याणामेकत्र समवायेन समानदेशतां व्यासेधामो न तु संयोगेन। समवायेन हि समानदेशता स्थौल्यपरिपन्थिनी, यथा गन्धरसरूपस्पर्शाः समानदेशा न स्थौल्यमारभन्ते। तत्कस्य हेतोः ? एषामसूर्त्तानां समानदेशसमवायात्। मूर्त्तास्तु स्पर्शवन्तः समवायेनासमानदेशाः परस्परसंयोगिनो यदि स्थौल्यमारभन्ते किं बाध्यते ? तस्मात्संयोगेन समानदेशता न प्रतिषिध्यते, समवायेन तु प्रतिषिध्यते, सा हि

---

(१) 'ततोऽपि देशाः'—इति ख०। (२) ततो भिन्नदेशा अथ परमाणूनां—इति क-पुस्तकधृतपाठान्तरम्। (३) 'ननु च'—इति क-ख०। (४) 'तत्त्वाश्रयेणेत्यादि'—इति ख०। (५) एकं 'द्वे'पदं टीकाकृता न गृहीतम्। (६) 'मध्यपश्चिमपरमाणुसंयोगो नैव मध्यपूर्वपरमाण्वाश्रयः' इति पाठः सम्भाव्यते।

## न्यायवार्त्तिकम्

कार्यकारणे, न च संयोगा अपि द्वे द्वे अधिकृत्येति। षण्णां समानदेशत्वादिति वाक्यं न (१)द्रव्यसमानदेशतायां व्यवतिष्ठते, न संयोगसमानदेशतायामिति।

यत् पुनरेतत्—

'दिग्देशभेदो यस्यास्ति तस्यैकत्वं न युज्यते'—

क एवमाह दिग्देशभेदोऽस्तीति, दिग्देशभेदाश्च दिशः संयोगाः। परिकल्पितांश्च दिग्देशभेदान् कल्पयित्वा परमाणोर्दिग्देशभेदोऽभ्युपगम्यते, (२)मुख्यतस्तु न दिग्देशभदो नापि परमाणोर्भेदः, परमाणुर्दिशा सम्बध्यत इति—एतावन्मात्रं विद्यते, एतच्च न किञ्चिद् बाधते।

## न्यायवार्त्तिकतात्पर्यटीका

स्थौल्यविरोधिनीति सिद्धम्। अभ्युपेत्यैवमुक्तं संयोगाः समानदेशा इति। परमार्थतस्तु कुण्डबदरसंयोगस्य कुण्डबदरे आश्रयः,(३)तदवयवकुण्डबदरसंयोगस्य कुण्डबदरावयवा इति सिद्धं संयोगानामपि भिन्नदेशत्वमित्याह—न च संयोगा अपीति। उपसंहरति—षण्णां समान-देशत्वादिति वाक्यमिति।

यत्पुनरुक्तं 'दिग्देशभेदो यस्यास्ति तस्यैकत्वं न (४)युज्यते' इति। परमाणोः किल भवद-भिमतस्यैकस्य दिग्भागाः षट्, न चैकस्य दिग्भागेऽभेदोऽस्तीति षडेव परमाणवः। एतद् दूषयति—क एवमाह दिग्देशभेदो(क)ऽस्तीति। स्वरूपेणैका दिक् सर्वगता च, नास्या भेदोऽस्तीत्यर्थः। यद्येकैव दिक्, कः तर्हि परमाणावस्मादयं परमाणुः पूर्वोऽयं पश्चिम इत्यादयो बुद्धिव्यपदेशभेदा इत्यत आह—दिग्देशभेदाश्च दिशः संयोगाः। एकत्वेऽपि दिशः आदित्योदय-देशप्रत्यासन्नदेशसंयुक्तो यः स इतरस्माद्विप्रकृष्टदेशसंयोगात्परमाणोः पूर्वः, एवमादित्यास्तमयदेश-परमाणू अपेक्ष्य यः सूर्योदयास्तमयदेशविप्रकृष्टदेशसंयोगः स मध्यवर्ती। एवमेतयोर्यौ तिर्यग्देश-संबन्धिनौ मध्यस्य आर्जवेन व्यवस्थितौ पार्श्ववर्त्तिनौ तौ दक्षिणोत्तरौ परमाणू। एवं मध्यन्दिनवर्तिसूर्यसन्निकर्षविप्रकर्षावपेक्ष्य उपर्यधोभावो द्रष्टव्यः। संयुक्तसंयोगाल्पत्वभूयस्त्वे च प्रत्यासन्नदेशसंयुक्तो यः स इतरस्माद्विप्रकृष्टदेशसंयोगात्परमाणोः पश्चिमः, तौ च पूर्वपश्चिमौ सन्निकर्षविप्रकर्षौ, पूर्वसंख्यावच्छिन्नत्वं चाल्पत्वं परसंख्यावच्छिन्नत्वं च भूयस्त्वम्। तस्मादेक-स्यापि परमाणोः परमाण्वन्तरसंयोगा अव्याप्यवृत्तय एव भागाः। एवं दिशोऽप्येकस्या अपि संयोगा एव भागाः, सोऽयं परमाणोः षट्केन युगपद्योगो मूर्तत्वमात्रप्रयुक्तो न सावयवत्वप्रयुक्त इति न सावयवत्वं गमयितुमर्हतीति। तेन यदुच्यते प्रसङ्गसाधनं परैः—'यन्निरवयवं तन्न षट्केन संयुक्तं यथा विज्ञानं तथा च परमाणुरिति व्यापकविरुद्धोपलब्धि'रिति, तन्निरस्तम्, मूर्तत्वप्रयुक्तत्वेन

(१) 'द्रव्यं समान'—इति ख०। (२) 'मुख्यस्तु'—इति ख०। (३) 'तदवयव-कुण्डसंयोगस्य'—इति समीचीनतया सम्भाव्यते। (४) 'युक्तमिति'—इति क-ख०। (क) 'यस्यास्तीति' इति क० ख०। वार्त्तिके यस्येत्यंशस्य दर्शनादत्र 'यस्ये'ति सम्प्रातायातमिति कृत्वा निष्काषितम्।

## न्यायभाष्यम्

अनवस्थायां च प्रत्यधिकरणं द्रव्यावयवानामानन्त्यात् परिमाणभेदानां गुरुत्वस्य चाग्रहणं समानपरिमाणत्वं चावयवावयविनोः परमाण्ववयवविभागादूर्ध्वमिति ॥ २५ ॥

## न्यायवार्त्तिकम्

छायावृती तर्हि न प्राप्नुतः परमाणोरदेशत्वादिति ? न देशवत्त्वाच्छायावृती,—किं तर्हि ? मूर्तिमत्स्पर्शवत्त्वात् मूर्तिमत् स्पर्शविशिष्टं द्रव्यं द्रव्यान्तरमावृणोति। किमिदमावृणोति ? स्वसम्बन्धित्वेनेतरस्य सम्बन्धं प्रतिषेधतीति। छाया तु तेजःपरमाणोरावरणात्, मूर्तिमता परमाणुना तेजःपरमाणुराव्रियते यत्र चास्यावरणं तत्र छायेति विरलतेजःसम्बन्धीनि द्रव्यगुणकर्माणि छायेत्यभिधीयते सर्वतो व्यावृत्ततेजःसम्बन्धीनि तु तानि तमःसंज्ञकानीति। तदेवं छायावृत्योरन्यथासिद्धत्वादहेतुः। एतेन क्रियावत्त्वात् स्पर्शवत्त्वाद् द्रव्यान्तरारम्भकत्वात् क्रियाकारण(१)संस्काराश्रयत्वात् परत्वापरत्ववत्त्वादित्येवमादि प्रत्युक्तम्। कथमिति ? यथा मूर्तिमत्त्वात् सावयवा इत्येतस्मिन् वाक्ये प्रतिज्ञादोषा हेतुदोषाः, तथा सर्वेष्वेतेषु पक्षेषु परपक्षाभ्युपगतेषु हेतुषु यथासम्भवं विरुद्धासिद्धानैकान्तिकादिदोषभेदा वक्तव्या इति। शेषं भाष्ये।

ये तु क्रियावत्त्वादिभिः परमाणूनामनित्यत्वं साधयन्ति तैः क्रियावत्त्वं व्यञ्जकं वा कारकं वाऽवश्यमभ्युपगन्तव्यम्। यदि क्रियावत्त्वमनित्यत्वस्य कारकं ? यदक्रियं तन्नित्यं प्राप्नोति। अथ जन्म क्रियेत्यभिधीयते ? तदाऽनित्याः परमाणवो जन्मवत्त्वादिति हेत्वर्थः; जन्मवत्त्वमसिद्धं परमाणूनामिति। अथ क्रियावत्त्वं व्यञ्जकमुच्यते ? व्यञ्जकत्वेऽप्यन्यतोऽनित्यत्वं परमाणूनां वक्तव्यम्। न ह्ययं व्यञ्जकस्य धर्मो यद्व्यङ्ग्यं वस्तु कुर्यात्, अपि तु अन्यतो भूतं हेतुर्व्यनक्ति। न हि प्रदीपोऽसन्तमर्थं (२)प्रकाशयति। परसिद्धोत्क्षेपणादिक्रियाभ्युपगमे विरुद्धः। एतेन घटादिदृष्टान्तो व्याख्यातः। क्रियावत्त्वं च क्रियासमवायः, तदभ्युपगमे विरुद्धः।

## न्यायवार्त्तिकतात्पर्यटीका

षट्कसंयोगस्य सावयवत्वेन व्याप्तेरसिद्धेः। छायातपयोगोऽपि परमाणोरेकसंयोगस्याव्याप्यवृत्तित्वेनोपपन्नः।

नन्वनवस्था नोपपद्यत इत्युक्तं तत्कुत इत्यत आह भाष्यकारः—अनवस्थायां च प्रत्यधिकरणं द्रव्यावयवानामानन्त्यात्।

क्रियावत्त्वादीन् हेतून् सर्वथा विकल्प्य वार्त्तिककारो दूषयति—ये तु क्रियावत्त्वादीति। एतेन असिद्धत्वेन। न हि घटादिकमवयविनमनभ्युपगच्छतो घटादिरस्तीत्यर्थः।

(१) संस्कारप्रत्ययत्वात्—इति क-पुस्तकधृतपाठान्तरम्।

(२) 'जनयित्वा प्रकाशयति'—इति ख०।

## न्यायभाष्यम्

यदिदं भवान् बुद्धीराश्रित्य बुद्धिविषयाः सन्तीति मन्यते मिथ्याबुद्धय एताः, यदि हि तत्त्वबुद्धयः स्युर्बुद्ध्या विवेचने क्रियमाणे याथात्म्यं बुद्धिविषयाणामुपलभ्येत—

**बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः (क) ॥ २६ ॥**

## न्यायवार्त्तिकम्

अनभ्युपगमेऽनित्यः परमाणुः परमाणुत्वादिति हेत्वर्थः। मतुपश्चार्थान्तरे दृष्टत्वाद् विरुद्धः, अनर्थान्तरे दृष्टान्ताभावः। एवं शेषाणि वाक्यानि विकल्प्य यथासम्भवं दोषा वक्तव्या इति। अथ परपक्षसिद्धानेतानभ्युपैति ? यदि प्रमाणतोऽभ्युपैति कथं परपक्षसिद्धाः ? अथ न प्रमाणतः ? कथं स्वयमनुपलब्धो धर्मः परप्रतिपादनायोपादीयत इति ॥ २४-२५ ॥

इति निरवयवप्रकरणम्।

यदिदं भवान् बुद्धीराश्रित्य विषयाः सन्तीति मन्यते मिथ्याबुद्धय एताः। यदि हि तत्त्वबुद्धयः स्युः बुद्ध्या विवेचने क्रियमाणे बुद्धिविषयाणां याथात्म्यमुपलभ्येत।

बुद्ध्या विवेचनात् तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः। य एते बुद्धिविषया गवादयो घटादयश्च, नैते तत्त्वतः सन्ति, कस्मात् ? बुद्ध्या विविच्यमानानां भेदशोऽग्रहणात्। यथाऽयं तन्तुरयं तन्तुरयं तन्तुरिति बुद्ध्या तन्तुषु विविच्यमानेषु न पटः कश्चिदस्ति यः पटबुद्धेः विषयः स्यात्, एवमंशुषु बुद्ध्या

## न्यायवार्त्तिकतात्पर्यटीका

मतुपश्चार्थान्तरे दृष्टत्वाद्विरुद्ध इति। क्रियां परमाणोरर्थान्तरमनिच्छतो मतुप्प्रयोगो विरुद्ध इत्यर्थः ॥ २४—२५ ॥

विज्ञानवाद्याह—यदिदं भवान् बुद्धीरिति। यदि पटस्तन्तुभ्यो भिन्नो भवेत्तन्त्वतिरेकेण गौरिवाश्वातिरेकेणोपलभ्येत, न चोपलभ्यते, तस्मात्पट इति मिथ्याबुद्धिरियम्। तन्तुरित्यपि मिथ्याबुद्धिरंशुभ्यो भेदेनानुपलम्भात्। एवमंशुरित्यपि। तदनेन क्रमेण परमाणुष्वपि बुद्ध्या विविच्यमानेषु याथात्म्यानुपलब्धेर्न बाह्यवस्तु स्थूलं वा क्षोदीयो वास्तीति सर्वा एव बुद्धयः स्वाकारमबाह्यं बाह्यतया आलम्बमाना मिथ्याभूता इति।

बुद्ध्या—ब्धिः (सू० २६) ॥ ननु पटादयः सावयवा भवन्त्वेवं, परमाणूनां त्वनवयवत्वाद्

(क) अत्रार्थे लङ्कावतारसूत्रीयश्लोकसन्दर्भो माधवाचार्योद्धृतः—

"बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते।
अतो निरभिलप्यास्ते निःस्वभावाश्च दर्शिताः ॥
इदं वस्तुबलायातं यद् वदन्ति विपश्चितः।
यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा" ॥ [ सर्वदर्शनसंग्रहः ]

न्यायभाष्यम्

यथाऽयं तन्तुरयं तन्तुरिति प्रत्येकं तन्तुषु विविच्यमानेषु नार्थान्तरं किञ्चिदुपलभ्यते—यत्पटबुद्धेर्विषयः स्यात्, याथात्म्यानुपलब्धेरसति विषये पटबुद्धिर्भवन्ती मिथ्याबुद्धिर्भवति, एवं सर्वत्रेति ॥ २६ ॥

## व्याहतत्वादहेतुः ॥ २७ ॥

यदि बुद्ध्या विवेचनं भावानां न सर्वभावानां याथात्म्यानुपलब्धिः। अथ सर्वभावानां याथात्म्यानुपलब्धिर्न बुद्ध्या विवेचनम्। भावानां(१)बुद्ध्या विवेचनं

न्यायवार्त्तिकम्

विविच्यमानेषु, एवं तदवयवेषु तावद् यावत् परमाणुः, परमाणवोऽपि भागशो (२)विभज्यमानास्तावद् यावत् प्रलय इति। तदेवं सर्वस्यासत्त्वे गवादिबुद्धयो घटादिबुद्धयश्च मिथ्याबुद्धय इति ॥ २६ ॥

व्याहतत्वादहेतुः। बुद्ध्या विवेचनात् तु भावानां सर्वभावानुपपत्तिरित्ययुक्तम्।

न्यायवार्त्तिकतात्पर्यटीका

बुद्ध्या विवेचनाद्भावानां याथात्म्योपलब्धिरित्यत आह—परमाणवोऽपि भागशो विभज्यमानास्तावद् यावत्प्रलय इति ॥ २६ ॥

भवन्तु परमाणवोऽनवयवाः संयोगेभ्यस्तु षड्भ्यो बुद्ध्या विविच्यमानस्य याथात्म्यमनुपलभ्यत इति। तदेतद् दूषयति—

व्याहतत्वादहेतुः (सू० २७) इति॥ यस्य विविच्यमानस्य याथात्म्यानुपलब्धिस्तत् कुत-

वृत्तिः

ननु बाह्यार्थाभावात् कुतोऽवयवावयविव्यवस्थेति मतमपाकर्तुं बाह्यार्थभङ्गनिराकरणमारभते। प्रमेयत्वं ज्ञानत्वव्याप्यं न वेति संशयः। तत्र पूर्वपक्षसूत्रम्—(बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः)। तुः प्रकरणविच्छेदार्थः। भावानां बुद्ध्या विवेचनादभेदोल्लेखात् याथात्म्यस्य ज्ञानभेदलक्षणस्यानुपलब्धिरनुपपत्तिः। घट इति ज्ञानं मम जातमिति ह्यनुभूयते, तत्र घट इति ज्ञानमित्यनेन ज्ञानघटयोरभेद उल्लिख्यते ततो न ज्ञानातिरिक्तो विषयः। यथा पटे विविच्यमाने तन्तूनामेवापकर्षणादतिरिक्तं न वस्तु, एवं तन्तुरपि नांशुव्यतिरिक्त इति। घटत्वादिस्तु ज्ञानस्यैवाकारविशेष इति भावः॥ २४ ॥

(१) 'बुद्ध्या विवेचनम्'—इति नास्ति ज-ग०। (२) 'विविच्यमाना'—इति क० ख०।

## न्यायभाष्यम्

याथात्म्यानुपलब्धिश्चेति व्याहन्यते। तदुक्तम्—"अवयवावयविप्रसङ्गश्चैवमा प्रलया"-द्विति ॥ २७ ॥

# तदाश्रयत्वादपृथग्ग्रहणम् ॥ २८ ॥

कार्यद्रव्यं कारणद्रव्याश्रितं तत्कारणेभ्यः पृथङ् नोपलभ्यते, विपर्यये पृथग्ग्रहणात्,

## न्यायवार्त्तिकम्

कस्मात्? व्याघातात्। को व्याघातः? सहासम्भवः। यदि बुद्ध्या विवेचनं भावानां न सर्वभावानुपपत्तिः। अथ सर्वभावानुपपत्तिर्न बुद्ध्या विवेचनं सर्वभावानामिति।

सर्वभावानुपपत्तिरिति ब्रुवाणः प्रमाणं पर्यनुयोज्यः। यदि प्रमाणं ब्रवीति व्याहतं भवति। अथ न ब्रवीति अर्थोऽस्य न सिद्ध्यति प्रमाणाभावात्। अथाप्रामाणिकी सिद्धिः? सर्वभावोपपत्तिः कस्मान्न सिद्ध्यति? यश्च सर्वभावानामभावो भावेष्वितरेतरापेक्षसिद्धेरित्येतस्मिन् वादे दोष उक्तः, स इहापि द्रष्टव्य इति ॥ २७ ॥

यत् पुनरेतत्—यदि तन्तुव्यतिरिक्तं पटादिद्रव्यं स्यात् तन्तुषु बुद्ध्या विविच्यमानेषु पृथगुपलभ्येतेति?

तदाश्रयत्वादपृथग्ग्रहणम्। कारणद्रव्याश्रितं कार्यं तस्मात् न पृथगुपलभ्यत इति।

## न्यायवार्त्तिकतात्पर्यटीका

विधद्विवेचनीयम्, अवश्यभावे तदनुपपत्तेः। तथा च तेनावधिना क्वचिदवस्थातव्यम्, अनवस्थायां त्रुटेरमेयत्वप्रसङ्गादित्युक्तम्। तस्मात्परमाणुषु वा तत्संयोगेषु वा तेनावस्थातव्यम्। तथा च यतो विविच्यते भावः स एवास्यावधिर्याथात्म्येनोपलभ्यत इति बुद्ध्या विविच्यमानस्य सर्वभावानुपपत्त्या व्याघात इति सिद्धम्। दूषणान्तरमाह—सर्वभावानुपपत्तिरिति। प्रमाणस्यापि भावात् तद्गतत्वेन तदनुपपत्तौ सर्वभावानुपपत्तिरित्यर्थः ॥ २७ ॥

तदाश्रयत्वादपृथग्ग्रहणम् (सू० २८) ॥ अपृथग्ग्रहणादिति ब्रुवाणः प्रष्टव्यो जायते किं (१) विलक्षणव्यवहाराभावः, उत भेदाभावः (१*) उत तन्तुव्यतिरेकेण देशान्तरेऽनुपलम्भ इति।

## वृत्तिः

समाधत्ते—( व्याहतत्वादहेतुः )।

उक्तो हेतुर्न युक्तः व्याहतत्वात्। नहि बुद्ध्या विवेचने पटस्य तन्तुरूपता सिद्ध्यति, 'तन्तुतः पट' इति हि प्रतीयते, न तु 'तन्तुः पट' इति। एवं पटेन प्रावरणं न तु तन्तुभिः। किं च तन्तुपटविवेचनादेव बाह्यार्थसिद्धिः। ज्ञानेन तु स्वस्मिन् पटाभेदो नोल्लिख्यते स्वाविषयकत्वात्, अनुव्यवसायेन तु पटविषयकत्वं व्यवसाये समुल्लिख्यते ॥ २५ ॥

(१) 'विलक्षणबुद्धिर्व्यवहाराभाव उत देशाभाव'—इति का०तात्पर्यटीकापाठान्तरम्।

## न्यायभाष्यम्

यत्राश्रयाश्रितभावो नास्ति तत्र पृथग्ग्रहणमिति । बुद्ध्या विवेचनात्तु भावानां पृथग्ग्रहणमतीन्द्रियेष्वणुषु, (१)यदिन्द्रियेण गृह्यते तदेतया बुद्ध्या विविच्यमानमन्यदिति ॥ २८ ॥

# प्रमाणतश्चार्थप्रतिपत्तेः ॥ २९ ॥

बुद्ध्या विवेचनाद्भावानां याथात्म्योपलब्धिः, यदस्ति(२)यथा च(३)यन्नास्ति यथा च(२*)तत्सर्वं प्रमाणत उपलब्ध्या सिध्यति, या च प्रमाणत उपलब्धिस्तद् बुद्ध्या विवेचनं भावानाम्, तेन सर्वशास्त्राणि सर्वकर्माणि सर्वे च शरीरिणां व्यवहारा व्याप्ताः । परीक्षमाणो हि बुद्ध्याऽध्यवस्यति इदमस्तीदं नास्तीति तत्र न सर्वभावानुपपत्तिः ॥२९॥

## न्यायवार्त्तिकम्

विपर्यये हि पृथग्ग्रहणात्—यत्र कार्यकारणभाव आश्रयाश्रितभावश्च नास्ति तत्र पृथग्ग्रहणमिति ॥२८॥

प्रमाणतश्चार्थप्रतिपत्तेः । यदस्ति यथा च यन्नास्ति यथा च तत्सर्वं प्रमाणत उपलब्ध्या सिध्यतीति । शेषं भाष्ये ॥ २९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

न तावदाद्यः, तन्तवो हि भिन्नाभबुद्धिवेद्याः पटस्तु अभिन्नाभबुद्धिवेद्य इति । नापि द्वितीयः, तन्मूलामंशुदेशत्वात् पटस्य तन्तुदेशत्वात् । तस्मात्तन्तुभ्योऽन्यत्रादर्शनमपृथग्ग्रहणं, तच्च भेदेऽपि तदाश्रितत्वेनोपपद्यमानं नाभेदं गमयितुमर्हतीत्यर्थः । भाष्यं—बुद्ध्या विवेचनात्तु भावानां पृथग्ग्रहणमतीन्द्रियेष्वणुषु । यत्र खल्ववयवावयविनावैन्द्रियकौ तत्र पृथग्ग्रहणमविवेचकानामस्फुटतरमतीन्द्रियेभ्योऽणुभ्य आनुमानिकेभ्यः प्रत्यक्षद्रव्याणां तदाश्रितानामवयविनां पृथग्ग्रहणमित्यतिस्फुटमित्यर्थः ॥ २८ ॥

संप्रत्यैन्द्रियकेऽप्यवयवेऽवयविनो विविच्यमानस्य याथात्म्येन पृथग्ग्रहणमाह—

प्रमाणतश्चार्थप्रतिपत्तेः (सू० २९) इति ॥ यदस्ति पटादिकमवयवि द्रव्यं, यथा च कार्यकारणभावेन, तद् स्वावयवसमवेतत्वेन गुणाधारतया च, यन्नास्ति शशविषाणादि, यथा च सर्वं प्रमाणत उपलब्ध्या सिध्यति । सुगमं भाष्यम् ॥ २९ ॥

## वृत्तिः

ननु तन्तुपटयोर्भेदे पार्थक्येन ग्रहणं स्यादित्यत्राह—( तदाश्रयत्वादपृथग्ग्रहणम् ) । पृथग् ग्रहणं यदि तन्त्वविषयकप्रत्यक्षविषयत्वं पटस्याऽऽपाद्यते, तत्रोत्तरं—तदाश्रयत्वादिति । पटो हि तन्त्वाश्रितस्तेन सामग्रीसत्त्वात् पटप्रत्यक्षस्य तन्तुविषयकत्वम्, यदि च भेदप्रत्यय आपाद्यते तदा भवत्येवेति भावः ॥ २६ ॥

(१) 'यदिन्द्रियेण'—इति नास्ति टि० । (२) अयमंशः ज-पु० नास्ति । (३) 'यन्नास्ति'—इति भा० ।

### न्यायभाष्यम्

## प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥ ३० ॥

एवं च सति सर्वं नास्तीति नोपपद्यते, कस्मात् ? प्रमाणानुपपत्त्युपपत्तिभ्याम्। यदि सर्वं नास्तीति प्रमाणमुपपद्यते, सर्वं नास्तीत्येतद्व्याहन्यते। अथ प्रमाणं नोपपद्यते, सर्वं नास्तीत्यस्य कथं सिद्धिः ? अथ प्रमाणमन्तरेण सिद्धिः, सर्वमस्तीत्यस्य कथं न सिद्धिः ? ॥ ३० ॥

## स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ॥ ३१ ॥

यथा स्वप्ने न विषयाः सन्त्यथ चाभिमानो भवति, एवं न प्रमाणानि प्रमेयाणि च सन्त्यथ च प्रमाणप्रमेयाभिमानो भवति ॥ ३१ ॥

## मायागन्धर्वनगरमृगतृष्णिकावद्वा (क) ॥ ३२ ॥

### न्यायवार्त्तिकम्

(क) प्रमाणानुपपत्त्युपपत्तिभ्याम्।

स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः।

(ख) मायागन्धर्वनगरमृगतृष्णिकावद्वा। यथा स्वप्ने विषया न सन्ति अथ च विषयाभिमानः, एवं न प्रमाणानि न प्रमेयाणि सन्ति अथ च प्रमाणप्रमेयाभिमानः ॥ ३०-३२ ॥

### न्यायवार्त्तिकतात्पर्यटीका

प्रमा—भ्यां (सू० ३०) ॥ (क) यदुक्तं प्रमाणोपपत्त्यनुपपत्तिभ्यां न सर्वभावानुपपत्तिरिति, तत्र प्रत्यवतिष्ठते विज्ञानवादी—

स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः (सू० ३१) ॥ न खलु वास्तवः प्रमाणप्रमेयभावः, किं त्वनादिवासनानिबन्धनकल्पनाधीनः। यथा हि न स्वप्ने सन्ति विषया अथ च प्रतिभान्ति कल्पनामात्रेण, तथा च सांवृत्तेनापरमार्थसता प्रमाणप्रमेयभावेन बाह्यार्थशून्यता सिध्यति परमार्थसती प्रत्ययानां, दृष्टा मिथ्याप्रत्ययानामपि तत्त्वप्रतिपत्तिहेतुतेत्यावेदितं पुरस्तादित्यर्थः। तदृ व्याचष्टे वार्त्तिककारः—यथा न स्वप्ने विषयाः सन्तीति ॥ ३०-३१ ॥

ननु स्वप्नप्रत्ययानामस्त्वेवंधर्मकत्वं, ये पुनरमी जाग्रत्प्रत्ययाः स्तम्भ इति वा कुम्भ इति वा किमायातं तेषामत्यन्तवैलक्षण्यादित्यत आह—मायागन्धर्वेति।

माया—वा (सू० ३२) ॥ जाग्रत्प्रत्यया अप्येवंविधाः सहस्रशो दृश्यन्ते, न चैते स्तम्भकुम्भादिप्रत्ययास्ततो विलक्षणा इत्यर्थः ॥ ३२ ॥

(ख) मायेत्यादिवार्त्तिकमूले भाष्यं नोपलभ्यते।

## न्यायभाष्यम्

## हेत्वभावादसिद्धिः ॥ ३३ ॥

स्वप्नान्ते विषयाभिमानवत्प्रमाणप्रमेयाभिमानो न पुनर्जागरितान्ते विषयोपलब्धिवदित्यत्र हेतुर्नास्ति। हेत्वभावादसिद्धिः। स्वप्नान्ते चासन्तो विषया उपलभ्यन्ते इत्यत्रापि हेत्वभावः।

## न्यायवार्त्तिकम्

हेत्वभावादसिद्धिः।

(क)स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः। मायागन्धर्वनगरमृगतृष्णिकावद्वेति न, प्रमाणाभावात्। स्वप्नान्तवदविद्यमानेषु विषयेषु अभिमान इत्यत्र न हेतुरुच्यते इति। स्वप्नान्ते चासन्तो विषया इति को हेतुरिति। ख्यातिरिति चेत्? अयं जाग्रदवस्थोपलब्धानां विषयाणां चित्तव्यतिरेकिणामसत्त्वे हेतुः ख्यातिः स्वप्नवदिति? न, दृष्टान्तस्य साध्यसमत्वात्—

## न्यायवार्त्तिकतात्पर्यटीका

तदेतद्दूषयति—

हेत्वभावादसिद्धिः (सू० ३३)॥ तद्व्याचष्टे भाष्यकारः—स्वप्नान्ते विषयाभिमानवदिति। अन्तशब्दोऽवयववचनोऽप्याश्रितत्वमात्रेणावस्थायां प्रयुक्तः(ख)। तेन स्वप्नावस्थायां जागरितावस्थायामित्यर्थः। एतदुक्तं भवति—स्वप्नज्ञानस्यायाथार्थ्यमिच्छता बाधकमन्तरेण तदनुपपत्तेर्जाग्रत्प्रत्ययोऽस्य बाधको वक्तव्यः। न चासावसमीचीनस्तद्बाधितुमुत्सहत इति समीचीनत्वं जाग्रत्प्रत्ययस्याभ्युपगन्तव्यम्। तथा च जागरितान्ते विषयोपलब्धिवदित्यनुपपन्नम्।

वार्त्तिकम्—ख्यातिरिति चेत्। प्रत्ययत्वमेव स्वप्नोदाहरणसहितं प्रमाणप्रमेयाभिमान-

## वृत्तिः

ननु ज्ञानस्योभयवादिसिद्धत्वात्तन्मात्रपदार्थकल्पने लाघवात्तदतिरिक्तपदार्थाभावसिद्धिः स्यादित्यत आह—( प्रमाणतश्चार्थप्रतिपत्तेः )।

पूर्वोक्तं हेतुं समुच्चिनोति चकारः। अर्थस्य घटादेः प्रतिपत्तेः प्रमाणाधीनत्वात्। तथा च प्रामाणिकेऽर्थे गौरवं न बाधकमिति भावः। अन्यथा ज्ञानमपि न सिध्येद् गौरवादिति शून्यतापत्तिः ॥ २७ ॥

न वा बाह्यार्थाभावसाधनं सम्भवतीत्याह—( प्रमाणानुपपत्त्युपपत्तिभ्याम् )।

व्याघातात् न बाह्याभाव इति शेषः। बाह्यं नास्तीत्यत्र यदि प्रमाणमस्ति तदा प्रमाणस्य बाह्यस्य सत्त्वान्न बाह्याभावः। अथ प्रमाणं तत्र नोपपद्यते तदा निष्प्रमाणकत्वान्न तत्सिद्धिरित्यर्थः।

(क) एकार्थसाधकत्वात् एकत्वेन सूत्रद्वयव्याख्यानाभिप्रायेणापीमं सूत्रमिदं वार्त्तिककृता सहैव धृतम्। टीकाकृतापि सूत्रमिदं न पृथग् व्याख्यातम्।

(ख) 'स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति'—इति कठोपनिषद्युक्तम्।

## न्यायभाष्यम्

प्रतिबोधेऽनुपलम्भादिति चेत् ? प्रतिबोधविषयोपलम्भादप्रतिषेधः। यदि प्रतिबोधेऽनुपलम्भात् स्वप्ने विषया न सन्तीति, तर्हि य इमे प्रतिबुद्धेन विषया उपलभ्यन्ते उपलम्भात्सन्तीति। विपर्यये हि हेतुसामर्थ्यम्। (१)उपलम्भात् सद्भावे सत्यनुपलम्भादभावः सिद्धयति, उभयथा त्वभावे नानुपलम्भस्य सामर्थ्यमस्ति, यथा प्रदीपस्याभावाद्रूपस्यादर्शनमिति, तत्र भावेनाभावः समर्थ्यते इति।

## न्यायवार्त्तिकम्

य एते स्वप्नावस्थायां विषयाः ख्यान्ति न ते चित्तव्यतिरिक्ता इत्यत्र को हेतुः? प्रतिबुद्धेनानुपलम्भान्न संन्तीति—अथ मन्यसे यस्मात् प्रतिबुद्धेन नोपलभ्यन्ते तस्मान्न सन्तीति? न, विशेषणोपादानात्—ये प्रतिबुद्धेनोपलभ्यन्ते ते सन्तीति प्राप्तम्। व्यर्थं वा विशेषणं प्रतिबुद्धेनानुपलम्भादिति। यदि चोपलभ्यमानं जाग्रदवस्थायां स्वप्नावस्थायां विषयमसन्तं मन्यसे अथ चित्तमस्तीत्यत्र को हेतुरिति। विपर्यये च सामर्थ्याभावादहेतुः जाग्रतोऽनुपलब्धेरिति। यद्युपलब्धिः सत्त्वसाधनं ततोऽनुपलब्धिरसत्त्वं साधयति, विपर्यये हि हेतोः सामर्थ्यं दृष्टमिति। न चित्तव्यतिरेकिणो विषया ग्राह्यत्वात् वेदनादिवदिति—यथा वेदनादिग्राह्यं न चित्तव्यतिरिक्तं

## न्यायवार्त्तिकतात्पर्यटीका

मिथ्यात्वे हेतुरित्यर्थः। विपर्यये च सामर्थ्याभावादिति। पूर्वं प्रतिबुद्धेनेति विशेषणं विवक्षित्वोक्तम्। अधुना त्वनुपलब्धेरिति विवक्षित्वोच्यत इत्यपौनरुक्त्यम्। अत्र विज्ञानवादी स्वपक्षे प्रमाणमाह—न चित्तव्यतिरेकिणो विषयाः ग्राह्यत्वाद् (क)वेदनावदिति। इदमत्राकूतम्—विज्ञानस्य हि बाह्योऽर्थो ग्राह्यो भवन् निराकारस्य सत्तामात्रेण वा भवेत्, कारणत्वेन वा, एकसामग्र्यधीनत्वेन वा, ज्ञानाहितफलाधारत्वेन वा? न तावत्सत्तामात्रेणान्यस्यान्यो विषयः, सत्तामात्रस्य विषयान्तरेषु भावात्सर्वेऽर्थाः सर्वविषया इति सर्वसर्वज्ञतापत्तिः। न च

## वृत्तिः

यद्वा, यदि घटादौ प्रमाणमस्ति, तदा तत एव बाह्यार्थसिद्धिः। अथ न प्रमाणं, तदा कथं घट इति ज्ञानस्य घटाकारत्वं मन्यसे, ज्ञानस्यैवानुत्पत्तेरिति॥ २८॥

ननु प्रमाणप्रमेयव्यवहारो न पारमार्थिकः, परन्तु विज्ञानानि तत्तदाकाराणि वासनापरिपाकवशादेव स्वाप्नप्रत्ययवदैन्द्रजालिकप्रतीतिवच्चाऽऽविर्भवन्तीत्याशयेन शङ्कते सूत्राभ्याम्—( स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः )।

( माया-गन्धर्वनगरमृगतृष्णिकावद्वा )। स्पष्टम्॥ २९-३०॥

---

(१) 'उपलम्भाभावे सत्यनुप'—इति ल-ग-ज०। (क) वार्त्तिके 'वेदनादिवदि'ति दृश्यते।

## न्यायवार्त्तिकतात्पर्यटीका

सत्तामात्रमपि विषयत्वव्यवस्थापकम्, असतोऽपि विषयत्वात्। अत एव न कारणत्वेन विषयभावः। अपि च चक्षुरादयोऽपि विज्ञानस्य कारणमिति विषया रूपविज्ञानस्य प्रसज्येरन्। वर्त्तमानावभासि च विज्ञानं न भवेत्—क्षणिकत्वेनोत्पादकस्यार्थक्षणस्योत्पाद्यविज्ञानसमये विनिपातात्। एकसामग्र्यधीनत्वेन तु विषयत्वे वर्त्तमानावभासितोपपद्यते। सा तु नोपपद्यते असतोरप्यतीतानागतयोर्ग्रहणेऽव्यापकत्वादतिव्यापकत्वाच्च इन्द्रियादिक्षणस्यैकसामग्र्यधीनस्यालम्बनत्वप्रसङ्गात्। विज्ञानाहितफलाधार आलम्बनमिति चेत्, किं पुनर्विज्ञानेनार्थे जन्यते? प्राकट्यं, न चैतदर्थधर्मोऽपि शुक्लादिवत्सर्वपुरुषसाधारणं; ज्ञानाहितस्यार्थधर्मस्यापि ज्ञानवन्तं प्रत्यसाधारणत्वदर्शनात्; यथा यस्यापेक्षाबुद्धिजनितं द्वित्वमर्थधर्मः सोऽपेक्षाबुद्धिमन्तमेव पुरुषं प्रत्यसाधारण इति? तन्न, अव्यापकत्वात्। सन्ति खल्वतीतानागतविषयाणि सहस्रशो विज्ञानानि शब्दानुमानजानि च, न चैतान्यर्थे फलमाधातुमुत्सहन्ते अर्थस्य तदानीमसंभवात्। न खल्वस्ति संभवः, असन्ननुत्पन्नरूपो धर्मी धर्मोऽस्याविनश्यन् प्रत्युत्पन्नरूप इति। स्वकारणादात्मानात्मप्रकाशनशक्तियुक्तमुत्पद्यते ज्ञानं तादृशं येन कश्चिदेवास्य विषयो न सर्वमिति चेत्? हन्त भोः शक्तेः शक्यनिष्ठत्वात्किमस्य शक्यमिति वक्तव्यम्। अर्थ इति चेन्न। न तावदयमस्य निर्वर्त्यः अर्थस्यैव ज्ञाननिर्वर्त्तकत्वात्। न चार्थाधारं फलमाधत्त इत्युक्तम्। न चासति शक्ये शक्तिसंभवः। तस्मादनाकारं विज्ञानं बाह्यं गोचरयतीति मनोरथमात्रम्।

अस्तु साकारमेव बाह्यगोचरम्। तथा हि नीलाद्याकारं ज्ञानं नीलादिगोचरम्। नीलमस्य स्वरूपं यतः। अत्रैवं वक्तव्यम्—किं सर्वात्मना सारूप्यभावाद् विषयभाव आहो कथंचित्सारूप्यभावात्? न तावदर्थस्य जडात्मनो ज्ञानेन प्रकाशात्मना सर्वथा सारूप्यं, सारूप्ये ज्ञानमपि जडं भवेदिति ज्ञानत्वहानिः। एकदेशेन च सारूप्ये तत् क्व नाम नास्तीति सर्वं ज्ञानं सर्वं वेदयेत्। अपि च नीलज्ञानात्समनन्तरप्रत्ययादुत्पन्नं ज्ञानं न तथा नीलार्थसरूपं यथा नीलज्ञानसरूपमिति समनन्तरप्रत्यय-तत्सारूप्याभ्यां विषयः स्यान्न चैतदस्ति तस्मान्न सारूप्यसमुत्पत्ती अपि विषयलक्षणम्। स्तामस्य सारूप्यसमुत्पत्ती मनस्कारेन्द्रियादिभिस्तथाऽपि यमध्यवस्यति सोऽस्य विषयः, अर्थं चाध्यवस्यतीति अर्थ एवास्य विषयो न मनस्कारादीति चेत्; अथ

## वृत्तिः

(१)समाधत्ते—( हेत्वभावादसिद्धिः )।

बाह्याभावस्याऽसिद्धिः, हेत्वभावात् प्रमाणाभावात्।

अथ वा हेतोश्चक्षुरादेरनभ्युपगमे घटोऽयमित्यादिज्ञानानामसिद्धिरित्यर्थः। न च वासनावशात् स्यादिति वाच्यम्, वासनाया अतिरिक्तत्वे बाह्योपगमप्रसङ्गात्। वासनायाः सन्तन्यमानतया चाक्षुषादेरपि सन्तानापत्तिरिति दिक्॥ ३१॥

(१) 'समाधत्ते'—इति ल-पु० नास्ति।

## न्यायभाष्यम्

स्वप्नान्तविकल्पे च हेतुवचनम् । (१)स्वप्नविषयाभिमानवदिति ब्रुवता(२)स्वप्नान्तविकल्पे हेतुर्वाच्यः । कश्चित्स्वप्नो (३)भयोपसंहितः, कश्चित्प्रमोदोपसंहितः, कश्चिदुभयविपरीतः, कदाचित्स्वप्नमेव न पश्यतीति । निमित्तवतस्तु स्वप्नविषयाभिमानस्य निमित्तविकल्पाद्विकल्पोपपत्तिः ॥ ३३ ॥

## न्यायवार्त्तिकतात्पर्यटीका

कोऽयमध्यवसायः ? न तावद् ग्रहणं, न खलु द्वावाकारौ गृह्येते नीलमित्यनुभवो न तु नीले इति । स्वाकारस्य बाह्यसमारोपोऽध्यवसाय इति चेत् । स किं गृह्यमाणे बाह्ये उतागृह्यमाणे । न तावद् गृह्यमाणे । न हि नीलद्वयं प्रकाशत इत्युक्तम् । न चारोपविषयमगृहीत्वाऽऽरोप्यमारोपयितुमर्हतीति । न ह्यननुभवन् पुरोवर्ति शुक्लभास्वरं रजतमारोपयति तत्र । अपि चागृह्यमाणे बाह्ये प्रवृत्तिनियमो न भवेत् । इतरेषामगृह्यमाणत्वेनाविशेषात्तेष्वपि प्रवृत्तिप्रसङ्गात् । न च साकारज्ञाननये बाह्यसद्भावे प्रमाणमस्ति, अगृह्यमाणत्वात् । ननु नीलाद्याकारस्य कादाचित्कत्वमेव प्रमाणम् । तथाऽपि यद् यस्मिन्सत्यपि कदाचिद्भवेत् तत् तदितरापेक्षम् । यथा सत्यपि सोपाने विच्छिन्नगमनरचनप्रतिभासाः प्रत्ययाः संतानान्तरापेक्षास्तथा च सत्यप्यालयसंताने षडपि प्रवृत्तिप्रत्यया इति स्वभावहेतुः । वासनापरिपाकप्रत्ययकादाचित्कत्वात् कदाचिदुत्पाद इति चेत् ? नन्वेकसंतानपतितानामालयज्ञानानां तत्तत्प्रवृत्तिविज्ञानजननशक्तिर्वासना, तस्याश्च कार्यजननं प्रत्याभिमुख्यपरिपाकः, तस्य च प्रत्ययः स्वसंतानवर्त्ती पूर्वक्षणो हेतुः संतानान्तरापेक्षानभ्युपगमात् । तथा च सर्वे आलयसंताने पतिताः परिपाकहेतवः, न वा कश्चिदपि अविशेषात् । क्षणभेदाच्छक्तिभेदस्तस्य कादाचित्कत्वात्कार्यकादाचित्कत्वमिति चेत् ? नन्वेकस्यैव नीलविज्ञानजननसामर्थ्यं शक्तिप्रबोधजननसामर्थ्यं च क्षणान्तरस्य तन्न स्यात् । सत्त्वे वा कथं क्षणभेदात्सामर्थ्यभेद इत्यालयसंतानवर्त्तिनः सर्वे समर्था इति समर्थहेतुसद्भावे कार्यक्षेपानुपपत्तिः । स्वसन्तानमात्राधीनत्वे तु निषेध्यस्य कादाचित्कत्वस्य विरुद्धं सदातनत्वं, तस्योपलब्ध्या तु कादाचित्कत्वं निवर्त्तमानं हेत्वन्तरापेक्षत्वेन व्यवतिष्ठत इति प्रतिबन्धसिद्धिः । न च संतानान्तरनिमित्तानि प्रवृत्तिविज्ञानानि संतत्यन्तराणामपि नित्यसन्निधानाद् विज्ञानानामदेशात्मकत्वेन दूरत्वानुपपत्तेर्व्यतिरिक्तस्यानभ्युपगमात् । नापि कालतो विप्रकर्षसंभवः अपूर्वसत्त्वप्रादुर्भावानभ्युपगमात् । तदिदमनुमानं सौत्रान्तिकानां बाह्याभ्युपगम इति ।

तदयुक्तम्, स्वसंतानमात्रनिमित्तत्वेऽपि नीलादिविज्ञानानां कादाचित्कत्वोपपत्तौ संदिग्धव्यतिरेकित्वेन हेतोरनैकान्तिकत्वात् । ननूक्तं न क्षणभेदः कार्यभेदहेतुरिति, कल्पितस्य सन्तानस्य

(१) 'स्वप्नविषयाभि'—इति भा० । (२) 'स्वप्नान्त विकल्पे'—इति वि० ।
(३) 'भयादिसंहितः'—इति टि० ।

## न्यायवार्त्तिकतात्पर्यटीका

सर्वसामर्थ्यविरहिणो भेदः कार्यभेदहेतुरिति न तु परमार्थसतः क्षणस्य कार्यभेदहेतुत्वमिति कोऽन्यो(१)भदन्ताद्वक्तुमर्हति। ननु यदि क्षणभेदः शक्तिभेदहेतुस्ततो भिन्नानां क्षणानां नैका शक्तिः स्यात्, तथा चैकेन केनचिन्नीलज्ञाने जनिते तन्नीलज्ञानं क्षणान्तरान्न स्यात्। यदि भिन्नानां नैकं सामर्थ्यम् अथ बाह्यार्थवादिनोऽपि कथं भिन्नानां नीलोत्पलसंतानानामेकनीलोत्पलाकारज्ञानधारासामर्थ्यम्। यद्युच्यते अन्यदेव नीलविज्ञानं यन्नीलोत्पलसंतानान्तरात्। वयमपि ब्रूमहे—अन्यदेव नीलविज्ञानं यत् क्षणान्तरादिति। तस्मात्कश्चिदेव तादृशः स्वलक्षणभेदो जायते, यः कंचिदेव कार्यभेदं जनयति न कार्यान्तरमिति। तस्मात्साकारस्यापि ज्ञानस्यार्थो न गोचरो न चागोचरः शक्योऽनुमातुमिति। न च प्रत्यक्षवदनुमानमप्यर्थगोचरम्। तस्मात्साधूक्तं वार्त्तिककृता—न चित्तव्यतिरेकिणो विषयाः ग्राह्यत्वाद्वेदनावदिति (१०७८ पृ०)। नीलादयो हि विषया उभयवादिसिद्धास्तेषां चित्तभेदाभेदयोर्विप्रतिपत्तिः। तत्रैषां ग्राह्यत्वादित्ययं चित्तव्यतिरेकः परैरभ्युपगतः प्रतिषिध्यते। यावांश्च प्रतिषिध्यते सर्वोऽनुपलब्धेरिति हेतुर्विरुद्धव्याप्तोपलब्धिः, प्रतिषेध्यश्चित्तव्यतिरेकस्तद्विरुद्धस्तदव्यतिरेकस्तेन व्याप्तं ग्राह्यत्वं तस्योपलब्धिरेव तन्निषेध्यस्यानुपलब्धिरिति।

अत्र तावदेतद्वक्तव्यम्—ग्राह्यत्वस्याभेदेन व्याप्तौ सत्यां भेदं निवर्तयेत्, न त्वभेदेनास्य व्याप्तिः। तथाहि—यदेतन्नीलं स्थूलं विच्छिन्नमुपलभ्यते, तस्यास्य विच्छेदः स्थौल्यं च न ज्ञानस्यात्मा। नानादिग्देशव्यापिता हि स्थौल्यम्। न चैकमदिग्देशात्मकमनवयवि ज्ञानं नानादिग्देशव्यापि संभवति। यथाऽऽह—

तस्मान्नार्थेन विज्ञाने स्थूलाभासस्तदात्मनः।
एकत्र प्रतिषिद्धत्वाद्बहुष्वपि न संभवः॥ इति

एवमर्थविच्छेदोऽपि न ज्ञानात्मकः। तस्य तथात्वे परमार्थतोऽर्थाद्विच्छिन्नं ज्ञानं स्यात्। तस्मादयमपि न ज्ञानमित्यसन्नभ्युपगन्तव्यः। न च सदसतोरेकत्वमित्यनात्माऽपि विज्ञाने प्रकाशत इत्यनिच्छताऽपि स्वीकर्त्तव्यम्, तथा च सदपि प्रकाशिष्यते। नन्वनात्मन्यर्थेऽकिंचित्करं विज्ञानं कथमर्थप्रकाशकम्? अथाकिंचित्करं ज्ञानं स्थौल्ये कथमस्य प्रकाशकम्? स्वभावादिति चेत्, अत्राप्यसौ न दण्डवारितः। यद्धि यस्य स्वभावः तस्य नान्यापेक्षा, यथा लिङ्गस्य स्वसाध्यसंबन्धे। स्वभावतश्चार्थस्य ज्ञानमिति न तदीयत्वे अन्यदपेक्षते। असंबद्धत्वात्कथं ज्ञानमर्थस्येति चेत्, अथ संबन्ध एव संबन्धिनोः कथम्? संबन्धान्तरकल्पनायामनवस्था। तस्माद्यथा संबन्ध एव संबन्धान्तरमन्तरेण संबन्धिनोः, एवं ज्ञानमपि संबन्धान्तरमन्तरेणार्थस्येति समानम्। न चातिप्रसङ्गः। स्वकारणादुत्पन्नस्य कस्यचिद्विज्ञानस्य कश्चिदेव विषयो

(१) 'भेदं तावद'—इति क०।

## न्यायवार्त्तिकम्

तथा विषया अपि। वेदना सुखदुःखे, चित्तं (१)विज्ञानमिति, सुखदुःखाभ्यां चान्यत् ज्ञानमित्यसिद्धो दृष्टान्तः, सुखदुःखे ग्राह्ये ग्रहणं (२)ज्ञानमिति ग्राह्यग्रहणभावादन्यत्वम्। अथाभिन्नं विज्ञानं (३)वेदनातस्तथापि ग्राह्यं च गृहीतिश्च एकमिति न दृष्टान्तोऽस्ति। न हि कर्म च क्रिया च एकं भवतीति। अथैकत्वं प्रमाणवृत्तमनपेक्ष्य प्रतिपद्येथाः ? तथापि चत्वारः स्कन्धा इति

## न्यायवार्त्तिकतात्पर्यटीका

नान्यः। न स्वभावाः पर्यनुयोगमर्हन्ति—एवं भवतैवं मा भवत एवं कस्मान्न भवतेति। अकिंचित्करस्य रूपविज्ञानस्य कथं रूपविषयतेति चेत्; किं रूपविज्ञानं प्रमाणं विवक्षित्वेदमुच्यते, आहो फलं विवक्षित्वा ? यदि प्रमाणं, ततो न तदकिंचित्करं तत्र हानोपादानोपेक्षाप्रसवहेतुत्वात्। अथ फलं, तद्युक्तम्। क्व नाम फलं किंचित्करं ? न हि गतिजन्या नगरप्राप्तिश्चैत्रस्य चैत्रनगरसंयोगसमवायाय किंचित्करोति। एवमर्थविषयत्वाय स्वाभाविकाय न ज्ञानेन किंचिदपरं जनयितव्यम्। अर्थप्रतिबद्धत्वं ज्ञानस्यार्थविषयत्वम्। न हि ज्ञानमनुव्यसायज्ञानेन निरूप्यमाणमर्थनिरूपणं विना शक्यं निरूपयितुमित्युक्तम्। कर्मण्यसमवेतं कथं कर्मण इति चेत्, अथ फलसमवायः कर्मण्यसमवेतः कथं कर्मणः ? तत्पारतन्त्र्यादिति चेत्, किमिदं पारतन्त्र्यम् ? तन्निरूपणाधीननिरूपणत्वमिति चेत्, तदिहापि समानमन्यत्राभिनिवेशात्। तस्मादभेदेन ग्राह्य[त्व]स्याव्याप्यत्वाद् ग्राह्यत्वं विरुद्धव्याप्तं न भेदं निवर्तयितुमर्हतीति दूषणे स्थवीयसि सत्येव दूषणान्तरमाह वार्त्तिककारः—वेदना सुखदुःखे चित्तं विज्ञानमिति। अभ्युपेत्याह—अथाभिन्नं विज्ञानं वेदनात इति। यथाऽङ्गुल्यग्रं न तेनैवाङ्गुल्यग्रेण स्पृश्यते एवं ज्ञानं न तेनैव ज्ञानेन ग्रहीतुं शक्यते। ननु न गृहीतिर्ग्राह्या, न ह्यस्याः कर्मभावो विद्यते। क्रियाफलशालितया कर्म भवति, न चास्यामस्ति फलान्तरम्; अपि तु स्वयमाविर्भूतस्वभावा गृहीतिरपराधीनप्रकाशा ग्राह्येत्युच्यते। यदि वैषा स्वयं न प्रकाशेत नार्था अपि प्रकाशेरन्, तत्प्रकाशाधीनप्रकाशा हि ते। तथा हि यद् यत्प्रकाशाधीनप्रकाशं तत्तस्मिन् प्रकाशमाने प्रकाशते, यथा दण्डप्रकाशाधीनप्रकाशो दण्डिप्रकाशः, ज्ञानप्रकाशाधीनप्रकाशश्च विषय इति स्वभावहेतुः। न च ज्ञानादन्यत्स्वसंवेदनं न दृष्टमित्येतावता स्वसंवेदनं विज्ञानं न भवेदिति दर्शनादर्शनाभ्यां न हेतुर्गमकोऽपि तु स्वसाध्याविनाभावात्। स च विपर्यये बाधकप्रमाणप्रवृत्त्या सिध्यतीति कृतं दृष्टान्तेनेत्यत आह—न हि कर्म च क्रिया चैकं भवतीति (क)।

इदमत्राकूतम्। किं पुनरिदमर्थानां संवित्प्रकाशाधीनप्रकाशत्वं नाम ? न हि संवित्प्रकाशेनार्थे प्रकाशान्तरं जन्यते। अपि च लिङ्गप्रकाशाधीनप्रकाशो हि लिङ्गिप्रकाशः, न च [लिङ्गी] लिङ्गे

(१) 'ज्ञानम्' इति—क०-ख०। (२) विज्ञानमिति—क०-ख०-धृतपाठान्तरम्। (३) 'वेदनाया'—इति क०-ख०। (क) 'न कर्म क्रिया चैकं भवतीति'—क०-ख०। समनन्तरमिदमत्राकूतमित्युपक्रम्य उपसंहारे निगमनरीत्या पुनरुद्धृतसन्दर्भदर्शनाद् रूप्यपरिहारः कृतः।

## न्यायभाष्यम्

## स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः ॥ ३४ ॥

पूर्वोपलब्ध(१)विषयः। (२)यथा स्मृतिश्च सङ्कल्पश्च पूर्वोपलब्धविषयौ(२*)न तस्य प्रत्याख्यानाय कल्पेते तथा स्वप्ने विषयग्रहणं पूर्वोपलब्धविषयं न तस्य प्रत्याख्यानाय

## न्यायवार्त्तिकम्

शास्त्रव्याघातः। अथ चतुष्टं न प्रतिपद्यते दृष्टं विज्ञानमात्रमेवाभ्युपगम्यते? सोऽपि दृष्टं विज्ञानभेदमनुयोक्तव्यः—बाह्यस्याऽऽध्यात्मिकस्य च विज्ञानभेदहेतोरभावात्(३)कथं विज्ञानभेद इति। स्वप्नवद्विज्ञानभेदं यदि प्रतिपद्यते, सोऽपि दृष्टानुभूतानां भावानां भावनावशेन विज्ञानभेदं प्रतिपादयितव्यः। अथ (४)स्वप्नपक्षेऽपि भावनाभेदाद्द विज्ञानभेदं प्रतिपद्येत? सोऽपि

## न्यायवार्त्तिकतात्पर्यटीका

प्रकाशमाने प्रकाशते, किं तु लिङ्गप्रकाशे विनष्टे। यद्युच्येत न ज्ञानादतिरिक्तोऽर्थप्रकाशो ज्ञानप्रकाशश्च किं तु ज्ञानमेव स्वसंवेदनमर्थस्य स्वात्मनश्चेति। एवं तर्हि किमायातम्? न ह्यात्मैवात्मायत्तः। न च ज्ञानमेवात्मनः परस्य च प्रकाश इति सिद्धम्। अन्यो हि ज्ञान-प्रकाशो मानस ऐन्द्रियकश्चार्थप्रकाशः। न च प्रमाणज्ञानप्रकाशाधीनोऽर्थप्रकाशः किं तु प्रमाणज्ञानसत्ताधीनः, फलाधीनं तु न किंचिदित्यावेदितम्। तत्सिद्धमेतत्—विवादाध्यासितं विज्ञानं स्वप्रकाशाद्भिन्नं प्रकाशमानत्वात्; सत्त्वान्तरप्रकाशस्य सत्त्वान्तरप्रकाशवत्। तदनेनाभिसंधिनोक्तं न(५)हि कर्म च क्रिया चैकं भवतीति। एतेन 'सहोपलम्भनियमादभेदो नीलतद्धियो'रिति परास्तं वेदितव्यम्। अर्थज्ञानोपलम्भयोरेकोपलम्भतैव नास्ति कुतः पुनरस्य नियम इति। अथ यथाश्रुतः सहोपलम्भो हेतुरित्युच्यते ततो विरुद्धः, अभेदे सहार्थासंभवात्। कृतप्रपञ्चश्चायमर्थो न्यायकणिकायाम्, इह तु विस्तरभयान्न प्रपञ्चित इत्युपरम्यते।

सोऽपि दृष्टं विज्ञानभेदमनुयोक्तव्य इति। न संतानमात्रनिबन्धनो विज्ञानभेदो भवितुमर्हति नीलपीतादिरूपः, नापि संतानान्तराधिपत्यसन्निधाननिबन्धनः, विज्ञानानामदेशात्मकानां स्वरूपेण देशविप्रकर्षायोगात्। नापि कालविप्रकर्षोऽपूर्वसत्त्वप्रादुर्भावाभावादिति भावः। शङ्कते—स्वप्नवद्विज्ञानभेदमिति। बाह्याभावेऽप्याध्यात्मिको विज्ञानभेदहेतुरस्तीति भावः। निराकरोति—सोऽपीति। स्वप्नज्ञानमपि पारंपर्येण बाह्यनिबन्धनमित्यर्थः। अबाह्यनिमित्तत्वं स्वप्नप्रत्ययस्याभ्युपेत्याह—अथ स्वप्नपक्षेऽपीति। वर्गः पक्षः। न चैकं विज्ञानं

(१) 'विषयम्'—इति टि०-'विषयाः' इति वि०। (२) इदं टि०-पु० नास्ति।
(३) 'सोऽपि दृष्टविज्ञानहेतोरभावात्'—इति क०-ख० धृतपाठान्तरम्।
(४) 'स्वप्नपक्षे भावानां भावनावशात्'—इति ख०। (५) 'हि' इत्यत्र 'च' इति क०-ज०।

## न्यायभाष्यम्

कल्पते इति। (१)एवं दृष्टविषयश्च स्वप्नान्तो जागरितान्तेन। (२)यः सुप्तः स्वप्नं पश्यति स एव जाग्रत्स्वप्नदर्शनानि प्रतिसन्धत्ते (३)इदमद्राक्षमिति। तत्र जाग्रद्बुद्धिवृत्तिवशात् स्वप्नविषयाभिमानो मिथ्येति व्यवसायः। सति च प्रतिसन्धाने या जाग्रतो बुद्धिवृत्तिस्तद्वशादयं व्यवसायः स्वप्नविषयाभिमानो मिथ्येति।

## न्यायवार्त्तिकम्

(४)भाव्यभावकवर्गयोर्भेदेन प्रत्यवस्थेयः, नाभिन्नं भाव्यं भावकं चेति। ये चैते स्वप्नादिप्रत्ययाः (५)पुरविमानोद्यानयानभेदानुविधायिनः ते मिथ्याप्रत्यया इति, मिथ्याप्रत्ययानां च जाग्रदवस्थाप्रत्ययसामान्याद्भावः। ममापि सर्व एव मिथ्याप्रत्यया भविष्यन्तीति ब्रुवाणः प्रधानमनुयोक्तव्यः। न च निःप्रधानं विपर्ययप्रत्ययं पश्याम इति। चित्तव्यतिरेकिणं च विषयमप्रतिपद्यमानः साधनदूषणस्वभावं पर्यनुयोक्तव्यः। यदि बाह्यस्वभावकं ? व्याघातः। अथ चित्तस्वभावकं ? न चित्तेन परः प्रतिपाद्यते(६)इत्यर्थोऽस्य न सिद्ध्यति, न हीतरस्वप्नमनाख्यातमितरो विजानातीति। अथ शब्दाकारं चित्तं प्रतिपद्यते ? तेनापि शब्दाकारं चित्तमित्याकारार्थो वक्तव्यः। आकारो हि नाम प्रधानवस्तुसामान्यादतस्मिंस्तदिति प्रत्ययः। न च भवत्पक्षे शब्दो विद्यत इति शब्दाकारं चित्तमिति निरभिधेयं वाक्यम्। चित्तव्यतिरिक्तं विषयमप्रतिपद्यमानो जाग्रत्स्वप्नावस्थयोर्भेदं पर्यनुयोज्यः—जाग्रदवस्थायां विषया न सन्ति स्वप्नावस्थायामपीति इयं स्वप्नावस्था इयं जाग्रदवस्थेति कुत एतत् ? धर्माधर्म(७)व्यवस्था(८)च न प्राप्नोति ; यथा स्वप्नावस्थायामगम्यागमनादधर्मोत्पत्तिर्न भवत्येवं जाग्रदवस्थायामपि न स्यात्। अथ(९)निद्रोपघातानुपघातौ भेदं जनयत इति प्रतिपद्येत ? तदपि तादृगेव ; (१०)निद्रोपघातश्चेतसो वैकृत्यहेतुरिति कथमवगम्यते ? अथ विज्ञानस्य स्पष्टतामस्पष्टतां च भेदं प्रतिपद्येत ?

## न्यायवार्त्तिकतात्पर्यटीका

चिन्तनीयमपरं चिन्तकमिति वाच्यम्। व्यतिरिक्तालम्बनत्वानभ्युपगमादिति भावः। अभ्युपेत्य त्वबाह्यनिमित्तत्वं स्वप्नप्रत्ययानामेतदुक्तम्। बाह्यनिमित्तत्वमेव तु पारमार्थिकमित्याह—ये चैते स्वप्नप्रत्यया इति। ममापीति। अपिशब्दः संभावनायाम्। मम पक्षे संभाव्यत एतत् यत्सर्व एव प्रत्यया मिथ्या भवन्तीत्यर्थः। सुगममितरत्। मिथ्या निद्रा विषयमन्तरेण विज्ञानस्फुटता चावक्तव्येति। सामान्यविशेषतद्वतां ग्रहणं स्फुटता, सामान्यमात्रग्रहणमस्फुटता,

---

(१) 'एकदृष्ट'—इति टि०। (२) 'यथं'—इति टि०। (३) 'इयमद्राक्षम्'—इति टि०। (४) 'भाव्यभावकयोर्भेदेन'—इति क०-ख०। तत्र धृतं पाठान्तरमेवात्र गृहीतम्, 'वर्गः पच'—इति पूर्वपञ्चीयान्तिमपंक्तौ टीकाकृद्व्याख्यानदर्शनात्। (५) 'सुरविमानोद्यानपानभेदा'—इति क०। (६) 'इत्यर्थो न'—इति ख०। (७) व्यवस्थानं न प्राप्नोति—इति क-ख धृतपाठान्तरम्। (८) 'च'—इति ख-पु० नास्ति। (९-१०) 'खिद्रोपघा'—इति ख०।

## न्यायभाष्यम्

उभयाविशेषे तु साधनानर्थक्यम्। (१)यस्य स्वप्नान्तजागरितान्तयोरविशेषस्तस्य स्वप्नविषयाभिमानवदिति साधनमनर्थकं तदाश्रयप्रत्याख्यानात्।

अतस्मिंस्तदिति च व्यवसायः प्रधानाश्रयः। अपुरुषे स्थाणौ पुरुष इति व्यवसायः, स प्रधानाश्रयः, न खलु पुरुषेऽनुपलब्धे पुरुष इत्यपुरुषे व्यवसायो भवति, एवं स्वप्नविषयस्य व्यवसायो हस्तिनमद्राक्षं पर्वतमद्राक्षमिति प्रधानाश्रयो भवितुमर्हति ॥ ३४ ॥

## न्यायवार्त्तिकम्

विषयमन्तरेण ज्ञानस्य स्पष्टताऽस्पष्टता च वक्तव्या। असत्यर्थे विज्ञानभेदो दृष्ट इति चेत्—अथ मन्यसे यथा तुल्यकर्मविपाकोत्पन्नाः प्रेताः पूयपूर्णां नदीं पश्यन्ति, न तत्र नद्यस्ति, न पूयम्। न ह्येकं वस्त्वनेकाकारं भवितुमर्हति। दृष्टश्च विज्ञानभेदः, केचित् तामेव जलपूर्णां पश्यन्ति केचित् रुधिरपूर्णामित्यतोऽवसीयते(२)यथाऽध्यात्मे निमित्तापेक्षमसति बाह्ये निमित्ते विज्ञानमेव तथोत्पद्यते इति? न, व्याघातात्—असति बाह्ये विज्ञानमेव तथेति ब्रुवाणः प्रष्टव्यो जायते कथं तथेति। यदि रुधिराकारं विज्ञानम्? रुधिरं तर्हि वक्तव्यं किं रुधिरमिति। एवं जलाकारं मद्याकारं च वक्तव्यम्। पूयपूर्णां पश्यन्तीति च वाक्यस्य पदानि प्रत्येकं विचार्यमाणानि रूपादिस्कन्धाभावे निर्विषयाणि भवन्ति। देशादिनियमश्च न प्राप्नोति, एकस्मिन् देशे नदीं पूयपूर्णां पश्यन्ति न देशान्तरेषु। असत्यर्थे नियमहेतुर्वक्तव्यः। यस्य पुनर्विद्यमानं केनचिदाकारेण

## न्यायवार्त्तिकतात्पर्यटीका

तच्चैतदसति विषये दुष्करं तदाकारोत्पत्तेरशक्यत्वादित्यर्थः। शङ्कते—असत्यर्थे विज्ञानभेदो दृष्ट इति चेत्। स्वप्न-माया-गन्धर्वनगर-मृगतृष्णादिविज्ञानेष्वनुवर्तमानेषु विषयेन्द्रियमनोदोषनिमित्तत्वमस्तु। ये पुनरमी प्रेतानां सर्वेषामनुवृत्तिमन्तः पूयपूर्णनदीप्रत्यया न ते बाह्यविषया दोषवशाद्भवितुमर्हन्ति दोषनिमित्तत्वाद्बहूनामनुवृत्तेरभावात्; अदुष्टेन्द्रियार्थसन्निकर्षजत्वे तु जलरुधिराकारविरोधात्। तस्मादनादिवासनावैचित्र्यलब्धजन्मतयाऽर्थनिरपेक्षा एव विचित्राकारा बुद्धय उदयन्ते व्ययन्ते चेति सांप्रतमिति शङ्कार्थः। न तत्र नद्यस्तीति एवमसदाकारतोक्तम्। (३)न व्याघातादिति।

अयमभिसंधिः—जलरुधिरयो रसवीर्यविपाकादिभेदात् तोयरसवीर्यपरिपाकादिदर्शनाद्यथास्तोयपूर्णत्वे निश्चिते पूयपूर्णत्वनिश्चयः प्रेतानां मिथ्येति निश्चये तदनुवृत्तेर्दोषानुवृत्तिः कल्पनीया,

(१) 'यस्मात्'—इति टि०। (२) 'अध्यात्मे'—इति ख०।
(३) 'निराकरोति—न व्याघातादिति' इति क-तात्पर्यधृतपाठान्तरम्।

## न्यायवार्त्तिकम्

व्यवस्थितं तस्य शेषो मिथ्याप्रत्यय इति युक्तम्। मिथ्याप्रत्ययाश्च भवन्तो(१)न प्रधानं बाधन्त इति पूयादिप्रत्ययानां प्रधानं वक्तव्यमिति। यथा पूयादिप्रत्ययानामेवं माया-गन्धर्वनगर-मृगतृष्णा-सलिलानामिति। 'कर्मणो वासनाऽन्यत्र फलमन्यत्र कल्प्यत' इति। अस्यार्थः—यत्रैव किल कर्म तत्रैव किल फलेन भवितव्यम्, यस्य तु चित्तव्यतिरेकिणो विषयास्तस्यान्यत्र कर्मान्यत्र फलमिति व्यधिकरणे कर्मफले भवत इति? तन्न, अनभ्युपगमात्—न मया कर्मफले व्यधिकरणे अभ्युपगम्येते, आत्मनि कर्म तत्रैव फलमित्यदोषः। मदीयाच्चित्तात् अर्थान्तरं विषयाः सामान्यविशेषवत्त्वात् सन्तानान्तरचित्तवत्। प्रमाणगम्यत्वात् कार्यत्वादनित्यत्वात् धर्मपूर्वकत्वाच्चेति ॥ ३३-३४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

दोषश्च प्रेतशरीरनिर्वर्त्तकं कर्मैव। यथोक्तं तुल्यकर्मविपाकोत्पन्नाः प्रेता इति। कर्मणो वासनाऽन्यत्र फलमन्यत्र कल्प्यत इति। फलं पुत्रपश्वादि, तद् यदि विज्ञानं तदा यत्र ज्ञान-सन्ताने कर्मवासना तत्रैव पुत्राद्याकारं विज्ञानं फलमिति सामानाधिकरण्यमुपपद्यते। पुत्रपश्व-न्नादौ त्वर्थरूपे फले वैयधिकरण्यं स्यात्, तथा चातिप्रसङ्ग इति भावः। निराकरोति—तन्नानभ्युपगमादिति। न पुत्रादि स्वरूपेण फलमपि तु तन्निमित्ता प्रीतिः। तस्या एव चेतनेन काम्यमानत्वात् तल्लक्षणत्वाच्च फलस्येति भावः। मुक्तकेनार्थं साधयित्वा प्रयोगानाह—मदीयाच्चित्तादिति। यदि चित्तमात्रं पक्षीक्रियेत तदा दृष्टान्तो नास्तीत्यत उक्तं मदीया-च्चित्तादिति। मदीयाहंकारानास्पदत्वे सतीति विशेषणान्न स्वचित्तेन व्यभिचारः। आरोप-निराकरणार्थत्वाच्च हेतूनां नासमर्थविशेष्यतेति ॥ ३३-३४ ॥

## वृत्तिः

नन्वसद्विषया अहेतुका अपि स्वाप्नप्रत्यया इव भावनाप्रत्यया इव परेऽपि प्रत्यया भवेयुरित्यत आह—(स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः)।

पूर्वोपलब्धविषय इति शेषः। सङ्कल्पः उपनीतभानम्। अयमर्थः—यथा स्मृत्यादि पूर्वोपलब्धविषयकं तथा स्वाप्नप्रत्ययोऽपि न निर्विषयकः। न च स्वप्ने स्वमपि खादति, निजशिरःखण्डनमपि पश्यति, न त्विदं पूर्वोपलब्धमिति वाच्यम्, स्वस्य खादनस्य च निजशिरसः, खण्डनस्य च पूर्वोपलब्धत्वात्, संसर्गभानस्य च भ्रान्तत्वात्, न वाऽहेतुकत्वं स्मृत्यादिदृष्टान्तेन, संस्कारस्य स्मृतौ स्मृतेश्च विशिष्टबुद्धौ हेतुत्वस्याभि-मतत्वात्। तत्र भ्रमे दोषः कालविशेषोऽदृष्टविशेषोद्बोधो वेत्यन्यदेतत् ॥ ३२ ॥

(१) 'न प्रधानप्रत्ययं बाधन्त'—इति क-खधृतपाठान्तरम्।

न्यायभाष्यम्

एवं च सति—

(१)मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमान-
प्रणाशवत् प्रतिबोधे ॥ ३५ ॥

स्थाणौ पुरुषोऽयमिति व्यवसायो मिथ्योपलब्धिः अतस्मिंस्तदिति ज्ञानम्, स्थाणौ स्थाणुरिति व्यवसायस्तत्त्वज्ञानम्। तत्त्वज्ञानेन च मिथ्योपलब्धिर्निवर्त्यते, नार्थः स्थाणुपुरुषसामान्यलक्षणः। यथा प्रतिबोधे या ज्ञानवृत्तिस्तया स्वप्नविषयाभिमानो निवर्त्यते नार्थो विषयसामान्यलक्षणः, तथा मायागन्धर्वनगरमृगतृष्णिकाणामपि या बुद्धयोऽतस्मिंस्तदिति व्यवसायास्तत्राप्यनेनैव कल्पेन मिथ्योपलब्धिविनाशस्तत्त्वज्ञानान्नार्थप्रतिषेध इति।

उपादानवच्च मायादिषु मिथ्याज्ञानम्। प्रज्ञापनीयसरूपं च द्रव्यमुपादाय साधनवानपरस्य मिथ्याध्यवसायं करोति सा माया, नीहारप्रभृतीनां नगरसरूपसन्निवेशे दूरान्नगरबुद्धिरुत्पद्यते विपर्यये तदभावात्, सूर्यमरीचिषु भौमेनोष्मणा संसृष्टेषु स्पन्दमानेषूदकबुद्धिर्भवति सामान्यग्रहणात्, अन्तिकस्थस्य विपर्यये तदभावात्।

न्यायवार्त्तिकम्

एवं च सति—

मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे। स्थाणौ पुरुषाध्यवसायो मिथ्योपलब्धिः, तत्त्वज्ञानेन च मिथ्याध्यवसायः स निवर्तते,

न्यायवार्त्तिकतात्पर्यटीका

अपि च मिथ्योपलब्धीनां बाह्यानालम्बनत्वमास्थाय तत्त्वबुद्धीनां बाह्यानालम्बनत्वं साधनीयम्। तासां बाह्यानालम्बनत्वं बाधकाधीनम्। बाधकं चात्र समारोपितरजताद्यभिमानं निवर्त्तयति न तु पुरोऽवस्थितमर्थसामान्यं शुक्लभास्वरम्। तस्मान्न बाधकानुरोधादपि मिथ्याज्ञानं बाह्यानालम्बनमिति स्वप्नवदिति दृष्टान्तः साध्यविकल इत्याह—एवं(क)स[ती]ति।

वृत्तिः

ननु भ्रमस्यापि सद्विषयत्वे तत्प्रतिरोधः कथं स्यादित्याशङ्क्याह—(मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे)।

मिथ्योपलब्धेर्मायागन्धर्वनगरादिज्ञानस्य तत्त्वज्ञानादनारोपितवस्तुप्रत्ययाद्विनाशः प्रतिरोधः भ्रमत्वज्ञानं वा, एवं स्वाप्नप्रत्ययस्यापि। दर्पणमुखविभ्रमस्य तत्त्वज्ञानेनाप्रतिरोधेऽपि भ्रमत्वज्ञानं भवत्येवेति भावः ॥ ३३ ॥

(१) 'मिथ्योपलब्धेर्विनाशः'—इति-ग-फ०। (क) भाष्य-वार्त्तिकगत-'च'शब्दोऽत्र न गृहीतः।

## न्यायभाष्यम्

क्वचित् कदाचित् कस्यचिच्च(१) भावान्नानिमित्तं मिथ्याज्ञानम्। दृष्टं च बुद्धिद्वैतं मायाप्रयोक्तुः परस्य च, दूरान्तिकस्थयोर्गन्धर्वनगरमृगतृष्णिकासु, सुप्तप्रतिबुद्धयोश्च स्वप्नविषये। तदेतत्सर्वस्याभावे निरुपाख्यतायां निरात्मकत्वे नोपपद्यते इति ॥ ३५ ॥

## बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ ३६ ॥

मिथ्याबुद्धेश्चार्थवदप्रतिषेधः। कस्मात्? निमित्तोपलम्भात्, सद्भावोपलम्भाच्च। उपलभ्यते(२)हि मिथ्याबुद्धिनिमित्तं मिथ्याबुद्धिश्च प्रत्यात्ममुत्पन्ना गृह्यते संवेद्यत्वात्, तस्मान्मिथ्याबुद्धिरप्यस्तीति ॥ ३६ ॥

## न्यायवार्त्तिकम्

नार्थः स्थाणुपुरुषलक्षणः। न ह्यसौ स्थाणुर्न भवतीति यथा स्वप्नोपलब्धानां येऽध्यवसायाः ते जाग्रदवस्थोपलब्ध्या निवर्त्यन्ते, नार्थो विषयसामान्यलक्षण इति। शेषं भाष्ये ॥ ३५ ॥

बुद्धेश्चैवं निमित्तसद्भावोपलम्भात्। बुद्धेश्चैवं निमित्तसद्भावोपलम्भादप्रतिषेधः। मिथ्याबुद्धेर्निमित्तमस्ति। किं पुनस्तत्? सामान्यदर्शनं विशेषादर्शनमविद्यमानविशेषाध्यारोप

## न्यायवार्त्तिकतात्पर्यटीका

मिथ्याज्ञानस्य प्रधानाश्रयत्वे मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानाद्बाधकात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिषेधो न त्वर्थस्य सामान्यस्यापीति शेषः। शेषं भाष्ये। भाष्यं सुबोधम् ॥ ३५ ॥

यस्तु माध्यमिको मिथ्याबुद्धिदृष्टान्तेन बाह्यापह्नवं कृत्वा तेनैव दृष्टान्तेन विज्ञानाभावं कृत्वा विचारासहत्वं तत्त्वं भावानां व्यवस्थापयाम्बभूव तं प्रत्याह—

बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् (सू ३६)॥ अर्थे हि निषिद्धे भवेदप्येतत्। तद्व्यवस्थापने तद्वदेवाप्रत्यूहं बुद्धिसद्भावोऽपि सिध्यति। न चैवंवादिनः प्रमाणमस्ति, असता च

## वृत्तिः

माध्यमिकस्तु बाह्यासत्त्वं प्रसाध्य तद्दृष्टान्तेन बुद्धेरप्यसत्त्वं साधयति, तं प्रत्याह—(बुद्धेश्चैवं निमित्तसद्भावोपलम्भात्)।

एवं बाह्यवत् बुद्धेरपि न प्रतिषेधः निमित्तसद्भावोपलम्भात्, सहेतुकत्वस्य प्रमितत्वात्। न ह्यलीकं सहेतुकं सम्भवति, अहेतुकत्वे च कादाचित्कत्वव्याकोपः।

केचित्तु भ्रमस्य सद्विषयत्वे प्रमात्वं स्यादित्यत्राह—बुद्धेरिति। एवं(४)प्रमात्वनिमित्तस्य प्रकारस्य सद्भावः सत्त्वं यत्र, तथा च शुक्तिरजतयोः सत्यत्वेऽपि शुक्तौ रजतत्ववैशिष्ट्याभावान्न तद्बुद्धेः प्रमात्वमिति भाव इत्याहुः।

अत्र चोपलम्भपदमनतिप्रयोजनकम् ॥ ३४ ॥

(१) 'च'—इति टि-पु॰ नास्ति। (२) 'हि'—इति ख-ग-ज-भा॰ पु॰ नास्ति।

न्यायभाष्यम्

## तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ॥ ३७ ॥

तत्त्वं स्थाणुरिति, प्रधानं पुरुष इति। तत्त्वप्रधानयोरलोपाद् भेदात् स्थाणौ पुरुष इति(१)मिथ्याबुद्धिरुत्पद्यते सामान्यग्रहणात्। एवं पताकायां बलाकेति, लोष्टे कपोत इति(१*) (२)न तु समाने विषये मिथ्याबुद्धीनां समावेशः(३)सामान्यग्रहणव्यवस्थानात्। यस्य तु निरात्मकं निरुपाख्यं सर्वं तस्य समावेशः प्रसज्यते।

न्यायवार्त्तिकम्

इति। मिथ्याबुद्धिं प्रतिपद्यमानेन तस्या निमित्तं वक्तव्यम्। निमित्तं च प्रतिपद्यमानेनार्थोऽभ्युपेय इति॥ ३६ ॥

तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः। तत्त्वं स्थाणुरिति प्रधानं पुरुष इति तत्त्वप्रधानयोरलोपे मिथ्याबुद्धिर्भवतीति। शेषं भाष्ये॥ ३७ ॥

इति बाह्यार्थभङ्गनिराकरणप्रकरणम्।

न्यायवार्त्तिकतात्पर्यटीका

प्रमाणेन विचारासहत्वं भावानां व्यवस्थापयन् श्लाघनीयप्रज्ञो देवानांप्रिय इति। न च कल्पनामात्रनिर्मित उपायस्तत्त्वज्ञानाय पर्याप्तः। न च वनस्पत्यादितत्त्वज्ञानस्य मिथ्याहस्तिज्ञानं निबन्धनमपि तु प्रणिहितमनस इन्द्रियार्थसन्निकर्षविशेषः। न चासौ मिथ्याज्ञानसमये आसीत्। न च मोहाभ्यासः समीचीनाय ज्ञानाय कल्पते, स हि मोहमेव द्रढयतीति सर्वमवदातम्। सोऽयं माध्यमिकोऽनुभूयमानां मिथ्याबुद्धिं नापह्नोतुमर्हति। तथा च मिथ्याबुद्धिं प्रतिपद्यमानेन तस्या निमित्तं वक्तव्यमित्युक्तम्॥ ३६ ॥

तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ( सू ३७ )॥ मिथ्याबुद्ध्या स्वनिमित्तं लक्ष्यते। तेन मिथ्याज्ञाननिमित्तस्य द्वैविध्यमित्यर्थः। यत्र स्थाणौ पुरुष इति ज्ञानं भवति तत्र तत्त्वं स्थाणुरिति, प्रधानं पुरुष इति, यः पूर्वं पुरुषोऽभूदित्यर्थः। एवं तावद्रूपबुद्धीः

वृत्तिः

न वा मिथ्याबुद्धिदृष्टान्तेन ज्ञानमात्रस्य असन्मात्रविषयकत्वं सद्विषयकत्वाभावो वा सम्भवतीत्याह—( तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः )।

तत्त्वं धर्मिस्वरूपं प्रधानम् आरोप्यं तथा च भ्रमे धर्म्यंशे प्रमात्वमारोप्यरजतत्वाद्यंशे च भ्रमत्वमिति दृष्टान्तासिद्धिरिति भावः।

केचित्तु भ्रमत्वप्रमात्वयोर्विरोधान्नैकत्र समावेश इत्यत आह—तत्त्वेति। तथा च विषयभेदान्न विरोध इति भाव इत्याहुः॥ ३५ ॥

समाप्तं बाह्यार्थभङ्गनिराकरणप्रकरणम्।

(१) चयमंशः टि-पु० नास्ति। (२) तत्र समाने—इति भा०। (३) 'सामान्यग्रहणाव्यवस्थाना'दिति ख-ग-ज०।

न्यायभाष्यम्

गन्धादौ च प्रमेये गन्धादिबुद्धयो मिथ्याभिमतास्तत्त्वप्रधानयोः सामान्यग्रहणस्य चाभावात्तत्त्वबुद्धय एव भवन्ति। तस्माद्युक्तमेतत्—प्रमाणप्रमेयबुद्धयो मिथ्येति ॥ ३७ ॥

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिरित्युक्तम्। अथ(१)कथं तत्त्वज्ञानमुत्पद्यत इति?

समाधिविशेषाभ्यासात् ॥ ३८ ॥

स तु प्रत्याहृतस्ये(२)न्द्रियेभ्यो मनसो धारकेण प्रयत्नेन धार्यमाणस्यात्मना

न्यायवार्त्तिकम्

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिरित्युक्तम्। अथ तत्त्वज्ञानं कथमुत्पद्यत इति? समाधिविशेषाभ्यासात्। शेषं भाष्ये।

व्यापकत्वादन्तःकरणस्य प्रत्याहारो न युक्त इति चेत्—अथ मन्यसे व्यापकमन्तःकरणं तत्कथं प्रत्याह्रियत इति चेत्? न, उक्तोत्तरत्वात्—यथा न व्यापकमन्तःकरणं

न्यायवार्त्तिकतात्पर्यटीका

प्रतिपाद्य गन्धादिबुद्धीरपि प्रतिपादयति भाष्यकारः गन्धादौ प्रमेय इति। उपसंहरति—तस्माद्युक्तमेतदिति ॥ ३७ ॥

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिरित्युक्तम्, अथ तत्त्वज्ञानं कथमुत्पद्यत इति। न तावदागमत उपपत्तितो वा तत्त्वज्ञानमहङ्कारनिवृत्तिं कर्तुमुत्सहते दोषनिमित्तेषूत्पन्नज्ञानामामपि पूर्ववदहङ्कारदोषानुवृत्तेः। साक्षात्कारस्तूपायाभावादयुक्त इति। अस्योत्तरं सूत्रम्—

* समाधिविशेषाभ्यासात् (सू ३८)॥ समाधिपदं व्याचष्टे भाष्यकारः—स तु प्रत्याहृतस्येन्द्रियेभ्यो मनस इति। अनेन विक्षेपं निवर्त्तयति। इन्द्रियेभ्यः प्रतीपमाहृतस्य मनसः क्वचित् हृत्पुण्डरीकप्रदेशे आत्मनो निजौकसि धारकेण प्रयत्नेन धार्यमाण-

वृत्तिः

ननु शास्त्राधीनं तत्त्वज्ञानं क्षणिकमतस्तन्नाशे मिथ्याज्ञानं स्यादेव। न हि तादृशं किञ्चिदेव ज्ञानं दृढभूमिसवासनमिथ्याज्ञानसमुन्मूलनक्षमम्, अतस्तत्त्वज्ञानविवृद्धिप्रकरणमारभते। तत्त्वज्ञानविवृद्धिस्तत्त्वज्ञानवासना, ततश्चाऽऽत्यन्तिको मिथ्याज्ञाननाशः, तत्र तत्त्वज्ञानविवृद्धौ हेतुमाह—(समाधिविशेषाभ्यासात्)।

समाधिश्चित्तस्याभिमतविषयनिष्ठत्वम्, तस्य प्रकर्षो विषयान्तरानभिष्वङ्गलक्षणस्तस्याभ्यासात् पौनःपुन्यात् तत्त्वज्ञानविवृद्धिः, तदेव च निदिध्यासनमामनन्ति। तत्त्वज्ञानविवृद्ध्या च मिथ्याज्ञानवासनातिरोभावः। तथा च योगसूत्रम्—"तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी" (समाधिपादः, सू५०) प्रतिबन्धः कार्याक्षमतासम्पादनं विनाशो वा ॥ ३८ ॥

(१) 'कस्य'—इति टि०। (२) इन्द्रियार्थेभ्यः—इति ग-ख-घृतपाठान्तरम्।
* आदर्शपुस्तकयोः "समाधितत्त्वाभ्यासा"दिति पाठो दृश्यते। भाष्यसमत्या न्यायसूचीनिबन्धसंवादेन च "विशेषाभ्यासा"दित्येव पाठः प्रकृत इति निश्चित्य स एवात्र निवेशितः।

### न्यायभाष्यम्

संयोगस्तत्त्वबुभुत्साविशिष्टः । सति हि तस्मिन्निन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते, तदभ्यासवशात्तत्त्वबुद्धिरुत्पद्यते ॥ ३८ ॥

यदुक्तं सति हि तस्मिन् इन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते इत्येतत्(१)—

## नार्थविशेषप्राबल्यात् ॥ ३९ ॥

अनिच्छतोऽपि बुद्ध्युत्पत्तेर्नैतद् युक्तम् । कस्मात्? अर्थविशेषप्राबल्यात् । अबुभुत्समानस्यापि बुद्ध्युत्पत्तिर्दृष्टा यथा स्तनयित्नुशब्दप्रभृतिषु ; तत्र समाधिविशेषो नोपपद्यते ॥ ३९ ॥

## क्षुदादिभिः प्रवर्त्तनाच्च ॥ ४० ॥

### न्यायवार्त्तिकम्

तथोक्तमधस्तात् । (२)अणुत्वात् स्वाङ्गगतीक्षणानुपपत्तिरिति चेत्—अथ मन्यसे यस्याप्यन्तःकरणमणु तस्यापि(३)स्वाङ्गगतिवीक्षणं न प्राप्नोति युगपद्धस्ते चक्षुषि चाऽसन्निधानात्? न, शरीरात्ममनःसंयोगयौगपद्यात् प्रयत्नदर्शनयोर्युगपदुत्पत्तेः । स्वात्मशरीरसम्बन्धश्चात्ममनःसम्बन्धश्च युगपद् भवति । तत्रात्ममनःशरीरसम्बन्धात् स्वाङ्गगतिः, आत्ममनःसम्बन्धाच्चक्षुषः प्रेरणम् । तथा स्वाङ्गगतिः प्रयत्नाद्भवतीति दर्शनं चक्षूरश्मेरर्थस्य च सन्निधानादिति । न चात्मनः प्रदेशाः सन्तीत्यचोद्यम्, प्रदेशवति चात्मनि अन्येनात्मप्रदेशेन मनः सम्बध्यते अन्येन शरीरमिति स्वाङ्गगतीक्षणादिदोषः । यस्य पुनर्निष्प्रदेश एवासौ तस्यैष दोषो न भवतीति शरीरसम्बन्धेनात्ममनःसम्बन्ध इति ॥ ३८ ॥

नार्थविशेषप्राबल्यात् । नोपपद्यते समाधिविशेषाभ्यासः अबुभुत्समानस्यापि बुद्ध्युत्पत्तेः, यथा स्तनयित्नोः शब्दप्रभृतिषु इति ॥ ३९ ॥

### न्यायवार्त्तिकतात्पर्यटीका

स्यात्मना संयोगोऽयम् । स खलु छद्मावस्थायामस्तीत्यत उक्तं—तत्त्वबुभुत्साविशिष्ट इति । तदभ्यासश्च तद्विषयप्रयत्नोत्पादपौनःपुन्यं, तस्माद् (क)आदरनैरन्तर्यदीर्घकालविशिष्टात् तत्त्वबुद्धिरुत्पद्यते ॥ ३८ ॥

नार्थ—ल्यात् (सू ३९) ॥

क्षुदा-च्च ( सू ४० ) ॥

एतदाक्षेपसूत्रमवतारयति—यदुक्तं सति हि तस्मिन्निति । इन्द्रियविषयैरपहृतमनसो न धारणा । तथा च तदभ्यासाभावान्न तत्त्वसाक्षात्कार इति सूत्रार्थः(ख) ॥ ४० ॥

---

(१) एतदिति सूत्रस्थनञा अन्वेति । (२) 'अल्पत्वात्'—इति क-खधृतपाठान्तरम् । (३) 'स्वाङ्गमतेरीक्षणं'—इति क-खधृतपाठान्तरम् । (क) तथाच भगवान् पतञ्जलिः—"स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः" (१।१४) (ख) सूत्रद्वयमेकया व्याख्यातम् । तथाच सूत्रार्थं इति सूत्रयोरर्थं इत्यर्थः ।

## न्यायभाष्यम्

क्षुत्पिपासाभ्यां शीतोष्णाभ्यां व्याधिभिश्चानिच्छतोऽपि बुद्धयः प्रवर्त्तन्ते तस्मादैकाग्र्यानुपपत्तिरिति ॥ ४० ॥

अस्त्वेतत् (१)समाधिं विहाय व्युत्थानं व्युत्थाननिमित्तं समाधिप्रत्यनीकं च, सति त्वेतस्मिन्—

## पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ४१ ॥

## न्यायवार्त्तिकम्

(२)क्षुदादिभिः प्रवर्तनाच्च। क्षुत्पिपासाभ्यां(३)चानिच्छतोपि बुद्धय उत्पद्यन्ते इति न युक्तः समाधिविशेषः ॥ ४० ॥

पूर्वकृतफलानुबन्धात् तदुत्पत्तिः। पूर्वकृतः—पूर्वशरीराभ्यस्तः समाधिविशेषः, तस्य

## न्यायवार्त्तिकतात्पर्यटीका

समाधानसूत्रमवतारयति—अस्त्वेतत्समाधिव्युत्थाननिमित्तमिति। सूत्रम्—

पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ( सू ४१ )॥ पूर्वकृतः समाधिः तस्य फलं संस्कारः

## वृत्तिः

ननु रागादिभिः प्रतिबन्धात् समाधिरेव (४)नोदीयतामित्याक्षिपति सूत्राभ्याम्—( नार्थविशेषप्राबल्यात् )। ( क्षुदादिभिः प्रवर्तनाच्च )।

अर्थविशेषस्य तनयवनितादिरागस्य प्राबल्याच्चिरकालानुबन्धात् तदनुसन्धानमवर्जनीयमिति तदभावः। स्याच्च घनगर्जितादिज्ञानेन प्रतिबन्धः, एवं क्षुत्तृष्णाभयादिभिः प्रतिरुद्धस्तदुपशमाय प्रयतेत ॥ ३७-३८ ॥

परिहरति—( पूर्वकृतफलानुबन्धात्तदुत्पत्तिः )।

जन्मान्तरकृतसमाधिजन्यसंस्कारवशात् समाधिसिद्धिरित्यर्थः। अत एव च "अनेकजन्मसंसिद्धः"(५) इत्यादि सङ्गच्छते।

वयं तु—पूर्वकृतस्य प्रथमतः कृतस्येश्वराराधनस्य फलं धर्मविशेषस्तत्सम्बन्धादित्यर्थः। तथा च योगसूत्रम्– "समाधिसिद्धिरीश्वरप्रणिधानात्" (साधनपादः, सू४५) सूत्रान्तरं च तत्रैव—"ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च" ( समाधिपादः सू२९ ) ततः—ईश्वरप्रणिधानाद्विषयप्रातिकूल्येन चित्तावस्थानं प्रत्यूहाभावश्चेत्यर्थः ॥ ३९ ॥

(१) 'समाधिव्युत्थाननिमित्तम्'—इति ज०। पाठोऽयं टीकाकृत्सम्मत इति टीकादर्शधृतसन्दर्भदर्शनादवगम्यते। तथापि नानाभाष्यादर्शादर्शनादुपेक्षितः। (२) "क्षुधादिभिः प्रवर्तनाच्च' इति क्वचित्"—इति क-ख-पुस्तकसम्पादकाः। (३) 'चानिच्छतोऽपि बुद्धय एव'—इति ख०। (४) 'नोदेतीत्या'—इति भ०। (५) "अनेकजन्मसंसिद्धस्ततो याति परां गतिम्"—भगवद्गीता ( ६।४५ )।

## न्यायभाष्यम्

पूर्वकृतो जन्मान्तरोपचितस्तत्त्वज्ञानहेतुर्धर्मप्रविवेकः फलानुबन्धो योगाभ्याससामर्थ्यं, निष्फले ह्यभ्यासे (१)नाभ्यासमाद्रियेरन्। दृष्टं हि लौकिकेषु कर्मस्वभ्याससामर्थ्यम् ॥ ४१ ॥

प्रत्यनीकपरिहारार्थं च—

**(२)अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥ ४२ ॥**

योगाभ्यासजनितो धर्मो जन्मान्तरेऽप्यनुवर्तते। प्रचयकाष्ठागते तत्त्वज्ञानहेतौ धर्मे प्रकृष्टायां समाधिभावनायां तत्त्वज्ञानमुत्पद्यते इति। दृष्टश्च (३)समाधिनाऽर्थविशेषप्राबल्याभिभवः (४)'नाहमेतदश्रौषं नाहमेतदज्ञासिषमन्यत्र मे मनोऽभूदि'त्याह लौकिक इति ॥ ४२ ॥

## न्यायवार्त्तिकम्

फलं धर्मः तत्कृतः पुनः समाधिविशेष इति। समाधिविशेषाच्च बाह्यविषयाभिभवः। लौकिकस्यापि तावत्समाधिविशेषावस्थितस्य बाह्यविषयोपनिपाते बुद्धयो नोत्पद्यन्ते किं पुनर्योगिन इति।

## न्यायवार्त्तिकतात्पर्यटीका

तस्यानुबन्धः स्थेमा तस्मादिति सूत्रार्थः। तद् व्याचष्टे भाष्यकारः—पूर्वकृत इति। प्रविविच्यते विशिष्यतेऽनेनेति प्रविवेकः*प्रकृष्टः संस्कारः स त्वात्मधर्म इति। कस्मात्पुनरदृश्यमानः संस्कारः कल्प्यत इत्यत आह—निष्फले हीति। प्रयत्नविशेषा हि विशारदो बहवोऽपि परस्परमसहभवन्तो न तत्त्वसाक्षात्काराय पर्याप्ता इति तज्जनिताः संस्काराः कल्प्यन्ते, तेषां स्थेम्ना संभवति संभूयकारितेत्यर्थः ॥ ४१ ॥

अर-शः (सू ४२) ॥ प्रचयकाष्ठा प्रचयावधिः यतः परमपरः प्रचयो नास्ति। तत्सहकारिशालितया प्रकृष्टायां समाधिभावनायां समाधिप्रयत्नः समाधिभावना तस्यामित्यर्थः ॥ ४२ ॥

## वृत्तिः

योगाभ्यासस्थानमुपदिशति—( अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः )। तत्र स्थिरचित्तता स्यादिति भावः। इद न सूत्रं, किं तु भाष्यमिति केचित् ॥४०॥

---

(१) 'नाभ्यास माद्रियेरन्'—इति ज०। (२) सूत्रमिदं वार्त्तिककृता टीकाकृता च न व्याख्यातम्। अस्य च सूत्रत्वे विवादो वृत्तौ व्यक्तः। न्यायसूचीनिबन्धे न्यायसूत्रोद्धारे च सूत्रत्वेनैवेदं गृहीतम्। वृत्तिकृता च तदेवाश्रितम्। अतएव सूत्रत्वेनास्य सन्निवेशो विहितः। (३) 'समाधिनार्थं'—इति ज०। (४) 'अन्यत्रमना अभूवमिति नाश्रौषम्'—इति बृहदारण्यकम्। *"अत उत्तरं 'धर्मसाधो प्रविवेकश्चेति धर्मप्रविवेक' इत्यधिकः पाठः पु० २।" इति क-पुस्तक-संपादकाः।

## न्यायभाष्यम्

यद्यर्थविशेषप्राबल्यादनिच्छतोऽपि बुद्ध्युत्पत्तिरनुज्ञायते—

### अपवर्गेऽप्येवं प्रसङ्गः ॥ ४३ ॥

मुक्तस्यापि बाह्यार्थसामर्थ्याद् बुद्धय उत्पद्येरन्निति ॥ ४३ ॥

### न, निष्पन्नावश्यम्भावित्वात् ॥ ४४ ॥

कर्मवशा(१)न्निष्पन्ने शरीरे चेष्टेन्द्रियार्थाश्रये निमित्तभावादवश्यम्भावी बुद्धीनामुत्पादः। न च प्रबलोऽपि सन् बाह्योऽर्थ आत्मनो बुद्ध्युत्पादे समर्थो भवति(२)तस्येन्द्रियेण संयोगाद् बुद्ध्युत्पादे सामर्थ्यं दृष्टमिति ॥ ४४ ॥

## न्यायवार्त्तिकम्

यदि बाह्यविषयोपनिपाते अर्थज्ञानानि प्रादुर्भवन्ति—अपवर्गेऽप्येवं प्रसङ्गः। (३)मुक्तस्यापवर्गे बाह्यविषयविशेषोपनिपातो विद्यत इति बुद्ध्युत्पादप्रसङ्गः ॥ ४१-४३ ॥

न, निष्पन्नावश्यम्भावित्वात्। सति शरीरे बाह्यविषयो ज्ञानोत्पत्तिकारणम्, नान्यथेति सूत्रार्थः ॥ ४४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

पूर्वपक्षवाद्याह—यद्यर्थविशेषप्राबल्यादिति।

अप-ङ्गः ( सू ४३ ) ॥ स खल्वयमीदृशो बाह्यार्थस्य महिमा यत इन्द्रियाद्यनपेक्षादेवात्मनो बुद्धिर्जनयिष्यत इत्यभिमानः पूर्वपक्षिणः ॥ ४३ ॥

सिद्धान्तसूत्रम्—

न, निष्पन्नावश्यंभावित्वात् (सू ४४) ॥ व्याख्यातम्। न खलु तण्डुला अत्यन्तं फलीकृता अपि पिठरोदकदहनसंयोगप्रचयमन्तरेण पुलाका भवन्तीति भावः ॥ ४४ ॥

## वृत्तिः

तटस्थः शङ्कते—( अपवर्गेऽप्येवं प्रसङ्गः )।

एवं प्रसङ्गः अर्थविशेषप्राबल्याद्विषयावभासप्रसङ्गः ॥ ४१ ॥

समाधत्ते—( न, निष्पन्नावश्यम्भावित्वात् )।

निष्पन्नस्य (४)उत्पन्नस्य शरीरादेः अवश्यम्भावित्वात् कारणत्वात्, ज्ञानादिष्विति शेषः ॥ ४२ ॥

(१) 'निष्पन्नशरीरे'—इति ज०। (२) 'तदेन्द्रियेण'—इति टि०। (३) 'युक्तस्यापवर्गे विषयोपनिपातो'—इति ख०। (४) 'उत्पन्नस्ये'ति भ०-पु० नास्ति

न्यायभाष्यम्

## तदभावश्चापवर्गे ॥ ४५ ॥

तस्य बुद्धिनिमित्ताश्रयस्य शरीरेन्द्रियस्य धर्माधर्माभावादभावोऽपवर्गे। तत्र यदुक्तमपवर्गेऽप्येवं प्रसङ्ग इति, तदयुक्तम्। तस्मात्सर्वदुःखविमोक्षोऽपवर्गः। यस्मात्सर्वदुःखबीजं (१)सर्वदुःखायतनं चापवर्गे विच्छिद्यते तस्मात्सर्वेण दुःखेन विमुक्तिरपवर्गः। न निर्बीजं निरायतनं च दुःखमुत्पद्यत इति ॥ ४५ ॥

## तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चा-*ध्यात्मविध्युपायैः ॥ ४६ ॥

तस्यापवर्गस्याधिगमाय यमनियमाभ्यामात्मसंस्कारः। यमः समानमाश्रमिणां धर्मसाधनम्, नियमस्तु विशिष्टम्(२)। आत्मसंस्कारः पुनरधर्महानं धर्मोपचयश्च। योगशास्त्राच्चाध्यात्मविधिः प्रतिपत्तव्यः। स पुनस्तपः प्राणायामः प्रत्याहारो (३)ध्यानं धारणेति। इन्द्रियविषयेषु प्रसंख्यानाभ्यासो रागद्वेषप्रहाणार्थः(४)। उपायस्तु योगाचारविधानमिति ॥ ४६ ॥

न्यायवार्त्तिकम्

तदभावश्चापवर्गे। तस्य शरीरादेरुपलब्धिकारणस्याभावोऽपवर्गे इति। तस्मात् (५)सर्वदुःखमोक्षोऽपवर्ग इति—यस्मात् सर्वं दुःखबीजं दुःखं चापवर्गे विच्छिद्यते तस्मात् सर्वदुःखेन विमुक्तिरपवर्गः ॥ ४५ ॥

तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः—
तस्यापवर्गस्याधिगमाय(६)यमनियमाभ्यामात्मसंस्कारः ॥ ४६ ॥

न्यायवार्त्तिकतात्पर्यटीका

तद्-र्गे ( सू ४५ )॥ किं समाधिविशेष एव तत्त्वज्ञानसाधनम्? मैवम्, किं तु—
तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः (सू ४६)॥ समानमाश्रमिणां धर्मसाधनम्—अहिंसा सत्यमस्तेयं ब्रह्मचर्यमपरिग्रह इति यमः। नियम इति—यस्याश्रमिणोऽसाधारणो धर्मोपायः। योग इति विषयेण योगशास्त्रं पातञ्जलं लक्षयति। योगाचारः—एकाकिता आहारविशेषः एकत्रानवस्थानमित्यादि यतिधर्मोक्तम्। एतेऽपि तत्त्वज्ञानक्रमोत्पादक्रमेणापवर्गसाधनमित्यर्थः ॥ ४६ ॥

वृत्तिः

ननु किमेतावतेत्यत आह—( तदभावश्चापवर्गे )।
तस्य शरीरादेरभावः, तदारम्भकधर्माधर्मविरहादिति भावः ॥ ४३ ॥

(१) 'सर्वदुःखाय तेन'—इति टि०। (२) 'विशिष्ट'—इति ल० ग०। (३) 'धारणा ध्यानमिति'—इति पी०। (४) 'ग्रहणार्थं'—इति ल० ग० ज०। (५) 'सुखदुःखमोचो'—इति क-खधृतपाठान्तरम्। (६) 'यमनियमाभ्यासंस्कारः'—इति क-खधृतपाठान्तरम्।

* 'अध्यात्मविधी'त्यत्र 'आत्मविधी'ति वृत्तिकृत्पाठः।

### वृत्तिः

ननु समाधिमात्रादेव निष्प्रत्यूहोऽपवर्गः स्यात्, साधनान्तरं वाऽपेक्षणीयमत आह— यद्वा, समाधिसाधनान्याह—

( तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चात्मविध्युपायैः ) ।

तदर्थमपवर्गार्थमिति भाष्यादौ । तदर्थं समाध्यर्थमिति वा । यमानाह योगसूत्रं— "अहिंसा-सत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ।" नियमानाह—"शौच-सन्तोष-तपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ( साधनपादः सू ३०–३२ ) ।" स्वाध्यायोऽभिमतमन्त्रजपः ।

निषिद्धानाचरणतत्तदाश्रमविहिताचरणे यमनियमावित्यन्ये ।

आत्मसंस्कार आत्मनोऽपवर्गाधिगमक्षमता । ननु यमनियमावेव साधने, उताऽऽहो अन्यदस्तीत्यत आह—योगादिति । आत्मविधिः आत्मसाक्षात्कारविधायकवाक्यम्, "आत्मा वा अरे द्रष्टव्यः" 'आत्मानं चेद्विजानीयात्' इत्यादि । योगादिति प्रतिपाद्यत्वं पञ्चम्यर्थः । तथा च योगशास्त्रोक्तात्मतत्त्वाधिगमसाधनैश्चात्मसंस्कारः कर्तव्य इत्यर्थः । तथा च योगसूत्रम्—'योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेः' ( साधनपादः सू २८ ) । तदर्थश्च—योगाङ्गानां यमनियमादीनाम् अनुष्ठानाच्चित्तस्याशुद्धेरविद्यारूपस्य क्षये सति ज्ञानस्य दीप्तिः प्रकर्षः, स च विवेकख्यातिपर्यन्तो जायते । सा च सत्त्वपुरुषान्यतासाक्षात्कारः । अस्मन्मते तु देहादिभिन्नात्मसाक्षात्कारः । स च नेदानीमविद्याप्रतिबन्धाद्देहात्मनोर्मनश्चक्षुराद्ययोग्यत्वाच्च, भवति चासौ योगजधर्मात् । योगाङ्गानि तत्रोक्तानि 'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ।' आसनं पद्मासनादि कुशासनादि च 'चैलाजिनकुशोत्तरमिति' भगवद्वचनात् । प्राणायाममाह योगसूत्रम्—"तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ।" ( साधनपादः सू० ४९ ) तस्मिन्—आसनस्थैर्ये । प्राणवायोरेव निर्गमप्रवेशरूपक्रियाविशेषात् श्वासप्रश्वासव्यपदेशः । बहिरिन्द्रियाणां स्वस्वविषयवैमुख्येनावस्थानं प्रत्याहारः । धारणामाह योगसूत्रम्—"देशबन्धश्चित्तस्य धारणा" ( विभूतिपादः सू० १ ) । देशे नाभिचक्रादौ चित्तस्य बन्धो विषयान्तरवैमुख्येनावस्थानम् । ध्यानमाह—"तत्प्रत्ययैकतानता ध्यानम्" ( विभूतिपादः सू० २ ) । धारणैव धारावाहिकी ध्यानमित्यर्थः । समाधिमाह— "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" ( विभूतिपादः सू० ३ ) । अर्थस्य धर्मो ज्ञानस्वरूपं च यदि ध्याने न भासते तदा समाधिरित्यर्थः । सूत्रान्तरम्—"त्रयमन्तरङ्गं पूर्वेभ्यः" ( विभूतिपादः सू० ७ ) । चरमत्रयं साक्षादुपकारकमित्यर्थः ॥ ४४ ॥

### न्यायभाष्यम्

## ज्ञानग्रहणाभ्यासस्त(१)द्विद्यैश्च सह संवादः ॥ ४७ ॥

तदर्थमिति प्रकृतम्। ज्ञायतेऽनेनेति ज्ञानमात्मविद्याशास्त्रं तस्य ग्रहणमध्ययनधारणे, अभ्यासः सततक्रियाध्ययनश्रवणचिन्तनानि। तद्विद्यैश्च सह संवाद इति प्रज्ञापरिपाकार्थम्, परिपाकस्तु संशयच्छेदनमविज्ञातार्थबोधोऽध्यवसिताभ्यनुज्ञानमिति। (२)समयावादः संवादः ॥ ४७ ॥

तद्विद्यैश्च सह संवाद इत्यविभक्तार्थं वचनं विभज्यते—

## तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयिभिरभ्युपेयात् ॥ ४८ ॥

एतन्निगदेनैव नीतार्थमिति ॥ ४८ ॥

### न्यायवार्त्तिकम्

ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः। ज्ञानग्रहणं शास्त्रग्रहणं, तद्विद्याः—(३)यत्नसुपायं बुद्ध्यन्त इति तद्विद्या इत्यविभक्तार्थं वचनम् ॥ ४७ ॥

तं शिष्य-गुरु-सब्रह्मचारि-विशिष्ट···इत्येवमादि सूत्रम्। एतद् तु निगदेनैव नीतार्थम् ॥ ४८ ॥

### न्यायवार्त्तिकतात्पर्यटीका

ननु यद्येते तत्त्वज्ञानोत्पादक्रमेणापवर्गोपायः, कृतं तर्ह्यान्वीक्षिक्येत्यत आह—

ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः (सू ४७) ॥ तद्व्याचष्टे तदर्थमिति प्रकृतम्। आत्मविद्या आन्वीक्षिकी। अभ्यासः सततक्रिया प्रयत्न इत्यर्थः। प्रयोजनमाह—प्रज्ञापरिपाकार्थम्। परिपाकस्तु संशयच्छेदनम्। किं देहाद्यतिरिक्त आत्मा उत नेति संशयः। तस्य च्छेदनं लोकस्य तत्त्वज्ञानमात्मनि तदवरोधः। अध्यवसितं प्रमाणेन, तस्य अभ्यनुज्ञानं तर्केण ॥ ४७ ॥

तं-यात् (सू ४८) ॥ सब्रह्मचारी सहाध्यायी। गुरुशिष्यसहाध्यायिभ्योऽन्यः शास्त्रेणानुशिष्टः(४)शिष्टश्रेयोऽर्थिनः श्रेयसि मोक्षलक्षणे श्राद्धाः। तेषामपवर्गे श्रद्धादर्शनादस्ति तदुपायाभ्यासः प्राग्भवीय इत्यनुमीयते। तेन तेषामपि प्राग्भवीयसंस्कारवशात्प्रतिभोपासनीयेति। अभ्युपेयात् अभिमुखमुपेत्य जानीयात् गुर्वादिभिः सहेत्यर्थः। नीतार्थम् गतार्थम् ॥ ४८ ॥

(१) 'तद्विद्यैश्च'—इति टि०। (२) 'समीपवादः'—इति-ग-वि-टि०। 'समायवादः'—इति ल-भा०। फ-पुस्तकपाठो गृहीतः। 'समये'त्यव्ययं समीपवाचि। (३) 'ये तमुपायं'—इति पाठः सम्भाव्यते। (४) 'शिष्टश्रेयोऽर्थिनः' इत्यत्र 'विशिष्टः, श्रेयोऽर्थिनः' इति सम्यक्तया प्रतिभाति।

## न्यायभाष्यम्

(१)यदि च मन्येत पक्षप्रतिपक्षपरिग्रहः प्रतिकूलः परस्येति—

### (२)प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥ ४९ ॥

तमभ्युपेयादिति वर्तते। परतः प्रज्ञामुपादित्समानस्तत्त्वबुभुत्साप्रकाशनेन स्वपक्षमनवस्थापयन् स्वदर्शनं परिशोधयेदिति। अन्योन्यप्रत्यनीकानि च प्रावादुकानां दर्शनानि ॥ ४९ ॥

## न्यायवार्त्तिकम्

प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे। तमभ्युपेयादिति वर्तते ॥ ४९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

तदनेन गुर्वादिभिर्वादं कृत्वा तत्त्वनिर्णय उक्तः। यदि च मन्येत पक्षप्रतिपक्षपरिग्रहः प्रतिकूलः परस्य गुर्वादेस्तस्मान्न वादोऽप्युचित इति, तत्रेदं सूत्रमुपतिष्ठते—

प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ( सू ४९ ) ॥ व्याचष्टे—तमभ्युपेयादिति वर्त्तते। परतो गुर्वादेः प्रज्ञामुपादित्समानस्तत्त्वबुभुत्साप्रकाशनेन आत्मनः शरीरादिभ्यो भेदं बुभुत्स इत्यभिदधानः स्वपक्षमनवस्थापयन् स्वदर्शनं गुर्वादिकृताद्विचारात्पूर्वपक्षोच्छेदेन सिद्धान्तव्यवस्थापनलक्षणात् स्वदर्शनं परिशोधयेत्। अन्योन्यप्रत्यनीकानि च प्रावादुकानां दर्शनानि अयुक्तपरित्यागेन युक्तपरिग्रहणेन च परिशोधयेदिति संबध्यते ॥ ४९ ॥

## वृत्तिः

नन्वेवं किमान्वीक्षिक्येत्यत आह—( ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः )।

तदर्थमित्यनुवर्तते। ज्ञायतेऽनेनेति ज्ञानं शास्त्रं प्रकृतम्, तस्य ग्रहणमध्ययनधारणे, तत्र अभ्यासो दृढतरसंस्कारः, तद्विद्यैस्तदभियुक्तैः संवादः स्वानुभवदार्ढ्याय। न हि योगाङ्गज्ञानाय तत्सापेक्षत्वेन प्रकृतशास्त्रवैफल्यं ध्येयस्वरूपवैलक्षण्यात् ॥ ४५ ॥

संवादप्रकारं दर्शयितुमाह—( तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयिभिरभ्युपेयात् )।

तम् तद्विद्यम्, सब्रह्मचारी सहाध्यायी, विशिष्टः प्रकृष्टज्ञानवान्, श्रेयोऽर्थी मुमुक्षुः। विशिष्टः पूर्वोक्तभिन्न इत्यर्थ इति कश्चित्। विजिगीषुव्यावृत्त्यर्थम् अनसूयिभिरिति ॥४६॥

(१) 'यदिदं'—इति ल-ग-ज-झा०। (२) 'प्रतिपचहान—' इति टि०।

न्यायभाष्यम्

स्वपक्षरागेण चैके न्यायमतिवर्तन्ते, तत्र—

**तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥ ५० ।**

अनुत्पन्नतत्त्वज्ञानानामप्रहीणदोषाणां तदर्थं घटमानानामेतदिति ॥ ५० ॥

विद्यानिर्वेदादिभिश्च परेण (१)अवज्ञायमानस्य—

**ताभ्यां विगृह्य कथनम् ॥ ५१ ॥**

न्यायवार्त्तिकम्

तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् इति । अनुत्पन्नतत्त्वज्ञानेनैतत् कर्तव्यमिति सूत्रार्थः ॥ ५० ॥

विद्यानिर्वेदादिभिश्च परेणावज्ञायमानस्य—

ताभ्यां विगृह्य कथनम् । ताभ्यां जल्पवितण्डाभ्यां विगृह्येति विजिगीषया न तत्त्व-

न्यायवार्त्तिकतात्पर्यटीका

ननु यत्र वादस्यैव दशेयमीदृशी, तत्त्वनिर्णये दत्तजलाञ्जली तर्हि जल्पवितण्डे इत्यत आह—स्वपक्षरागेण चैके न्यायमतिवर्त्तन्ते । तत्र—

तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् (सू ५०)—इति सूत्रम् । तद् व्याचष्टे—अनुत्पन्नतत्त्वज्ञानानामिति ॥ ५० ॥

न केवलं तदर्थं घटमानानां जल्पवितण्डे, अपि तु विद्यानिर्वेदादिभिश्च परेणावज्ञायमानस्य ;—

ताभ्यां विगृह्य कथनम् ( सू ५१ ) ॥ इति सूत्रम् । यस्तु स्वदर्शनविलसितमिथ्याज्ञानावलेपदुर्विदग्धतया सद्विद्यावैराग्याद्वा लाभपूजाख्यात्यर्थितया कुहेतुभिरीश्वराणां जनाधाराणां पुरतो वेदब्राह्मणपरलोकादिदूषणप्रवृत्तस्तं प्रति वादी समीचीनदूषणमप्रतिभयाऽपश्यन् जल्पवितण्डे

वृत्तिः

संवादप्रकारमाह—( प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ) । प्रयोजनार्थे तत्त्वनिर्णयार्थे प्रतिपक्षहीनं वाशब्दो निश्चयार्थः । अर्थित्वे तत्त्वबुभुत्सायां सत्यां प्रयोजनार्थे तत्त्वनिर्णयार्थे प्रतिपक्षहीनं यथा स्यात् तथा अभ्युपेयात् । तथा च भाष्यम्—"स्वपक्ष(क)मनवस्थाप्य प्रतिकूलपक्षहीनं यथा स्यात् तथा अभ्युपेयात् । तथा च भाष्यम्—स्वदर्शनं परिशोधयेदिति ।" तत्त्वनिर्णिनीषुतया न पक्षपात इति भावः ॥ ४७ ॥

समाप्तं तत्त्वज्ञानविवृद्धिप्रकरणम् ।

(१) 'अनिज्ञायमानस्य'—इति ज० वि० । (क) भाष्ये 'मनवज्ञापयन्'—इति बहुपुस्तकसंवादाद् गृहीतम् ।

## न्यायभाष्तम्

विगृह्येति विजिगीषया, न तत्त्वबुभुत्सयेति। तदेतद्विद्यापालनार्थं न लाभपूजाख्यात्यर्थमिति ॥ ५१ ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

## न्यायवार्त्तिकम्

बुभुत्सयेति। विद्यापालनार्थं चैतत्, न लाभपूजाख्यात्यर्थमिति ॥ ५१ ॥

प्रवृत्तिदोषसम्बद्धः प्रेत्यभावः प्रपञ्चितः।
फलं दुःखं विमुक्तिश्च तदुपायश्च कीर्त्तिताः ॥

इति—औद्द्योतकरे न्यायसूत्रवार्त्तिके चतुर्थाध्यायस्य द्वितीयमाह्निकम् ॥ चतुर्थोऽध्यायः समाप्तः ॥

## न्यायवार्त्तिकतात्पर्यटीका

अवतार्य विगृह्य जल्पवितण्डाभ्यां तत्त्वकथनं करोति विद्यापरिपालनाय। मा भूदीश्वराणां मतिविभ्रमेण तच्चरितमनुवर्तिनीनां प्रजानां धर्मविप्लव इति। इदमपि प्रयोजनं जल्पवितण्डयोः। न तु लाभख्यात्यादि दृष्टम्। न हि परहितप्रवृत्तः परमकारुणिको मुनिर्दृष्टार्थं परपांशुलोपायमुपदिशतीति।

शङ्कावार्त्तिकम्—(१)व्यापकत्वादन्तःकरणस्येति। अस्य वक्ष्यमाणोऽभिसंधिः। निराकरोति—नोक्तोत्तरत्वात्। सांख्यं दूषयद्भिरित्यर्थः। शङ्किता स्वाभिप्रायमुद्घाटयति—स्वाङ्गगतीक्षणेति। यावद्धस्तावच्छिन्ने आत्मप्रदेशे प्रयत्नो न जायते न तावत्तत्र कर्म, न च तत्रात्ममनःसन्निकर्षं विना प्रयत्नः। न च मनस इन्द्रियसंयोगं विनेक्षणम्। न चाणुना मनसा इन्द्रियेण हस्तेन चापर्यायेण (२)संभवः। तस्माद्व्यापकं मन इति शङ्कार्थः। निराकरोति—न शरीरात्ममनःसंयोगयौगपद्यात् प्रयत्नदर्शनयोर्युगपदुत्पत्तेः। तत्रात्मशरीरसंबन्धात् स्वाङ्गगतिरिति। पाणिचालनेच्छापेक्षेणात्ममनःसंयोगेन पाणिं चालयामीत्येवमाकारः प्रयत्नो जायते, तत्र प्रयत्नवदात्ममनःसंयोगात्पाणौ क्रिया जायते। यद्यप्यात्मनः सर्वाङ्गे संयोगो न विशिष्यते तथाऽपीच्छाविशेषादुत्पन्नः प्रयत्नविशेषः पाणावेव कर्म करोति, नान्यत्र। प्रयत्नवदात्मसंयोगाच्चक्षुषः प्रेरणम्। यद्यपि चानयोः प्रयत्नयोर्न युगपदुत्पादः, तथाऽपि तदत्यन्तसौक्ष्म्यात्कालभेदो न लक्ष्यते। नन्वेकस्मिन्नात्मप्रदेशे वर्त्तमानः संयोगो वा प्रयत्नो वा कथं देशान्तरे असंयोगिन्यप्रयत्नवति कार्यमारभत इत्यत आह—न चात्मनः प्रदेशाः सन्तीति। परिशिष्टं वार्त्तिकं भाष्यव्याख्यया व्याख्यातम् ॥ ३८-५१ ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्त्तिकतात्पर्यटीकायां चतुर्थोऽध्यायः समाप्तः।

---

(१) 'व्यापकत्वा'दितीदं इन्द्रसूचीयं वार्त्तिकम् (१०९० पृ०)। ततः प्रभृत्यध्यायसमाप्तिपर्यन्तं टीकाकृता भाष्यस्यैव व्याख्यातत्वादिदमन्ते व्याख्यातमिति प्रतिभाति। क-पुस्तकसम्पादकैरप्येवमुक्तम्।
(२) 'सम्बन्धसम्भवः' इति 'सम्बन्धः' इति वा पाठः समीचीनः।

# न्यायदर्शनम्

## अथ पञ्चमाध्यायस्याद्यमाह्निकम्

### न्यायभाष्यम्

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वमिति सङ्क्षेपेणोक्तं, ( १, २, २०सू ) तद्विस्तरेण विभज्यते—(१)ताः खल्विमा जातयः स्थापनाहेतौ प्रयुक्ते चतुर्विंशतिः प्रतिषेधहेतवः—

**साधर्म्य-वैधर्म्योत्कर्षापकर्ष-वर्ण्यावर्ण्य-विकल्प-साध्य-प्राप्त्य-प्राप्ति-प्रसङ्ग-प्रतिदृष्टान्तानुत्पत्ति-संशय-(२)प्रकरणाहेत्वर्थापत्त्य-विशेषोपपत्त्युपलब्ध्यनुप(३)लब्ध्यनित्यानित्यकार्यसमाः ॥ १ ॥**

### न्यायवार्त्तिकम्

जातेः संक्षेपेणोक्ताया विस्तरो वक्तव्य इतीदमारभ्यते साधर्म्यादिसूत्रम्—

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ।

### न्यायवार्त्तिकतात्पर्यटीका

अथ प्रमाणादयः पदार्था उद्दिष्टा (४)लक्षिताः परीक्षिताश्च(४*)तत्किमपरमवशिष्यते यदर्थं पञ्चमोऽध्याय आरभ्यत इत्यत आह—साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जाति-बहुत्वमिति भाष्यम् । तस्यार्थमाह वार्त्तिककारः—जातेः संक्षेपेणोक्ताया इत्यादि । यद्यपि जातिनिग्रहस्थानभेदा जातिनिग्रहस्थानसामान्यलक्षणानन्तरं प्रथमेऽध्याये युक्ता लक्षयितुं, तथाऽप्येषां बहुत्वात्प्रमेयपरीक्षायां विलम्बो मा भूद्, अपेक्षिता चासौ शिष्यैः ; संशयादिपरीक्षां तु विना प्रमेयपरीक्षा न शक्यते, तस्मान्मुनिः शिष्यानुरोधेन परीक्षां तावद्वर्त्तयांबभूव । जल्पवितण्डापरीक्षा चानन्तरं प्रवृत्ता, तदनन्तरमवशिष्टं जातिनिग्रहस्थानविशेषलक्षणं वर्त्तयति । तदङ्गं च जातिनिग्रहस्थाने इत्यवान्तरसंगतिरस्त्वीति सर्वमवदातम् ।

### वृत्तिः

तद्विद्यैः सह संवाद इत्यत्र त्रयीबाह्यैः सह संवादः कर्त्तव्य इति भ्रमो मा भूदिति तत्त्वज्ञानपरिपालनप्रकरणमारभते—( तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोह-संरक्षणार्थं कण्टकशाखावरणवत् ) ।

तत्त्वाध्यवसायस्य तत्त्वनिर्णयस्य संरक्षणं परोक्तदूषणास्कन्दनेनाप्रामाण्यशङ्काविघटनम्, तदर्थं जल्पवितण्डे पूर्वमुक्ते इति शेषः ॥ ४८ ॥

---

(१) 'तत्'—इति टि० । (२) 'प्रकरणाहेत्वर्था'—इति ज-ग-झा० । (३) '—लब्धि-नित्यानित्यकार्य्य'—इति ज-ग-ख-झा० । पाठोऽयं वार्त्तिकादिसम्मतोऽपि वक्ष्यमाणलक्षणक्रमविरोधात् फ-पुस्तकानुसारेण संशोध्य परिगृहीतः । (४) 'लक्षिताश्च'—इति ख० ।

## न्यायभाष्यम्

साधर्म्येण प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः। अविशेषं तत्र तत्रोदाहरिष्यामः। एवं वैधर्म्यसमप्रभृतयोऽपि निर्वक्तव्याः॥ १॥

## न्यायवार्त्तिकम्

तत्र जातिर्नाम स्थापनाहेतौ प्रयुक्ते यः प्रतिरोधासमर्थो हेतुः।

जातेः प्रयोगप्रतिषेधादसदुत्तरत्वाच्चारम्भो न युक्तः,(१)छलजातिनिग्रहस्थानानां स्ववाक्ये परिवर्जनमिति प्रतिषिद्धा जातिः, न च जातिः सदुत्तरमतश्च जातेः प्रयोगो न युक्तः? न, आरम्भप्रयोजनस्योक्तत्वात्, उक्तं जातेरारम्भप्रयोजनं स्वयं च छकरः प्रयोग इति। साधुसाधननिराकरणार्थं (२)च प्रयोगः—यदा तु वादी परस्य साधनं साध्विति मन्यते लाभपूजाख्याति-

## न्यायवार्त्तिकतात्पर्यटीका

साध-माः ( सू १ )॥ विशेषोपयोगि सामान्यलक्षणमाह—तत्र जातिर्नामेति। प्रतिषेधबुद्ध्या प्रयुक्त इति शेषः।

आह्निकारम्भमाक्षिपति—जातेः प्रयोगप्रतिषेधादिति। परिवर्जनं तु सामान्यज्ञानादपि भवन्न विशेषज्ञानमपेक्षत इति भावः। समाधत्ते—न आरम्भप्रयोजनस्योक्तत्वात्। एतदेव स्मारयति—स्वयं च सुकरः प्रयोग इति, प्राश्निकैः कतमा जातिरित्युक्ते स्वयं च छकरः प्रयोग इति। अथ वा सद्विद्याविद्विषा अधिक्षिप्ते तत्त्वे अह्नाय तन्निरासहेतावस्फुरति साक्षिणां पुरत एकान्तपराजयाद्वरं संदेहोऽप्यस्तु कथंचित्परपराजयो वेति बुद्ध्या पांशुभिरिवावकिरन् जातिं प्रयुङ्क्ते। तेन हि लोके तत्त्वमवस्थापितं भवति। अन्यथाऽसन्मार्गप्रवृत्तो लोकः स्यात्। न च नखचपेटादिभिर्विद्याविद्वेषिणो निराकरणे तदुत्थापितकुहेतुनिराकरणधीरस्ति लौकिकानाम्। तस्मान्न नखचपेटादय उपदेष्टव्याः शास्त्रकृतेत्यभिप्रायवानाह—साधुसाधननिराकरणार्थं चेति। अतत्त्वविषयत्वेन परमार्थतोऽसाध्वपि साधनमह्नाय दूषणस्याप्रतिभासनात्साध्वित्युक्तम्। लाभपूजाख्यातिकामश्चेत्यन्वाचये चकारः। प्रसिद्धं तावत्तत्त्वपरिपालनं प्रयोजनं, तस्मिन् सत्येतदप्यन्वाचीयत इत्यर्थः।

## वृत्तिः

ननु ताभ्यां किं कार्यमित्यत आह—( ताभ्यां विगृह्य कथनम् )।

अयमर्थः—त्रयीबाह्यैस्तद्दर्शनाभ्यासाहित(३)कुतर्कजालैरपरैर्वा यदि स्वपक्ष आक्षिप्यते तदा, ताभ्यां जल्पवितण्डाभ्याम्। सावधारणं चैतत्। त्रय्यन्तःपातिनामाक्षेपे तु वादजल्पवितण्डाभिर्यथेच्छं कथयेत् इति भावः।

वस्तुतस्तु मुमुक्षोर्न तादृशैः सह संवादो वीतरागत्वात्, न हि शास्त्रपरिपालनमपि तदुद्देश्यम्, न वा तदुपेक्षयैव शास्त्रं गच्छति। किं तु शास्त्रमभ्यस्येतेति तत्त्वमिति ॥४९॥

समाप्तं तत्त्वज्ञानपरिपालनप्रकरणम्। समाप्तं च चतुर्थाध्यायस्य द्वितीयमाह्निकम्।

इति श्रीन्यायपञ्चाननविश्वनाथभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ
चतुर्थाध्यायवृत्तिः समाप्ता।

(१) १, १, १६ भाष्यं द्रष्टव्यम्। (२) 'वा' इति—क-ख०। (३) 'कुज्ञानैरपरैः'—इति भ०।

## न्यायवार्त्तिकम्

कामश्च भवति तदा जातिं प्रयुङ्क्ते ; कदाचिदयं जात्युत्तरेणाकुलीकृतो नोत्तरं प्रतिपद्येत, उत्तराप्रतिपत्त्या च निगृह्यते । अनभिधाने (च)जातेरेकान्तजयः परस्येत्यैकान्तिकात् पराजयाद्वरमस्तु सन्देह इति युक्तो जातेः प्रयोगः ।

असाधुसाधननिराकरणार्थमित्यन्ये—एके तु जातेः प्रयोगं मन्यन्ते असाधुसाधननिराकरणार्थम्, एवं चाहुः—असाधौ तु साधने प्रयुक्ते य आसां प्रयोगः सोऽनभिज्ञतया साधनदोषस्य, तद्दोषप्रदर्शनार्थं वा प्रसङ्गव्याजेनेति । एतत्तु न युक्तं प्रयोजनाभावात्—यदि तावदसाध्वेतत् साधनमिति प्रतिपद्यते य एवास्य दोषो बुद्धः स एव वक्तव्यो न जात्यभिधानेन प्रयोजनमस्ति । अथ न बुध्यते, किमिति जातिं(१)प्रयुङ्क्ते ? न ह्यनवबुध्यमानः शक्नोति प्रयोक्तुम् । (२)अथानवबुध्यमानोऽपि प्रयुङ्क्ते यत्किञ्चिद् ब्रूयात् नियमो न स्यात् । एतेनानैकान्तिके पञ्चानां प्रयोगः प्रत्युक्तः—य आहुरनैकान्तिके साधने परेण प्रयुक्ते पञ्च जातयः प्रयोक्तव्या इति, तदप्यनेनैव प्रत्युक्तम् । कथमिति ? बुद्ध्वा तदेव वक्तव्यमबुद्ध्वा अज्ञानमिति । एतेन युक्तायुक्तयोः पूर्वापरभावः प्रत्युक्तः । अयुक्ते साधने अयुक्तमुत्तरं युक्ते युक्तमिति । युक्तं च नाम ( यत् ) प्रतिज्ञादिदोषोद्भावनं नासौ जातिः, उत्तरमेव तदिति जातिलक्षणापरिज्ञानादयुक्तमेतदपीति ।

## न्यायवार्त्तिकतात्पर्यटीका

मतान्तरं निराकर्त्तुमुपन्यस्यति—असाधुसाधनेति । तत्त्वविषयमपि साधनमसाध्विति विदितवान् वादकाले चाप्रतिभयाऽसाधुत्वोपपादनं न स्फुरति । असाध्वेतदिति स्मरन्नेवासौ जातिं प्रयुङ्क्ते, तदिदमुक्तम्—अनभिज्ञतया साधनदोषस्येति । अथ वा जानन्नपि जातिं प्रयुङ्क्ते—तस्य साधनस्य दोषप्रदर्शनार्थं प्रसङ्गव्याजेन मदीयं तावद्दूषणाभासम् एवं त्वदीयमपि साधनाभासं यदि त्वत्साधनं सम्यक् तदा मदीयमपि सम्यक् स्यादिति प्रसङ्गः, तद्व्याजेन साधनं दूषयतीत्यर्थः । तदेतत्परमतं दूषयति—एतत्त्विति । जात्यभिधाने हि पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगश्चेति द्वयं निग्रहस्थानं तस्माद् बुद्ध्वेत्युक्तम् । अथ न बुध्यते तत् किमिति जातिं प्रयुञ्जीतेति । यो हि सभादर्शनमात्रात्पूर्वाभ्यस्तमपि विस्मरति तस्य क्वैव कथा अननुसंहितपूर्वजात्युद्भावनस्येति भावः । एतेन बुद्ध्वाऽबुद्ध्वा वेति विकल्पासंभवेन अनैकान्तिके साधने प्रयुक्ते पञ्चानां साधर्म्यसम-वैधर्म्यसम-विकल्पसम-साध्यसम-संशयसमानां जातीनां प्रयोगः प्रत्युक्तः । पूर्वापरभाव इति । पूर्वस्य युक्तस्य साधनस्य युक्तमुत्तरम् । अपरस्यायुक्तस्य साधनस्यायुक्तमुत्तरमिति ।

ननु साधर्म्यसमादीत्युच्यते, न च वस्तुतः साधर्म्यसमादीनां साम्यमस्ति स्थापनया,

(१) 'प्रयुञ्जीत'—इति टीकासम्मतः पाठः ।

(२) 'अथाबुध्य'—इति ख० ।

## न्यायवार्त्तिकम्

समीकरणार्थं प्रयोगः समः, साधर्म्यमेव समं वैधर्म्यमेव सममिति समार्थः समीकरणार्थः प्रयोगो द्रष्टव्यः। समीक्रियतां परपक्षो मा वा कारि अयं तु समीकरणार्थं प्रवर्तते यथा लोके कुटुम्बार्थं घटत इति। विशेषहेत्वभावो वा समार्थः, न भवता विशेषहेतुः कश्चिदपदिश्यत इति। पुनमर्थमुररीकृत्य प्रवर्तते यथाभूतं भवतः साधनं तथाभूतं ममापीति। न च सर्वापदेशव्याप्तिरव्यापकत्वात्। न हि सर्वापदेशे सर्वा जातयः प्रवर्तन्ते, न हि वैधर्म्येण स्थापनायामुत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसमाः प्रयोक्तुं शक्यन्त इति। न च वादिप्रतिवादिनोस्तुल्यता समार्थः, जातेरसदुत्तरत्वात्---नियमेनैव जातिवाद्यसद्वादी भवति, वादिनां तु सदसद्वादित्वे अनियम इति ॥१॥

## न्यायवार्त्तिकतात्पर्यटीका

तथा सत्यजातित्वप्रसङ्गादित्यत आह—समीकरणार्थं प्रयोग इति। आभिमानिकसाम्यं न वास्तवमित्यर्थः। साधर्म्यमेव समं यस्मिन् प्रयोग इति शेषः। तदिदमुक्तं समार्थः साधर्म्यसमार्थः, समीकरणार्थः प्रयोगो द्रष्टव्य इति। एवं वैधर्म्यमेव सममित्यत्र विग्रहे स्वरूपेण साम्यमुक्त्वा विशेषहेत्वभावेन साम्यमाह—विशेषहेत्वभावो वेति। ये त्वाहुः सर्वेष्वेवापदेशेषु सर्वासामेव जातीनां प्रयोग इति, तान् प्रत्याह—सर्वापदेशव्याप्तिः सर्वजातिप्रयोगस्य। अपदेशो हेतुवचनम्। ये पुनः साधर्म्यसम इत्यादौ समशब्दस्तस्य साधनवादिजातिवादिनोस्तुल्यार्थत्वाद् यादृशो वादी तादृशः प्रतिवाद्यपि साधर्म्येण द्वौ समाविति मन्यन्ते, तान् प्रत्याह—न च वादिप्रतिवादिनोस्तुल्यता समार्थः, प्रतिवादी जातिवादी विवक्षितः ॥ १ ॥

## वृत्तिः

नत्वा शङ्करचरणं शरणं दीनस्य दुर्गमे तरणम्।
सम्प्रति निरूपयामः पञ्चममध्यायमतिगहनम् ॥

अथ जातिनिग्रहस्थानयोरुद्दिष्टयोर्लक्षितयोर्बहुत्वं तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वमित्यनेन सूचितम्, बलवच्छिष्यजिज्ञासानुसारिप्रमाणादिपरीक्षयाऽन्तरितं सम्प्रत्यवसरतः प्रपञ्चनीयम्। तत्र जातिपरीक्षासहितजातिनिग्रहस्थानविशेषलक्षणमध्यायार्थः। जातिपरीक्षासहितजातिविशेषलक्षणं प्रथमाह्निकार्थः। सप्तदश चात्र प्रकरणानि, तत्रादौ सत्प्रतिपक्षदेशनाभासप्रकरणम्, अन्यानि च यथास्थानं वक्ष्यन्ते।

तत्र च विशेषलक्षणार्थं जातिं विभजते—( साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्प-साध्यप्राप्त्यप्राप्ति-प्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशय-प्रकरणाहेत्वर्थापत्त्य-विशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः )।

अत्र च साधर्म्यादीनां कार्यान्तानां द्वन्द्वे तैः समा इत्यर्थात् साधर्म्यसमादयश्चतुर्विंशतिर्जातय इत्यर्थः। अत्र च जातेर्विशेष्यत्वात् स्त्रीलिङ्गं समाशब्दं मन्यन्ते। भाष्य-

### न्यायभाष्यम्

लक्षणं तु—

## साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥ २ ॥

साधर्म्येणोपसंहारे साध्यधर्मविपर्ययोपपत्तेः साधर्म्येणैव प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः प्रतिषेधः। निदर्शनम् (१)क्रियावानात्मा, द्रव्यस्य क्रियाहेतुगुणयोगात्। द्रव्यं लोष्टः क्रियाहेतुगुणयुक्तः क्रियावान्, तथा चात्मा, तस्मात्क्रियावानिति। एवमुपसंहृते परः साधर्म्येणैव प्रत्यवतिष्ठते - निष्क्रिय आत्मा विभुनो द्रव्यस्य निष्क्रियत्वाद्, विभु(२)चाकाशं निष्क्रियं(३)च, तथा चात्मा, तस्मा-

### न्यायवार्त्तिकम्

साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ। प्रतिषेधाविति। साधर्म्येणोपसंहारे तद्विपरीतसाधर्म्येण प्रत्यवस्थानं, वैधर्म्येणोपसंहारे(४)तद्विपरीतेन

### न्यायवार्त्तिकतात्पर्यटीका

साध—मौ ( सू २ )॥ प्रतिषेधाविति सूत्रपूरणेन पुंलिङ्गं समर्थयते, अन्यथा जातेः प्रकृतत्वात्सामानाधिकरण्येन साधर्म्यवैधर्म्यसमे इति स्यात्। तद्धर्मविपर्ययोपपत्तेः कृते साध्यविपर्ययोपपत्त्यर्थमित्यर्थः। भाष्यं—निदर्शनं क्रियावानात्मा द्रव्यस्य क्रियाहेतुगुणयोगादिति। अस्ति खल्वात्मनः क्रियाहेतुर्गुणः प्रयत्नोऽदृष्टं वा, लोष्टस्यापि क्रियाहेतुर्गुणः स्पर्शवद्वेगवद्द्रव्यसंयोग इति। एवमुपसंहृते परः साधर्म्येणैव प्रत्यवतिष्ठते निष्क्रिय आत्मा विभुत्वादाकाशवदिति। अत्र च साधनमाभासमुत्तरं च न जातिः। विभुत्वस्याक्रियत्वेन

### वृत्तिः

वार्त्तिकादौ समशब्दः। (५)अग्रिमसूत्रेषु तु समशब्दो निर्विवाद एव। तत्र जातिशब्दस्य स्त्रीलिङ्गतया यद्यपि नान्वयस्तथाऽपि प्रतिषेधो विशेष्य इति भाष्यादयः।

वयं तु तद्विकल्पादिति सूत्रस्थविकल्पस्यैव विशेष्यत्वं, विविधः कल्पः प्रकारो विकल्पः। तथा चैते साधर्म्यसमादयो जातिविकल्पाः। एवमग्रिमसूत्रेष्वपि। इत्थं च जातेर्विशेष्यत्वे साधर्म्यसमेत्यपीति ब्रूमः।

समीकरणार्थं प्रयोगः सम इति वार्त्तिकम्। यद्यपि नैतावता समीकरणं, तथाऽपि समीकरणोद्देश्यकत्वमस्त्येव।

अथवा साधर्म्यमेव समं यत्र स साधर्म्यसमः। एकत्र व्याप्तेराधिक्येऽपि साधर्म्यं सममेवेति भावः॥ १॥

(१) 'क्रियैव वात्मा'—इति टि०। (२-३) 'च' द्वयं नास्ति टि०। (४) 'तद्विपरीतसाध'—इति ख०। (५) 'अग्रिमसूत्रे'—इति ख०।

## न्यायभाष्यम्

निष्क्रिय इति। न चास्ति विशेषहेतुः क्रियावत्साधर्म्यात् क्रियावता भवितव्यं, न पुनरक्रियसाधर्म्याद् निष्क्रियेणेति। विशेषहेत्वभावात्साधर्म्यसमः(१)प्रतिषेधो भवति।

अथ वैधर्म्यसमः—क्रियाहेतुगुणयुक्तो लोष्टः परिच्छिन्नो दृष्टो न च तथाऽऽत्मा, तस्मान्न लोष्टवत् क्रियावानिति। न चास्ति विशेषहेतुः (२)क्रियावत्साधर्म्यात् क्रियावता भवितव्यं न पुनः क्रियावद्वैधर्म्यादक्रियेणेति, विशेषहेत्वभावाद्वैधर्म्यसमः।

वैधर्म्येण (३)चोपसंहारः—निष्क्रिय आत्मा विभुत्वात्, क्रियावद् द्रव्यमविभु दृष्टं यथा लोष्टः, न च तथाऽऽत्मा, (४)तस्मान्निष्क्रिय इति। वैधर्म्येण प्रत्यवस्थानम्—निष्क्रियं द्रव्यमाकाशं क्रियाहेतुगुणरहितं दृष्टम्, न(५) च तथाऽऽत्मा, तस्मान्न निष्क्रिय इति। न चास्ति विशेषहेतुः क्रियावद्वैधर्म्यान्निष्क्रियेण भवितव्यं न पुनरक्रियवैधर्म्यात् क्रियावतेति विशेषहेत्वभावाद्वैधर्म्यसमः।

## न्यायवार्त्तिकम्

साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः। यथा—अनित्यः शब्द उत्पत्तिधर्मकत्वात्। उत्पत्तिधर्मकं कुम्भाद्यनित्यं दृष्टम्। यद्यनित्यघटसाधर्म्यादनित्यः, नित्येनाप्याकाशेन साधर्म्यममूर्तत्वमस्तीति नित्यः प्राप्तः इति। एतस्मिन्नेव हेतावाकाशवैधर्म्यादित्युक्ते यदि नित्याकाशवैधर्म्यादनित्यः, नित्यसाधर्म्यमप्याकाशेनामूर्तत्वम्(६)अस्त्यतो नित्यः प्राप्तः। अथ मन्यसे सत्यस्मिन् साधर्म्ये न नित्यः? न तर्हि वक्तव्यमनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याच्चानित्य इति। सेयं जातिर्विशेषहेत्वभावं दर्शयति। विशेषहेत्वभावाच्चानैकान्तिकदेशनाभासा इति। एवं वैधर्म्येणोक्ते हेतौ तद्विपरीतवैधर्म्येण प्रत्यवस्थानं साधर्म्येणोक्ते हेतौ तद्विपरीतवैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः। यथा—तस्मिन्नेव हेतावाकाशवैधर्म्यादनित्य इत्युक्ते यदि नित्याकाशवैधर्म्यादनित्यः अनित्येनापि घटेनास्य वैधर्म्यममूर्तत्वमतो नित्यः प्राप्तः। तस्मिन्नेव हेतौ घटसाधर्म्यादित्युक्ते यद्यनित्यघटसाधर्म्यादनित्यः वैधर्म्यमप्यस्यास्त्यमूर्तत्वमतो नित्यः प्राप्तः।

## न्यायवार्त्तिकतात्पर्यटीका

स्वभावतः प्रतिबन्धात्। तेनैतदुपेक्ष्य वार्त्तिककार उदाहरणान्तरमाह—यथा अनित्यः शब्द उत्पत्तिधर्मकत्वात्। इदं तु सम्यक् साधनमुत्तरं त्वाभासमिति। साधर्म्योक्ते साधर्म्यसमः, वैधर्म्योक्ते वैधर्म्यसमः। एवं साधर्म्योक्ते वैधर्म्यसमः वैधर्म्योक्ते साधर्म्यसम इति ॥ २ ॥

(१) 'अत्र प्रतिषेधः'—इति टि०। (२) 'क्रियावत्साधर्म्येण'—इति टि०। (३) 'चोपसंहारे'—इति ज-ग-ल-मा०। (४) 'तस्मात् न लोष्टवत् क्रियावानिति'—इति टि०। (५) 'च'—इति नास्ति ज-ल-मा०। (६) 'अस्तीति'—इति ख०।

## न्यायभाष्यम्

(१)अथ साधर्म्यसमः—(१*)क्रियावान् लोष्टः क्रियाहेतुगुणयुक्तो दृष्टः, तथा चाऽऽत्मा, तस्मात् क्रियावानिति। न चास्ति विशेषहेतुः क्रियावद्वैधर्म्यान्निष्क्रियो न पुनः क्रियावत्साधर्म्यात् क्रियावानिति विशेषहेत्वभावात्साधर्म्यसमः ॥ २ ॥

अनयोरुत्तरम्—

### गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ॥ ३ ॥

(२)साधर्म्यमात्रेण वैधर्म्यमात्रेण च(२*)साध्यसाधने प्रतिज्ञायमाने स्यादव्यवस्था,

## न्यायवार्त्तिकम्

अथ मन्यसे (३)सत्येतस्मिन् वैधर्म्यं न नित्यः(४)न तर्ह्ययमेकान्तोऽनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याच्चानित्य इति। सोऽयं विशेषहेत्वभावः ॥ २ ॥

अनयोरुत्तरम्—

(५)गोत्वाद् गोसिद्धिवत् तत्सिद्धिः। गवाश्वसाधर्म्ये सत्त्वादौ समाने, वैधर्म्ये चैकशफत्वादौ, साधर्म्यात् सत्त्वाद्गौरश्वो न भवति ; (६)न च वैधर्म्यादेकशफत्वादेरगौर्गौर्भवति।

## न्यायवार्त्तिकतात्पर्यटीका

कथं पुनरियं जातिः ? अथ प्रकरणसमोद्भावनं सम्यगुत्तरमेव कस्मान्न भवतीत्यत आह—अनयोश्च साधर्म्यवैधर्म्यसमयोः उत्तरम्—

गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ( सू ३ ) ॥ भवेदेवं यद्यन्वयव्यतिरेकमात्राद्धेतोर्गमकत्वं स्यात्, ततो विशेषग्रहणाभावात्प्रकरणसमत्वं भवेत्। न त्वेवं भवति, स्वाभाविकसंबन्धभाजो

## वृत्तिः

साधर्म्यवैधर्म्यसमौ लक्षयति—( साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ )।

'उपसंहारे' साध्यस्योपसंहरणे वादिना कृते, 'तद्धर्मस्य' साध्यरूपधर्मस्य यो विपर्ययो व्यतिरेकस्तस्य साधर्म्यवैधर्म्याभ्यां केवलाभ्यां व्याप्त्यनपेक्षाभ्यां यदुपपादनं ततो हेतोः साधर्म्यवैधर्म्यसमौ उच्येते।

तदयमर्थः—वादिना अन्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिनः साधर्म्यमात्रप्रवृत्तहेतुनां तदभावापादनं साधर्म्यसमा, वैधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनं वैधर्म्यसमा।

---

(१) अयमंशः—ज-पु० नास्ति। (२) 'साधर्म्यमात्रे वैधर्म्यमात्रे च'—इति क०। यद्यपि क-पुस्तकी अस्यैव पाठस्य युक्तत्वमवधारितम्, तथापि अस्य आदर्शेष्वदर्शनात् तृतीयान्तपाठस्यापि कथञ्चिद् गतिसम्भवाच्च स एव परिगृहीतः। (३) 'सत्यप्यस्मिन्'—इति क-खधृतपाठान्तरम्। (४) 'प्राप्तः'—इत्यधिकम् इति क-खधृतपाठान्तरम्। (५) 'गोत्वाद्गोसिद्धिवत्'—इति ख-पुस्तकी। (६) 'न वैधर्म्यात्'—इति ख०।

## न्यायभाष्यम्

सा तु धर्मविशेषे नोपपद्यते, गोसाधर्म्याद् गोत्वाज्जातिविशेषाद्गौः सिध्यति, न तु सास्नादिसम्बन्धात्। अश्वादिवैधर्म्याद्गोत्वादेव(१)गौः सिध्यति, न गुणादिभेदात्। तच्चैतत् (२)कृतव्याख्यानमवयवप्रकरणे। प्रमाणानामभिसम्बन्धाच्चैकार्थकारित्वं समानं वाक्ये इति। हेत्वाभासाश्रया खल्वियमव्यवस्थेति ॥ ३ ॥

## न्यायवार्त्तिकम्

किं कारणम्? एकस्यानन्वयादेकस्य चाव्यावृत्तेः। यदन्वयव्यतिरेकि साधर्म्यं तस्माद्धर्मव्यवस्था, गोत्वं च तथा, तस्माद्गोत्वादेव गौः सिध्यति, तथेहाप्यमूर्तत्वमुभयव्यतिरेकि उभयान्वयि च, तस्मान्नित्यत्वमनित्यत्वं च(३) न शक्यं प्रतिपत्तुम्, अपि त्वन्वयव्यतिरेकसम्पन्नादुत्पत्तिधर्मकत्वा(४)दनित्य इति। अतो यद् ब्रवीषि विशेषहेत्वभावादिति अयं(५)विशेषहेतुः इति ॥३॥

इति सत्प्रतिपक्षदेशनाभासप्रकरणम्।

## न्यायवार्त्तिकतात्पर्यटीका

गमकत्वात्। स्वभावसंबद्धं च कृतकत्वमनित्यत्वेन, न त्वमूर्त्तत्वस्य नित्यत्वेन स्वाभाविकः संबन्धः, बुद्धिकर्मादौ व्यभिचारात्। तस्माद् गृह्यमाणविशेषत्वान्न प्रकरणसमः। यथा गोत्वाद्गौः सिध्यति स्वाभाविकप्रतिबन्धात् न तु सास्नादिसंबन्धादिति भाष्यम्। सास्नादीत्यतद्गुणसंविज्ञानो बहुव्रीहिः। तेन व्यभिचारिणः शृङ्गादयो गृह्यन्ते।

वार्त्तिकम्—एकस्यानन्वयादेकस्य (६)अव्यावृत्तेः। एकस्य सत्त्वस्य गवाऽनन्वयाद्, अश्वादौ व्यभिचारादनन्वयः। एकस्यैकशफत्वादेर्वैधर्म्यस्य गोष्वेवाव्यावृत्तेः महिषादावपि व्यावृत्तेरित्यर्थः ॥ ३ ॥

## वृत्तिः

तत्र साधर्म्यसमा यथा—शब्दोऽनित्यः कृतकत्वाद् घटवत्, व्यतिरेकेण वा व्योमवदित्युपसंहृते; नैतदेवम्, यद्यनित्यघटसाधर्म्यात् नित्याऽऽकाशवैधर्म्याद्वा अनित्यः स्यात्, नित्याकाशसाधर्म्यादमूर्त्तत्वान्नित्यः स्यात्, विशेषो वा वक्तव्यः।

वैधर्म्यसमा यथा—शब्दोऽनित्यः कृतकत्वाद् घटवत् आकाशवद्वेति स्थापनायाम्, अनित्यघटवैधर्म्यादमूर्त्तत्वान्नित्यः स्यात्, विशेषो वा वक्तव्य इति।

अत्र (७)साधर्म्यमात्रं वैधर्म्यमात्रं(७*) वा गमकतौपयिकमित्यभिमानात्, सत्प्रतिपक्षदेशनाभासे चेमे। अनैकान्तिकदेशनाभासेति वार्त्तिके त्वनैकान्तिकपदं योगात् सत्प्रतिपक्षपरम्, एकान्ततः साध्यसाधकत्वाभावात् ॥ २ ॥

---

(१) 'न गौः'—इति ज-ग०, 'च गौः'—इति भा०। (२) 'कृतव्यवस्थान'मिति—ज०। (३) 'नित्यमनित्यं च'—इति क-खधृतपाठान्तरम्। (४) 'उत्पत्तिमत्त्वा'—इति क-खधृतपाठान्तरम्। (५) 'विशेष इति'—इति ख०। (६) अत्र वार्त्तिकगत'च'-शब्दस्त्यक्तः। (७) 'साधर्म्यत्वमात्रं वैधर्म्यत्वमात्रं'—इति भ०।

न्यायभाष्यम्

## साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्ष-वर्ण्यावर्ण्य-विकल्प-साध्यसमाः ॥ ४ ॥

दृष्टान्तधर्मं साध्ये(१)समासञ्जयत उत्कर्षसमः। यदि क्रियाहेतुगुणयोगाल्लोष्टवत् (२)क्रियावानात्मा, लोष्टवदेव स्पर्शवानपि प्राप्नोति। अथ न स्पर्शवान्, लोष्टवत् क्रियावानपि न प्राप्नोति, विपर्यये वा विशेषो वक्तव्य इति।

(३)साध्ये धर्माभावं दृष्टान्तात् प्रसञ्जयतोऽ(४)पकर्षसमः। लोष्टः खलु क्रियावान-

न्यायवार्त्तिकम्

साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः। अविद्यमानधर्माध्यारोप उत्कर्षः, विद्यमानधर्मापचयोऽपकर्षः, वर्ण्यः साध्यः, अवर्ण्यः असाध्यः, विकल्पो विशेषः, एतेषां धर्माणामुद्भावनार्थाः प्रयोगा उत्कर्षसमाद्या जातयः। साध्यसाधनधर्मयो-स्तुल्यतया प्रत्यवस्थानं साध्यसमेत्युच्यते। यथा—तस्मिन्नेव हेतौ घटसाधर्म्या(५)दित्युक्ते यदि

न्यायवार्त्तिकतात्पर्यटीका

साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्य-समाः (सू ४)॥ उभयसाध्यत्वात्साध्यसमः। पञ्चानां जातीनां साध्यदृष्टान्तयोर्धर्म-विकल्पादित्यनेन पञ्चैव लक्षणानि सूचितानि। तानि च जातिसमाख्याभिर्मिथो विशिष्यन्ते। अनित्यः शब्दः कृतकत्वाद् घटवदित्युक्ते यदैवं प्रतिवादी प्रसङ्गेन प्रत्यवतिष्ठते—यदि घटसाधर्म्यात् कृतकत्वादनित्यः शब्दः, तस्मादेव घटसाधर्म्याद्रूपादिमताऽपि शब्देन भवितव्यम्। न चेद्रूपादि-मान्मा भूत्तथाऽनित्योऽपि। न चास्ति विशेषहेतुः कृतकत्वादनित्येन भवितव्यं न पुना-

वृत्तिः

अनयोरसदुत्तरत्वे बीजमाह—( गोत्वाद् गोसिद्धिवत्तत्सिद्धिः )।

गोत्वात् गोसिद्धिर्गोव्यवहार इति सम्प्रदायः।

वयं तु गोत्वाद्गवेतरासमवेतत्वे सति गोसमवेतात् सास्नादितः; एतेन व्याप्तिपक्ष-धर्मते दर्शिते। गोर्गोत्वस्य तादात्म्येन गोरेव वा सिद्धि(६)र्यथा, तथैव कृतकत्वादपि व्याप्तिपक्षधर्मतासहितादनित्यत्वसिद्धिः, न तु व्याप्तिपक्षधर्मतारहितात् साधर्म्यादिमात्रात्, तथा सति अदूषकसाधर्म्यात् प्रमेयत्वादितस्त्वद्वचनमप्यदूषकं स्यादित्ययं विशेषः ॥ ३ ॥

इति सत्प्रतिपक्षदेशनाभासप्रकरणम् ॥

(१) 'समासजन्'—इति ल-टि० समासञ्जत—इति ज-ग०, 'समासजतः'—इति भा०। (२) 'क्रियावानेवात्मा'—इति ज०। (३) 'साधर्म्यं'—इति वि०। (४) 'प्रसजतः'—इति ज-ख-भा०, 'प्रसञ्जतः'—इति ग०। 'प्रसजता'—इति टि०। (५)—'दिति कृते' इति—ख०। (६)'र्यथा'—इति भ०।

## न्यायभाष्यम्

विभुर्दृष्टः, काममात्माऽपि क्रियावानविभुरस्तु, विपर्यये वा विशेषो वक्तव्य इति।

स्थापनीयो वर्ण्यो विपर्ययादवर्ण्यः। तावेतौ साध्यदृष्टान्तधर्मौ (१)विपर्यस्यतो वर्ण्यावर्ण्यसमौ (२)भवतः।

साधनधर्मयुक्ते दृष्टान्ते धर्मान्तरविकल्पात्साध्यधर्मविकल्पं (३)प्रसञ्जयतो विकल्पसमः। क्रियाहेतुगुणयुक्तं किञ्चिद् गुरु यथा लोष्टः, किंचिल्लघु यथा वायुः, एवं क्रियाहेतुगुणयुक्तं किञ्चित्क्रियावत्स्यात् यथा लोष्टः, किञ्चिदक्रियं यथाऽऽत्मा, विशेषो वा वाच्य इति।

हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्यः, तं दृष्टान्ते (४)प्रसञ्जयतः साध्यसमः। यदि यथा लोष्टस्तथाऽऽत्मा, प्राप्तस्तर्हि यथाऽऽत्मा तथा लोष्ट इति। साध्यश्चायमात्मा क्रियावानिति कामं लोष्टोऽपि साध्यः। अथ नैवम् ,(५)न तर्हि यथा लोष्टः तथाऽऽत्मा ॥४॥

## न्यायवार्त्तिकम्

यथा घटस्तथा शब्दस्तदा घटो रूपादिमान् शब्दोऽप्येवं प्रसक्त इत्युत्कर्षसमः। शब्दो(६)वाऽरूप इति घटोऽप्येवं प्रसक्त इत्यपकर्षसमः। घटोऽनित्य इत्यवर्ण्यः शब्दोऽप्येवं, शब्दो वा वर्ण्य इति घटोऽप्येवमिति वर्ण्यावर्ण्यसमौ। सत्येतस्मिन् उत्पत्तिधर्मकत्वे विभागजः शब्दो न विभागजो घटः विभागजाविभागज(७)विकल्पवत् च(८)*नित्यानित्यविकल्प इति विकल्पसमः। घटो वा अनित्य इत्यत्र को हेतुरयमपि साध्यवज्ज्ञापयितव्य इति साध्यवत् प्रत्यवस्थानात् साध्यसमः ॥४॥

## न्यायवार्त्तिकतात्पर्यटीका

रूपादिमतेति। सोऽयं साध्यदृष्टान्तयोर्धर्मविकल्पाद्वैचित्र्याद् यत्रोत्कर्षं प्रसञ्जयति स उत्कर्षसमः। एवं तदेव साध्यदृष्टान्तयोर्धर्मवैचित्र्यमपकर्षेण विशिष्यमाणमपकर्षसमस्य लक्षणम्। साध्यदृष्टान्तयोर्धर्मवैचित्र्यात्स्वरूपेण साध्यासाधनत्वप्रसङ्गजनने वर्ण्यावर्ण्यसमौ। साध्यदृष्टान्तधर्मविकल्पहेतुकवर्ण्यत्वनिबन्धनं तु हेत्वाद्यवयवयोगित्वप्रसञ्जनं साध्यसमः। अत एवोभयसाध्यत्वादिति साध्यत्वं हेतुमाह साध्यसमस्य सूत्रकारः। भाष्यकारोऽपि हेत्वाद्यवयवसामर्थ्ययोगीति ब्रुवाणस्तत्प्रसञ्जनं साध्यसमं मन्यते। तदेतद्वार्त्तिककृदाह—घटो वाऽनित्य इत्यत्र को हेतुरिति। न च यदि समाख्याभेदेन विशिष्यमाणं लक्षणपदं भिन्नार्थं तर्हि समाख्यापदान्येव लक्षणानि सन्तु, कृतं लक्षणपदेनेति वाच्यम्; लक्षणपदसहितानामेव तेषां लक्ष्यभेदप्रतिपादकत्वादिति ॥ ४ ॥

(१) 'विपर्यसतो' इति—ज०। (२) 'प्रतिषेधौ भवतः'—इति टि०। (३-४) 'प्रसजतः'—इति ज-ख-भा-टि०। (५) 'न'—इति नास्ति ग०। (६) 'वा' इति—ख-पु० नास्ति। (७) —'विकल्पे च' इति—ख०। (८) 'विकल्पे च'—पा० ६ पु० इति क-पुस्तकसम्पादकाः।

## वृत्तिः

क्रमप्राप्तं जातिषट्कं निरूपयति—( साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ) ।

उत्कर्षेण सम उत्कर्षसमः, एवमपकर्षसमोऽपि । वर्ण्यावर्ण्यसाध्येति भावप्रधानो निर्देशः । वर्ण्यत्वादिना समो वर्ण्यसमादिः । अविद्यमानधर्मारोप उत्कर्षः, विद्यमानधर्मापचयः अपकर्षः । वर्ण्यत्वं वर्णनीयत्वम्, तच्च सन्दिग्धसाध्यकत्वादि ; तदभावोऽवर्ण्यत्वम् । विकल्पो (१)वैविध्यम्, साध्यत्वं पञ्चावयवसाधनीयत्वम् । साध्यदृष्टान्तयोर्धर्मविकल्पादिति पञ्चानामुत्थानबीजम्, उभयसाध्यत्वादिति षष्ठस्य ।

तदयमर्थः—साध्यते अत्रेति साध्यं पक्षः, तथा च साध्यदृष्टान्तयोरित्यस्य(२)पक्षदृष्टान्तान्यतरस्मिन्नित्यर्थः । धर्मविकल्पो धर्मस्य वैचित्र्यं तच्च क्वचित् सत्त्वं क्वचिदसत्त्वम् । प्रकृते साध्यसाधनान्यतररूपस्य धर्मस्य विकल्पात् सत्त्वाद् योऽविद्यमानधर्मारोपः स उत्कर्षसमः । व्याप्तिमपुरस्कृत्य पक्षदृष्टान्तान्यतरस्मिन् साध्यसाधनान्यतरेणाऽविद्यमानधर्मप्रसञ्जनमुत्कर्षसम इति फलितार्थः । यथा शब्दोऽनित्यः कृतकत्वादिति स्थापनायाम्—अनित्यत्वं कृतकत्वं च घटे रूपसहचरितमतः शब्दोऽपि रूपवान् स्यात्, तथा च विवक्षितविपरीतसाधनाद्विशेषविरुद्धो हेतुस्तद्देशनाभासा चेयम् । एवं श्रावणशब्दसाधर्म्यात् कृतकत्वाद् घटोऽपि श्रावणः स्यादविशेषात् ।

वस्तुतस्तु घटे श्रावणत्वापादनेऽर्थान्तरमत उक्तलक्षणे दृष्टान्तपदं साध्यपदं च न देयम् ।

अपकर्षसमायां तु धर्मविकल्पः धर्मस्य सहचरितधर्मस्य विकल्पोऽसत्त्वं, ततः अपकर्षः साध्यसाधनान्यतरस्याभावप्रसञ्जनम्, तथा च पक्षदृष्टान्तान्यतरस्मिन् व्याप्तिमपुरस्कृत्य सहचरितधर्माभावेन हेतुसाध्यान्यतराभावप्रसञ्जनमपकर्षसमा, यथा शब्दोऽनित्यः कृतकत्वादित्यत्र यद्यनित्यत्वसहचरितघटधर्मात् कृतकत्वादनित्यः शब्दस्तदा कृतकत्वानित्यत्वसहचरितघटधर्मरूपवत्त्वव्यावृत्त्या शब्दे कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यात्, आद्येऽसिद्धिदेशना, द्वितीये(३)बाधदेशना, एवं(३*) शब्दे कृतकत्वसहचरितश्रावणत्वस्य, संयोगादावनित्यत्वकृतकत्वसहचरितगुणत्वस्य च व्यावृत्त्या घटेऽनित्यत्वं कृतकत्वं च व्यावर्तेतेति दृष्टान्ते साध्यसाधन(४)वैकल्यदेशनाभासाऽपीयम् ।

यत्तु वार्तिके शब्दो नीरूप इतिवद् घटोऽपि नीरूपः स्यादित्यपकर्ष इति, तदसत्, घटे नीरूपत्वापादनस्यार्थान्तरत्वात् ; आचार्यस्वरसोऽप्येवम् ।

(१) 'द्वैविध्यम्' इति—भ० । (२) 'पक्षदृष्टान्तान्यतरस्मिन्' । (३) 'एवं बाधदेशना'—इति भ० । (४) '—वैकल्यादेश—' इति भ० ।

## वृत्तिः

यत्तु वैधर्म्यसमाया अत्रैवान्तर्भावः स्यादिति, तन्न। उपधेयसङ्करेऽप्युपाधेरसङ्करात्।

वर्ण्यसमायां तु साध्यः सिद्ध्यभाववान् सन्दिग्धसाध्यकादिर्वा, तस्य धर्मः सन्दिग्धसाध्यकादिवृत्तिहेतुस्तस्य विकल्पात् सत्त्वात् दृष्टान्ते वर्ण्यत्वस्य सन्दिग्धसाध्यकत्वस्याऽऽपादनं वर्ण्यसमा। तदयमर्थः—पक्षवृत्तिर्हेतुर्हि गमकः, पक्षश्च सन्दिग्धसाध्यकः, तथा च सन्दिग्धसाध्यकवृत्तिर्हेतुस्त्वया दृष्टान्तेऽपि स्वीकार्यः, तथा च दृष्टान्तस्यापि सन्दिग्धसाध्यकत्वात् सपक्षवृत्तित्वानिश्चयादसाधारणो हेतुः, तद्देशनाभासा चेयम्। हेतुः सन्दिग्धसाध्यकवृत्तिर्यदि न दृष्टान्ते, तदा गमकहेत्वभावात् साधनविकलो दृष्टान्तः स्यादिति भावः।

अवर्ण्यसमायां तु दृष्टान्ते सिद्धसाध्यके यो धर्मो हेतुस्तस्य सत्त्वात् पक्षे शब्दादावसन्दिग्धसाध्यकत्वापादनमवर्ण्यसमा। दृष्टान्ते हेतोर्यादृशत्वं तादृशो हेतुरेव गमक इत्यभिमानेनैवमापादनम्। दृष्टान्ते यो हेतुः सिद्धसाध्यकवृत्तिः स चेन्न पक्षे, तदा गमकहेत्वभावात् स्वरूपासिद्धिः स्यादतस्तादृशो हेतुरवश्यं पक्षत्वाभिमते स्वीकार्यः, तथा च सन्दिग्धसाध्यकत्वलक्षणपक्षत्वाभावादाश्रयासिद्धिः। असिद्धिदेशनाभासा चेयम्।

विकल्पसमायां तु पक्षे दृष्टान्ते च यो धर्मस्तस्य विकल्पो विरुद्धः कल्पो व्यभिचारित्वम्। उपलक्षणं चैतत्, अन्यवृत्तिधर्मस्यापि बोध्यम्। व्यभिचारोऽपि हेतोर्धर्मान्तरं प्रति, धर्मान्तरस्य साध्यं प्रति, धर्मान्तरस्य धर्मान्तरं प्रति वा। तथा च कस्यचिद् धर्मस्य क्वचिद् व्यभिचारदर्शनेन धर्मत्वाविशेषात्प्रकृतहेतोः प्रकृतसाध्यं प्रति व्यभिचारापादनं विकल्पसमा। यथा—शब्दोऽनित्यः कृतकत्वादित्यत्र कृतकत्वस्य गुरुत्वव्यभिचारदर्शनाद् गुरुत्वस्यानित्यत्वव्यभिचारदर्शनादनित्यत्वस्य मूर्त्तत्वव्यभिचारदर्शनाद् धर्मत्वाविशेषात् कृतकत्वमप्यनित्यत्वं व्यभिचरेदिति। अनैकान्तिकदेशनाभासा चेयम्।

पक्षदृष्टान्तादेः प्रकृतसाध्यतुल्यतापादनं साध्यसमा। तत्रायमाशयः—एतत्प्रयोगसाध्यस्यैवानुमितिविषयत्वम्, तथा च पक्षादेरनुमितिविषयत्वात् साध्यवदेतत्प्रयोगसाध्यत्वम्, अतः साध्यसमा, तथा हि—पक्षादेः पूर्वं सिद्धत्वे एतत्प्रयोगसाध्यत्वाभावान्नानुमितिविषयत्वं, पूर्वमसिद्धत्वे पक्षादेरज्ञानादाश्रयासिद्ध्यादयः, तद्देशनाभासा चेयम्।

सूत्रार्थस्तु—उभयसाध्यत्वात्, उभयं पक्षदृष्टान्तौ, तद्धर्मो हेत्वादि(१)श्च, तत्साध्यत्वं तदधीनानुमितिविषयत्वं साध्यस्येव पक्षादेरपीति तुल्यतापादनमिति। लिङ्गोपहितभानमते लिङ्गस्याप्यनुमितिविषयत्वात् साध्यसमत्वं, हेतोश्च साध्यत्वे हेतुमान् दृष्टान्तोऽपि साध्य इत्याशयः॥ ४॥

(१) 'च'—इति नास्ति म०।

## न्यायभाष्यम्

एतेषामुत्तरम्—

**किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥ ५ ॥**

अलभ्यः सिद्धस्य निह्नवः। सिद्धं च किञ्चित्साधर्म्यादुपमानं यथा गौस्तथा गवय

## न्यायवार्त्तिकम्

किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः। न, हेत्वर्थापरिज्ञानादिति सूत्रार्थः। न ब्रूमो यावन्तो घटधर्मास्ते सर्वे एव शब्दे सम्भवन्तीति, अपि तु यो यस्य साधको धर्म उपपद्यते स तत्साधनं तत्रोपसंह्रियते। तथाच-शब्देन शब्दे चोत्पत्तिधर्मकत्वं धर्म उपसंह्रियते। एवं यथोक्तमसम्बद्धम्। यथा गौस्तथा गवय इत्युक्ते न गोधर्माः सर्व एव गवये, न गवयधर्माः सर्व एव गवि प्राप्नुवन्ति। अपि तु यदितरस्येतरेण सम्बध्यते तावन्मात्रमेवोपसंह्रियते, अशेषधर्मोपसंहारे तु यथा तथेत्येव न स्यात्, स एवासाविति स्यात्, तथेहापीत्ययमदोषः। यत्पुनरेतद् विभागजाविभागजविकल्पवन्नित्यानित्यविकल्प इति? यथोत्पत्तिधर्मकत्वमन्वयव्यतिरेकि, नैवं विभागजत्वम्। न हि किञ्चिद्विभागाज्जायमानं यथोक्तविशेषणं नित्यमनित्यं वा दृष्टमित्येतदप्यनुत्तरम् ॥ ५ ॥

## न्यायवार्त्तिकतात्पर्यटीका

आसां षण्णां जातीनां प्रत्याख्यानम्—

किंचित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ( सू ५ )॥ यस्य धर्मिणः साध्यधर्मेण स्वाभाविकसंबन्धः साधको धर्म उपपद्यत उपपन्नो भवति स धर्मस्तस्य साध्यधर्मस्य साधनं साध्यधर्मिण्युपसंह्रियते। तथाच-शब्देनेति उपनयपदेनेत्यर्थः। यत्पुनरेतद्विभागजाविभागजविकल्पवन्नित्यानित्यविकल्प इति, तत्राह—यथोत्पत्तिधर्मकत्वमन्वयव्यतिरेकि, नैवं विभागजत्वम्। अयमर्थः—विकल्पसममुत्तरं वदता हि यथा सत्युत्पत्तिमत्त्वे घटो न विभागजः शब्दस्तु विभागज इति व्यवस्थितो विकल्पः, एवं(१)सति उत्पत्तिमत्त्वे सत्यपि विभागजवच्छब्दोऽपि नित्यो भविष्यति घटस्त्वनित्य इत्युक्तम्। तत्र तावदुत्पत्तिधर्मकत्वं यथा सत्यनित्यत्वे घटादौ दृष्टम्, आकाशादिषु चासत्यनित्यत्वे न दृष्टं, तेनानित्यत्वेन स्वभाव(२)प्रतिबद्धमवधारितं, नैवमुत्पत्तिधर्मकत्वस्य विभागजत्वेनाविभागजत्वेन वा स्वाभाविकसंबन्धो गृहीतो येनोत्पत्तिमत्किंचिद्विभागजं किंचिदविभागजं न भवेत्। तस्माद्विकल्पसमं जात्युत्तरं वदताऽतिनिर्बन्धेन विभागजत्वेन शब्दस्य नित्यत्वं वक्तव्यम्। तत्रेदमुपतिष्ठते—यथोत्पत्तिधर्मकत्वमन्वयव्यतिरेकि अनित्यत्वं प्रति नैवं विभागजत्वं शब्दनित्यत्वं प्रत्यन्वयव्यतिरेकीति। तद्वयसाधारणमित्यर्थः। असाधारण्यमाह—न हि किंचिद्विभागाज्जायमानं नित्यमनित्यं वा दृष्टम्। ननु विभागजो विभागोऽनित्यो दृष्ट इत्यत आह—यथोक्तविशेषणमिति।

(१) अनर्थं 'सति'—इति पदं प्रमादान्मुद्रितं सम्भाव्यते। (२) —'प्रतिबन्धमव'—इति क०।

## न्यायभाष्यम्

इति। तत्र न लभ्यो गोगवययोर्धर्मविकल्पश्चोदयितुम्। एवं साधके धर्मे दृष्टान्तादिसामर्थ्ययुक्ते न लभ्यः साध्यदृष्टान्तयोर्धर्मविकल्पाद्वैधर्म्यात्प्रतिषेधो वक्तुमिति ॥ ५ ॥

# साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ६ ॥

यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं तेनाविपरीतोऽर्थोऽतिदिश्यते प्रज्ञापनार्थम्। एवं साध्यातिदेशाद् दृष्टान्ते उपपद्यमाने साध्यत्वमनुपपन्नमिति ॥ ६ ॥

## न्यायवार्त्तिकम्

साध्यातिदेशाच्च दृष्टान्तोपपत्तेः। दृष्टान्तः साध्य इति ब्रुवता भवता न दृष्टान्तलक्षणं व्यज्ञायि। दृष्टान्तो हि नामाविहतयोर्दर्शनयोर्विषयः। तथा च साध्यत्वमनुपपन्नम्। अथ दर्शनं विहन्यते, नासौ दृष्टान्तो लक्षणाभावादिति।

यत्त्वत्रोक्तं जातीनां पौनरुक्त्यं प्रसज्यत इति, न पौनरुक्त्यमर्थभेदात्—यथा चोत्कर्षसमादीनां

## न्यायवार्त्तिकतात्पर्यटीका

कारणमात्रविभागपूर्वकः शब्दो विभागजस्तु विभागः कारणाकारणविभागपूर्वक इति सिद्धं कारणमात्रविभागपूर्वकत्वमसाधारण्यमित्यर्थः ॥ ५ ॥

षण्णां जातीनां प्रत्याख्यानमुक्त्वा वर्ण्यावर्ण्यसाध्यसमानामपरं प्रत्याख्यानमाह—

साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ( सू ६ )॥ इति। तद्व्याचष्टे—दृष्टान्तः साध्य इति ब्रुवतेति। चतुर्दशविधजातिवादिनामिह दूषणमुपन्यस्यति—यत्त्वत्रोक्तं जातीनां पौनरुक्त्यमिति। लक्षणभेदाभेदाभ्यां किल लक्ष्यभेदाभेदौ लक्षणं चेदमेकमिति न षड् जातयः, तस्मा-

## वृत्तिः

एतासामसदुत्तरत्वे बीजमाह—( किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः )।

किञ्चित्साधर्म्यात् साधर्म्यविशेषात् व्याप्तिसहितादुपसंहारसिद्धेः साध्यसिद्धेर्वैधर्म्याद्देतद्विपरीतात् व्याप्तिनिरपेक्षात् साधर्म्यमात्राद्भवता कृतः प्रतिषेधो न सम्भवतीत्यर्थः। अन्यथा प्रमेयत्वरूपासाधकसाधर्म्यात् त्वद्दूषणमप्यसम्यक् स्यादिति भावः। तथा चाऽयं क्रमः—अनित्यत्वव्याप्यात् कृतकत्वाच्छब्देऽनित्यत्वमुपसंहरामो न तु कृतकत्वं रूपस्यापि व्याप्यं, येन ततो रूपमप्यापादनीयं शब्दे। एवम् अनित्यत्वं न रूपव्याप्यं येन रूपाभावादनित्यत्वाभावः शब्दे स्यात्।

एवं वर्ण्यसमेऽपि, किञ्चित्साधर्म्याद्व्याप्यतावच्छेदकावच्छिन्नाद्धेतोः साध्यसिद्धिः। तादृशहेतुमत्त्वं च दृष्टान्ततप्रयोजकं न तु पक्षे यावद्विशेषणावच्छिन्नो हेतुस्तावदवच्छिन्नहेतुमत्त्वम्। अन्यथा त्वयाऽपि (१)दूषणे यो दृष्टान्तीकर्त्तव्यः सोऽपि न स्यात्।

(१) 'दूषणो'—इति म०।

## न्यायवार्त्तिकम्

भिन्नोऽर्थस्तथोक्तम्। प्रयोगभेददर्शनाच्च—प्रयोगश्च भिन्न उत्कर्षसमादीनामिति। आनन्त्यमिति चेत्—अथ मन्यसे यदि प्रयोगभेदाद्भेदो न चतुर्विंशतिर्जातय इति प्राप्तम्? न, अनवधारणात्—नेदमवधार्यते चतुर्विंशतिर्जातय इति, किन्तूदाहरणानां भेदः। कथमवगम्यते? तथा हि प्रकरणसमैका चतुर्द्धा भिन्नेति। अथ सामान्यतोऽभिन्ना जातय इत्यभेदं ब्रूयात्, तस्याप्यभ्युपगतं चतुर्दशत्वं निवर्तते। अथ कुतश्चिद्भेदाद्भेदः, अदेश्यं तर्हि उत्कर्षसमाद्या न विकल्पसमातो भिद्यन्त इति। यथा केनचिद्भेदेन चतुर्दशत्वं तथा केनचिद्भेदेन चतुर्विंशतित्वम्। अविशेषसमा त्वियं जातिः उत्कर्षसमादीनामेकत्वं किञ्चित्साधर्म्यादिति। अस्या जातेरुक्तमुत्तरम् ॥ ६ ॥

इति साध्यदृष्टान्तधर्मविकल्पप्रभवोत्कर्षसमादिजातिषट्कप्रकरणम्।

## न्यायवार्त्तिकतात्पर्यटीका

विकल्पसमायामेवोत्कर्षसमादीनामन्तर्भाव इत्यर्थः। दूषयति—न पौनरुक्त्यं तत्तल्लक्ष्यपदसहितानि पञ्च लक्षणानि उभयसाध्यत्वाच्चेत्यनेन सह लक्षणानि पठितानीति। न केवलं लक्ष्यभेदात्, प्रयोगभेददर्शनाच्च। शङ्कते—यदि लक्ष्यभेदाज्जातिभेदस्ततः आनन्त्यमिति चेत्। निराकरोति—नानवधारणादिति। न लक्ष्याणामवधारणमस्त्येषामानन्त्यात्। लक्षणोपग्रहेण चतुर्विंशतिर्जातय इत्यर्थः। लक्ष्याणां लक्षणाभेदेऽपि भेदे निदर्शनमाह—तथा हि प्रकरणसमैकेति। सुगममितरत् ॥ ६ ॥

## वृत्तिः

एवमवर्ण्यसमेऽपि व्याप्यतावच्छेदकावच्छिन्नस्य दृष्टान्तदृष्टस्य पक्षे सत्त्वात् साध्यसिद्धिः, न तु दृष्टान्तवृत्तियावद्धर्मावच्छिन्नस्य पक्षे सत्त्वम्।

एवं विकल्पसमेऽपि, प्रकृतसाध्यव्याप्यात् प्रकृतहेतोः साध्यसिद्धिस्तद्वैधर्म्याद्यत्किञ्चिद्व्यभिचारात् कृतः प्रतिषेधो न सम्भवति। न हि यत्किञ्चिद्व्यभिचारादेव प्रकृतहेतोः प्रकृतसाध्यासाधकत्वमतिप्रसङ्गात्।

एवं साध्यसमेऽपि, व्याप्याद्धेतोः सिद्धे पक्षे साध्यसिद्धिः, न तु पक्षदृष्टान्तादयोऽप्यनेन साध्यन्ते, तथा सति क्वचिदपि साध्यसिद्धिर्न स्यात्, त्वदीयं दूषणमपि विलीयेत ॥ ५ ॥

वर्ण्यावर्ण्यसाध्यसमासु समाध्यन्तरमप्याह—(साध्यातिदेशाच्च दृष्टान्तोपपत्तेः)।

दृष्टान्तोपपत्तिः साध्यातिदेशात्, दृष्टान्ते हि साध्यमतिदिश्यते, तावतैव दृष्टान्तत्वमुपपद्यते न त्वशेषो धर्मः, पक्षदृष्टान्तयोरभेदापत्तेः। पक्षादेरपि साध्यसमत्वमेतेन प्रत्युक्तम्। दृष्टोऽन्तो दृष्टान्तः पक्षः, तस्माद्वह्निमानित्यतः पक्षोत्कीर्तनात्। तथा च साध्यस्यातिदेशात्साधनात्पक्ष इत्युच्यते, न तु पक्षोऽपि साध्यतेऽतिप्रसङ्गादिति भावः ॥ ६ ॥

समाप्तं जातिषट्कप्रकरणम्।

### न्यायभाष्यम्

## प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वाद-प्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ ७ ॥

हेतुः प्राप्य वा (१)साध्यं साधयेदप्राप्य वा ? (२)न तावत्प्राप्य(२*)प्राप्त्याम-विशिष्टत्वादसाधकः । द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा ? अप्राप्य (३)साधकं न भवति, नाप्राप्तः प्रदीपः प्रकाशयतीति । प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः, अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमः ॥ ७ ॥

### न्यायवार्त्तिकम्

प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्या(४)ऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ । तस्मिन्नेव हेतौ घटसाधर्म्यादिति कृते यदि तावदयं हेतुः साध्यं सम्प्राप्नोति प्राप्त्या अविशिष्टः । कोऽविशेषार्थः ? उभयोर्विद्यमानता—नाविद्यमानः सम्प्राप्यत इति हेतोः साधनार्थो हीयते । अथ न प्राप्यते, अप्राप्तेनाहेतुना अविशिष्टत्वादहेतुर्भवति । न ह्यग्निरप्राप्तो दहति । (५)प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः, अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमः । अनयो(६)र्भेदेनोपदेशो विवक्षातः—भेदविवक्षायां प्राप्त्यप्राप्तिसमाविति । अभेदविवक्षायामेक-मेवोत्तरम्—यथा वृक्षा वनमिति ।

जातिलक्षणाभावान्नैवेयं जातिरिति चेत्—अथ मन्यसे यज्जातेर्लक्षणं तदस्या नास्ति, साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमिति हि तत्, न च लक्षणेनासम्बद्धा जातिरिति शक्यं वक्तुम्, न हि गोलक्षणहीनोऽश्वो गौरिति ? न, सूत्रार्थापरिज्ञानात्—साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं

### न्यायवार्त्तिकतात्पर्यटीका

प्राप्य—समौ ( सू ७ ) ॥ प्राप्त्यप्राप्तिसमाविति लक्ष्यपदम् । शेषं लक्षणम् । असद्व साध्यते न तु सत् । प्राप्तं च सत्, असतः प्राप्त्यसंभवात् । तस्मान्न साध्यम् । अपि च येन यस्य प्राप्तिस्तेन तस्यैक्यमेव, यथा गङ्गा सागरं प्राप्ता सागरेणाभिन्ना, तद्वदेव अभिन्ने चेत्साध्यसाधने, नास्ति साध्यसाधनभावः, तस्य भेदाधिष्ठानत्वादित्यपि द्रष्टव्यम् । अप्राप्तिसमस्तु स्फुट एवेति । ननु प्राप्त्यप्राप्तिसमयोर्मिलितयोः साधनप्रतिषेधस्यैकत्वात् कथं प्राप्त्यप्राप्तिसमौ भिन्नावित्यत आह—अनयोर्भेदोपदेशो विवक्षात इति । साधनप्रतिषेधस्यैकत्वेऽपि प्राप्य वा अप्राप्य वेति विकल्पभेदाद्भेदविवक्षेत्यर्थः । अभेदविवक्षायां त्वेकमेवोत्तरम् । यथा वृक्षाणां बहुत्वं विवक्षित्वा बहुवचनप्रयोगो वृक्षा इति, तद्बहुत्वसंख्याया एकत्वं विवक्षित्वैकवचनम् एकं वनमिति । उदाहरणेन साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमिति जातिसामान्यलक्षणं मन्वानो देशयति—जातिलक्षणाभावादिति । परिहरति—न, सूत्रार्थापरिज्ञानादिति । सूत्रे नोदाहरण-

(१) 'साध्य'मिति नास्ति टि॰ पु॰ । (२) इदं नास्ति टि॰ पु॰ । (३) 'साधकत्वं'—इति टि॰ । (४)—'दप्राप्त्या सा' इति—क॰ । (५) 'अप्राप्तेन हेतुना' इति—ख॰ । (६) 'भेदेनोपन्यासौ' इति—क-ख॰ ।

### न्यायभाष्यम्

अनयोरुत्तरम्—

## घटादिनिष्पत्तिदर्शनात् पीड़ने चाभिचारादप्रतिषेधः ॥ ८ ॥

उभयथा खल्वयुक्तः प्रतिषेधः, (१)कर्तृकरणाधिकरणानि(१*) प्राप्य (२)मृदं घटादिकार्यं निष्पादयन्ति, अभिचाराच्च पीडने सति दृष्टमप्राप्य साधकत्वमिति ॥ ८ ॥

### न्यायवार्त्तिकम्

जातिरित्यस्य सूत्रस्यार्थो न व्यज्ञायीत्यनुत्तरमेतत्। एतेन त्रैकाल्यसमाद्याः प्रत्युक्ताः, सूत्रार्थापरिज्ञानात् ॥ ७ ॥

घटादिनिष्पत्तिदर्शनात् पीड़ने चाभिचारादप्रतिषेधः। मृत्पिण्डप्राप्तानां दण्डादीनां नाविशेषो न च साध्यसाधनभावनिवृत्तिः—न हि मृत्पिण्डप्राप्तो दण्डः साधनत्वं जहाति, नापीतरत् साध्यत्वं जहाति। अथ मन्यसे घटस्तत्र साध्यस्तस्य चाविद्यमानस्य किं साधनेन? नाविद्यमानस्य साधनमपि तु मृत्पिण्डो घटीक्रियत इति। किमिदं घटीक्रियत इति? मृदवयवाः पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यन्ते, व्यूहान्तराच्च घटोत्पत्तिः। पीड़ने चाभिचारादप्राप्त्यापि साधकत्वं दृष्टम्। कोऽप्राप्त्यर्थः? परस्परोपश्लेषमन्तरेण साधकत्वम्। अन्यथा तूद्देशेनायं

### न्यायवार्त्तिकतात्पर्यटीका

साधर्म्यं विवक्षितमपि तु (३)येन केनचित्साधर्म्यं विवक्षितम्। अत्र च (३*)येन केनचिद्विद्यमानेनासाध्येन साधर्म्यम्, अप्राप्तेन वा हेतुना साधर्म्यमिति न सामान्यलक्षणायोग इति ॥ ७ ॥

प्रत्याख्यानम्—

घ-धः ( सू ८ ) ॥ घटादिनिष्पत्तिदर्शनादिति सूत्रम्। तद्व्याचष्टे (४)मृत्पिण्डप्राप्तानां दण्डादीनां न गङ्गासागरवद् अविशेषः। मृदवयवाः पूर्वव्यूहपरित्यागेनेति। साध्यं कर्म तच्च मृदवयवास्ते च सिद्धा एवेत्यव्यभिचारः। घटस्तु फलं न साध्य इति भावः। कोऽप्राप्त्यर्थ इति। अप्राप्तस्य साधकत्वेऽतिप्रसङ्ग इति भावः। उत्तरं—परस्परोपश्लेषमन्तरेण

### वृत्तिः

क्रमप्राप्तौ प्राप्त्यप्राप्तिसमौ लक्षयति—( प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ )।

हेतोरिति साधकत्वमिति शेषः। प्राप्तिपक्षे दोषमाह—प्राप्त्याऽविशिष्टत्वादिति। द्वयोरपि प्राप्तत्वाविशेषात् किं कस्य साधकम्? अप्राप्तिपक्षे दोषमाह—अप्राप्त्येति। अप्राप्तस्य साधकत्वेऽतिप्रसङ्गात्। साधकत्वं चात्र कारकज्ञापकसाधारणम्, एवं च कारकज्ञापकलक्षणं साधनं कार्यज्ञाप्यलक्षणेन साध्येन सम्बद्धं तत्साधकं चेत्, तदा सत्त्वाविशेषान्न कार्यकारणभावः, तत्सम्बन्धस्य प्रागेव ज्ञातत्वान्न ज्ञाप्यज्ञापकभावः।

(१) 'कर्तृकरणानि'—इति टि०। (२) 'मृद'—इति वि०। (३*) चयसंज्ञः ख-पुस्तके नास्ति। (४) 'मृत्प्राप्तानां' क०।

### न्यायभाष्यम्

## दृष्टान्तस्य (१)कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥ ९ ॥

साधनस्यापि साधनं वक्तव्यमिति (२)प्रसङ्गेन प्रत्यवस्थानं प्रसङ्गसमः(३)प्रतिषेधः। क्रियाहेतुगुणयोगी क्रियावान् लोष्ट इति हेतुर्नापदिश्यते, न च हेतुमन्तरेण (४)सिद्धिरस्तीति।

### न्यायवार्त्तिकम्

प्राप्त एव, नियमात्। इयं च जातिः सर्वहेत्वपवादद्वारिका, यदि ज्ञापको हेतुरपदिश्यते तथापि, (५)यदि कारकस्तथापीति। सा चेयं कार्यकारणत्वापवादद्वारेण प्रवर्तमाना व्याहता भवति। को व्याघातः? उत्तरस्यानुत्थानम्। कथमिति? यदिदमुत्तरं प्राप्यार्थं कारणत्वापवादद्वारेण साधयेदप्राप्य वेति, तस्यापि प्रतिषेध्यं प्राप्य वाऽप्राप्य वेति समो दोषः॥ ८ ॥

इति प्राप्त्यप्राप्तियुगनद्धवाहिविकल्पोपक्रमजातिद्वयप्रकरणम्।

### न्यायवार्त्तिकतात्पर्यटीका

साधकत्वमिति। अन्यथा तूद्देशेनासौ प्राप्त एव। यदुद्देशेनाभिचारः श्येनादिना क्रियते तस्यैव प्रत्यवायो भवति, नान्यस्येति नियमः। अत्रापि (६)संयुक्तसंयोगादिः संबन्ध उपेयः। तस्यापि(६*) हेतुत्वं क्रियां प्रति दृष्टम्। यथा पङ्काख्यायां भुवि। सुगममन्यत्॥ ८ ॥

दृष्टान्तस्य कारणानपदेशात्प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ (सू ९)॥ दृष्टान्तस्य कारणं प्रमाणं तस्यानपदेशात्प्रसङ्गसमः। साध्यसमो हि दृष्टान्ते साध्यवद्धेत्वाद्यवयवं प्रसञ्जयति—पञ्चावयवप्रयोगसाध्यतां (क)दृष्टान्तगतस्यानित्यत्वस्य प्रसञ्जयतीत्यर्थः; प्रसङ्गसमस्तु दृष्टान्तगतस्यानित्यत्वस्य प्रमाणमात्रसाध्यतामित्यपौनरुक्त्यम्। भाष्यम्—साधनस्यापि। दृष्टान्तगतस्यानित्यत्वस्य साधनं प्रमाणं वाच्यमिति।

### वृत्तिः

वस्तुतो ज्ञापकत्वं ज्ञप्तिजनकत्वं तदपि तावतैव प्रत्युक्तम्।

प्राप्तयोर्न जन्यजनकभावः प्राप्तत्वेन लवणोदकयोरिवाभेदादित्याशय इत्यन्ये।

तथा च प्राप्त्याऽविशेषादनिष्टापादनेन प्रत्यवस्थानं प्राप्तिसमा। यदि चाप्राप्तं लिङ्गं साध्यबुद्धिं जनयति, साध्याभावबुद्धिमेव किं न जनयेत्? अप्राप्तत्वाविशेषात्। तथा चाप्राप्त्या साधकत्वादनिष्टापादनमप्राप्तिसमा। प्रतिकूलतर्कदेशनाभासे चेमे॥ ७ ॥

(१) 'करणानपदेशात्'—इति ज०। (२) इदं टि० पु० नास्ति। (३) 'प्रतिषेध'—इति फ० पु० नास्ति। (४) 'कस्यचित् सिद्धि'—इति टि०। (५) यदीत्यत्र 'यथापि' इति—ख०। (६*) अयमंशः ख-पु० नास्ति। (क) 'दृष्टान्तस्य गतस्य'—इति क-ख-पुस्तकयोः प्रामादिकम्।

## न्यायभाष्यम्

प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः। क्रियावानात्मा क्रियाहेतुगुणयोगाद् लोष्टवदित्युक्ते प्रतिदृष्टान्त उपादीयते—क्रियाहेतुगुणयुक्तमाकाशं निष्क्रियं दृष्टमिति। कः पुनराकाशस्य क्रियाहेतुर्गुणः? वायुना संयोगः संस्कारापेक्षः, वायुवनस्पतिसंयोगवदिति ॥ ९ ॥

## न्यायवार्त्तिकम्

दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ। यथा तस्मिन्नेव हेतौ घटादिसाधर्म्येण कृते इत्थं—घट एव तावदनित्य इत्यत्र को हेतुरिति प्रसङ्गसमः। प्रतिदृष्टान्तसमस्य यदेव भाष्य उदाहरणं तदेव द्रष्टव्यमिति। वाय्वाकाशसंयोगस्याकारणत्वादयुक्तमिति चेत्—अथ मन्यसे न वाय्वाकाशसंयोगः क्रियाकारणं त्रिष्वपि कालेष्वसम्भवात्? न वाय्वाकाशसंयोगेनाकाशे क्रिया कृता, न करोति, न करिष्यतीति; यच्च त्रिष्वपि कालेष्वकारणं तदकारणम्—यथा घटो घटान्तरस्य? न, तत्समानधर्मोपपत्तेः—न ब्रूमो वाय्वाकाशसंयोग एव कारणमपि तु तथाभूतो धर्मोऽन्यत्र दृष्टो यथा वायुवनस्पतिसंयोग इति। यस्त्वसौ तथाभूतः क्रियां न करोति, तन्नाकारणत्वादपि तु (१)प्रतिबन्धात्। केनास्य प्रतिबन्धः?

## न्यायवार्त्तिकतात्पर्यटीका

वार्त्तिकं—घट एव तावदनित्य इत्यत्र को हेतुरिति। अत्र किं प्रमाणमित्यर्थः। भाष्यं—प्रतिदृष्टान्त (२)उपादीयते। क्रियाहेतुगुणयुक्तमाकाशमक्रियं दृष्टं तस्मादनेन प्रतिदृष्टान्तेन कस्मात् क्रियाहेतुगुणयोगो निष्क्रियत्वमेव न साधयत्यात्मन इति शेषः। यदि पुनरियमनैकान्तिकदेशना स्यात्— क्रियाहेतुगुणयुक्तस्याप्यक्रियत्वं दृष्टं यथाऽऽकाशस्येति, तदेतत् सदुत्तरं स्यात्। न त्वेवमेतदिति जातिः। शङ्कते—(३)वाय्वाकाशसंयोगस्येति। निराकरोति—न, (४)तत्समानधर्मोपपत्तेः। तत्समानधर्मणो धर्मिणः क्रियावत्त्वोपपत्तेः। यदि तथाभूत एव आकाशे कस्मान्न करोतीत्यत आह—यस्त्वसाविति। यस्तु मन्यते कार्योत्पादैक्यव्यङ्ग्यमेव

## वृत्तिः

अनयोरसदुत्तरत्वे बीजमाह—(घटादिनिष्पत्तिदर्शनात् पीड़ने चाभिचारादप्रतिषेधः)। दण्डादितो घटादिनिष्पत्तेर्दर्शनात् सर्वलोकप्रत्यक्षसिद्धत्वात्। अभिचारात् श्येनादितः शत्रुपीड़ने च व्यभिचारान्न त्वदुक्तः प्रतिषेधः सम्भवति। न हि कारणं दण्डादि प्रागेव घटादिना सम्बद्धम्, अपि तु मृदादिना। श्येनादिरप्युद्देश्यतया पीड़ां जनयति, अन्यथा लोकवेदसिद्धकार्यकारणभावोच्छेदे त्वदुक्तो हेतुरप्यसाधकः स्यादिति ॥ ८ ॥

इति प्राप्त्यप्राप्तिसमजातिद्वयप्रकरणम्।

(१) 'प्रतिबन्धकात्'—इति क०। (२) 'उदाक्रियत'—इति क०-ख०। (३) 'काशाकाश'—इति क०। (४) 'तत्समानोपपत्तेः'—इति क०।

## न्यायभाष्यम्

अनयोरुत्तरम्—

### (१)प्रदीपोपादानप्रसङ्ग(२)विनिवृत्तिवत्तद्विनिवृत्तिः ॥ १० ॥

इदं तावदयं पृष्टो वक्तुमर्हति, अथ के प्रदीपमुपाददते, किमर्थं वेति? दिदृक्षमाणा दृश्यदर्शनार्थमिति। अथ प्रदीपं दिदृक्षमाणाः प्रदीपान्तरं कस्मान्नोपाददते? अन्तरेणापि प्रदीपान्तरं दृश्यते प्रदीपः, तत्र प्रदीपदर्शनार्थं प्रदीपोपादानं निरर्थकम्। अथ दृष्टान्तः किमर्थमुच्यत इति? अप्रज्ञातस्य ज्ञापनार्थमिति। अथ दृष्टान्ते कारणापदेशः किमर्थं (३)देश्यते? यदि प्रज्ञापनार्थं, प्रज्ञातो दृष्टान्तः। स खलु "लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त" इति। तत्प्रज्ञापनार्थः कारणापदेशो निरर्थक इति प्रसङ्गसमस्योत्तरम् ॥ १० ॥

## न्यायवार्त्तिकम्

महत्परिमाणेन। यथा मन्दवातवेगेन तुन्नानां लोष्टादीनामिति।

यदि च क्रियां दृष्ट्वा क्रियाकरणमिति मन्यसे, सर्वं कारणं क्रियानुमेयं भवतः प्राप्तं, ततश्चोपादानं कारणस्य न प्राप्नोति, किमिदं करिष्यत्याहो न करिष्यतीति। यस्य पुनः साधर्म्यादुपादानं तस्य युक्तम्। यदि च तत्सदृशं न कारणमिति मन्यसे? अनैकान्तिको हेतुर्न प्राप्नोति, न हि यच्छब्देऽमूर्तत्वं तद् (४)आकाशादाविति। अनुमानं चान्यत्र दृष्टस्यान्यत्र सादृश्यादेव प्रवर्तते, न हि ये धूमधर्मा एकस्मिन् धूमे, त एव धूमान्तरेष्वपीति ॥ ९ ॥

प्रदीपोपादानप्रसङ्गविनिवृत्तिवत् तद्विनिवृत्तिः। इदं तावदयं प्रष्टव्यः—के प्रदीपमुपाददते किमर्थं चेति? दिदृक्षमाणा दृश्यदर्शनार्थमिति? अथ प्रदीपोपलब्ध्यर्थं कस्मान्न प्रदीपोपादानं कुर्वते? अन्तरेण प्रदीपो दृश्यते प्रदीपान्तरमिति। अथ दृष्टान्तः किमर्थमुपादीयते? अज्ञातस्य प्रज्ञापनार्थम्। अथ दृष्टान्तेऽपि दृष्टान्तः किमर्थं देश्यते? यदि प्रज्ञापनार्थं, नाप्रज्ञातो दृष्टान्त इति। (५)यत्पुनराकाशदृष्टान्तवदिति(५) ॥ १० ॥

## न्यायवार्त्तिकतात्पर्यटीका

कारणं न दृष्टकार्यकारणसाधर्म्यव्यङ्ग्यमपीति, तस्य दूषणान्याह—यदि चेति ॥ ९ ॥

प्र—त्तिः ( सू १० ) ॥ यदि प्रज्ञापनार्थम्, उत्तरं—नाप्रज्ञातो दृष्टान्तः। तत्र लौकिकपरीक्षकाणां बुद्धिसाम्यादिति शेषः ॥ १० ॥

---

(१) 'प्रदीपादाने'ति—ज०। (२) —'निवृत्तिवत्'—इति ल-ग-ज०। (३) 'दृश्यते'—इति ल-ग-ज०। 'चोद्यते'—इति ट्टि०। (४) 'आकाशादीनामिति'—इति क०। (५) एतदन्तर्गतो ग्रन्थः २-पु० नास्ति—इति क-पुस्तकसम्पादकाः।

न्यायभाष्यम्

अथ प्रतिदृष्टान्तसमस्योत्तरम्—

**प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ११ ॥**

प्रतिदृष्टान्तं ब्रुवता न विशेषहेतुरपदिश्यते,—अनेन प्रकारेण प्रतिदृष्टान्तः साधको न दृष्टान्त इति। एवं प्रतिदृष्टान्तहेतुत्वे नाहेतुर्दृष्टान्त इत्युपपद्यते। स च (१)कथमहेतुर्न स्यात्? यद्यप्रतिषिद्धः साधकः स्यादिति ॥ ११ ॥

न्यायवार्त्तिकम्

प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः—अभ्युपगमात्; प्रतिदृष्टान्तस्य च हेतुभावं प्रतिपद्यमानेन दृष्टान्तस्यापि हेतुभावोऽभ्युपगन्तव्यः। हेतुभावश्च साधकत्वम्। स च (२)कथमहेतुर्न

न्यायवार्त्तिकतात्पर्यटीका

प्र—न्तः (सू ११) ॥ स च कथमहेतुर्न स्यादिति। कथं हेतुः स्यादिति। अभ्युपगमादिति। मदीयस्य च दृष्टान्तस्याभ्युपगमान्न त्वदीयो दृष्टान्त इत्यर्थः। अथैवं

वृत्तिः

क्रमप्राप्ते प्रसङ्गप्रतिदृष्टान्तसमे जाती लक्षयति—(दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ)।

दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानं प्रसङ्गसमः। कारणं प्रमाणम्, तदनपदेशोऽनभिधानम्, अभिधानं चानतिप्रयोजनकम्, तथा च दृष्टान्तस्य साध्यवत्त्वे प्रमाणाभावात् प्रत्यवस्थानमर्थः। यद्यपीदं सदुत्तरमेव, तथाऽपि दृष्टान्ते प्रमाणं वाच्यम्, तत्रापि प्रमाणान्तरमित्यनवस्थया प्रत्यवस्थाने तात्पर्यम्। तदुक्तमाचार्यैः(क)"अनवस्थाभासः प्रसङ्गसमः" इति। एतन्मते तु हेतोर्हेत्वन्तरमित्यनवस्थाऽपि प्रसङ्गसम एव, पूर्वमते तु हेत्वनवस्थादिकं वक्ष्यमाणाकृतिगणेष्वन्तर्भूतमिति विशेषः। अनवस्थादेशनाभासा चेयम्(ख)।

प्रतिदृष्टान्तेन प्रत्यवस्थानात् प्रतिदृष्टान्तसमः प्रत्येतव्यः। सावधारणं चेदम्, तेन प्रतिदृष्टान्तमात्रबलेन व्याप्तिमपुरस्कृत्य प्रत्यवस्थानमर्थः, तेन साधर्म्यसमाव्युदासः। यदि घटदृष्टान्तबलेनानित्यः शब्दस्तदाऽऽकाशदृष्टान्तबलेन नित्य एव स्यात्, नित्यः किं न स्यादिति बाधः प्रतिरोधो वाऽऽपादनीयः। हेतुरनङ्गं, दृष्टान्तमात्रबलादेव साध्यसिद्धिरित्यभिमानः(ग)। बाधप्रतिरोधान्यतरदेशनाभासा चेयम् ॥ ९ ॥

(१) 'कथं हेतु'रिति—ख०। (२) 'कथं हेतुः'—इति क०। (क) "अनवस्थाभासप्रसङ्गः प्रसङ्गसमः"—इति न्यायपरिशिष्टे (२९पृ०) उदयनः। (ख) "सा चापाततोऽनवस्थालक्षणप्रतिकूलतर्कदेशनाभासा; हेतुपर्यन्तचिन्तायां पक्षेऽप्रसिद्धविशेषणविशेष्योभयत्वेन, हेतौ स्वरूपासिद्धत्वेन, दृष्टान्ते साध्यसाधनोभयविकलत्वप्रसिद्धाश्रयत्वेन तद्देशनाभासा।" इत्याचार्याः। (न्यायपरिशिष्टम् ३०पृ०)। (ग) दृष्टान्तमात्रेण साध्यसिद्धेरवास्तवत्वादभिमान इत्युक्तम्। व्यक्तं चैतत् प्रत्युत्तरसूत्रे। "तदस्य हेतोरप्रधानत्वेन अनङ्गत्वाभिमानो द्वारं, द्वयो दृष्टान्तः, बाधप्रतिरोधावारोप्यौ, तद्देशनाभासा चेयम्।" (न्यायपरिशिष्टम् ३२पृ०)

## न्यायभाष्यम्

## प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥ १२ ॥

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते अपर आह—प्रागुत्पत्तेरनुत्पन्ने शब्दे प्रयत्नानन्तरीयकत्वमनित्यत्वकारणं नास्ति, तदभावात् नित्यत्वं प्राप्तं, नित्यस्य चोत्पत्तिर्नास्ति। अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः ॥ १२ ॥

## न्यायवार्त्तिकम्

स्यात्? यद्यप्रतिषिद्धः साधकः स्यात्, अप्रतिषिद्धश्चायम्। साधकप्रयोगानुपपत्तेश्च; यदि तावदेवं प्रयुङ्क्ते—यथा भवदीयो दृष्टान्तस्तथा मदीय इति, अभ्युपगमान्न प्रतिदृष्टान्तः। अथैवं प्रयुङ्क्ते—यथा मदीयो न दृष्टान्तस्तथा त्वदीय इति, तथापि व्याघातान्न प्रतिदृष्टान्त इति ॥ ११ ॥

इति युगनद्धवाहिप्रसङ्गप्रतिदृष्टान्तसमजातिद्वयप्रकरणम्।

प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः। यथा अनित्यः शब्द उत्पत्तिधर्मकत्वात् घटवदिति कृते यदि ब्रूयात्—प्रागुत्पत्तेरुत्पत्तिधर्मकत्वं नास्ति, तदभावादनुत्पत्तिधर्मकः, अनुत्पत्तिधर्मकत्वाच्च नित्यः, इति अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः ॥ १२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

प्रयुङ्क्ते यथा मदीयो न दृष्टान्तस्तथा त्वदीय इति, तथापि व्याघातान्न दृष्टान्तः, मदीयस्यादृष्टान्तत्वे साध्ये प्रतिदृष्टान्तेन हि तेन मदीयस्यादृष्टान्तता साध्या, स चेन्न दृष्टान्तः मदीयस्यादृष्टान्तता साध्येति व्याहतमित्यर्थः ॥ ११ ॥

प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः (सू १२) ॥ उदाहरणपुरःसरं भाष्यकारो व्याचष्टे—अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्त इति। तदभावात् कारणाभावात् अनित्यत्वस्य कार्यस्याभावे नित्यत्वं प्राप्तम्, नित्यत्वानित्यत्वाभ्यां राश्यन्तराभावादिति ॥१२॥

## वृत्तिः

प्रसङ्गसमे प्रत्युत्तरमाह—( प्रदीपोपादानप्रसङ्गनिवृत्तिवत्तद्विनिवृत्तिः )।

दृष्टान्तो हि निदर्शनस्थानत्वेन साध्यनिश्चयार्थमपेक्ष्यते, न तु दृष्टान्तदृष्टान्ताद्यनवस्थितपरम्परा लोकसिद्धा युक्तिसिद्धा वा। अन्यथा घटादिप्रत्यक्षाय प्रदीप इव प्रदीपप्रत्ययार्थमनवस्थितप्रदीपपरम्परा प्रसज्येत, त्वदीयसाधनमपि व्याहन्येत ॥ १० ॥

प्रतिदृष्टान्तसमे प्रत्युत्तरमाह—( प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः )

अत्रायमुत्तरक्रमः—प्रतिदृष्टान्तस्त्वया किमर्थमुपादीयते ? मदीयहेतोर्बाधार्थं सत्प्रतिपक्षितत्वार्थं वा ? नाद्यः, यतः प्रतिदृष्टान्तस्य हेतुत्वे स्वार्थसाधकत्वे मदीयो दृष्टान्तो नाहेतुः नासाधकः, तथा च तुल्यबलत्वान्न बाधः। न वा द्वितीयोऽपि, यतः प्रतिदृष्टान्तस्य स्वार्थसाधकत्वे उच्यमाने नाहेतुर्दृष्टान्तः, मदीयो दृष्टान्तस्तु सहेतुकत्वादधिकबलः।

वस्तुतो हेतुं विना दृष्टान्तमात्रेण न सत्प्रतिपक्षसम्भावना, तदभावव्याप्यवत्ताज्ञानाभावात्। हेतूपादाने तु सदुत्तरत्वमेवेति भावः ॥ ११ ॥

इति प्रसङ्गप्रतिदृष्टान्तसमप्रकरणम्।

## न्यायभाष्यम्

अस्योत्तरम्—

**तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥ १३ ॥**

तथाभावादुत्पन्नस्येति। उत्पन्नः खल्वयं शब्द इति भवति। प्रागुत्पत्तेः शब्द एव नास्ति, उत्पन्नस्य शब्दभावाच्छब्दस्य सतः प्रयत्नानन्तरीयकत्वम् (१)अनित्यत्वकारणमुपपद्यते, कारणोपपत्तेरयुक्तोऽयं दोषः 'प्रागुत्पत्तेः कारणाभावा'दिति ॥ १३ ॥

## न्यायवार्त्तिकम्

तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः। यथैव प्रागुत्पत्तेरुत्पत्तिधर्मकत्वं नास्ति तथा शब्दोऽपीति, उत्पन्नः सन् 'शब्द' इति भवति उत्पन्नः सन्नु'त्पत्तिधर्मक' इति भवति, तथाऽनित्य इति। उत्पन्ने उत्पत्तिधर्मकत्वमस्तीति न कारणप्रतिषेधः, अनुत्पन्नस्य चातथाभावात्। न चायमनुत्पन्नः 'शब्द' इति वा 'उत्पत्तिधर्मक' इति वा(२)'नित्य' इति वा(२*) 'अनित्य' इति वा व्यपदेष्टुं शक्यत इति। ज्ञापकश्चायं हेतुर्न कारकः, ज्ञापके च कारकवत् प्रत्यवस्थानमसम्बद्धम्।

## न्यायवार्त्तिकतात्पर्यटीका

तस्य प्रत्याख्यानम्—

तथा भावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ( सू १३ )॥ नित्यत्वेन हि शब्दस्य धर्मेणानुत्पत्त्या प्रत्यवस्थेयम्, (३)न चानुत्पन्नः 'शब्द' इति 'नित्य' इति 'चानुत्पत्तिधर्मक' इति च संभवति। उत्पन्नस्तूत्पत्तिधर्मा च शब्दश्चानित्यश्चेति नानुत्पत्त्या शक्यं प्रत्यवस्थातुमित्यर्थः। कारणोपपत्तेरिति प्रयत्नानन्तरीयकत्वस्य(४)ज्ञापकस्योपपत्तेर्न कारणस्य प्रयत्नानन्तरीयकत्वस्य(४*)प्रतिषेध इत्यर्थः। यदुक्तं कारणाभावादनित्यत्वस्य कार्यस्याभावे नित्यत्वं प्राप्तमिति, तत्राह वार्तिककारः—ज्ञापकश्चायं हेतुर्न कारक इति। कारको हि हेतुर्निवर्तमानः स्वकार्यं निवर्तयति न तु ज्ञापकस्तदभावेऽपि भूमौ चिरनिखातानां निध्यादीनामनिवृत्तेरिति।

## वृत्तिः

क्रमप्राप्तमनुत्पत्तिसमं लक्षयति—( प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः )।

प्रागुत्पत्तेरिति साधनाङ्गस्येति शेषः। कारणाभावात् हेत्वभावात्। तथा च (क)साधनाङ्गपक्षहेतुदृष्टान्तानामुत्पत्तेः प्राक् हेत्वभाव इत्यनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः। यथा घटो रूपवान् गन्धात् पटवदित्युक्ते घटोत्पत्तेर्गन्धोत्पत्तेश्च पूर्वं हेत्वभावादसिद्धिः, पटे च गन्धोत्पत्तेः पूर्वं हेत्वभावेन दृष्टान्तासिद्धिः, एवमाद्यक्षणे रूपाभावाद् बाधश्च, अनुत्पत्त्या प्रत्यवस्थानस्यैव तत्रापि सत्त्वात्। उत्पत्तेः पूर्वं हेत्वाद्यभावेन प्रत्यवस्थानस्यैव लक्षणत्वात्। तेनोत्पत्तिकालावच्छिन्नो घटो गन्धवानित्यत्र बाधेन प्रत्यवस्थाने नातिव्याप्तिः। जातित्वे सतीति च विशेषणीयम्। असिद्ध्यादिदेशनाभासा चेयम् ॥ १२ ॥

---

(१) 'अनित्यकारणम्'—इति ज०। (२) अयं भागः ख-पु० नास्ति। (३) 'न चानुत्'—इति क०। (४) अयं भागः ख-पु० नास्ति। (क) "यस्य कस्यचित् साधनाङ्गस्योत्पत्तेः प्राक् कारणस्य हेतोरभावात् प्रत्यवस्थानमनुत्पत्तिसमः। एवं धर्मि-लिङ्ग-साध्य-दृष्टान्त-तज्ज्ञानानामनुत्पत्तिर्व्याप्यते।" इत्युदयनः। "उपलक्षणत्वेन धर्म्याद्यादिविशेषणानुत्पत्तिरपि द्रष्टव्या" इति परिशिष्टप्रकाशे वर्द्धमानः (३५पृ०)।

## न्यायवार्त्तिकम्

न कारकज्ञापकयोर्भेदोऽस्ति कारकत्वादिति चेत्? न, कारकज्ञापकयोः क्रियाज्ञप्तिहेतुत्वात्। योऽप्ययं ज्ञापकः सोऽपि किञ्चित् कुर्वन् ज्ञापक इत्युच्यते(१)कारकोऽपीति। नैष दोषः कारकस्य क्रियाहेतुत्वात्, ज्ञप्तिहेतुत्वाद्व ज्ञापकस्येति। तत्रैको वस्तु निष्पादयति, एकस्तु विद्यमाने वस्तुनि ज्ञप्तिं करोति। (२)प्राक् चोत्पत्तेरुत्पत्तिधर्मकत्वस्याभावादनुत्पत्तिधर्मकः शब्द इति ब्रुवाणः शब्दमभ्युपैति, नासतोऽनुत्पत्तिधर्मकत्वं धर्म इति। ततश्च विशेषणमनर्थकं प्रागुत्पत्तेरिति।

अपरे तु प्रागुत्पत्तेः कारणाभावादित्युक्ते अर्थापत्तिसमैवेयमिति, प्रागुत्पत्तेः प्रयत्नानन्तरीयकत्वस्याभावादर्थादप्रयत्ननान्तरीयकोऽप्रयत्ननान्तरीयकत्वाच्च नित्य इति कृते उत्तरं(३)ब्रुवते—नायं नियमोऽप्रयत्नानन्तरीयकं(४)नित्यमिति। त्रयी हि तस्य गतिः,—किञ्चिन्नित्यमाकाशादि, किञ्चिदनित्यं विद्युदादि, किञ्चिदसदेव आकाशकुसुमादि।

एतत्तु न युक्तमुत्पश्यामः। कथमिति? यत्तावद् असद्(५)अप्रयत्ननान्तरीयकमिति न युक्तं प्रयत्नानन्तरीयकत्वस्य जन्मविशेषणत्वात् यस्य न(६)प्रयत्नानन्तरीयकं जन्म तदप्रयत्नानन्तरीयकं, न चाभावो विद्यते अतो न तस्य जन्म। यच्चासत् किं तस्य विशेष्यमस्ति। एतेन नित्यं प्रत्युक्तम्। न हि नित्यमप्रयत्नानन्तरीयकमिति शक्यं वक्तुम्। जातिलक्षणाभावान्नेयं जातिरिति चेन्न; अनुत्पन्नैरहेतुभिः साम्यात्—योऽनुत्पन्नः स न हेतुः, तद् यथा अनुत्पन्नास्तन्तवो न पटस्य कारणमिति ॥१३॥

इत्यनुत्पत्तिसमप्रकरणम्।

## न्यायवार्त्तिकतात्पर्यटीका

ततश्च विशेषणमनर्थकं प्रागुत्पत्तेरिति। प्रागसतो हि सत्तासंबन्ध उत्पत्तिः, प्रागपि चेदसावभ्युपगतः प्रागिति विशेषणमनर्थकम्; उत्पत्तेरभावे सदैवानुत्पत्तिधर्मकत्वादित्यर्थः।

अपरे तु प्रागुत्पत्तेः कारणाभावादित्युक्ते अर्थापत्तिसमैवेयं जातिरिति मत्वाऽन्या उत्तरमाहुः। यदैवमुच्येत प्रयत्नानन्तरीयकत्वादनित्यः शब्द इति तदार्थादप्रयत्नानन्तरीयकत्वे नित्यत्वमुक्तं भवतीत्यर्थात् आपत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमैवेयं जातिरित्यभिमानः। एवं कृते त एवास्यां जातावुत्तरं ब्रुवते—नायं नियम इति। तदेतत्परेषां मतं दूषयति—एतत्त्विति। शङ्कते—जातिलक्षणाभावान्नेयं जातिरिति चेत्। साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः, न चानुत्पत्तिसमायाः साधर्म्यं वैधर्म्यं वाऽस्ति केनचिदित्यर्थः। निराकरोति—नानुत्पन्नैरहेतुभिः(क)सारूप्यादिति। यथाऽनुत्पन्नास्तन्तवो न पटस्य कारणं तथा शब्दोत्पत्तेः प्रागनुत्पन्नं प्रयत्नानन्तरीयकत्वं नानित्यत्वस्य कारणमिति साधर्म्येण प्रत्यवस्थानमित्यस्ति सामान्यलक्षणमित्यर्थः। एतावता चार्थापत्तिसमाया अनुत्पत्तिसमातो भेदो दर्शितः; इहानुत्पन्नैरहेतुभिः साम्येन कार्यप्रतिषेधात्, अर्थापत्तिसमायां वाक्यार्थविपरीतारोपेण प्रतिषेधादिति ॥ १३ ॥

(१) 'कारकत्वादिति'—इति क-पुस्तकधृतपाठान्तरम्। (२) 'प्राक् चोत्पत्ति'—इति क०। (३) 'ब्रूयात्'—इति क०। (४) 'प्रागुत्पन्नः-इत्यधिकम् ६ पु०'—इति क-पादटीका। (५) 'अप्रयत्नानान्तरी'—इति ख०। (६) 'प्रयत्नानन्तरं'—इति ख०। (क) वार्त्तिके 'साम्यादि'त्यक्षरविसंवादः।

## न्यायभाष्यम्

## सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने(१)नित्यानित्य-साधर्म्यात्संशयसमः ॥ १४ ॥

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते हेतौ संशयेन प्रत्यवतिष्ठते—सति प्रयत्नानन्तरीयकत्वे अस्त्येवास्य नित्येन सामान्येन साधर्म्यमैन्द्रियकत्वम्, अस्ति च घटेनानित्येन, अतो नित्यानित्यसाधर्म्यादनिवृत्तः संशय इति ॥ १४ ॥

### न्यायवार्त्तिकम्

सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः । उदाहरणं भाष्ये । संशयसमा(२)साधर्म्यसमातो न भिद्यते इति चेत्—अथ मन्यसे यथा साधर्म्यसमोदाहरणं साधर्म्यात् प्रवर्तते तथा संशयसमापीति, अतोऽभेदान्न जात्यन्तरमिति ? न, उभयैकसाधर्म्य-भेदात्— उभयसाधर्म्यात् संशयसमः, एकसाधर्म्यात् साधर्म्यसम इति विशेषः ॥ १४ ॥

### न्यायवार्त्तिकतात्पर्यटीका

सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमः ( सू १४ )॥ दृष्टान्तः प्रयत्नानन्तरीयकत्वस्य हेतोर्घट इति । यथा हि विशेषदर्शनं निश्चयस्य कारणमस्तीति निश्चयोत्पत्तिरेवं साधर्म्यदर्शनमात्रमस्ति संशयस्य कारणमिति संशयेनापि भवितव्यमित्यर्थः(३) । सूत्रार्थप्रयोजनमाक्षेपसमाधानाभ्यां स्फुटीकरोति—संशयसमा साधर्म्यसमाया इति ॥ १४ ॥

### वृत्तिः

अत्रोत्तरमाह—( तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ) ।

उत्पन्नस्य तथाभावात् घटाद्यात्मकत्वात् .तत्र कारणस्य हेतोरुपपत्तेः सत्त्वात् कथं कारणप्रतिषेधः ? अयमाशयः—पक्षे हेत्वभावोऽसिद्धिः, न त्वनुत्पन्ने हेत्वभावः सम्भवति, अधिकरणाभावात् । न हि हेत्वभावमात्रमसिद्धिः, त्वदीयहेतोरपि क्वचिदभावसत्त्वात् । एवं

एतेन दृष्टान्तासिद्धिर्व्याख्याता, यदा कदाचित् हेतुसत्त्वेनैव दृष्टान्तत्वोपपत्तेः । हेत्वादीनां यदा कदाचित् पक्षे सत्त्वादेव हेत्वादिभावो न तु सार्वकालिकी तदपेक्षेति ॥१३॥

इति अनुत्पत्तिसमप्रकरणम् ।

क्रमप्राप्तं संशयसमं लक्षयति—( सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्य-साधर्म्यात् संशयसमः ) ।

नित्यानित्यसाधर्म्यादिति संशयकारणोपलक्षणम्, तेन समानधर्मदर्शनादियत्किञ्चित्-संशयकारणबलात् संशयेन प्रत्यवस्थानं संशयसमः । अधिकं तूदाहरणपरम् । तथा हि—

(१) "नित्यानित्यशब्दौ सपक्ष-विपक्षावुपलक्षयतः, साधर्म्यपदं च संशयहेतुम् । ततश्च—साध्य-तदभावयोः संशयकारणादित्यर्थः"—इति वरदराजः । (२) 'साध्यसमातो'—इति क० । (३) संशयहेतुविरहे सति निर्णायकं च विशेषदर्शनमिति निर्णायकत्वमित्यभिमानः । तत्त्वन्तु—निर्णायकाभावे संशयहेतुतः संशय इति । व्यक्तमिदमुत्तरसूत्रे ।

## न्यायभाष्यम्

अस्योत्तरम्—

**(१)साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा(१*) (२)संशयेऽत्यन्तसंशयप्रसङ्गो (३)नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ १५ ॥**

विशेषाद्वैधर्म्यादवधार्यमाणेऽर्थे पुरुष इति, न स्थाणुपुरुषसाधर्म्यात्संशयोऽवकाशं लभते। एवं वैधर्म्याद्विशेषात् प्रयत्नानन्तरीयकत्वादवधार्यमाणे शब्दस्यानित्यत्वे नित्यानित्यसाधर्म्यात्संशयोऽवकाशं न लभते। यदि वै लभेत, ततः स्थाणुपुरुषसाधर्म्यानुच्छेदादत्यन्तं संशयः स्यात्। गृह्यमाणे च विशेषे (४)नित्यं साधर्म्यं संशयहेतुरिति नाभ्युपगम्यते। न हि गृह्यमाणे पुरुषस्य विशेषे स्थाणुपुरुषसाधर्म्यं संशयहेतुर्भवति ॥१५॥

## न्यायवार्त्तिकम्

साधर्म्यात् संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः। साधर्म्यात् साधर्म्यदर्शनात् संशयः, वैधर्म्याद्विशेषदर्शनान्न संशयः, उभयथा तु संशये सामान्यविशेषदर्शने सति संशयेऽत्यन्तसंशयप्रसङ्गः; नित्यं सामान्यं संशयं करोतीति तु न प्रतिपद्यामहे, सति सामान्ये विशेषदर्शनाद्व्यावृत्तेरिति ॥१५॥

इति संशयसमप्रकरणम्।

## न्यायवार्त्तिकतात्पर्यटीका

अस्य प्रत्याख्यानसूत्रम्—

**साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशये अत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ( सू १५ )॥** न सामान्यदर्शनमात्रं संशयस्य कारणमपि तु विशेषादर्शनसहितं, विशेषदर्शने तु तद्रहितं न कारणमिति सूत्रार्थः(क)। उभयथा वेति। साधर्म्यविशेषदर्शनाभ्यामित्यर्थः। नित्यत्वानभ्युपगमाच्च सामान्यस्येति। नित्यं संशयकारणत्वानभ्युपगमात्साधर्म्यस्येत्यर्थः ॥ १५ ॥

## वृत्तिः

'शब्दोऽनित्यः कार्यत्वाद् घटवदि'त्युक्ते सामान्ये गोत्वादौ दृष्टान्ते घटे चैन्द्रियकत्वं तुल्यं, तथा च यथा कार्यत्वात् निर्णायकादनित्यत्वं निर्णीयते, तथा ऐन्द्रियकत्वात् संशयकारणादनित्यत्वं सन्दिह्यताम्। एवं शब्दत्वाद्यसाधारणधर्मदर्शनादपि संशयो बोध्यः। तथा च हेतुज्ञानेऽप्रामाण्यशङ्काधानद्वारा साध्यसंशयात् सत्प्रतिपक्षदेशनाभासेयम् ॥ १४ ॥

(१) 'विशेषाद वैधर्म्यादुभयथा वा'—इति टि०। (२) संशयः—इति ज०। (३) —'नित्यत्वानभ्युपग'—इति ज०। (४) 'नित्यसाधर्म्यं'—इति ज-ग०। (क) "तदिदं युक्ताङ्गहीनत्वं, विशेषादर्शनस्य संशयकारणस्य युक्तस्यैवानपेक्षणात्; अयुक्ताङ्गाधिकत्वं वा, साधर्म्यादि[-रूपसंशयहेतु-]विरहस्यायुक्तस्यैव निर्णयाङ्गत्वेन स्वीकारा"दित्याचार्याः।

## न्यायभाष्यम्

# उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ॥ १६ ॥

उभयेन नित्येन चानित्येन च साधर्म्यात्पक्षप्रतिपक्षयोः प्रवृत्तिः प्रक्रिया। अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्येकः पक्षं प्रवर्त्तयति, द्वितीयश्च नित्यसाधर्म्यात् (१)प्रतिपक्षं प्रवर्त्तयति—नित्यः शब्दः श्रावणत्वात् शब्दत्ववदिति(१*)। एवं च सति प्रयत्नानन्तरीयकत्वादिति हेतुरनित्यसाधर्म्येण (२)उच्यमानो न प्रकरणमतिवर्त्तते, प्रकरणानतिवृत्तेर्निर्णया(३)नतिवर्तनम्। समानं चैतन्नित्यसाधर्म्येणोच्यमाने हेतौ(२*)। तदिदं प्रकरणानतिवृत्त्या प्रत्यवस्थानं प्रकरणसमः। समानं चैतद्वैधर्म्येऽपि, उभयवैधर्म्यात् प्रक्रियासिद्धेः प्रकरणसम इति ॥ १६ ॥

## न्यायवार्त्तिकम्

उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः। उदाहरणं भाष्ये। संशयसमसाधर्म्यसमाभ्यां प्रकरणसमा न भिद्यते। कथमिति? तत्रापि साधर्म्यमिहापीति? न, उभयपक्षसाधर्म्याद् भेदसिद्धेः—उभावत्र वादिप्रतिवादिनौ पक्षपरिग्रहेण नित्यानित्यत्वे साधयतः, न चैवं साधर्म्यसम-संशयसमयोरिति ॥ १६ ॥

## न्यायवार्त्तिकतात्पर्यटीका

उभयसाधर्म्यात्प्रक्रियासिद्धेः प्रकरणसमः (सू १६) ॥ उपलक्षणं चैतद् उभयसाधर्म्यादिति। उभयवैधर्म्यादित्यपि द्रष्टव्यम्। एतद्व्याचष्टे भाष्यकारः—उभयेन नित्येन चानित्येन चेति। द्वितीयश्च नित्यसाधर्म्यात्प्रतिपक्षं प्रवर्तयति—'नित्यः शब्दः श्रावणत्वाच्छब्दत्वव'दिति। अथ द्वितीयसाधनप्रवृत्तौ प्रथमस्य साधनस्य किं भवतीत्यत आह—एवं च सति प्रयत्नानन्तरीयकत्वादिति हेतुरनित्यसाधर्म्येणोच्यमानो न प्रकरणमतिवर्तते। माऽतिवर्त्तिष्ट प्रकरणं को दोष इत्यत आह—प्रकरणानतिवृत्तेर्निर्णयानतिवर्त्तनम्। निर्णयानिष्पत्तिरित्यर्थः। एवमनित्यसाधनवादिनं प्रत्युत्तरं दर्शयित्वा नित्यसाधनवादिनं प्रत्याह—समानं चैतन्नित्यसाधर्म्येणोच्यमान इति। तदेवं साधर्म्येण प्रकरणसमद्वयमुक्तम्। तथा वैधर्म्येण प्रकरणसमद्वयं नित्यानित्यसाधनवादिनावेव प्रत्याह—समानं चैतदिति। उभयवैधर्म्यादिति, नित्याकाशवैधर्म्यात्कृतकत्वादनित्यघटवैधर्म्याच्चास्पर्शवत्त्वादिति। तदेवं प्रकरणसमचतुष्टयम्।

पूर्वपक्षवार्त्तिकं—संशयसमासाधर्म्यसमाभ्यामिति। परिहरति—नोभयपक्षसाधर्म्यात् (क)तद्भेदोपपत्तिरिति। प्रकरणसमे हि स्वपक्षनिश्चयेन मया वादिपक्षसाधनं दूषणीयमिति बुद्ध्या प्रवर्त्तते। साधर्म्यसमसंशयसमयोस्तु वादिसाधनेन साम्यमात्रापादनेन तद्दूषणं, न तु प्रतिपक्षनिश्चयेनेति विशेषः। इह तु साम्यमात्रापादनं न साधनेन, किं तु दूषणैरित्येतावता समार्थः प्रयोगः सम इति बोद्धव्यम् ॥ १६ ॥

---

(१) इदं ज-ग-ल-भा-पुस्तकेषु न दृश्यते। फ-पुस्तकपाठो गृहीतः। (२) 'उच्यमानेन हेतौ'—इति ज०-ग०। (३) —'निर्वर्त्तनम्'—इति फ०। (क) 'भेदसिद्धे'रिति वार्त्तिकपाठः।

## न्यायभाष्यम्

अस्योत्तरम्—

**प्रतिपक्षात्प्रकरणसिद्धेः(१)प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ॥१७॥**

उभयसाधर्म्यात् प्रक्रियासिद्धिं ब्रुवता प्रतिपक्षात्प्रक्रियासिद्धिरुक्ता भवति। यद्युभयसाधर्म्यं, तत्र एकतरः प्रतिपक्ष इत्येवं सत्युपपन्नः प्रतिपक्षो भवति। प्रतिपक्षोपपत्तेरनुपपन्नः प्रतिषेधः, (२)यदि (३)प्रतिपक्षोपपत्तिः प्रतिषेधो नोपपद्यते, अथ प्रतिषेधोपपत्तिः प्रतिपक्षो नोपपद्यते(३*), प्रतिपक्षोपपत्तिः प्रतिषेधोपपत्तिश्चेति विप्रतिषिद्धमिति। तत्त्वानवधारणाच्च प्रक्रियासिद्धिर्विपर्यये प्रकरणावसानात्, तत्त्वावधारणे ह्यवसितं प्रकरणं भवतीति ॥ १७ ॥

## न्यायवार्त्तिकम्

प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः। विरुद्धाव्यभिचार्येष उक्तोत्तर इति। प्रकरणोत्थानं च न प्रतिपक्षादिति ब्रूमः, किन्तु(४)तत्त्वादर्शनात्; तदुक्तं—प्रकरणसमे हेत्वाभास इति ॥ १७ ॥

इति प्रकरणसमप्रकरणम्।

## न्यायवार्त्तिकतात्पर्यटीका

अस्य प्रत्याख्यानम्—

प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ( सू १७ )॥ द्वयोः साधनयोस्तदानीमगृह्यमाणविशेषयोः कोऽयमभिमानः प्रतिवादिनो यन्मया स्वपक्षसाधनेनैव वादिनः साधनं दूषणीयमिति। समानबलयोश्चेदयमात्मीयात्साधनात्स्वपक्षसिद्धिमिच्छति, अतोऽनिच्छन्नपि वादिनोऽपि साधनात (५)सिद्धिमभ्युपगमयितव्यः। अन्यथा स्वसाधनात्साध्यसिद्धिमुपजीव्य प्रतिपक्षसाधनं दूषयति, न तु तस्मात्प्रतिपक्षसिद्धिमभ्युपगच्छतीति व्यक्तमियं राजकुलस्थितिरिति। एवं व्यवस्थिते सूत्रभाष्ये योजयितव्ये—प्रतिपक्षात्प्रतिपक्षसाधनात्प्रकरणस्य प्रक्रियमाणस्य साध्यस्येति यावत्, सिद्धेः, समानात् स्वसाधनात् प्रतिषेधस्य प्रतिवादिसाधनस्य स्वसाध्यसिद्धिद्वारेण परकीयसाधनप्रतिषेधस्यानुपपत्तिः। कस्मात्प्रतिषेधानुपपत्तिरित्यत उक्तं—प्रतिपक्षोपपत्तेः। फलतः परकीयसाधनस्य समानात्स्वसाधनात्प्रक्रियासिद्धिं स्वसाध्यसिद्धिं ब्रुवता प्रतिपक्षात्प्रक्रियासिद्धिरुक्ता भवति प्रतिवादिना। (क)नन्वेवं प्रकरणसमाख्यो हेत्वाभासो नोद्भावनीयः प्रतिवादिना, जात्युत्तरप्रसङ्गादित्यत आह—तत्त्वानवधारणाच्च प्रक्रियासिद्धिः। स्वसाध्यनिर्णयेन परसाध्यविघटनबुद्ध्या प्रतिवादिना साधनं प्रयुज्यमानं प्रकरणसमजात्युत्तरं भवति। सत्प्रतिपक्षतया वादिनः साधनमनिश्चायकं करोमीति बुद्ध्या प्रतिपक्षसाधनं प्रयुञ्जानो न जातिवादी, सदुत्तरवादित्वात्। सत्प्रतिपक्षताया हेतुदोषस्यानैकान्तिकादिवदुपपादितत्वात्। तत्त्वानवधारणादित्यनेन प्रकरणसमोदाहरणं दर्शितम्।

वार्त्तिकम्—विरुद्धाव्यभिचार्येष उक्तोत्तर इति। तुल्यबलयोरेकतरस्मात्स्वसाध्यसिद्धिमभ्युपगच्छतोर्द्वयोरपि फलतो व्यभिचारः सिध्यति। न च विरुद्धाव्यभिचारी संभवति। अव्यभिचारो ह्यविनाभावः, स च पञ्चरूपसंपत्तिश्चतूरूपसंपत्तिर्वा, न विरुद्धाव्यभिचारिणि साऽस्तीत्यर्थः ॥१७॥

(१) 'प्रतिषेधानुत्पत्तिः'—इति टि०। (२) 'यतः'—इति ज-ग-ल०। (३) अयमंशः ल-ग ज-भा-पुस्तकेषु नास्ति। फ-पुस्तकपाठो गृहीतः। (४) 'तथादर्शनात्'—इति क-धृतपाठान्तरम्। (५) 'सिद्धम'—इति क०। (क) सत्प्रतिपक्षोद्भावनस्य जात्युत्तरत्वं निरसितुं ततोऽस्य भेदं दर्शयितुं चाशङ्कते—नन्विति।

## न्यायभाष्यम्

### (१)त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥ १८ ॥

(२)हेतुः साधनम्, तत्साध्यात् पूर्वं पश्चात्सह वा भवेत्। यदि पूर्वं साधनम्, असति साध्ये कस्य साधनम्? अथ पश्चाद्, असति साधने कस्येदं साध्यम्? अथ युगपत्साध्यसाधने, द्वयोर्विद्यमानयोः किं कस्य साधनं किं कस्य साध्यमिति हेतुरहेतुना न विशिष्यते। (३)अहेतुना साधर्म्यात्(३*) प्रत्यवस्थानमहेतुसमः ॥ १८ ॥

## न्यायवार्त्तिकम्

त्रैकाल्यासिद्धेर्हेतोरहेतुसमः। अहेतुसाम्यात् प्रत्यवस्थानमहेतुसम इति ॥ १८ ॥

## न्यायवार्त्तिकतात्पर्यटीका

त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ( सू १८ )॥ सूत्रभाष्यवार्तिकानि प्रमाणसामान्यपरीक्षाव्याख्यानेन व्याख्यातानि ॥ १८ ॥

## वृत्तिः

अत्रोत्तरम्—( साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः )।

साधर्म्यात् साधर्म्यदर्शनात् संशये आपाद्यमानेऽपि न संशयः, वैधर्म्याद् वैधर्म्यदर्शनात्। यदि च कार्यत्वरूपविशेषदर्शनेऽपि संशयस्तदाऽत्यन्तसंशयप्रसङ्गः संशयानुच्छेदप्रसङ्गः। न च तथाऽभ्युपगन्तुं शक्यमित्याह—नित्यत्वेति। सामान्यस्य समानधर्मदर्शनस्य नित्यत्वानभ्युपगमान्नित्यसंशयजनकत्वानभ्युपगमात्। तथा सति त्वदीयो हेतुरपि न परपक्षप्रतिषेधकः स्यादिति भावः।

सामान्यस्य गोत्वादेः नित्यत्वानभ्युपगमात् नित्यत्वानभ्युपगमप्रसङ्गात्, तत्रापि साधारणधर्मप्रमेयत्वादिना संशय एव स्यादिति केचित् ॥ १५ ॥

इति संशयसमप्रकरणम्।

क्रमप्राप्तं प्रकरणसमं लक्षयति—( उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः )।

उभयसाधर्म्यात् अन्वयसहचाराद् व्यतिरेकसहचाराद्वा प्रक्रिया प्रकर्षेण क्रिया साधनं, विपरीतसाधनमिति फलितार्थः ; तत्सिद्धेस्तस्य पूर्वमेव सिद्धेः। तथा चाधिकबलत्वेनाऽऽरोपितप्रमाणान्तरेण (क)बाधेन प्रत्यवस्थानं प्रकरणसमः ; यथा—शब्दोऽनित्यः कृतकत्वादित्युक्ते, नैतदेवं श्रावणत्वेन नित्यत्वसाधकेन बाधात्। बाधदेशनाभासा चेयम् ॥ १६ ॥

---

(१) 'त्रैकाल्यानुपपत्ते'रिति न्यायसूचीनिबन्धे। (२) 'अहेतुसमः हेतु'—इति ग-पु० अधिकम्। 'अहेतुसाम्यात्'—इति टि०। (क) आचार्यास्तु—"अभ्युपगततदनधिकबलत्वेन प्रमाणान्तरेण हेतोर्बाधाभिधानं प्रकरणसम इति सूत्रार्थः" इत्याहुः। "तुल्यत्वमभ्युपेत्यैव परहेतोः स्वहेतुना। बाधेन प्रत्यवस्थानं प्रक्रियासम इष्यते ॥ २० ॥" इति वरदराजः। अनभ्युपगताधिकबलेन प्रतिप्रमाणेन परकीयहेतोर्बाधाभिप्रायेण प्रत्यवस्थानं प्रकरणसमा जाति"रिति वरदराजः। अत्र च युक्ताङ्गहीनत्वं दुष्टत्वमूलं, बाधं टीकाकृतापि 'समानबलत्व'मुक्तं (११३८पृ०) वक्ष्यति च (११६९पृ०)। प्रत्यधिकबलवत्त्वस्य युक्तस्यैवानपेक्षणात्।

* द्रष्टव्यम्—इतः प्राक् एकोनत्रिंशत्पत्रेषु पत्राङ्कमुद्रणे प्रमादो जातः।

## न्यायभाष्यम्

अस्योत्तरम्—

**न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥ १९ ॥**

न त्रैकाल्यासिद्धिः। कस्मात्? हेतुतः साध्यसिद्धेः। निर्वर्तनीयस्य निर्वृत्तिर्विज्ञेयस्य विज्ञानमुभयं कारणतो दृश्यते, सोऽयं महान्प्रत्यक्षविषय उदाहरणमिति। यत्तु खल्वूक्तमसति साध्ये कस्य साधनमिति? यत्तु निर्वर्त्यते यच्च विज्ञाप्यते तस्येति ॥१९॥

**(१)प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥**

पूर्वं पश्चाद् युगपद्वा प्रतिषेध इति नोपपद्यते, प्रतिषेधानुपपत्तेः स्थापनाहेतुः सिद्ध इति ॥ २० ॥

## न्यायवार्त्तिकम्

न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः। विरोधः सूत्रार्थः। नोत्पद्यमानमहेतुत उपपद्यते, नापि ज्ञाप्यमानमहेतुना ज्ञाप्यते इति ॥ १९ ॥

प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः। विरोध उत्तरदोष इति। यस्त्रिष्वपि कालेषु न साधयति स न प्रतिषेधेऽपि हेतुरिति समानो दोषः। उक्तोत्तरत्वाच्च—'प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धे'(२।१।८सू०)रित्यत्रोक्तोत्तरमेतदिति ॥ २० ॥

इति अहेतुसमप्रकरणम्।

## न्यायवार्त्तिकतात्पर्यटीका

न हेतुतः—सिद्धिः ( सू १९ ) ॥ (क)

प्रतिषेधा—षेधः ( सू २० ) ॥ (ख)

## वृत्तिः

अत्रोत्तरमाह—( प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः )।

प्रतिपक्षाद्विपरीतसाध्यसाधकत्वेनाभिमताच्छ्रावणत्वादितः प्रकरणसिद्धिद्वारा मदीयसाध्यस्य यः प्रतिषेधस्त्वया क्रियते तस्यानुपपत्तिः। कुतः? प्रतिपक्षोपपत्तेः, त्वत्पक्षापेक्षया प्रतिपक्षस्य मदीयपक्षस्योपपत्तेः साधनात्। अयमाशयः—श्रावणत्वेन पूर्वं नित्यत्वस्य साधनाद् यो बाध उच्यते स नोपपद्यते, पूर्वं साधितस्य बलवत्त्वाभावात्, कदाचित् कृतकत्वेनानित्यत्वस्याऽपि पूर्वं साधनादिति त्वत्पक्षप्रतिषेधोऽपि स्यात् ॥ १७ ॥

इति प्रकरणसमप्रकरणम्।

---

(१) 'प्रतिषेधानुपपत्तेः प्रति'—इति ल-ग-ज०। (क-ख) एतत् सूत्रद्वयमपि प्रमाणसामान्यपरीक्षाव्याख्यानेन द्वितीयाध्याये व्याख्यातमिति टीकाकृता न व्याख्यातम्।

## न्यायभाष्यम्

# अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥ २१ ॥

अनित्यः शब्दः(१)प्रयत्नानन्तरीयकत्वाद् घटवदिति स्थापिते पक्षे अर्थापत्त्या प्रतिपक्षं साधयतोऽर्थापत्तिसमः। यदि(१*)प्रयत्नानन्तरीयकत्वादनित्यसाधर्म्याद्-नित्यः शब्द इति, अर्थादापद्यते नित्यसाधर्म्यान्नित्य इति, (२)अस्ति चास्य(२*) (३)नित्येन साधर्म्यम्(३*)अस्पर्शत्वमिति ॥ २१ ॥

## न्यायवार्त्तिकम्

अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः। उदाहरणं भाष्ये ॥ २१ ॥

## न्यायवार्त्तिकतात्पर्यटीका

अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः (सू २१)॥ उदाहरणपुरःसरं सूत्रं योजयति—अनित्यः शब्द इति। अनित्यसाधर्म्यादनित्यं शब्दं ब्रुवाणो भवानन्क्षरं नित्य-साधर्म्यान्नित्यत्वं शब्दस्य ब्रूत इत्यर्थः। न साधर्म्यसमादौ वाद्यभिप्रायवर्णनमित्यतो भेदः ॥२१॥

## वृत्तिः

क्रमप्राप्तमहेतुसमं लक्षयति—( त्रैकाल्यासिद्धेर्हेतोरहेतुसमः )।

त्रैकाल्यं कार्यकालतत्पूर्वापरकालाः, तेन हेतोरसिद्धेः हेतुत्वासिद्धेः। अयमर्थः—दण्डादिकं घटादेर्न पूर्ववर्त्तितया कारणं तदानीं घटादेरभावात् कस्य कारणं स्यात्? अतएव न घटाद्युत्तरकालवर्त्तितयाऽपि, न वा समानकालवर्त्तितया, तुल्यकालवर्त्तिनोः सव्येतरविषाणयोरिवाविनिगमनापत्तेः। तथा च कालसम्बन्धखण्डनेनाहेतुतया प्रत्यवस्थान-महेतुसमः। कारणमात्रखण्डनेन ज्ञप्तिहेतोरपि खण्डनान्न तदसङ्ग्रहः(क)। प्रतिकूलतर्क-देशनाभासा चेयम् ॥ १८ ॥

अत्रोत्तरमाह—( न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः )।

त्रैकाल्यासिद्धिस्त्रैकाल्येन याऽसिद्धिरुक्ता सा न। कुत? हेतुतः साध्यसिद्धे-स्त्वयाऽप्युपगमात् ॥ १९ ॥

पूर्ववर्त्तितामात्रेणैव हेतुतासम्भवात्, अन्यथा त्वदीयहेतोरपि साध्यं न सिद्ध्येदित्याह—( प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः )।

हेतुफलभावखण्डने प्रतिषेधस्याप्यनुपपत्तेः प्रतिषेद्धव्यस्य परकीयहेतोर्न प्रतिषेध इत्यर्थः ॥ २० ॥

इति अहेतुसमप्रकरणम्।

---

(१) अयमंशः टि-पु० नास्ति। (२) 'अस्ति त्वस्य'—इति ज-ग-ख०। (३) 'नित्यसाधर्म्यम्'—इति टि०। (क) "ज्ञप्तिज्ञप्तिसाधारणीयं जातिः।" "इयं प्रतिकूलतर्कदेशनाभासा;—पूर्वभावे हि तदसाधनत्वप्रसङ्गः, पश्चाद्भावे हि तदसाध्यत्वप्रसङ्गः, सहभावे साध्यसाधनभावाभावप्रसङ्ग इति प्रतिकूल-तर्कमात्रोक्ति-पर्यवसानात्" इत्याचार्याः।

## न्यायभाष्यम्

**अस्योत्तरम्—**

### अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वाद(१)नै- कान्तिकत्वा(१*)च्चार्थापत्तेः ॥ २२ ॥

अनुपपाद्य सामर्थ्यमनुक्तमर्थादापद्यते इति ब्रुवतः पक्षहानेरुपपत्तिरनुक्तत्वात्, अनित्यपक्षसिद्धावर्थादापन्नं नित्यपक्षस्य हानिरिति। अनैकान्तिकत्वाच्चार्थापत्तेः।

## न्यायवार्त्तिकम्

अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः। अनुपपाद्य सामर्थ्यमर्थादापद्यत इति ब्रुवाणः पक्षं हापयति। किं कारणम्? सामर्थ्यस्यानुक्तत्वात्। एवं च पक्षहानेरुपपत्तिः। अनैकान्तिकत्वाच्चार्थापत्तेः पूर्वसूत्रव्याघातः—यदुक्तं—नानैकान्तिकत्व- 'मनर्थापत्तावर्थापत्त्यभिमाना'दिति, (२।२।४-सूत्रे) तद्व्याहन्यते। नास्ति व्याघातः,

## न्यायवार्त्तिकतात्पर्यटीका

**अस्य प्रत्यादेशसूत्रम्—**

अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ( सू २२ )॥ तद्व्याचष्टे—अनुपपाद्य सामर्थ्यमिति। तदेव खल्वनुक्तं वचनाल्लभ्यते यत्कल्पनमन्तरेण वचनार्थो न घटते, यथा पीनो देवदत्तो दिवा न भुङ्क्त इत्युक्ते रात्रौ भुङ्क्त इति ; यथा वा यागेन स्वर्गं भावयेदित्युक्तेऽन्तराऽपूर्वं कृत्वेति, वाक्यार्थोपपादने तस्य सामर्थ्यात्। न त्वव्यभिचारिणः साधर्म्यात्साध्ये साध्यमानेऽर्थादुक्तं भवति व्यभिचारिणाऽपि साधर्म्येण साधयितव्यमिति, तस्य वाक्यार्थोपपादनेऽसामर्थ्यात्, तदन्तरेण वाक्यार्थोपपत्तेः। यदि पुनरनुपलब्धसामर्थ्यमनुक्तमपि गम्येत, ततस्त्वया नित्यत्वापादने शब्दस्योच्यमानेऽनुच्यमानमनित्यत्वं प्रत्येतव्यम्। तथा च भवदभिमतस्य नित्यत्वस्य व्यावृत्तिः। तदिदमाह—अनित्यपक्षस्य अनुक्तस्य सिद्धावर्थादापन्नं

## वृत्तिः

क्रमप्राप्तमर्थापत्तिसमं लक्षयति—( अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः )।

(क)अर्थापत्तिरर्थापत्त्याभासः। तथा चार्थापत्त्याभासेन प्रतिपक्षसाधनाय प्रत्यवस्थान- मर्थापत्तिसमः। अयमाशयः—अर्थापत्तिर्हि उक्तेनानुक्तमाक्षिपति, तथा च शब्दोऽनित्य इत्युक्तेऽर्थादापद्यतेऽन्यन्नित्यं, तथा च दृष्टान्तासिद्धिर्विरोधश्च। कृतकत्वादनित्य इत्यु- क्तेऽर्थादापन्नमन्यस्माद्धेतोर्नित्य इति बाधः सत्प्रतिपक्षो वा, अनुमानादनित्य इत्युक्ते प्रत्यक्षान्नित्य इति च बाधः। विशेषविधेः शेषनिषेधफलकत्वमित्यभिमानः। सर्वदोष- देशनाभासा चेयम् ॥ २१ ॥

(१) —'दनैकान्ता'—इति टि०। (क) अर्थापत्तेः प्रमाणान्तःपातित्वेन तया प्रत्यवस्थानं न जातिरपि तु सदुत्तरमेवेत्यत आह—'अर्थापत्त्याभास' इति। अतएवाह वरदराजः—"उक्तविपरीताक्षेपशक्तिरर्थापत्तिः, ततस्तदाभासो लक्ष्यत" इति। आपाद्यापादकयोर्व्याप्तिविरहेऽपि यदि भ्रमात् कश्चिदर्थान्तरं प्रतिपद्यते, तदा तस्य अनर्थापत्तावर्थापत्त्यभिमानात् अर्थापत्त्याभासो भवति। यथा—'नीलो घट' इति वाक्यात् यदि कश्चित् सर्वमन्यदनीलमिति प्रतिपद्यते, तदार्थापत्त्याभासः।

## न्यायभाष्यम्

उभयपक्षसमा चेयमर्थापत्तिः। यदि नित्यसाधर्म्यादस्पर्शत्वादाकाशवच्च नित्यः शब्दः, अर्थादापन्नमनित्यसाधर्म्यात् प्रयत्नानन्तरीयकत्वादनित्य इति। न चेयं विपर्ययमात्रादेकान्तेनार्थापत्तिः। न खलु वै घनस्य (१)ग्राव्णः पतनमित्यर्थादापद्यते—द्रवाणामपां पतनाभाव इति ॥ २२ ॥

# एकधर्मोपपत्ते(२)रविशेषे सर्वाविशेषप्रसङ्गात्(२*)सद्भावोपपत्तेरविशेषसमः(क) ॥ २३ ॥

एको धर्मः प्रयत्नानन्तरीयकत्वं शब्दघटयोरुपपद्यत इत्यविशेषे उभयोरनित्यत्वे,

## न्यायवार्त्तिकम्

सन्निधिविशिष्टाया अनैकान्तिकत्वाभ्युपगमात्—येयं सूत्रेणोपात्ता साऽनैकान्तिकी, नार्थापत्तिमात्रं, यथानुमानं व्यभिचारि यत् तदप्रमाणं नेतरदिति; तथेहापीति ॥ २२ ॥

इति अर्थापत्तिसमप्रकरणम्।

एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः। उदाहरणं भाष्ये। साधर्म्यसमातो न भिद्यते अविशेषसमः। कस्मात्?—साधर्म्यमात्रात् प्रवृत्तेर-

## न्यायवार्त्तिकतात्पर्यटीका

नित्यपक्षस्य हानिरिति। विपर्ययेणापि प्रत्यवस्थानसंभवात्। अनैकान्तिकत्वमाह—उभयपक्षसमा चेयमिति। व्यभिचाराच्चानैकान्तिकत्वमाह—न चेयं विपर्ययमात्रादिति। न हि भोजननिषेधादेवाभोजनविपरीतं सर्वत्र कल्पते। घनत्वं हि ग्राव्णः पतनानुकूलगुरुत्वातिशयसूचनार्थं, न त्वितरेषां पतनं वारयति। वार्त्तिकं सुबोधम् ॥ २२ ॥

एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः ( सू २३ ) ॥ यदि घटसाधर्म्यात्प्रयत्नानन्तरीयकत्वाद् घटेनाविशेषोऽनित्यत्वाख्यः शब्दस्य, सत्त्वात्साधर्म्यात् सर्वेषां सर्वाविशेषप्रसङ्गः, न त्वेवम्; यथा प्रयत्नानन्तरीयकत्वादपि साधर्म्यान्न शब्दघटयोर-

## वृत्तिः

अत्रोत्तरम्—(अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः)। किमुक्तेन अनुक्तं यत्किञ्चिदेवार्थादापद्यते? उक्तोपपादकं वा? आद्ये त्वत्पक्षहानिरप्यापद्यतां, त्वयाऽनुक्तत्वात्। अन्त्ये एतस्या अर्थापत्तेरनैकान्तिकत्वम्, ऐकान्तिकत्वम् एकपक्षसाधकत्वं बलं तन्नास्ति, न हि अनित्य इत्यस्योपपादकं नित्यत्वमिति। न हि विशेषविधिमात्रं शेषनिषेधफलकमपि तु सति तात्पर्ये क्वचित्। न हि नीलो घट इत्युक्ते सर्वमन्यदनीलमिति क्वचित् प्रतिपद्यते ॥ २२ ॥

इति अर्थापत्तिसमप्रकरणम्।

---

(१) 'ग्राव्णां'—इति ग०। (२) —'रविशेषप्रसङ्गात्'—इति टि०। (क) "अविशेषस्तु एकत्वमैकधर्मत्वमिकाकारधर्मवत्त्वं' वे''त्याचार्याः।

## न्यायभाष्यम्

सर्वस्याविशेषः प्रसज्यते। (१)कथम्? सद्भावोपपत्तेः(१*)। एको धर्मः सद्भावः सर्वस्योपपद्यते, सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गात् प्रत्यवस्थानमविशेषसमः ॥ २३ ॥

अस्योत्तरम्—

**क्वचित्तद्धर्मो(२)पपत्तेः क्वचिच्चानुपपत्तेः(२*)प्रतिषेधाभावः ॥२४॥**

यथा साध्यदृष्टान्तयो(३)रेकधर्मस्य प्रयत्नानन्तरीयकत्वस्योपपत्तेरनित्यत्वं धर्मान्तर(४)मविशेषः, नैवं(४*)सर्वभावानां सद्भावोपपत्तिनिमित्तं धर्मान्तरमस्ति, येनाविशेषः स्यात्।

अथ मतमनित्यत्वमेव धर्मान्तरं (५)सद्भावोपपत्तिनिमित्तं भावानां सर्वत्र स्यादिति, एवं खलु वै कल्प्यमाने अनित्याः सर्वे भावाः(६)सद्भावोपपत्तेरिति पक्षः प्राप्नोति। तत्र (७)प्रतिज्ञार्थव्यतिरिक्तमन्यदुदाहरणं(७*)नास्ति, अनुदाहरणश्च हेतुर्नास्तीति। प्रति-

## न्यायवार्त्तिकम्

विशेषादिति चेत्? न, एकसमस्तभेदाद्भेदः—एकसाधर्म्यात् साधर्म्यसमा, समस्तसाधर्म्याद्विशेषसमेति ॥ २३ ॥

क्वचित् तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः। क्वचित् साधर्म्यमुपलभ्यते क्वचिन्नेति सूत्रार्थः। अभ्युपगमाच्च विरोधः—सर्वभावानामनित्यत्वं प्रसञ्जयता अभ्यनुज्ञातं

## न्यायवार्त्तिकतात्पर्यटीका

नित्यत्वमविशेष इति प्रतिषेधोऽविशेषसमः। अविशेष इत्यस्य विवरणमुभयोरनित्यत्व इति। देश्यं वार्त्तिकं—साधर्म्यसमातो न भिद्यत इति। परिहारवार्त्तिकं—नैकसमस्तेति ॥ २३ ॥

अस्य प्रत्यादेशसूत्रम्—

(८)क्वचित्तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः (सू २४)॥ क्वचित्साधर्म्ये प्रयत्नानन्तरीयकत्वादौ सति शब्दादेर्घटादिना सह तद्धर्मस्य घटधर्मस्यानित्यत्वस्योपपत्तेः, क्वचित्साधर्म्ये शब्दस्य भावमात्रेण सह सत्त्वादौ भावमात्रधर्मस्यानुपपत्तेः प्रतिषेधाभाव इति योजना। एतदुक्तं भवति—अविनाभावसंपन्नं साधर्म्यं गमकं न तु साधर्म्यमात्रमिति। सद्भावोपपत्तिनिमित्तमिति सद्भावव्यापकमित्यर्थः। अत्रान्तरे वैनाशिकः सत्ताव्यापकमनित्यत्वं मन्वानो देशयति—अथ मतमनित्यत्वमेव धर्मान्तरमिति। निराकरोति—एवं खलु

(१) अयं भागः—टि० पु० नास्ति। (२) 'क्वचिद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः'—इति ज-ग-ल-भा०। 'क्वचिद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः—इति टि०। (३)—'रेकस्य धर्मस्य'—इति टि०। (४)—'मविशेषेण एवं'—इति ज०। '-मविशेषेण नैवं'—इति ख०। (५) 'सद्भावोपपत्तिरनिमित्तत्वं'—इति टि०। (६) 'सर्वसद्भावो'—इति टि०। (७) 'प्रतिज्ञातार्थातिरिक्तमुदाहरणम्'—इति टि०। (८) 'क्वचित्तद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः'—इति क-ख०। न्यायपरिशिष्टे, तार्किकरक्षायाम्, अन्वीचानयतत्त्वबोधेऽपीदृक् पाठः परिगृहीतः। तथापि टीकाकृद्व्याख्यानदर्शनात् वार्त्तिकादिस्वरसाच्च व्युत्क्रम्य परिगृहीतोऽयं पाठः।

## न्यायभाष्यम्

ध्यैकदेशस्य चोदाहरणत्वमनुपपन्नम्, न हि(१)साध्यमुदाहरणं भवति। (२)सतश्च नित्यानित्यभावात् (३)अनित्यत्वानुपपत्तिः। तस्मात् सद्भावोपपत्तेः सर्वाविशेष प्रसङ्ग इति निरभिधेयमेतद्वाक्यमिति। सर्वभावानां सद्भावोपपत्तेरनित्यत्वमिति ब्रुवताऽनुज्ञातं (४)शब्दस्यानित्यत्वं, तत्रानुपपन्नः(४*) प्रतिषेध इति ॥ २४ ॥

## न्यायवार्त्तिकम्

शब्दस्यानित्यत्वं, व्यर्थं वा(५)सर्वभावग्रहणमिति। उक्तश्च विशेषोऽन्वयव्यतिरेकसम्पन्नो हेतुर्नोत्तर इति ॥ २४ ॥

इति अविशेषसमप्रकरणम्।

## न्यायवार्त्तिकतात्पर्यटीका

वै कल्प्यमान इति। पूर्वपक्षोत्तरपक्षनिर्वाहस्तृतीये प्रपञ्चितः। अपि च—सन्तः केचन प्रमाणावधृतनित्यत्वाः, यथाऽऽकाशदिगात्मपरमाणवः; केचित्प्रमाणविनिश्चितानित्यभावाः, यथा घटादयः; तस्मात्सत्त्वमनैकान्तिकत्वादसाधकमित्याह—सतश्च नित्यानित्यभावादिति। अपि च यत्प्रतिषेधाय प्रसङ्गसाधनं तदेव प्रतिषेध्यं साधयति, न तु निषेधतीत्याह—सर्वभावानां सद्भावोपपत्तेरिति।

वार्तिकं—क्वचित्साधर्म्यमुपलभ्यत इति। व्याप्यतयेति शेषः। अथ शब्दवर्जमुच्यत इति तत्राह—व्यर्थं वा सर्वभावग्रहणम्। उक्तश्च विशेषोऽन्वयव्यतिरेकसंपन्नो हेतुरिति—प्रयत्नानन्तरीयकत्वं, न तु उत्तरः—सद्भावोपपत्तेरित्यन्वयव्यतिरेकसंपन्न इति ॥ २४ ॥

## वृत्तिः

अविशेषसमं लक्षयति—( एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः )।

एकस्य धर्मस्य कृतकत्वादेः शब्दे घटे चोपपत्तेः सत्त्वात् यदि शब्दघटयोरनित्यत्वेनाविशेष उच्यते, तदा सर्वेषामविशेषप्रसङ्गः। कुतः? सद्भावोपपत्तेः, सतः सन्मात्रस्य ये भावा धर्माः सत्त्वप्रमेयत्वादयस्तेषामुपपत्तेः सत्त्वात्। तथा च सर्वेषामभेदे पक्षाद्यविभागः, सर्वेषामेकजातीयत्वेऽवान्तरजात्युच्छेदः, सर्वेषामनित्यत्वे जात्यादिविलय इत्यादि। तथा च सन्मात्रवृत्तिधर्मेणाविशेषापादनमविशेषसमेति फलितम्। अत्र चाविशेषसम इति लक्ष्यनिर्देशः, सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गादिति लक्षणं, शेषं व्युत्पादकम्। प्रतिकूलतर्कदेशनाभासा चेयम्(क) ॥ २३ ॥

(१) 'साध्यैकदेशः उदा'—इति टि०। (२) 'ततश्च'—इति ज-ग०। 'तत्र'—इति टि०। (३) 'सद्भावादनित्य वा'—इति टि०। (४) 'शब्दस्यानित्यत्वान्नानुपपन्नः'—इति टि०। (५) 'सर्वभावग्रहणमिति'—इति क०।
(क) असाधकत्वदेशनाभासेयमित्याचार्याः।

## न्यायभाष्यम्

# उभयकारणोपपत्तेरुपपत्तिसमः ॥ २५ ॥

यद्यनित्यत्वकारणमुपपद्यते शब्दस्येत्यनित्यः(१)शब्दो नित्यत्वकारणमप्युपपद्यते-ऽस्यास्पर्शत्वमिति नित्यत्वमप्युपपद्यते। उभयस्यानित्यत्वस्य नित्यत्वस्य च कारणो-पपत्त्या प्रत्यवस्थानमुपपत्तिसमः ॥ २५ ॥

अस्योत्तरम्—

# उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥ २६ ॥

(२)उभयकारणोपपत्तेरिति ब्रुवता नानित्यत्वकारणोपपत्तेरनित्यत्वं प्रतिषिध्यते, (३)यदि प्रतिषिध्यते नोभयकारणोपपत्तिः(३*)स्यात्। उभयकारणोपपत्तिवचनाद-नित्यत्वकारणोपपत्तिरभ्यनुज्ञायते, अभ्यनुज्ञानादनुपपन्नः प्रतिषेधः।

## न्यायवार्त्तिकम्

उभयकारणोपपत्तेरुपपत्तिसमः। उदाहरणं भाष्ये। उपपत्तिसमा प्रकरणसमातो न भिद्यत इति ?—तत्रापि नित्यानित्यकारणोपपत्तिरिहापीति ? न, नित्यानित्यकारणस्यैकत्रोपपत्तेः—नित्यकारणं चानित्यकारणं चैकत्रोपपद्यत इत्युपपत्तिसमः, नित्यानित्यपक्षाभ्यां प्रत्यवस्थानात् प्रकरणसम इति भेदः ॥ २५ ॥

उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः। विरोधः सूत्रार्थः। (४)नित्यत्वकारणमप्यस्योप-

## न्यायवार्त्तिकतात्पर्यटीका

उभयकारणोपपत्तेरुपपत्तिसमः ( सू २५ ) ॥ यद्यनित्यत्वकारणं प्रयत्नानन्तरीय-कत्वमुपपद्यते, तदस्ति शब्दस्येत्यनित्यः शब्द इति। प्रकरणसमायां जातौ पक्षप्रतिपक्षसाधनयोः समानबलत्वेऽपि प्रतिवादी स्वसाधनात्स्वपक्षसिद्धया वादिसाधनदूषणे प्रवर्त्तते, उपपत्तिसमायां तु स्वसाधनेनैवेति विशेषः ॥ २५ ॥

अस्य प्रत्यादेशसूत्रम्—

उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ( सू २६ ) ॥ वाद्यभिमतस्य साधनस्योपपत्तौ

## वृत्तिः

अत्रोत्तरमाह—( क्वचित्तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः प्रतिषेधाभावः )।

तद्धर्मस्तस्य हेतोः धर्मो व्याप्त्यादिस्तस्य क्वचित् कृतकत्वादावुपपत्तेः सत्त्वात्, क्वचित्सत्त्वादौ अनुपपत्तेः अभावात्, त्वदुक्तस्य प्रतिषेधस्याभावोऽसम्भव इत्यर्थः ॥ २४ ॥

इति अविशेषसमप्रकरणम्।

---

(१) 'शब्दानित्यत्व'—इति टि०। (२) 'प्रतिषेध उभय'—इति टि०। (३) 'यदि प्रतिषिध्येत नैवं कारणोपपत्तिः'—इति टि०। (४) 'नित्यानित्यकारण'—इति क-धृतपाठान्तरम्।

## न्यायभाष्यम्

व्याघातात्प्रतिषेध इति चेत्, समानो व्याघातः। एकस्य नित्यत्वानित्यत्वप्रसङ्गं व्याहतं ब्रुवतोक्तः प्रतिषेध इति चेत्? स्वपक्षपरपक्षयोः समानो व्याघातः, स च नैकतरस्य साधक इति ॥ २६ ॥

## निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ॥ २७ ॥

(१)निर्दिष्टस्य प्रयत्नानन्तरीयकत्वस्यानित्यत्वकारणस्याभावेऽपि(क)वायुनोदनाद्

## न्यायवार्त्तिकम्

पद्यते इति ब्रुवताऽभ्यनुज्ञातम् अनित्यत्वकारणमिति, तथा च विरोधादुत्तरपक्षोत्थानं न युक्तम् ॥२६॥

इति उपपत्तिसमप्रकरणम्।

निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः। उदाहरणं भाष्ये। सर्वसाध्यारोपेणा-

## न्यायवार्त्तिकतात्पर्यटीका

यत्कारणं, तस्य प्रतिवादिनाऽभ्यनुज्ञानादिति भावः। प्रकरणसमप्रत्याख्यानवदस्यापि प्रत्याख्यानं द्रष्टव्यम्। सुगमे भाष्यवार्त्तिके ॥ २६ ॥

निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ( सू २७ )॥ अनित्यत्वकारणस्येति। ज्ञापकस्येत्यर्थः। ननु यद्वृत्तयोगप्राथम्ययोः साधनधर्मो विषयो न तु साध्यधर्मः, स हि तद्वृत्तयोगस्य विषयः; एवं प्रयुज्यते—यो यः प्रयत्नानन्तरीयकः स सर्वोऽनित्यः, अनेन हि प्रयत्नानन्तरीयकत्वमनित्यादन्यतो व्यावर्तितम्, अनित्यत्वं त्वनियतम्। *स यद्य-प्रयत्नानन्तरीयके शब्देऽन्यत्र वा भवेत्, कः प्रयत्नानन्तरीयकत्वस्यानित्यत्वनियमविरोधः? एवं हि स भवेद् यदि नित्योऽपि प्रयत्नानन्तरीयको दृश्येत, न त्वेवमस्ति। तस्मादुपलब्धिसमाया

## वृत्तिः

उपपत्तिसमं लक्षयति—( उभयकारणोपपत्तेरुपपत्तिसमः )।

उभयं पक्षप्रतिपक्षौ, तयोः कारणस्य प्रमाणस्य उपपत्तेः सत्त्वात्। तथा च व्याप्तिम-पुरस्कृत्य यत्किञ्चिद्धर्मेण परपक्षदृष्टान्तेन स्वपक्षसाधनेन प्रत्यवस्थानमुपपत्तिसमः(ख)। यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते,—यथा त्वत्पक्षेऽनित्यत्वे प्रमाणमस्ति, तथा मत्पक्षोऽपि सप्रमाणकः, (ग)त्वत्पक्षमत्पक्षान्यतरत्वात् त्वत्पक्षवत्। तथा च बाधः प्रतिरोधो वा। तद्देशनाभासा चेयम् ॥ २५ ॥

अत्रोत्तरमाह—( उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः )।

अयं त्वदुक्तः प्रतिषेधो न सम्भवति। कुतः? मत्पक्षे उपपत्तिकारणस्य मत्पक्षसाधकप्रमाणस्य

---

(१) 'निर्द्दिष्टप्रयत्नेऽनन्त'—इति ज०। (क) नोदनाख्यसंयोगस्य शब्दाहेतुत्वेऽपि शाखाभङ्गे तस्य हेतुत्वं न विरुध्यते। प्रयोजकत्वं वा पञ्चम्यर्थः। (ख) "अस्मत्पक्षेऽपि किमपि प्रमाणमुपपत्स्यते। त्वत्पक्षवदिति प्राप्तिरुपपत्तिसमो मतः॥"—इति तार्किकरक्षा। (ग) "...वादिप्रतिवादिनोरन्यतरोक्तत्वात्, त्वत्पक्षमत्पक्षयोरन्यतरत्वात्, प्रकृतसन्देहविषयत्वात्, विप्रतिपत्तिविषयत्वाद्वा त्वत्पक्षवत्। तथा च बाधः प्रतिरोधो वा।"—तार्किकरक्षा। * सः—अनित्यत्वाख्यः साध्यधर्मः।

## न्यायभाष्यम्

वृक्षशाखाभङ्गजस्य शब्दस्यानित्यत्वमुपलभ्यते। निर्दिष्टस्य (१)साधनस्याभावेऽपि (२)साध्यधर्मोपलब्ध्या प्रत्यवस्थानमुपलब्धिसमः ॥ २७ ॥

## न्यायवार्त्तिकम्

व्यापकत्वं साधनस्येत्युपलब्धिसमार्थः। सर्वमनित्यं सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वेनाध्यारोप्याव्यापकत्वं हेतोः, न ह्ययं हेतुः सर्वस्मिन्ननित्ये द्व्यणुकादौ विद्यत इति। श्रूयमाण(३)प्रतिज्ञार्थाव्यापकत्वं वा(४)हेतोः। यथाऽनित्यः शब्दः शब्दान्तरोत्पादकत्वादिति, न शब्दान्तरोत्पादकत्वेन सर्वः शब्दो व्याप्यते। न ह्यन्त्यः शब्दः शब्दान्तरं करोति ॥ २७ ॥

## न्यायवार्त्तिकतात्पर्यटीका

उत्थानमेव नास्ति, बीजाभावादित्यत आह वार्त्तिककारः—सर्वसाध्यारोपेणाव्यापकत्वं साधनस्येत्युपलब्धिसमार्थः। यद्यपि वर्णात्मकः शब्दोऽनित्यत्वेन साध्यतया विवक्षितः प्रकरणात्,—'अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटव'दिति, तथाऽपि शब्दमात्रमनेन पक्षीकृतमित्यारोप्य भागासिद्धत्वारोपणं साधनस्येत्युपलब्धिसमार्थः। समारोपमेवोदाहरणान्तरेण दर्शयति—सर्वमनित्यमिति। 'शब्दोऽनित्य' इति प्रतिज्ञायामपि सर्वमनित्यमित्यारोप्येति योजना। भाष्यकारोदाहरणापरितोषश्चोदाहरणान्तरप्रदर्शनबीजम्। यस्त्वनित्यः शब्द इति प्रतिज्ञायां सर्वानित्यत्वारोपो निर्बीज इति न तुष्यति, तं प्रत्याह—श्रूयमाणेति। यद्यप्यनित्यः शब्द इति श्रूयते, तथाऽपि सामर्थ्यादाद्य इति विवक्षितः। शब्दान्तरोत्पादकत्वं सजातीयोत्पादकत्वमिति। एवं च नायोगव्यवच्छेदेन शब्दानित्यत्वं हेतुरव्यापकत्वात्, नाप्यन्ययोगव्यवच्छेदेन, हेत्वन्तरस्य विद्यमानत्वादिति जातिवादिनोऽभिसंधिरिति ॥ २७ ॥

## वृत्तिः

त्वयाऽभ्यनुज्ञानात्, त्वया हि मत्पक्षस्य दृष्टान्तीकरणेन सप्रमाणकत्वमनुज्ञातम्, अतः कथं तत्प्रतिषेधः शक्यते कर्त्तुम्? अनुज्ञातस्यापि प्रतिषेधे स्वपक्ष एव किं न प्रतिषिध्यते ॥२६॥

इति उपपत्तिसमप्रकरणम्।

उपलब्धिसमं लक्षयति—( निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः )।

(क)वादिना निर्दिष्टस्य कारणस्य साधनस्याऽभावेऽपि साध्यस्योपलम्भात् प्रत्यवस्थानमुपलब्धिसम इत्यर्थः। तथा हि पर्वतो वह्निमान् धूमादित्यादिकं वह्न्यवधारणार्थमुच्यते, न च तत् सम्भवति, धूमं विना आलोकादितोऽपि वह्निसिद्धेः। तथा च न तस्य साधकत्वमिति प्रतिकूलतर्कः, न वा धूमाद्वह्निमानेवेत्यवधारणं द्रव्यत्वादेरपि धूमेन साधनात्, न वा पर्वत एव वह्निमानेवेत्यादिकमवधारयितुं शक्यते, महानसादेरपि वह्निमत्त्वात्, अन्यथा दृष्टान्तासिद्धिः स्यात्। एवं वह्निशून्यपर्वतस्यापि सत्त्वाद्बाध इत्यादि। तद्देशनाभासा चेयम् ॥ २७ ॥

(१) 'साधनधर्मकारणस्या'—इति टि०। (२) 'साध्यधर्मस्योप'—इति टि०। (३) 'प्रतिज्ञातार्थ'—इति क-धृतपाठान्तरम्। (४) 'हेतोः'—इति ख० पु० नास्ति। (क) "वादिना निर्दिष्टस्य प्रमित्युपस्य व्यापारवतोऽभावेऽपि साध्यस्योपलम्भात् प्रत्यवस्थानमुपलब्धिसम इति सूत्रार्थ" इत्याचार्याः। (—न्यायपरिशिष्टम्)।

## न्यायभाष्यम्

अस्योत्तरम्—

### कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ॥ २८ ॥

प्रयत्नानन्तरीयकत्वादिति ब्रुवता कारणत उत्पत्तिरभिधीयते, (१)न कार्यस्य कारणनियमः। यदि च कारणान्तराद(२)प्युत्पद्यमानस्य शब्दस्य तदनित्यत्वमुपपद्यते, किमत्र प्रतिषिध्यत इति ॥ २८ ॥

## न्यायवार्त्तिकम्

कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः। अनित्यः शब्द इति ब्रुवता न साध्यान्तराणां कारणान्तरं प्रतिषिध्यते, न साध्यस्य कारणान्तरमिति।

अपरे तु परिहारान्तरं ब्रुवते—यदेव प्रयत्नानन्तरीयकं तदेव तस्मादनित्यमिति। एतत्तु नाविवादात्—यः प्रयत्नानन्तरीयकत्वं प्रतिपद्यते न तं प्रति किञ्चित् साध्यते,

## न्यायवार्त्तिकतात्पर्यटीका

अस्य प्रत्याख्यानसूत्रम्—

कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ( सू २८ )॥ तद्व्याचष्टे—प्रयत्नानन्तरीय-
कत्वादिति ब्रुवतेति। कारणतः प्रयत्नाच्छब्दस्योत्पत्तिनियमो विधीयते वर्णानामनित्यत्वं
साधयितुम्, न तु कार्यस्य कारणनियमः,—प्रयत्नादेव सर्वः शब्दो जायते न तु वायुसंयोगाद्
वृक्षभङ्गादिति नियम उच्यते, येनाव्यापकत्वं हेतोः स्यादिति। (क)सूत्रार्थस्तु—'कारणान्तरादपि'
ज्ञापकान्तरादपि 'तद्धर्मोपपत्तेः' साध्यधर्मोपपत्तेरप्रतिषेध इति।

एतदेव वार्त्तिककारो व्याचष्टे—अनित्यः शब्द इति ब्रुवता, प्रयत्नानन्तरीयकत्वेनेति
शेषः। साध्यान्तराणां शाखाभङ्गजशब्दानां कारणमनित्यत्वज्ञापकं न प्रतिषिध्यते। यद्यपक्षी-
कृतानामपि कारणान्तरादनित्यत्वं भवति, कामं भवत्वित्यर्थः। नापि शब्दस्य साध्यस्यानित्यत्वे
कारणान्तरं प्रत्ययभेदभेदित्वादि प्रतिषिध्यते।

एकदेशिमतमाह—अपरे तु(ख)परिहारं ब्रुवते यदेव प्रयत्नानन्तरीयकमिति। तदेतद्
दूषयति—एतत्तु नाविवादादिति। अयमभिसंधिः—प्रयत्नानन्तरीयकत्वं हि कोष्ठ्यस्य वायोः
क्रियायाः, सा हि प्रयत्नवदात्मसंयोगाज्जायते। वायोः पुनरुरःस्थानादिषु संयोगविभागादयो
न प्रयत्नानन्तरीयकाः, प्रागेव तु शब्दः। यदा चाद्यशब्दस्येयं गतिस्तदा कैव कथा प्रयत्नानन्त-
रीयकत्वेऽन्त्यस्य श्रवणविवरसमवायिनः श्रूयमाणस्य शब्दस्य। तस्माद् यः प्रयत्नानन्तरीयकत्वं
शब्दस्य विना प्रमाणेन प्रतिपद्यते, न तं प्रति किंचित्साध्यते प्रमाणेन। प्रमाणानधीनस्य
प्रतिभासमात्रेण प्रमेयसिद्धेः सर्वत्र सुलभत्वादिति। तदनेनापरितोषबीजमुक्तम्। अभ्युपेत्य

(१) 'तेन'—इति टि०। (२) —'प्युपपद्यमानस्य'—इति ज-ग-ख०। (क) "...सूत्रार्थस्तु—कारणान्तरादपि प्रयोजकान्तरादपि तद्धर्मस्य साध्यादिस्तथादर्शनबलेनोपपत्तेर्न प्रतिरोध इति।" इति परिशिष्टप्रकाशे वर्द्धमानः। (ख) वार्त्तिके 'परिहारान्तर'मित्यक्षरविसंवादः।

### न्यायभाष्यम्

न प्रागुच्चारणाद्विद्यमानस्य (१)शब्दस्यानुपलब्धिः, (२)कस्मात् ? आवरणाद्यनुपलब्धेः। यथा विद्यमानस्योदकादेरर्थस्याऽऽवरणादेरनुपलब्धिः(२*) नैवं शब्दस्याग्रहणकारणेनाऽऽवरणादिनाऽनुपलब्धिः। (३)गृह्येत चैतदस्याग्रहणकारणमुदकादिवत्, न गृह्यते। तस्मादुदकादिविपरीतः शब्दोऽनुपलभ्यमान इति।

## तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ॥ २९ ॥

तेषामावरणादीना(४)मनुपलब्धिर्नोपलभ्यते(४*)। अनुपलम्भान्नास्तीत्यभावोऽस्याः सिध्यति। अभावसिद्धौ हेत्वभावात्तद्विपरीतमस्तित्वमावरणादीनामवधार्यते। तद्विपरीतोपपत्तेर्यत्प्रतिज्ञातं "न प्रागुच्चारणाद्विद्यमानस्य शब्दस्यानुपलब्धिरित्ये"तन्न सिध्यति। सोऽयं हेतु'रावरणाद्यनुपलब्धे'रित्यावरणादिषु चाऽऽवरणाद्यनुपलब्धौ च समयानुपलब्ध्या प्रत्यवस्थितोऽनुपलब्धिसमो भवति ॥ २९ ॥

### न्यायवार्त्तिकम्

यदा तु प्रयत्नानन्तरीयकत्वं वस्तुविशेषणं तदाऽन्यो हेतुर्वक्तव्यः। जातिलक्षणाभावान्नेयं जातिः ? न, अहेतुसामान्याज्जातिः ॥ २८ ॥

इत्युपलब्धिसमप्रकरणम्।

तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः। उदाहरणं भाष्ये। न, उक्तोत्तरत्वात्—द्वितीयाध्याये उक्तोत्तरमेतत् ॥ २९ ॥

### न्यायवार्त्तिकतात्पर्यटीका

शब्दस्य प्रयत्नानन्तरीयकत्वमाह—यदा तु प्रयत्नानन्तरीयकत्वमिति। देशयति—जातीति। परिहरति—नेति ॥ २८ ॥

अनुपलब्धिसमस्य प्रतिषेधस्य लक्षणं दर्शयितुं तत्प्रतिषेध्यं तावदाह भाष्यकारः—न प्रागुच्चारणाद्विद्यमानस्यानुपलब्धिरिति(क)। तस्मादुदकादिवदावरणादिरस्यानुपलम्भकारणं भवतीत्यतआह—गृह्येत चैतदस्याग्रहणकारणमिति। प्रतिषेध्यमुक्त्वा प्रतिषेधस्य जातेर्लक्षणमाह—

तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ( सू २९ )॥ व्याचष्टे—तेषामावरणादीनामनुपलब्धिर्नोपपद्यते। उपलभ्यमानत्वे उपलब्धिरूपतया अनुपलब्धित्वानुपपत्तेः। तथा चानुपलब्धेरनुपलम्भादनुपलब्धिर्नास्तीत्यावरणाद्युपलब्धिसिद्धिरिति। आवरण इवावरणानुपलब्धिरप्यनुपलब्धिसमेत्यर्थः ॥ २९ ॥

(१) 'शब्दस्योपलब्धिरिति'—वि०। (२) इदं वि० पु० नास्ति। (३) 'गृह्यते'—इति ग०। (४) —'मनुपलम्भः'—इति टि०। (क) भाष्ये 'विद्यमानस्य शब्दस्ये'ति विशेषः।

## न्यायभाष्यम्

अस्योत्तरम्—

**अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ ३० ॥**

आवरणा(१)द्यनुपलब्धिर्नास्ति, अनुपलम्भादि(२)त्यहेतुः। कस्मात्? अनुपलम्भात्मकत्वादनुपलब्धेः। उपलम्भाभावमात्रत्वादनुपलब्धेः। यदस्ति तदुपलब्धेर्विषयः, उपलब्ध्या तदस्तीति(३)प्रतिज्ञायते। यन्नास्ति तदनुपलब्धेर्विषयः, (४)अनुपलभ्यमानं नास्तीति (५)प्रतिज्ञायते। सोऽयमावरणाद्यनुपलब्धेः (६)अनुपलम्भ उपलब्ध्यभावेऽनुपलब्धौ(६*) स्वविषये प्रवर्त्तमानो न (७)स्वविषयं प्रतिषेधति।

## न्यायवार्त्तिकतात्पर्यटीका

अस्य प्रत्यादेशसूत्रम्—

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः (सू ३०)॥ आवरणाद्यनुपलब्धिरावरणादीनामभावं गमयति, न त्वात्मनोऽभावमावरणाद्युपलब्धिरूपम्। न ह्यसावनुपलब्धिरप्यात्मनः, येनात्माभावं गमयेत्। उपलब्धिरप्युपलभ्यविषया, नात्मविषया, किं पुनरनुपलब्धिः। तस्मादनुपलब्धिरुपलभ्याभावहेतुः, न हेतुरात्माभावस्य। तथा सति सैव न स्यादिति न स्यादुपलभ्याभावोऽपीत्यावरणं तदुपलब्धिश्च स्यादिति। तदिदमाह भाष्यकारः—अनुपलम्भादित्ययमहेतुरिति, कस्मात्? अनुपलम्भात्मकत्वादनुपलब्धेः।

एतद्व्याचष्टे—उपलम्भाभावमात्रत्वादिति। मात्रग्रहणेन जातिवाद्यभिमतात्माभावरूपतां व्यवच्छिनत्ति। नन्वियमनुपलब्धिर्भवतूपलम्भाभावो मा च भूदुपलभ्यस्य, किमायातमावरणाद्यभावस्येत्यत आह—यदस्ति तदुपलब्धेर्विषयः, उपलब्ध्या तदस्तीति विज्ञायते। न पुनरनुपलब्धेरनुपलम्भात्मतया तत्प्रतिज्ञेयमिति भावः। अनुपलब्धेः प्रज्ञेयमाह—यन्नास्ति (क)सोऽनुपलब्धेरिति। ननु ज्ञायतां किमेतावताऽपीत्यत आह—सोऽयमावरणाद्यनुपलब्धेरनुपलम्भ इति। त्वया हि जातिवादिना आवरणाद्यनुपलब्धेरनुपलम्भेनावरणोपलम्भमावरणं च प्रसञ्जयताऽनुपलम्भस्य स्वविषयालोपेन प्रत्यवस्थेयम्। एवं चेद् वरमस्यावरणतदुपलम्भौ विषयौ एवमनेन भावाभावबुद्धिव्यपदेशव्यवहाराः सकललोकयात्रावाहिनोऽनुकूलिता भवन्ति। तदिदमुक्तं—सोऽयमावरणाद्यनुपलब्धेरनुपलम्भ आवरणोपलम्भनिषेधविषयं प्रमाणमुपलब्ध्यभावेऽनुपलब्धौ स्वविषये प्रवर्त्तमानो न स्वविषयमनुपलब्धिं प्रतिषेधति अपि तूपलब्धिमेव।

(१) —'द्युपलब्धिः'—इति ग०। (२) —'त्ययमहेतुः'—इति टि०। (३) 'प्रज्ञायते'—इति टि०। (४) 'अनुपलभ्या अनुप'—इति टि०। (५) 'प्रज्ञायते'—इति टि०। (६) 'अनुपलम्भाभावोऽनुपलब्धौ'—इति ज-ग०। 'अनुपलम्भोऽनुपलब्धौ'—इति ल०। (७) 'स्वं विषयं'—इति फ-झा-ग०।

(क) "तदनुपलब्धे"रिति भाष्ये अक्षरविसंवादः।

## न्यायभाष्यम्

अप्रतिषिद्धा चाऽऽवरणाद्यनुपलब्धिर्हेतुत्वाय कल्पते। (१)आवरणादीनि तु विद्यमानत्वादुपलब्धेर्विषयाः, तेषामुपलब्ध्या भवितव्यम्। यत्तानि नोपलभ्यन्ते(१*), तदुपलब्धेः स्वविषयप्रतिपादिकाया अभावाद् (२)अनुपलम्भा(३)दनुपलब्धेर्विषयो गम्यते—न सन्त्यावरणादीनि शब्दस्याग्रहण(४)कारणानीति(२*)। अनुपलम्भात्त्वनुपलब्धिः सिध्यति, विषयः स तस्येति ॥ ३० ॥

## न्यायवार्त्तिकतात्पर्यटीका

जातिवादिनस्तु निषेध्येत, तथा च सर्वलोकव्यवहारः समुच्छिद्येतेति भावः। अप्रतिषिद्धा चावरणाद्यनुपलब्धिः आवरणादीनामभावं प्रति हेतुत्वाय कल्पते। ननु च नानुपलम्भमात्रमभावग्रहहेतुः, मा भूच्चन्द्रमसः परभागे हरिणसदसद्भावसंशय इत्यत आह—आवरणादीनि त्विति। (५)उपलभ्यं वोपलब्धिर्वा नानुपलम्भमात्रान्नास्तीति सिध्यति,अपि तु दर्शनयोग्यं सदिति नातिप्रसङ्ग इत्यर्थः। ननूपलब्धेः स्वविषयस्य प्रतिपादिकाया अभावादावरणादयो मा नामोपलभ्यन्ताम्, अभावस्तु तेषां कुतस्त्य इत्यत आह—अनुपलम्भात् प्रतिषेधकात्प्रमाणादनुपलब्धेर्यो विषयः उपलभ्याभावः, स गम्यते—न सन्त्यावरणादीनि शब्दस्याग्रहकारणानीति। तत्किमिदानीं साक्षादेवोपलम्भनिषेधकं प्रमाणमुपलभ्याभावं गमयति ? नेत्याह—अनुपलम्भात्तु उपलब्धिनिषेधकात्प्रमाणादनुपलब्धिरावरणस्य सिध्यति। कस्मादित्यत आह—विषयः स तस्य उपलब्धिनिषेधकस्य प्रमाणस्यानुपलब्धिः, ततश्चावरणाद्यभाव इति द्रष्टव्यम् ॥ ३० ॥

## वृत्तिः

अत्रोत्तरमाह—( कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः )।

कारणान्तरात् साधनान्तरादालोकादितोऽपि तस्य धर्मस्य साध्यस्योपलब्धेस्त्वदुक्तः प्रतिषेधो न सम्भवति। अयमाशयः—न हि वयमवधारणार्थं वह्निमान् धुमादित्यादिकं प्रयुञ्ज्महे, अपि तु सन्दिग्धस्य वह्नेः सिद्ध्यर्थम्। अन्यथा त्वदुक्तमसाधकतासाधनमपि न स्यादसाधकतासाधकान्तरस्यापि सत्त्वात् ॥ २८ ॥

इति उपलब्धिसमप्रकरणम्।

अनुपलब्धिसमं लक्षयति—( तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः )।

यद्यपि चेयं द्वितीयाध्याये दर्शिता दूषिता च, तथाऽप्यनुपलब्धिसमा जातिरेवमिति तत्रानुक्तेरत्र क्रमप्राप्ताऽभिधीयते। तत्राऽयं क्रमः—नैयायिकैस्तावच्छब्दानित्यत्वमेवं

(१) इदं टि-पु० नास्ति। (२) इदं वि-पु० नास्ति। (३) —'दभावोऽनुप'—इति टि०। (४) —'कारणादीनीति'—इति टि०। (५) 'उपलभ्ययोर्वापि'—इति क०।

### न्यायभाष्यम्

## ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ॥३१॥

अहेतुरिति वर्त्तते। शरीरे(१)शरीरे ज्ञानविकल्पानां भावाभावौ संवेदनीयौ। अस्ति मे संशयज्ञानं नास्ति मे संशयज्ञानमिति। एवं प्रत्यक्षानुमानागमस्मृतिज्ञानेषु। सेयमावरणाद्यनुपलब्धिरुपलब्ध्यभावः स्वसंवेद्यः— नास्ति मे शब्दस्याऽऽवरणाद्युपलब्धिरिति, नोपलभ्यन्ते शब्दस्याग्रहणकारणान्यावरणादीनीति। तत्र यदुक्तं तदनुपलब्धेरनुपलम्भादभावसिद्धिरिति, एतन्नोपपद्यते ॥ ३१ ॥

### न्यायवार्त्तिकम्

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः। ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम्। आवरणाद्यसम्भवे (२)सत्त्वाभ्युपगमे च सत्यनुपलब्धेरिति प्रयोगः। एवं च सति न हेत्वन्तरं नानैकान्तिकं विपक्षावृत्तित्वात्। आवरणाद्यसम्भवे सत्त्वाभ्युपगमे विपर्ययस्याव्यभिचारान्नार्थापत्तिसमेति ॥ ३०-३१ ॥

इति अनुपलब्धिसमप्रकरणम्।

### न्यायवार्त्तिकतात्पर्यटीका

न केवलं निषेधविषयप्रमाणगम्यताऽनुपलब्धेरुपपत्तिगम्या, अपि तु सर्वजनप्रत्यात्मवेदनीयेत्याह सूत्रकारः—

ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ( सू ३१ )॥ व्याचष्टे—अहेतुरिति वर्तते। शरीरे शरीर इति। प्रागुच्चारणाच् शब्दस्यानुपलब्धेरसत्त्वे साध्यमानेऽनैकान्तिकत्वं स्यात्, यदि तु पश्चाद्विशिष्येत—'आवरणाद्यसंभवे सती'ति, ततो हेत्वन्तरं नाम निग्रहस्थानं स्यादित्याशङ्क्य वार्तिककार आह—आवरणाद्यसंभवे सत्त्वाभ्युपगमे च सत्यनुपलब्धेरिति प्रयोगः। सत्त्वाभ्युपगमे चेत्यस्योपादानप्रयोजनमाह—आवरणाद्यसंभवे सत्त्वाभ्युपगमे विपर्ययस्याव्यभिचारान्नार्थापत्तिसमः। अयमर्थः—यद्यावरणाद्यसंभवे सत्यनुपलब्धेरित्युच्यमाने कश्चिदर्थापत्तिसमया जात्या प्रत्यवतिष्ठते—(३)आवरणाद्यसंभवे सत्यनुपलब्धेरित्युच्यमाने अर्थादापतितमावरणादिसंभवे सत्युपलब्धेरिति। यदा तु सत्त्वाद्यभ्युपगम इति(४)विषयविपर्ययः सूच्यते, तदा आवरणाद्यसंभवे सत्यनुपलब्धेरसत्त्वमित्यस्य विपर्यय एवं प्रयोक्तव्यः—सत्त्वोपगमे चावरणाद्यसंभवे सत्युपलभ्येतेति। अस्य विपर्ययस्याव्यभिचारान्नार्थापत्तिसम इत्यर्थः ॥ ३१ ॥

### वृत्तिः

यदि शब्दो नित्यः स्यादुच्चारणात् प्राक् कुतो नोपलभ्यते ? न हि घटाद्यावरणकुड्यादिवच्छब्दस्याऽऽवरणमस्ति, तदनुपलब्धेरिति। तत्रैवं जातिवादी प्रत्यवतिष्ठते—साध्यते,—

(१) 'शरीरिणां'—इति ज-ग-ख-भा०। (२) —'ऽसत्त्वाभ्युपगमे'—इति ख०। (३) 'आवरणासम्भवे'—इति क०। (४) 'विपर्ययः'—इति क०।

## न्यायभाष्यम्

# साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥ ३२ ॥

अनित्येन घटेन साधर्म्यादनित्यः शब्द इति ब्रुवतोऽस्ति घटेनानित्येन सर्वभावानां साधर्म्यमिति सर्वस्यानित्यत्वमनिष्टं (१)सम्पद्यते। सोऽयमनित्यत्वेन प्रत्यवस्थानादनित्यसम इति ॥ ३२ ॥

## न्यायवार्त्तिकम्

साधर्म्यात् तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः। सर्वमनित्यं प्राप्नोतीत्युदाहरणं भाष्ये। अविशेषसमातोऽनित्यसमा न भिद्यते, तत्रापि सर्वाविशेष इहापीति? भिद्यते,—तत्र सर्वाविशेष इह सर्वानित्यत्वमिति(क) ॥ ३२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ( सू ३२ )॥ अस्ति घटेनानित्येन सर्वभावानां सत्त्वं साधर्म्यमिति।

## वृत्तिः

यद्यावरणानुपलब्धेरावरणाभावः सिध्यति, तदाऽऽवरणानुपलब्धेरप्यनुपलम्भादावरणानुपलब्धेरप्यभावः सिध्येत्। तथा च (२)अनुपलब्धिप्रमाणक आवरणाभावो न स्यादपि त्वावरणोपपत्तिरेव स्यादिति शब्दनित्यत्वे नोक्तं बाधकं युक्तम्।

नन्वनुपलब्धेरनुपलब्ध्यन्तरानपेक्षणात् कथमेवमिति चेत्? इत्थम्। अनुपलब्धेरनुपलब्ध्यन्तरानपेक्षणे स्वयमेव स्वस्मिन्ननुपलब्धिरूपेति वाच्यम्, तथा च तयैवानुपलब्ध्याऽनुपलब्धत्वसम्भवात्तदभावसिद्धेः, स्वात्मन्यनुपलब्धिरूपत्वाभावेऽनुपलब्धित्वमेव न स्यात्। अनुपलब्धेरनुपलब्ध्यन्तरापेक्षणेऽनवस्था स्पष्टैव। इत्थं चैवंरूपेण प्रत्यवस्थानमनुपलब्धिसम इत्यर्थः। प्रतिकूलतर्कदेशनाभासा चेयम् ॥ २९ ॥

अत्रोत्तरमाह—( अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः )।

अनुपलब्धिः स्वात्मन्यनुपलब्धिरिति कोऽर्थः? स्वयमनुलब्धिरूपेति चेत्? भवत्येव। स्वविषयिण्यनुपलब्धिरिति चेत्? नेदं प्रसक्तम्, अनुपलब्धेरनुलम्भात्मकत्वात् उपलम्भाभावात्मकत्वात्, अभावस्य च निर्विषयकत्वात्। स्वात्मन्यनुपलब्धित्वाभावेऽनुपलब्धित्वमेव कथमस्या इति चेत्? कतमो विरोधः? न हि घटः स्वविषयो न भवतीति नायं घटः। आवरणाभावः कथमनुपलब्धिविषय इति चेत्? क एवमाह? किं त्वनुपलब्धिसहकृतेन्द्रियग्राह्यत्वादनुपलब्धिग्राह्य इत्युपचर्यते। अतस्तदनुपलब्धेरनुपलम्भादित्यादिकमहेतुः। अन्यथा त्वत्साधनमपि दोषानुपलब्धेरनुपलम्भात् सदोषमेव स्यादिति ॥ ३०॥

(१) 'प्रसज्यते'—इति टि०। (२) 'आवरणानुपलब्धि'—इति भ०। (क) सर्वाविशेषे सर्वाभावापत्तेरविशेषसमापादनात्, इह तु विपक्षस्य सपक्षत्वापादनाद् विशेषः। —इत्युदयनः।

## न्यायभाष्यम्

अस्योत्तरम्—

### साधर्म्यादसिद्धेः(१)प्रतिषेधासिद्धिः(२)प्रतिषेध्यसाधर्म्यात् ॥३३॥

प्रतिज्ञाद्यवयवयुक्तं वाक्यं(३)पक्षनिवर्तकं प्रतिपक्षलक्षणं प्रतिषेधः। तस्य पक्षेण प्रतिषेध्येन(४)साधर्म्यं प्रतिज्ञादियोगः। तद्व यद्यनित्यसाधर्म्या(५)दनित्यत्वस्यासिद्धिः, साधर्म्यादसिद्धेः प्रतिषेधस्याप्यसिद्धिः, (६)प्रतिषेध्येन साधर्म्यादिति ॥ ३३ ॥

### दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथा(७)भावान्नाविशेषः ॥ ३४ ॥

दृष्टान्ते यः खलु धर्मः साध्यसाधनभावेन प्रज्ञायते, स हेतुत्वेनाभिधीयते। स

## न्यायवार्त्तिकम्

साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात्(८)।

दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात् तस्य चोभयथाभावान्नाविशेषः। प्रतिषेध्येन पक्षेण प्रतिषेधस्य प्रतिज्ञादियोगः सामान्यम्, तद्व यदि (वादि)प्रतिषेध्यस्यानित्यत्वस्यासिद्धिर्घटादिसाधर्म्यात्,—ननु प्रतिषेधस्याप्यसिद्धिः, प्रतिषेध्येन प्रतिज्ञादियोगसामान्यादिति। नेयं साधर्म्यमात्रात् स्थापना, अपि तु दृष्टान्ते विशिष्टमन्वयव्यतिरेकिणं धर्म-

## न्यायवार्त्तिकतात्पर्यटीका

अस्य प्रत्याख्यानसूत्रम्—

साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्याच्च(क) ( सू ३३ ) ॥

तदिदं जातिवादिना साम्यमापाद्य परमार्थप्रतिषेधमाह—

दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथा

## वृत्तिः

नन्वनुपलब्धेः स्वस्मिन्ननुपलब्धित्वाभावेऽनुपलब्धिरपि केन सिध्येदत आह—( ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् )।

अध्यात्मम् आत्मन्यधि, ज्ञानविकल्पानां ज्ञानविशेषाणां भावाभावयोर्मनसा संवेदनात्, 'घटं साक्षात्करोमि', 'न साक्षात्करोमि', 'वह्निमनुमिनोमि', 'नानुमिनोमी'त्येवं ज्ञानविशेषतदभावानां मनसैव सुग्रहत्वादिति भावः ॥ ३१ ॥

इति अनुपलब्धिसमप्रकरणम्।

---

(१) 'प्रतिषिध्यसिद्धिः'—इति ग०। (२) 'प्रतिषेध्यसाधर्म्याच्च'—इति ज-ग-ख०। (३) 'पक्षनिर्वर्तकम्'—इति ज-ग-ख०। (४) 'सामर्थ्यं'—इति टि०। (५)—'दनित्यस्यासि'—इति टि०। —'दनित्यस्य सि'—इति वि०। (६) 'प्रतिषेधो न'—इति टि०। (७) 'भावान्न विशेषः'—इति टि०। (८) —'सामर्थ्या'दिति क-ख०। क-पुस्तकगतपाठान्तरं गृहीतम्। (क) अत्र 'च'कारोऽधिकः, टीकायां सूत्रस्यास्य व्याख्यानं नोपलभ्यते।

## न्यायभाष्यम्

चोभयथा भवति,—केनचित्समानः, कुतश्चिद्विशिष्टः। सामान्यात्साधर्म्यं विशेषाच्च वैधर्म्यम्। एवं साधर्म्यविशेषो हेतुः, नाविशेषेण साधर्म्यमात्रं वैधर्म्यमात्रं वा। (१)साधर्म्यमात्रं वैधर्म्यमात्रं चाऽऽश्रित्य भवानाह—"साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसम"इति, एतदयुक्तमिति। अविशेषसमप्रतिषेधे च यदुक्तं तदपि वेदितव्यम्॥ ३४॥

## न्यायवार्त्तिकम्

मुपलभ्य तत्सामर्थ्यात्। न च प्रतिपक्षस्यैवंभूतो धर्म उपपद्यते, तस्मात् प्रतिषेधो नोपपद्यते इति। उक्तं चात्र "क्वचित् तद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभाव" इति। यच्चाविशेषसम उत्तरं तदिहापि द्रष्टव्यम्। नासाधनादिति चेत्—अथ मन्यसे न मया सर्वस्यानित्यत्वप्रसङ्गेन सर्वस्यानित्यत्वं साध्यते, अपि त्वेवं ब्रुवाणस्य सर्वस्यानित्यत्वं प्राप्नोतीति प्रसङ्गः क्रियते? न, विशेषहेतूपपत्तेः—न मया साध्यसाधर्म्यमात्रेण साधनमुच्यते इत्यतो न सर्वानित्यत्वप्रसङ्गः। सर्वानित्यत्वसाधने प्रमाणाभावाच्च—न सर्वानित्यत्वप्रसाधकं प्रमाणमस्तीति। अथ सर्वमनित्यं सत्त्वादिति साधयेत्? तस्यापि नान्वयो न व्यतिरेकः॥३२-३४॥

इति अनित्यसमप्रकरणम्।

## न्यायवार्त्तिकतात्पर्यटीका

भावाच्चाविशेषः (सू ३४)॥ साधर्म्यमात्रं चाश्रित्य साध्याविनाभावरहितमिति। देश्यवार्त्तिकम्—(क)अविशेषसमात इति। परिहरति—भिद्यत इति। यच्चाविशेषसम उत्तरमिति। सर्वानित्यत्वं हि प्रसञ्जयता न शब्दानित्यत्वं निषिद्धं भवतीति तत्रोक्तमित्यर्थः। अत्र शङ्कते—नासाधनादिति। परिहरति—न, विशेषहेतूपपत्तेरिति। सुगममन्यत्॥३२-३४॥

## वृत्तिः

अनित्यसमं लक्षयति—(साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः)।

यदि दृष्टान्तघटसाधर्म्यात् कृतकत्वात् तेन सह तुल्यधर्मतोपपद्यते इत्यतः शब्देऽनित्यत्वं साध्यते, तदा सर्वस्यैवानित्यत्वं स्यात्, सत्त्वादिरूपसाधर्म्यसम्भवात्। न चेदमर्थान्तरग्रस्तमिति वाच्यम्, सर्वस्यानित्यत्वे व्यतिरेकाग्रहादनुमानदूषणे तात्पर्यात्; परस्यान्वयव्यतिरेकिण एवानुमानत्वादित्याशयः। तथा च व्याप्तिमपुरस्कृत्य यत्किञ्चिद्दृष्टान्तसाधर्म्येण सर्वस्य(ख)साध्यवत्त्वापादनमनित्यसमा। साध्यपदादविशेषसमातो व्यवच्छेदः, तत्र सर्वाविशेष एवापाद्यते न तु सर्वस्य साध्यवत्त्वम्।

(१) इदं टि-पु० नास्ति। (क) इदं ३२शसूत्रीयं वार्त्तिकम्, टीकाकृता एतत्पर्यन्तं भाष्यं व्याख्याय वार्त्तिकव्याख्यानमारभ्यते। (ख) साध्यवत्त्वापादनमिति। अतएवाचार्याः—"अन्वर्थसंज्ञा तु साध्यधर्मसमीती"त्याहुः।

## न्यायभाष्यम्

### नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्न्नित्यसमः ॥ ३५ ॥

अनित्यः शब्द (१)इति प्रतिज्ञायते। तदनित्यत्वं किं शब्दे नित्यमथानित्यम्? यदि तावत्सर्वदा भवति? धर्मस्य सदा भावाद्धर्मिणोऽपि सदा भाव इति नित्यः शब्द इति(१*)। अथ न सर्वदा भवति? अनित्यत्वस्याभावान्नित्यः शब्दः। एवं नित्यत्वेन प्रत्यवस्थानान्नित्यसमः ॥ ३५ ॥

## न्यायवार्त्तिकम्

नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः। अनित्यः शब्द इत्येतस्यां प्रतिज्ञायां प्रतिज्ञादिदोषोद्भावनद्वारिका जातिः—अनित्यः शब्द इत्यभिदधान एव भवान् शब्दस्य नित्यत्वं प्रतिजानीते। कथमिति? यदनित्यत्वं तत् किं शब्दे नित्यमस्ति उत कदाचिद्भवतीति? यदि नित्यं (क)धर्मनित्यत्वाद्धर्मिणोऽपि नित्यत्वम्। अथानित्यमनित्यत्वस्याभावान्नित्यः शब्द इति ॥ ३५ ॥

## न्यायवार्त्तिकतात्पर्यटीका

नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ( सू ३५ )॥ धर्मस्य सर्वदा भावाद्धर्मिणोऽपि सर्वदा भावः। न ह्यस्ति संभवः—(ख)सामान्यसमवायातिरिक्तधर्मा नित्याः, धर्मी चानित्य इति ॥ ३५ ॥

## वृत्तिः

यत्तु अनित्यत्वेन समाऽनित्यसमेति भावप्रधानो निर्देशस्तथा च अन्वर्थलब्धमेव लक्षणमिति, तन्न ; वह्निमान् धूमादित्यादौ महानससाधर्म्यात् सत्त्वात् सर्वस्य वह्निमत्त्वं स्यादित्यस्या जात्यन्तरत्वापत्तेः।

आचार्यास्तु—साधर्म्यं वैधर्म्यस्याप्युपलक्षकम्, यथाऽऽकाशवैधर्म्यात् कृतकत्वाच्छब्दोऽनित्यस्तथाऽऽकाशवैधर्म्यादाकाशभिन्नत्वादितः सर्वमेवानित्यं स्याद्, इत्थं च लक्षणे यत्किञ्चिद्धर्मेणेत्येव वाच्यम्, इत्याहुः(ग)।

अत्र च वैधर्म्यस्य विपक्षावृत्तित्वान्न सर्वस्य साध्यवत्त्वापादनं किं त्वात्मादीनामप्यनित्यत्वं स्यादिति, तत्र चार्थान्तरमित्यवधेयम्। प्रतिकूलतर्कदेशनाभासा चेयम् ॥ ३२ ॥

अत्रोत्तरमाह—( साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात्* )।

यदि यत्किञ्चित्साधर्म्यात् सर्वस्य साध्यवत्त्वमापादयतस्तव साधर्म्यस्यासाधकत्वमभि-

---

(१) इदं टि-पु० नास्ति। (क) "अथानित्यता नित्यैव, तथापि धर्मस्य नित्यत्वात् तस्य च निराश्रयस्यानुपपत्तेः तदाश्रयभूतः शब्दोऽपि नित्यो भवेत्।" —इति न्यायकलिकायां ( पृ०२० ) जयन्तभट्टपादाः। (ख) घटत्वादेर्नित्यत्वेऽपि घटादिरूपो धर्मी अनित्यः सम्भवत्येवेति मनसिकृत्याह 'सामान्यसमवायातिरिक्ते'ति। (ग) न्यायपरिशिष्टं ( ६२पृ० ) द्रष्टव्यम्। * अत्रापि 'च'-कारोऽधिकः क्वचिद् दृश्यते। स च वृत्तिकृदसम्मत इति मत्या परित्यक्तः।

## न्यायभाष्यम्

अस्योत्तरम्—

**प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः ॥ ३६ ॥**

प्रतिषेध्ये शब्दे नित्यमनित्यत्वस्य भावादित्युच्यमानेऽनुज्ञातं शब्दस्यानित्यत्वम्, (१)अनित्यत्वोपपत्तेश्च 'नानित्यः शब्द' इति प्रतिषेधो नोपपद्यते। अथ नाभ्युपगम्यते, नित्यमनित्यत्वस्य भावादिति हेतुर्न भवतीति हेत्वभावात्प्रतिषेधानुपपत्तिरिति।

## न्यायवार्त्तिकम्

प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः। प्रतिषेध्ये नित्यमनित्यत्वमिति ब्रुवताऽभ्यनुज्ञातमनित्यत्वम्। अभ्यनुज्ञानाच्चासमर्थः प्रतिषेध इति। अथ नाभ्यनुज्ञायते ? नित्यमनित्यभावान्नित्यः शब्द इति हेतुर्नोपपद्यते, हेत्वनुपपत्तेरनर्थकः

## न्यायवार्त्तिकतात्पर्यटीका

अस्य प्रत्यादेशसूत्रम्—

प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः ( सू ३६ )॥ नित्यमनित्यभावादिति हेतोरभ्युपगमेऽनभ्युपगमे च दोष इत्यर्थः। उत्पन्नस्य निरोधाद-

## वृत्तिः

मतं, तदा त्वत्कृतप्रतिषेधस्याऽप्यसिद्धिः, तस्यापि प्रतिषेध्यसाधर्म्येण प्रवृत्तत्वात्। त्वया ह्येवं साध्यते—कृतकत्वं न साधकं दृष्टान्तसाधर्म्यरूपत्वात्, सत्त्वादिवत्, अयं च त्वदीयो हेतुः त्वत्प्रतिषेध्येन मदीयहेतुना कृतकत्वेन सत्त्वेन च सह साधर्म्यरूपस्तथा चायमपि न साधकः स्यात् ॥ ३३ ॥

यदि च साधर्म्यमात्रं न साधकमपि तु व्याप्तिसहितमित्यभिमतं, तदा कृतकत्वे तदस्ति, न तु सत्त्वे इति विशेष इत्याह—( दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात् तस्य चोभयथाभावान्नाविशेषः )।

साध्यसाधनभावेन व्याप्यव्यापकभावेन दृष्टान्ते प्रज्ञातस्य प्रमितस्य धर्मस्य कृतकत्वस्य हेतुत्वात् साधकत्वात् तस्य हेतुत्वस्य उभयथा अन्वयेन व्यतिरेकेण च भावात् मदीयहेतौ सत्त्वात्, 'सत्त्वादिनाऽविशेष' इति यदुक्तं तन्न भवति ॥ ३४ ॥

इति अनित्यसमप्रकरणम्।

नित्यसमं लक्षयति—( नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः )। अनित्यस्य भावः अनित्यत्वं, तस्य नित्यं सर्वकालं स्वीकारे अनित्ये शब्दे नित्यत्वं

(१) 'अनित्येऽनित्यत्वोप'—इति ख०।

## न्यायभाष्यम्

उत्पन्नस्य निरोधादभावः शब्दस्यानित्यत्वं, तत्र परिप्रश्नानुपपत्तिः। (१)योऽयं परिप्रश्नः—(२)तदनित्यत्वं किं शब्दे सर्वदा भवति अथ (३)नेति, अयमनुपपन्नः। कस्मात्? उत्पन्नस्य यो निरोधादभावः शब्दस्य तदनित्यत्वम्(४); (५)एवं च सत्यधिकरणाधेयविभागो व्याघातान्नास्तीति। नित्यानित्यत्वविरोधाच्च। नित्यत्वमनित्यत्वं च

## न्यायवार्त्तिकम्

प्रतिषेधः। प्रश्नानुपपत्तिश्च; पृथग्धर्मत्वेनानित्यत्वस्यानभ्युपगमात्। अपि चानात्यन्तिकसत्तायोगोऽनित्यत्वमित्युक्ते न युक्तः प्रश्नः—किमयमत्यन्तं भवति उत नात्यन्तमिति। आत्यन्तिका-

## न्यायवार्त्तिकतात्पर्यटीका

भावः शब्दस्यानित्यत्वम्। तत्र च परिप्रश्नानुपपत्तिः। यदि(६)हि निरोधकादभावोऽनित्यत्वं तथाऽपि प्रश्नानुपपत्तिः। अथाप्यस्मन्मते समवायः, तथाऽपि तदनुपपत्तिः। अनित्यत्वं हि शब्दस्यापरान्तावच्छिन्नसत्तासमवायः। न चासौ शब्दाधेयस्तस्य स्वतन्त्रत्वादेवेत्यर्थः।

वार्त्तिकम्—पृथग्धर्मत्वेनानित्यत्वस्यानभ्युपगमादिति। अनात्यन्तिकसत्तासमवायो ह्यनित्यता, न चासौ समवायात्पृथग्धर्मो न च समवायोऽपि धर्मोऽनाश्रितत्वात्, पारतन्त्र्येण तु निरूपणात् कथंचिद्धर्मीत्युच्यत इति। अपि चानात्यन्तिकसत्तायोगोऽनित्यतेत्युक्ते न युक्तः प्रश्न इति। न हि घटमानयेति प्रेषितः परिवृत्य पृच्छति—किं घट आनेतव्य उत पट इति,

## वृत्तिः

स्यादित्यापादनं नित्यसमा(क)। अयमाशयः—अनित्यत्वस्य नित्यत्वास्वीकारेऽनित्यत्वाभावदशायां तस्यानित्यत्वं न स्यात्—तस्यापि नित्यत्वापत्तिः। न हि दण्डाभावदशायां दण्डीत्युच्यते। अतोऽनित्यत्वं नित्यमेवास्तीत्यभ्युपगन्तव्यम्; तथा च शब्दस्यापि नित्यत्वापत्तिः। तेन बाधः सत्प्रतिपक्षो वा, तद्देशनाभासा चेयम्।

एवमनित्यत्वं यदि नित्यं? कथं शब्दस्यानित्यतां कुर्यात्? न हि रक्तं महारजनं पटस्य नीलतां सम्पादयति। अथानित्यम्? तदा तदभावदशायामनित्यत्वं न स्यादित्यादिकमूह्यम्। एतदनुसारेण लक्षणमपि कार्यम्, इत्याचार्याः(७)।

वयं तु—अनित्यस्य भावो धर्मस्तस्य नित्यमभ्युपगमेऽनित्यत्वेनाभ्युपगतस्य नित्यत्वं स्यात्, यथा—क्षितिः सकर्तृकेत्यत्र अनित्यक्षितेर्धर्मः सकर्तृकत्वं त्वया क्षितौ नित्यमुपेयते न वा, न चेत्? तदा साध्याभावादंशतो बाधः, अथ क्षितौ नित्यमेव सकर्तृकत्वम् (८)उपेयते? तदा क्षितेर्नित्यत्वं स्यादिति(८*) सकर्तृकत्वं विरुद्धम्। तद्देशनाभासा चेयमिति ब्रूमः॥ ३५ ॥

---

(१) —'सोऽयं प्रश्नः'—इति ज-ग-ल-भा-फ०। टि-पु॰पाठो गृहीतः। (२) 'तदा नित्यत्वं'—इति ज० वि०। (३) 'नैत्यनुपपन्नः'—इति ज-ग-ल-भा-फ०। (४) 'इति' इत्यधिकं—टि०। (५) 'एव'—इति टि०। (६) 'हि' इति नास्ति क०। (क) "विवक्षितधर्मस्य तदतद्रूपताविकल्पानुपपत्त्या धर्मिणस्तद्विशिष्टत्वखण्डनं नित्यसमा। इयञ्च संज्ञा...गौणी...अन्वर्था तूपरञ्जकधर्मसमेति।"—न्यायपरिशिष्टम्। (७) न्यायपरिशिष्टं (६६-६७पृ०) द्रष्टव्यम्। (८) अयमंशः भ-पु० नास्ति।

## न्यायभाष्यम्

एकस्य धर्मिणो धर्माविति विरुध्येते, न सम्भवतः। तत्र यदुक्तं—नित्यमनित्यत्वस्य भावान्नित्य (१)एव, तदवर्तमानार्थमुक्तमिति(१*) ॥ ३६ ॥

### प्रयत्नकार्यानेकत्वात्कार्यसमः ॥ ३७ ॥

प्रयत्नानन्तरीयकत्वादनित्यः शब्द इति। यस्य प्रयत्नानन्तरमात्मलाभः तत्खल्वभूत्वा भवति, यथा घटादिकार्यम्; अनित्यमिति च भूत्वा न भवतीत्येतद्विज्ञायते।

## न्यायवार्त्तिकम्

नात्यन्तिकभावयोगश्चैकस्य न युक्तः। अनित्यता नित्येति ब्रुवता एकस्यात्यन्तिकसत्तायोगोऽनात्यन्तिकयोगश्चाभ्यनुज्ञायते, स चायं विरोधान्न युक्त इति। प्रतिषेध्यदोषोद्भावनाद् युक्त इति चेत्—अथ मन्यसे न मयैकस्य नित्यत्वमनित्यत्वं चाभ्युपगम्यते, अपि त्वनित्यः शब्द इति ब्रुवाणस्य भवतः स एव दोष इति? न, विकल्पानुपपत्तेः—नायं पक्षदोषो न साधनदोषः, पक्षदोषस्तावदयं न भवति, पक्षस्य तादवस्थ्यात्; न साधनस्य, प्रतिज्ञादिदोषाणामनुद्भावनात्, विरोधस्य चोक्तोत्तरत्वादिति ॥ ३६ ॥

इति नित्यसमप्रकरणम्।

प्रयत्नकार्यानेकत्वात् कार्यसमः। अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते जातिः कार्यसमा प्रयुज्यते—(क)प्रयत्नकार्यमनेकधा दृष्टमिति,—किञ्चित् प्रयत्नानन्तरं व्यज्यते, किञ्चित् प्रयत्नानन्तरमुत्पद्यते, प्रयत्नानन्तरमुपलब्धेर्हेतुत्वाध्यारोपेणानैकान्तिकदेशनात् कार्यसमः। 'कार्यः

## न्यायवार्त्तिकतात्पर्यटीका

तादृशमेतदित्यर्थः। अपि वानित्यता नित्याऽनित्या वेति विकल्पो नावतरति, विरोधादित्यत आह—आत्यन्तिकानात्यन्तिकभावयोगश्चैकस्येति। शङ्कते—प्रतिषेध्येति। एवमभ्युपगच्छतोऽयं दोष इत्येतत्परमेतत्, न तु स्वपक्षोपवर्णनपरमेतदिति शङ्कार्थः। निराकरोति—न, विकल्पानुपपत्तेरिति। विरोधस्य चोक्तोत्तरत्वादिति। परिप्रश्नानुपपत्तेरित्युत्तरं विरोधस्योक्तमित्यर्थः ॥ ३६ ॥

प्रयत्नकार्यानेकत्वात्कार्यसमः (सू ३७)॥ उदाहरणपूर्वकमस्यार्थं व्याचष्टे—प्रयत्नानन्तरीयकत्वादनित्यः शब्द इति। कार्यत्वानित्यत्वे च परस्परासंकीर्णे प्रथम एवाध्याये

(१) 'इति एतद्वियमा(ना)र्थमयुक्तमिति'—इति टि०। (क) "प्रयत्नकार्यस्य द्वैरूप्यं दृष्टम्—किञ्चिदसदेव प्रयत्नेन निर्वर्त्यते, यथा घटादि; किञ्चित् सदेवावरणव्यपनयनादिना प्रयत्नेनाभिव्यज्यते, यथा मृदन्तरितमुदकादि।" —न्यायकलिका (२१५०)।

## न्यायभाष्यम्

एवमवस्थिते प्रयत्नकार्यानेकत्वादिति प्रतिषेध उच्यते। प्रयत्नानन्तरमात्मलाभश्च दृष्टो घटादीनाम्, व्यवधानापोहाच्चाभिव्यक्तिर्व्यवहितानाम्। तत्किं प्रयत्नानन्तरमात्मलाभः शब्दस्याहोऽभिव्यक्तिरिति विशेषो नास्ति। कार्याविशेषेण प्रत्यवस्थानं कार्यसमः ॥३७॥

## न्यायवार्त्तिकम्

शब्दः प्रयत्नानन्तरमुपलब्धे'रिति हेतुमनैकान्तिकं चोदयति। प्रयत्नानन्तरमुपलभ्यमानं कार्यमकार्यं च दृष्टमिति। अथ प्रयत्नानन्तरं जन्म हेत्वर्थः, तथाप्यसिद्धदेशनेति ॥ ३७ ॥

## न्यायवार्त्तिकतात्पर्यटीका

दर्शिते। उदाहृत्य जातिमवतारयति—एवमवस्थिते प्रयत्नकार्यानेकत्वादिति प्रतिषेध उच्यत इति। प्रयत्नानन्तरीयकत्वं—प्रयत्नानन्तरोत्पादो वा स्यात्, प्रयत्नानन्तरोपलम्भो वा। न तावत्पूर्वः कल्पोऽसिद्धत्वात्। तस्मात्प्रयत्नानन्तरोपलम्भ आस्थेयः। तत्र कार्यसमं प्रतिषेधमाह—प्रयत्नानन्तरम् उपलभ्यमानानां प्रयत्नानन्तरम् आत्मलाभश्च दृष्टो यथा घटादीनां, व्यवधानापोहाच्चाभिव्यक्तिर्व्यवहितानां मूलककीलकादीनम्। तत्किं प्रयत्नानन्तरमात्मलाभः शब्दस्याहोस्विदभिव्यक्तिरिति विशेषो नास्ति। तदेवं कार्याविशेषेण प्रत्यवस्थानं कार्यसमः।

(क)येन तु कार्यसमा जातिरन्यथैवोक्ता, तद् यथा—अनित्यः शब्दः कृतकत्वाद् घटवदित्युक्ते अन्यद् मृत्पिण्डादिकार्यत्वं घटस्य, अन्यच्च विवक्षाप्रयत्नवायुप्रेरणाभिघातकार्यत्वं शब्दस्य; तस्माच्छब्दकृतकत्वस्य घटादिकृतकत्वाद्भेदान्न साधनं कृतकत्वमनित्यत्वस्येति। सेयं कार्यान्यत्वेन प्रत्यवस्थानात्कार्यसमेति। तदाह—

'कार्यत्वान्यत्वलेशेन यत्साध्यासिद्धिदर्शनम्।

तत्कार्यसम'मिति भदन्तेनोक्तम्। कीर्तिरप्याह—

साध्येनानुगमात्कार्यसामान्येनापि साधने।
संबन्धिभेदाद्भेदोक्तिर्दोषः कार्यसमो मतः ॥ इति—(ख)

तदनेन यदीश्वरसाधननिराकरणायोक्तम्—'तनुगिरिसागरादीनामन्यत्कार्यत्वम्, अन्यच्च प्रासादाट्टालगोपुरादीना'मिति, तदपि जात्युत्तरमेवेत्युक्तं भवति। न च प्रत्यक्षदृश्यमानं बुद्धिमदन्वयव्यतिरेकानुविधानं सौधादीनामिव तनुभुवनादीनां नास्तीत्येतावता भेदेन कार्यभेदे शब्दमात्राभेद इति साम्प्रतम्, अभूत्वा भावलक्षणस्य कृतकत्वस्य संस्थानवत्त्वस्य वा वस्तुन एवाभेदात्।

तस्मादेतदप्ययुक्तम्— वस्तुभेदे प्रवृत्तेऽपि शब्दसाम्यादभेदिनः।
न युक्ताऽनुमितिः पाण्डुद्रव्यादिव हुताशने ॥

न चेयं जातिरुत्कर्षापकर्षसमाभ्यां भिद्यते, साध्यदृष्टान्तयोर्धर्मविकल्पेन प्रवर्तमानत्वात्। तस्मात्सूत्रकारोक्त एव कार्यसमोऽसंकीर्ण इति युक्तमुत्पश्यामः ॥ ३७ ॥

---

(क) अत्र यच्छब्दसापेक्षतच्छब्दो नान्वेषणीयः, 'तदनेने'ति वक्ष्यमाणेदंशब्देन निराकाङ्क्षतासम्पत्तेः।

(ख) अस्य वर्द्धमानकृता व्याख्या—"साध्येन सिषाधयिषितधर्मेण सपक्षानुगमाद्धेतोः कार्यत्वसामान्यहेतुतयोपन्यस्तपक्षादेः सम्बन्धिनो भेदेन कार्यत्वहेतोर्भेदापादनं कार्यसम इति।"

## न्यायभाष्यम्

अस्योत्तरम्—

### कार्यान्यत्वे(क)प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥ ३८ ॥

सति कार्यान्यत्वे अनुपलब्धिकारणोपपत्तेः प्रयत्नस्याहेतुत्वं (१)शब्दस्याभिव्यक्तौ। यत्र प्रयत्नानन्तरमभिव्यक्तिस्तत्रानु(२)लब्धिकारणं व्यवधानमुपपद्यते,व्यवधानापोहाच्च

## न्यायवार्त्तिकम्

कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः। यत् खलु प्रयत्नेन व्यज्यते तत्रानुपलब्धिकारणमुपपद्यते, न तु शब्दस्यानुपलब्धिकारणं किञ्चिदस्ति, तस्मान्न व्यज्यते इति।

## न्यायवार्त्तिकतात्पर्यटीका

अस्य प्रत्यादेशसूत्रम्—

कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ( सू ३८ )॥ (३)'कार्य'-स्योत्पत्तिलक्षणस्या'न्यत्वे'ऽभिव्यक्तिलक्षणात्कार्यात, 'प्रयत्न'स्याभिव्यक्तिं प्र'त्यहेतुत्वम्' (४)। कस्मादभिव्यक्तिं प्रति हेतुत्वं(४*) न भवतीत्यत आह—'अनुपलब्धिकारण'स्यावरणादे'रुपपत्ते'-रभिव्यक्तिहेतुत्वं स्यात्, एवं तु नास्तीति व्यतिरेकपरं द्रष्टव्यम्। सति कार्यान्यत्व इति भाष्यं सूत्रवद्व योजनीयम्। यत्र प्रयत्नानन्तरमित्यत्र यत्रतत्रयोर्व्यत्यासः,—तत्र प्रयत्नानन्तरमभिव्यक्तिर्यत्रानुपलब्धिकारणं व्यवधानमुपपद्यत इति। कस्मादनुपलब्धि-कारणोपपत्तेः प्रयत्नाभिव्यङ्ग्यत्वमित्यत आह—(ख)व्यवधानायोगाच्चेति। चो हेत्वर्थे।

## वृत्तिः

अत्रोत्तरमाह—( प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः )। प्रतिषेध्ये मत्पक्षे शब्दे सर्वदा अनित्यभावात् अनित्यत्वात् अनित्ये शब्देऽनित्यत्व-मुपपद्यते। न हि सम्भवति अनित्यत्वं नित्यमस्ति,—अथ च तन्नित्यमिति, व्याघातात्। न च नित्यमिति सर्वकालमित्यर्थः, तथा च शब्दस्यानित्यत्वे कथं सर्वकालमनित्यत्वसम्बन्ध इति वाच्यम्, सर्वकालमित्यस्य यावत्सत्त्वमित्यर्थात्। अतस्त्वत्कृतः प्रतिषेधो न सम्भवति। मतान्तरे तु अनित्यत्वेऽनित्यत्वोपपत्तेर्हेतोस्त्वया यः प्रतिषेधः कृतः स न सम्भवतीत्यर्थः॥३६॥

इति नित्यसमप्रकरणम्।

कार्यसमं लक्षयति—( प्रयत्नकार्यानेकत्वात्कार्यसमः )।

प्रयत्नकार्यस्य प्रयत्नेन सम्पादनीयस्य, अनेकत्वात् अनेकविधत्वात्। अयमर्थः—शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादित्युक्ते प्रयत्नानन्तरीयकत्वं प्रयत्नकार्ये घटादौ प्रयत्ना-नन्तरोपलभ्यमाने कीलकादावपि दृष्टम्। तत्र द्वितीयं न तज्जन्यत्वसाधकम्, आद्यं तु असिद्धम्।

---

(१) 'शब्दस्याभिव्यक्तौ'—इति ज-ग-ख०। (२) —'लब्धिः कारणम्'—इति ज०। (३) 'कार्यस्योत-पत्तिर्न लक्षणस्यान्यत्वे'—इति क० ख०। (४) अयमंशो नास्ति क० ख०। (क) प्रथमस्यापि शब्दस्य कोष्ठवायुनोदनादिव्यवहितत्वेन प्रयत्नानन्तर्याभावात् "प्रयत्नशब्देन तत्कार्यौ पारम्पर्येण ताल्वादिसंयोग-विभागौ गृह्येते" इत्याहुराचार्याः ( न्यायपरिशिष्टे ७३पृ० )। (ख) 'व्यवधानापोहाच्चे'ति भाष्ये।

## न्यायभाष्यम्

प्रयत्नानन्तरभाविनोऽर्थस्योपलब्धिलक्षणाऽभिव्यक्तिर्भवतीति, (१)न तु(१*) शब्दस्यानुपलब्धिकारणं किञ्चिदुपपद्यते, यस्य प्रयत्नानन्तरमपोहाच्छब्दस्योपलब्धिलक्षणाऽभिव्यक्तिर्भवतीति, तस्मादुत्पद्यते शब्दो नाभिव्यज्यते इति ॥ ३८ ॥

## न्यायवार्त्तिकम्

संशयसमातो न भिद्यत इति चेत्? उभयसाधर्म्यात् संशयसमः, अयं तु न तथा, तस्माद्भिद्यत इति। अथ साधर्म्यसमातो न भिद्यत इति चेत्? न, हेत्वध्यारोपणात्—साधर्म्यसमा न हेत्वध्यारोपेण प्रवर्तते, इयं त्वन्यथाभिहिते हेतौ अन्यथाकारं प्रवर्तते ॥ ३८ ॥

इति कार्यसमप्रकरणम्।

## न्यायवार्त्तिकतात्पर्यटीका

प्रयत्नानन्तरभाविन इति विषयेण विषयिणमुपलक्षयति, प्रयत्नानन्तरभाविन इत्यर्थः। अनुपलब्धिकारणोपपत्तेरित्यस्य व्यतिरेकप्रधानतामाह—न तु शब्दस्यानुपलब्धीति।

देश्यवार्त्तिकं—संशयसमात इति। परिहरति—उभयसाधर्म्यादिति। विशेषानुपलब्धौ सत्यामुभयसाधर्म्यात्संशयसमः, इदं तु विशेषोपलब्धिमविवक्षित्वेति विशेषः। तदिदमुक्तम्—अयं तु न तथेति। देशयति—साधर्म्यसमात इति। निराकरोति—न, हेत्वध्यारोपणादिति। प्रयत्नानन्तरीयकत्वादित्ययं प्रयत्नानन्तरमुपलब्धेरित्यध्यारोप्य प्रतिषिध्यते। साधर्म्यसमे तु नारोपणमित्यर्थः ॥ ३८ ॥

## वृत्तिः

तथा च सामान्यत उक्ते हेतावनभिमतविशेषनिराकरणेन प्रत्यवस्थानं कार्यसमा। असिद्धिदेशनाभासा चेयम्।

अथवा प्रयत्नकार्याणां प्रयत्नकर्तव्यानां कर्तव्यप्रयत्नानामिति यावत्, तादृशानाम् अनेकविधत्वादुक्तान्य स्वव्याघातकमुत्तरं कार्यसमा। तथा चास्या आकृतिगणत्वात् सूत्रानुपदर्शितानामपि परिग्रहः। यथा—स्वत्पक्षे किञ्चिद् दूषणं भविष्यतीति शङ्का पिशाचीसमा, कार्यकारणभावस्योपकारनियतत्वेऽनवस्थेत्यनुपकारसमा इत्यादि(क) ॥ ३७ ॥

अत्रोत्तरम्—( कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः )।

शब्दस्य कार्यान्यत्वे अकार्यत्वे प्रयत्नस्य कर्तृप्रयत्नस्य अहेतुत्वम् अकारणत्वम्। इदं च तदा स्यात्, यद्यनुपलब्धिकारणमावरणादिकमुपपद्यते, न च तच्छब्देऽस्तीत्यर्थः।

आकृतिगणपक्षे तु कार्याणां जातीनामन्यत्वे नानाविधत्वे इदमुत्तरं प्रयत्नस्य त्वदीयदूषणप्रयत्नस्य अहेतुत्वम् असाधकतासाधकत्वाभावः, उपलब्धेः कारणस्य प्रमाणस्य निर्दोषवाक्यस्य या उपपत्तिर्निर्दोषवाक्याधीनोपपादनं तदभावात्, तद्वाक्यस्य स्वपक्षव्याघातकत्वादित्यर्थः ॥ ३८ ॥

इति कार्यसमप्रकरणम्।

---

(१) 'ननु'—इति वि०। (क) "उद्भावनविषयविकल्पभेदेन जातीनामानन्त्येऽपि असंकीर्णोदाहरणविवक्षया चतुर्विंशतिर्जातिभेदाः प्रदर्शिताः"—इति न्यायकलिकायां जयन्तभट्टः।

## न्यायभाष्यम्

हेतोश्चेदनैकान्तिकत्वमुपपाद्यते अनैकान्तिकत्वादसाधकः स्याद् इति। यदि चानैकान्तिकत्वादसाधकत्वम्—

### प्रतिषेधेऽपि समानो दोषः ॥ ३९ ॥

प्रतिषेधोऽप्यनैकान्तिकः, किञ्चित्प्रतिषेधति किंचिन्नेति अनैकान्तिकत्वादसाधक इति। अथवा शब्दस्यानित्यत्वपक्षे प्रयत्नानन्तरमुत्पादो नाभिव्यक्तिरिति विशेषहेत्वभावः, नित्यत्वपक्षेऽपि प्रयत्नानन्तरमभिव्यक्तिर्नोत्पाद इति विशेषहेत्वभावः। सोऽयमुभयपक्षसमो विशेषहेत्वभाव इत्युभयमप्यनैकान्तिकमिति ॥ ३९ ॥

## न्यायवार्त्तिकम्

एवं जातयो व्यवस्थिताः। अथेदानीं षट्पक्षीमुपन्यस्यन्निदमाह—

प्रतिषेधे विप्रतिषेधेऽपि समानो दोषः। प्रथम पक्षवादी जातिवादिनमुत्तरं ब्रवीति—यद्यनैकान्तिकत्वादहेतुः प्रतिषेधोऽप्यनैकान्तिकः, कस्यचिदप्रतिषेधात् कस्यचित्प्रतिषेधादिति। विशेषहेत्वभावो वा अविशेषः। शेषं भाष्ये ॥ ३९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

तदेवं जात्युत्तरवादिनं प्रति साधनवादिना सर्वत्रैव सम्यक् समाधानं स्वसाधनस्य वक्तव्यम्। एवं सति तत्त्वनिर्णये कथापर्यवसानं भवति। यदि पुनर्वाद्यपि जातिवादिनं प्रति साधनाभासेन प्रत्यवतिष्ठते, ततः षट्पक्ष्यां सत्यां न तत्त्वनिर्णयावसाना कथा भवेदिति शिष्यहितः सूत्रकारः समाधानाभासवादिनं प्रति षट्पक्षीमवतारयति—

प्रतिषेधेऽपि समानो दोषः ( सू ३९ ) ॥

तदेतत्सूत्रावतारपरं भाष्यं—हेतोश्चेदनैकान्तिकत्वमुपपाद्यते(१)प्रतिवादिनाऽनैकान्तिकत्वादसाधकः स्यादिति। यदि चानैकान्तिकत्वादसाधकं वादिनो वचनं—प्रतिषेधेऽपि समानो दोषः। योऽयं प्रयत्नकार्यानेकत्वादिति प्रतिषेधो जातिवादिनः, सोऽप्यनैकान्तिकः। एवं ह्यैकान्तिकः स्याद् यदि सर्वमेव प्रतिषेधेत्, यतस्तु किंचित्प्रतिषेधति किंचिच्च न, तस्मादयमनैकान्तिकः, अतोऽसाधक इत्यर्थः।

व्याख्यान्तरमाह—अथवा शब्दस्येति। नित्यपक्षोऽभिव्यक्तिर्नोत्पादः, एवमनित्यपक्षे उत्पादो नाभिव्यक्तिरित्ययं विशेषो न सिध्यत्ययं प्रतिषेधेऽपि समानो दोष इत्यर्थः ॥ ३९ ॥

## वृत्तिः

एवं तावज्जातिवादिनं प्रति सर्वत्र सदुत्तरेणैवोद्धारः कार्य इत्यभिहितम्। तदेवाभिमतं, तेन(क)निर्णयविजयफलकत्वं कथायां सम्पद्यते, असदुत्तरोद्भावने तु वन्ध्ययोः संयोगवन्नाभिमतफलसिद्धिरिति व्युत्पादयितुं कथाभासरूपां षट्पक्षीं शिष्यशिक्षायै प्रदर्शयति—( प्रतिषेधेऽपि समानो दोषः )।

(१) 'प्रतिवादिने'—इति ख०। (क) "एवं तावत् परेण जातौ प्रयुक्तायां वादिना सदुत्तरेणैवोद्धारः कर्त्तव्यः; एवं हि वादे तत्त्वनिर्णयः, जल्पवितण्डयोश्च जयपराजयव्यवस्था स्यात्, अन्यथा तु षण्ढमैथुनवन्नैकमपीति"—न्यायपरिशिष्टम् ( ७३पृ० )।

### न्यायभाष्यम्

## सर्वत्रैवम् ॥ ४० ॥

सर्वेषु साधर्म्यप्रभृतिषु (१)प्रतिषेधहेतुषु यत्र (२)यत्राविशेषो (३)दृश्यते तत्रोभयोः पक्षयोः समः प्रसज्यत इति(१*) ॥ ४० ॥

## (४)प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ४१ ॥

योऽयं प्रतिषेधेऽपि समानो दोषोऽनैकान्तिकत्वमापाद्यते सोऽयं प्रतिषेधस्य

### न्यायवार्त्तिकम्

सर्वत्रैवम् । सर्वासु जातिष्वेषा प्रयुक्तिरिति सूत्रार्थः ॥ ४० ॥

प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः । तृतीयः पक्षो विप्रतिषेधः । एतस्मिन्

### न्यायवार्त्तिकतात्पर्यटीका

न केवलमस्यां जातावयं समाधानाभासो वादिनः, अपि तु सर्वत्रैव जाताविति शिष्यान् शिक्षयति सूत्रकारः—

सर्वत्रैवम् ( सू ४० ) ॥ (क)

अस्मिन् समाधाने प्रयुक्ते वादिना पुनर्जातिवादी प्रत्यवतिष्ठते—

प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ( सू ४१ ) ॥ प्रतिषेधो जातिवादिनस्तस्य

### वृत्तिः

प्रयत्नानन्तरीयकत्वं न शब्देऽनित्यत्वं साधयति अनैकान्तिकत्वादिति यो दोषः स त्वत्पक्षेऽपि तुल्यः, प्रयत्नाभिव्यङ्ग्यत्वस्याप्यसाधकत्वात् ।

अथ वा अनैकान्तिकत्वादसाधक इति त्वया यः प्रतिषेधः कृतस्तत्राप्ययं दोषः समानः, न ह्यनैकान्तिकत्वं सर्वस्यैवासाधकत्वं साधयति, स्वस्यैवासाधकत्वासाधनत्वात् ॥ ३९ ॥

सेयं मतानुज्ञा किं कार्यसमायामेव ? नेत्याह—( सर्वत्रैवम् ) ।

एवंविधमसदुत्तरं सर्वत्रैव जातौ सम्भवतीत्यर्थः । यथा शब्दोऽनित्यः शब्दत्वादित्यत्र नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यः स्यादिति साधर्म्यसमायाम्, आकाशसाधर्म्यान्नित्यत्वे आकाशवच्छब्दे परममहत्त्वं स्यादित्युत्कर्षसमा । एवमन्यत्राप्यूह्यम् ।

यद्यप्ययमतिदेशः षट्पक्ष्यनन्तरमेव कर्तुमुचितस्तथाऽपि त्रिपक्ष्यादिकमपि सूचयितुमत्रैवोक्तः । (५)उभयाज्ञत्वबोधफला हि षट्पक्षी, त्रिपक्ष्यादावपि तत्फलकत्वं तुल्यमिति भावः । तर्हि त्रिपक्ष्यामेव मध्यस्थेन पर्यनुयोज्योपेक्षणस्योद्भावने कथासमाप्तौ कुतः षट्पक्षीति चेन्न ; पुंसां स्फुरणवैचित्र्येण तत्सम्भवात्(ख) ॥ ४० ॥

---

(१) इदं वि-पु० नास्ति । (२) 'यत्र विशेषः'—इति ज० । (३) 'चोद्यते'—इति टि० । (४) 'विप्रतिषेधे प्रतिषेधदोषवद्दोषः'—इति वि० । (क) ४०शसूत्रस्य अवतरणिकातिरिक्ता तात्पर्यटीका नोपलभ्यते । (५) 'उभयासुज्ञत्वबोधफला'—इति भ० । (ख) स्फुरणवैचित्र्यं च सदुमध्यातिमात्रप्रज्ञत्वेनेत्याशयः । अत्र "तदभिव्यक्तसम्भवप्रसङ्गा''दित्याद्युदयनकृतोऽधिक्षेपो द्रष्टव्यः । [ न्यायपरिशिष्टे—७६पृ० ]

### न्यायभाष्यम्

(१)विप्रतिषेधेऽपि समानः। तत्रानित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति साधनवादिनः स्थापना प्रथमः पक्षः। 'प्रयत्नकार्यानेकत्वात् कार्यसम' इति दूषणवादिनः प्रतिषेधहेतुना द्वितीयः पक्षः। स च प्रतिषेध इत्युच्यते। (२)तस्यास्य (३)प्रतिषेधेऽपि समानो दोष इति तृतीयः पक्षो विप्रतिषेध उच्यते(२*)। तस्मिन् प्रतिषेधविप्रतिषेधेऽपि समानो दोषोऽनैकान्तिकत्वं चतुर्थः पक्षः ॥ ४१ ॥

## प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥ ४२ ॥

प्रतिषेधं द्वितीयं पक्षं सदोषमभ्युपेत्य तदुद्धारमकृत्वाऽनुज्ञाय प्रतिषेधविप्रतिषेधे तृतीयपक्षे समानमनैकान्तिकत्वमिति समानं दूषणं (४)प्रसञ्जयतो दूषणवादिनो मतानुज्ञा प्रसज्यत इति पञ्चमः पक्षः ॥ ४२ ॥

### न्यायवार्त्तिकम्

विप्रतिषेधे समानमनैकान्तिकत्वं दोष इति चतुर्थः पक्षः ॥ ४१ ॥

प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा। प्रतिषेधं द्वितीयपक्षं सदोषमभ्युपेत्य तृतीयपक्षेऽपि प्रतिषेधतुल्यदोषतामासञ्जयन् विप्रतिषेधेऽपि समानो दोष इति ब्रुवन् (५)मतमनुजानाति, सेयं मतानुज्ञा भवतीति पञ्चमः पक्षः ॥ ४२ ॥

### न्यायवार्त्तिकतात्पर्यटीका

विप्रतिषेधो मूलसाधनवादिनः, तस्मिंस्तुल्यो दोष इति जातिवादिनः प्रत्यवस्थानमित्यर्थः ॥४१॥

अथ पञ्चमं पक्षं साधनवादिनश्चतुर्थपक्षवादिनं प्रति मतानुज्ञापादनमाह—

प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ( सू ४२ )॥ (क)

### वृत्तिः

( प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः )।

तुल्यबलविरोधो विप्रतिषेधः। तथा च प्रतिषेधस्य यो विप्रतिषेधस्तत्र प्रतिषेधवद्दोष इत्यर्थः। तथाहि—शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादिति स्थापनावादिनः प्रथमः पक्षः। प्रयत्नकार्यानेकत्वात्कार्यसम इति प्रतिवादिनो द्वितीयः पक्षः प्रतिषेधः। प्रतिषेधेऽप्यनैकान्तिकत्वं तुल्यमिति वादिनस्तृतीयः पक्षो विप्रतिषेधः। तत्रापि तथैवानैकान्तिकत्वं तत्समानदोषोद्भावनं वा चतुर्थः पक्षः ॥ ४१ ॥

---

(१) 'प्रतिषेधे'—इति ज-ग-ख-झा-फ०। टि-पु० पाठो गृहीतः। (२) इ' वि-पु० नास्ति। (३) 'प्रतिषेधस्य प्रति'—इति टि०। (४) 'प्रसञ्जतः'—इति ग०। 'प्रसजतः'—इति ख०। (५) 'तमनुजानाति'—इति क-ख-धृतपाठान्तरम्। (क) ४२शसूत्रे तात्पर्यटीका नोपलभ्यते।

## न्यायभाष्यम्

### (क)स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्ष-दोषाभ्युपगमात् (१)समानो दोषः ॥ ४३ ॥

स्थापनापक्षे (२)प्रयत्नकार्यानेकत्वादिति दोषः स्थापनाहेतुवादिनः स्वपक्षलक्षणो भवति। कस्मात्? स्वपक्षसमुत्थत्वात्। सोऽयं स्वपक्षलक्षणं दोषमपेक्षमाणोऽनुद्धृत्यानुज्ञाय प्रतिषेधेऽपि समानो दोष इत्युपपद्यमानं दोषं परपक्षे उपसंहरति। इत्थं चानैकान्तिकः प्रतिषेध इति हेतुं निर्दिशति। तत्र स्वपक्षलक्षणापेक्षयोपपद्यमान-दोषोपसंहारे हेतुनिर्देशे च सत्यनेन (३)परपक्षदोषोऽभ्युपगतो भवति। कथं कृत्वा? यः परेण प्रयत्नकार्यानेकत्वादित्यादिनाऽनैकान्तिकदोष उक्तः, तमनुद्धृत्य प्रतिषेधेऽपि समानो दोष इत्याह। एवं स्थापनां सदोषामभ्युपेत्य प्रतिषेधेऽपि समानं दोषं

## न्यायवार्त्तिकम्

स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात् समानो दोषः। स्वपक्षसमुत्थानं दोषमभ्युपेत्य परपक्षेऽपि प्रसञ्जयन् स्वपक्षदोषमनुजानातीति तुल्या मतानुज्ञा।

## न्यायवार्त्तिकतात्पर्यटीका

सेयं मतानुज्ञा तृतीये पक्षे पञ्चमपक्षवादिनोऽपि साधनवादिन इति जातिवादी षष्ठपक्षस्थित आह—

स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोषः ( सू ४३ )॥ स्वपक्षेण लक्ष्यते तदुत्थानत्वाज्जातिः, स्वपक्षलक्षणा अनैकान्तिकत्वोद्भावनलक्षणा, तामभ्युपेत्य अनुद्धृत्य प्रतिषेधेऽपि जातिलक्षणे समानोऽनैकान्तिकत्वदोष इत्युपपद्यमानं स्वपक्षेऽपि दोषं परपक्षे जातिवादिपक्षे साधनवाद्युपसंहरति। तत्र चानैकान्तिकं हेतुं ब्रूते। तदेवं स्वपक्ष-लक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षे यत्स्वयं दूषणं दत्तं तस्याभ्युपगमाद्वादिनोऽपि समानो

## वृत्तिः

पञ्चमं पक्षमाह—( प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा )।

प्रतिषेधं द्वितीयं पक्षं सदोषमभ्युपेत्य तत्र मदुक्तं दोषमनुद्धृत्य प्रतिषेधविप्रतिषेधे मदीयपक्षे तृतीयं समानं दोषं प्रसञ्जयतस्तव मतानुज्ञानामकं निग्रहस्थानमित्यर्थः ॥ ४२ ॥

---

(१) 'समानदोष'—इति ज-ग-ल०। (२) 'प्रयत्नकार्यत्वानेकत्वा'दिति—ग०। (३) 'परपक्षोऽभ्यु'—इति ज-ग-ल०। (क) "स्वशब्देन वादी निर्दिश्यते। तस्य पक्षः स्थापना, तं लक्ष्यीकृत्य प्रवृत्तो द्वितीयः पक्षः स्वपक्षलक्षणः, तस्यापेक्षा अभ्युपगमः" इति वरदराजः। आचार्य्यास्तु—"वादिनः स्वपक्षः स्थापना, तल्लक्षणो द्वितीयः पक्षो जात्युत्तरं···तस्यापेक्षा उपेक्षा अनुद्धार इति यावत्। ततः परपक्षेऽपि उपपत्त्युपसंहारः परापादितदोषोपसंहारः—'प्रतिषेधेऽपि समानो दोष' इति, 'इत्थ'मिति हेतुनिर्देशश्च, तस्मिन्नुपपत्त्युपसंहारे हेतुनिर्देशे तवापि समानो मतानुज्ञादोष इत्यर्थः" इति विवक्षुः।

## न्यायभाष्यम्

(१)प्रसञ्जयतः परपक्षाभ्युपगमात् समानो दोषो भवति। यथा परस्य प्रतिषेधं सदोषमभ्युपेत्य (२)प्रतिषेधविप्रतिषेधेऽपि समानो दोषप्रसङ्गो मतानुज्ञा प्रसज्यत इति, तथाऽस्यापि स्थापनां सदोषामभ्युपेत्य(२*)प्रतिषेधेऽपि समानं दोषं (३)प्रसञ्जयतो मतानुज्ञा प्रसज्यत इति। स खल्वयं षष्ठः पक्षः।

तत्र खलु स्थापनाहेतुवादिनः प्रथम-तृतीय-पञ्चमपक्षाः, प्रतिषेधहेतुवादिनः द्वितीय-चतुर्थ-षष्ठपक्षाः। तेषां साध्वसाधुतायां मीमांस्यमानायां चतुर्थषष्ठयोरर्थाविशेषात् पुनरुक्तदोषप्रसङ्गः। चतुर्थपक्षे समानदोषत्वं परस्योच्यते—'प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोष' इति। षष्ठेऽपि 'परपक्षदोषाभ्युपगमात् समानो दोष' इति समानदोषत्वमेवोच्यते, नार्थविशेषः कश्चिदस्ति। समानस्तृतीयपञ्चमयोः पुनरुक्तदोषप्रसङ्गः, तृतीयपक्षेऽपि 'प्रतिषेधेऽपि समानो दोष' इति समानत्वमभ्युपगम्यते। पञ्चमपक्षेऽपि 'प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो'ऽभ्युपगम्यते, नार्थविशेषः कश्चिदुच्यत इति। तत्र पञ्चमषष्ठपक्षयोरर्थाविशेषात् पुनरुक्तदोषप्रसङ्गः, तृतीयचतुर्थयोर्मतानुज्ञा, प्रथमद्वितीययोर्विशेषहेत्वभाव इति षट्पक्ष्यामुभयोरसिद्धिः।

(४)कदा षट्पक्षी ? (५)यदा 'प्रतिषेधेऽपि समानो दोष' इत्येवं प्रवर्त्तते। तदोभयोः पक्षयोरसिद्धिः। यदा तु 'कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्ते'रित्यनेन

## न्यायवार्त्तिकम्

शेषं भाष्ये। अत्र खलु स्थापनाहेतुवादिनः प्रथमतृतीयपञ्चमाः पक्षाः। प्रतिषेधहेतुवादिनो द्वितीयचतुर्थषष्ठाः पक्षाः। तेषां साध्वसाधुतायां मीमांस्यमानायां चतुर्थषष्ठयोरर्थाविशेषाद् न पुनरुक्तदोषप्रसङ्गः। समानः तृतीयपञ्चमयोः पुनरुक्तदोषः। तत्र पञ्चमषष्ठयोः पुनरुक्तदोषः, तृतीयचतुर्थयोर्मतानुज्ञादोषः, प्रथमद्वितीययोर्विशेषहेत्वभाव इति षट्पक्ष्यामुभयोरसिद्धिः, (२)अयुक्त-

## न्यायवार्त्तिकतात्पर्यटीका

दोष इति जातिवादिनो वचनं षष्ठे पक्षे स्थितस्य। तदेवं विस्तीर्य संकलय्याह—तत्र खलु स्थापनाहेतुवादिन इति। सेयं षट्पक्षी समानदोषापादनेनानिर्णायकत्वात्पौनरुक्त्याच्च न तत्त्वनिर्णयाय पर्याप्ता। तस्मात्समाधानाभासेन जातिवादिनं प्रति न प्रत्यवस्थेयं, किं तु सम्यक्साधनेन। तथा च षट्पक्षी उपहता नावतरति, तत्त्वनिर्णयपर्यवसाना च कथा भवति। यदि त्वस्य कदाचित्सम्यक्साधनवादिनोऽपि प्रतिभाक्षयात् समाधानं न स्फुरति, ततोऽत्यन्तपराजयाद्वरं संशयोऽपीति न्यायेन समाधानाभासेनापि प्रत्यवस्थेयमेवेत्याशयवानाह—तेषां साध्व-

(१) 'प्रसञ्जतः'—इति ग०। 'प्रसजतः'—इति ल०। (२) अयं भागः वि० टि० पु० नास्ति। (३) 'प्रसञ्जतः'—इति ग०। 'प्रसजत'—इति ल०। (४) 'यदा'—इति टि०। (५) इदं टि० पु० नास्ति। (६) 'अयुक्तत्ववादित्वात्'—इति ख०।

### न्यायभाष्यम्

तृतीयपक्षो युज्यते, तदा विशेषहेतुवचनात् 'प्रयत्नानन्तरमात्मलाभः शब्दस्य, नाभिव्यक्ति'रिति सिद्धः प्रथमपक्षो न षट्पक्षी प्रवर्तत इति ॥ ४३ ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये

पञ्चमाध्यायस्याद्यमाह्निकम् ।

### न्यायवार्त्तिकम्

वादित्वात् । यदाऽनुपलब्धिकारणाभावे सति प्रयत्नानन्तरमुपलब्धेरिति विशेषहेतुरुच्यते, तदा न षट्पक्षी प्रवर्तते । एतास्तु जातयो न तत्त्वविवेकमुपकुर्वन्तीति भेदमात्रमासामुक्तमिति ॥ ४३ ॥

इति षट्पक्षीरूपकथाभासप्रकरणम् ।

इति औद्द्योतकरे न्यायवार्त्तिके पञ्चमस्याध्यायस्याद्यमाह्निकम् ।

### न्यायवार्त्तिकतात्पर्यटीका

साधुतायामिति । भाष्यव्याख्यया वार्त्तिकमपि व्याख्यातम् । एतास्तु जातयो न तत्त्वविवेकमुपकुर्वन्ति प्रयुज्यमानतया, निराकरणीयतया त्वासामप्युपकार इति ॥ ४३ ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्त्तिकतात्पर्यटीकायां

पञ्चमस्याध्यायस्याद्यमाह्निकम् ।

### वृत्तिः

षष्ठं पक्षमाह—( स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोषः ) ।

स्वपक्षः स्थापनारूपः प्रथमः पक्षः, तं लक्ष्यीकृत्य प्रवृत्तो द्वितीयः पक्षः स्वपक्षलक्षणः, तस्यापेक्षा(क)समादरः, तत्र दोषानुद्भावनमिति फलितार्थः । तथा च मदीयपक्षे दोषमनुद्भाव्यैव स्वपक्षोपपादनं कर्तुं यस्त्वया हेतुर्निर्दिष्टः, 'प्रतिषेधेऽपि समानो दोष' इति वदतः तवापि मतानुज्ञा वृत्तैवेत्यर्थः । तदेवं षट्पक्ष्यामुभयोरप्ययुक्तवादित्वादर्थासिद्धिः । यदि तु स्थापनावादी जातिवादिनं सदुत्तरेणैव दूषयति तदा षट्पक्षी न प्रवर्तत इति ॥४३॥

इति षट्पक्षीरूपकथाभासप्रकरणम् ।

इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ

पञ्चमाध्यायस्याऽऽद्यमाह्निकम् ।

---

(क) 'अपेक्षा अभ्युपगम'—इति वरदराजः । 'अपेक्षा उपेक्षा'—इति उदयनः । उभयोरप्यनुसारि तात्पर्यम् । भाष्यकृतापि "अपेक्षमाणोऽनुत्यानुज्ञायै"त्युक्तम् ( ११५७पृ० द्र० ) ।

# न्यायदर्शनम्

## पञ्चमाध्यायस्य द्वितीयमाह्निकम्

### न्यायभाष्यम्

विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वमिति सङ्क्षेपेणोक्तं, तदिदानीं विभजनीयम्। निग्रहस्थानानि (१)खलु पराजयवस्तून्य(२)पराधाधिकरणानि

### न्यायवार्त्तिकम्

विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वमिति सङ्क्षेपेणोक्तम्। तदिदानीं विभजनीयम्। निग्रहस्थानानि तु पराजयवस्तूनि अपराधाधिकरणानि। सामान्यतो द्वे निग्रहस्थाने। कर्तृकर्मकरणानां (३)कस्य ?

तत्रैके वर्णयन्ति पक्षस्येति। एवं चाहुः—दूषणानि न्यूनतावयवोत्तरदोषाक्षेपभावोद्भावनानि, एभिर्ह्यसौ परपक्षो दूष्यत इति। एतत्तु न सम्यक्, कर्मणस्तादवस्थ्यात्—न हि दूषणाभिधानेन कर्मणोऽन्यथात्वं भवति, यथाभूत एवार्थो दूष्यमाणस्तथाभूत एवादूष्यमाणोऽपि। न, करणस्य विषयान्तरेऽसामर्थ्यात्—साधनमपि प्रतिज्ञादिकं न दूष्यते विषयान्तरेऽसामर्थ्यात्। न हि किञ्चित्साधनं यद्विषयान्तरे समर्थं स्यात् सर्वं साधनं स्वविषये समर्थमिति। तस्मादसमर्थयोः कर्मकरणयोरुपादानात् कर्तुर्निग्रह इति। यत् कर्म क्रियार्थमुपादीयमानमभीष्टक्रियां न

### न्यायवार्त्तिकतात्पर्यटीका

विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पाद् वैचित्र्यात् निग्रहस्थानबहुत्वमिति संक्षेपेणोक्तं, तदिदानीं विभजनीयम्। तत्र य एवमाहुः—सर्वोऽयं साधनदूषणप्रकारो बुद्ध्यारूढो न वास्तव इति, तान् प्रत्याह—पराजयवस्तूनीति। पराजयो वसत्येष्विति पराजयस्थानानीत्यर्थः। काल्पनिकत्वे कल्पनायाः सर्वत्र सुलभत्वात्साधनदूषणव्यवस्था न स्यादिति भावः। निग्रहस्थानानि पर्यायान्तरेण स्पष्टयति—अपराधेति। य आहु'रसाधनाङ्गवचनमदोषोद्भावनं द्वयोर्निग्रहस्थानमन्यत्तु न युक्त'मिति(क), तान् प्रत्याह—सामान्यतो द्वे निग्रहस्थाने। सामान्यविवक्षायां प्रतिज्ञाहान्यादयो द्वाविंशतिरपि न भिद्यन्ते। (४)तत्तु 'असाधनाङ्गवचनमदोषोद्भावन'मिति भवद्भिः संगृहीतमृषिणा च 'विप्रतिपत्त्यप्रतिपत्ति'भ्यामिति न कश्चिद्विशेषः। अत्र विचारयति—कर्तृकर्मकरणानामिति।

तत्रैके वर्णयन्ति—पक्षस्येति। यथा पक्षोद्देशेन' साधनं प्रवर्तमानं पक्षस्य, एवं तदुद्देशेन दूषणानि प्रवर्तमानानि पक्षस्यैवेति। एवं चाहुर्दूषणानीति। न्यूनतादयो हि सर्वे पक्षोद्देशेन प्रवर्तमानाः पक्षस्यैवेत्यर्थः। दूषयति—एतत्तु न सम्यगिति। पक्षोद्देशेन प्रवृत्तेः पक्षविषयतां नापजानीमः, साक्षात्तु तद्विषयतां निराकुर्मः, तस्य वस्तुसतस्तादवस्थ्यात्। एवं साधनमपि यत्रासमर्थं तत्र प्रयुज्यमानं न स्वतो दुष्यति, यत्र तु समर्थं तत्साधयत्येव, तस्मात् कर्तुरेव दोष इत्याह—तस्मादसमर्थयोरिति। न केवलं स्वातन्त्र्यात्कर्तुर्निग्रहोऽपि तु

(१) इदं टि॰ पु॰ नास्ति। (२) '-पराधाविष्करणानि'—इति टि॰। (३) 'तस्य'—इति कं॰। (४) 'तत्त्वकर्षू सा'—इति क॰। (क) "असाधनाङ्गवचनमदोषोद्भावनं द्वयोः। निग्रहस्थानमन्यत्तु न युक्तमिति नेष्यते ॥" इति—वादन्यायग्रन्थे धर्मकीर्त्तिः। अस्य व्याख्या—"इष्टस्यार्थस्य सिद्धिः साधनं, तस्य निर्वर्त्तकमङ्गं, तस्य अवचनं तस्य अङ्गस्य अनुच्चारणं वादिनोर्निग्रहाधिकरणम्"।

## न्यायवार्त्तिकम्

निर्वर्तयति, तदिदमसमर्थं, यथा सिकता घटादिकरण इति। यत् (१)च करणं क्रियार्थमुपादीयमानं
क्रियां न निर्वर्तयति तदसमर्थं, यथा तुर्यादि घटे। स्वविषये तूभयं समर्थम्। तदन्यविषयस्य च
कर्मणोऽन्यविषयस्य च करणस्यान्यथा (२)उपादानात् कर्तुरज्ञानम्। अज्ञानं पुनरप्रतिपत्तिर्विप्रति-
पत्तिर्वेति कर्ता निगृह्यते, न कर्मकरणे, पारतन्त्र्यात्। तस्मात् स्वतन्त्रस्य कर्तुर्निग्रह इति। विप्रति-
पत्त्यप्रतिपत्त्योश्च पुरुषधर्मत्वात् पुरुषस्येति—विप्रतिपत्त्यप्रतिपत्ती च पुरुषस्य वचनद्वारेण गम्येते,
तस्मात् प्रतिज्ञादिदोषा इति(३)भक्तिः। कानिचिन्निग्रहस्थानान्यज्ञानादीनि पुरुषधर्मा एव।

द्वैविध्यानुपपत्तिरनेकाभिधानादिति चेत्—अनेकं निग्रहस्थानं प्रतिज्ञाहान्यादिसूत्रे पठ्यते,
तस्माद् द्वे निग्रहस्थाने इत्ययुक्तम्? न, सामान्यभेदविस्तरस्य विवक्षातः प्रवृत्तेः—(क)सामान्य-
मधिकृत्य निग्रहस्थाने द्वे, भेदविस्तरविवक्षायां तु द्वाविंशतिधा भेदः। उदाहरणमात्रत्वाच्च
भेदस्याऽऽनन्त्यमिति।

## न्यायवार्त्तिकतात्पर्यटीका

तदाधारत्वाद्विप्रतिपत्त्यप्रतिपत्त्योरित्याह—विप्रतिपत्त्यप्रतिपत्त्योश्चेति। ननु वाक्ये न्यूनतादयो
दोषा न पुरुषाश्रया इत्यत आह—विप्रतिपत्त्यप्रतिपत्ती चेति। न स्वरूपेण वाक्यं दुष्टं तस्य
तादवस्थ्यादित्युक्तं किं तु पुरुषस्य विप्रतिपत्त्यप्रतिपत्तिभ्यां तथा प्रतिभाति, तेन वाक्यगतन्यून-
तादिदर्शनात् पुरुषे विप्रतिप्रत्त्यप्रतिपत्ती प्रतीयेते, तेन द्वारेण पुरुषो निगृह्यते, न तु वाक्यम्;
एतावता च प्रतिज्ञादोष इत्युच्यते। नायमपि नियमो यद्वाक्यद्वारेण पुरुषो निगृह्यते अज्ञानादिषु
तदभावादित्याह—कानिचिन्निग्रहस्थानानीति।

शङ्कते—द्वैविध्यानुपपत्तिरिति। सामान्यं विवक्ष्यते विशेषो वा? सामान्यविवक्षायां
निग्रहस्थानमित्येवास्तु, तस्य सर्वत्राविशेषात्कुतो द्वैविध्यम्? विशेषविवक्षायां प्रतिज्ञाहान्यादीनि
बहूनीत्ययुक्तं द्वैविध्याभिधानमुभयथाऽपीत्यर्थः। निराकरोति—न, सामान्यभेदविस्तरस्य
विवक्षातः प्रवृत्तेरिति। सामान्यविवक्षायामपि निग्रहस्थानमिति नोक्तम्, उद्देशादविशेष-
प्रसङ्गात्। तस्माल्लक्षणं प्रणयताऽन्यथा तदसंभवादवान्तरसामान्यद्वैविध्यविवक्षया सामान्यं
लक्षितम्। भेदानां तु विस्तरविवक्षया प्रतिज्ञाहान्यादयोऽपि प्रपञ्चिता इत्यर्थः। आन्तर्गणिकानां
तु भेदानामानन्त्यमित्याह—उदाहरणमात्रत्वाच्चेति। द्वाविंशतिसंख्यावच्छिन्नो भेद उदाहरण-
मात्रम्। आन्तर्गणिकभेदविवक्षायां त्वानन्त्यमित्यर्थः।

(१) 'च'—इति ख०-पु० नास्ति। (२) -'उपपादनात्'—इति क-ख-धृतपाठान्तरम्। (३) 'भक्तिः'—इति
क-ख-धृतपाठान्तरम्। (क) "विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्। निग्रहः पराजयः, तस्य स्थानमाश्रयः
कारणमित्यर्थः। किञ्च पराजयकारणम्? विप्रतिपत्तिरप्रतिपत्तिश्च। विपरीता कुत्सिता गर्हणीया
प्रतिपत्तिः—साधनाभासे साधनबुद्धिः, दूषणाभासे दूषणबुद्धिः। अप्रतिपत्तिस्तु—आरम्भविषयेऽनारम्भः।
आरम्भस्य विषयः—साधनस्य ज्ञापनं दूषणस्योद्धरणं, तयोरकरणमप्रतिपत्तिः। द्विधा हि वादी पराजीयते,
यथा—वक्तव्यमप्रतिपद्यमानो विपरीतं वा प्रतिपद्यमान इति। विप्रतिपत्त्यप्रतिपत्तिभेदात् द्वाविंशतिर्निग्रह-
स्थानानि। तत्राननुभाषणमज्ञानमप्रतिभा विक्षेपः पर्यनुयोज्योपेक्षणमिति अप्रतिपत्तिविकाराः, शेषास्तु
विप्रतिपत्तिभेदाः।"—इति न्यायकलिकायां जयन्तभट्टः।

## न्यायभाष्यम्

प्रायेण प्रतिज्ञाद्यवयवाश्रयाणि तत्त्ववादिनमतत्त्ववादिनं चाभिसंप्लवन्ते। तेषां विभागः—

**प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च (१)निग्रहस्थानानि(क) ॥ १ ॥**

## न्यायवार्त्तिकम्

'प्रायेण प्रतिज्ञाद्यवयवाश्रयाणी'ति भाष्यम्। वक्तृविषयकत्वात् प्रतिज्ञाद्यवयवाश्रयत्वमनुपपन्नमिति चेत्—अथ मन्यसे विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमित्यभिधाने प्रतिज्ञाद्यवयवाश्रितत्वे कः प्रसङ्ग इति ? न, क्रियावचनदोषद्वारेण कर्तृवक्तृणामज्ञत्वोपपत्तेः। क्रियाद्वारेण कर्ता दूष्यते वचनद्वारेण वक्तेति न प्रतिज्ञाद्याश्रयत्वमनुपपन्नम्। न चाधाराधेयभाव आश्रयाश्रयिभावो विवक्षितः, किं तु प्रतिज्ञादिमुखेनोद्भावनमिति।

'तत्त्ववादिनमतत्त्ववादिनं चाभिसंप्लवन्त' इति भाष्यम्। तत्त्ववादिनो निग्रहस्थानानुपपत्तिः, प्रतिपादकत्वात्—तत्त्वं ब्रवीतीति प्रतिपादयति, प्रतिपादयंश्च निगृह्यत इति न युक्तम् ? न, परापदिष्टदूषणदोषानवबोधद्वारेण तदुपपत्तेः—तत्त्ववादी प्रथमपक्षे द्वितीयपक्षवादिना(२) यो दूषणाभास उक्तस्तस्य तत्त्वानवबोधान्निगृह्यते तत्त्वमभिदधानोऽपि ; तत्र वस्तु निर्णीतं, निर्णीते च वस्तुनि दूषणाभासस्याप्रतिपत्त्या निगृह्यत इति। तत्रोदाहरणभेदप्रदर्शनार्थं प्रतिज्ञाहान्यादिसूत्रम्—

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ १ ॥

## न्यायवार्त्तिकतात्पर्यटीका

भाष्यमनुभाष्याक्षिपति—प्रायेण प्रतिज्ञेति। समाधत्ते—क्रियावचनदोषद्वारेणेति। वचनदोषद्वारेणेत्येतावन्मात्रे वक्तव्ये क्रियादोषाभिधानं दृष्टान्तार्थम्। नन्वाश्रयार्थोऽप्ययुक्तः पुरुषाश्रयत्वादित्यत आह—न चाधाराधेयभाव इति।

अपरमपि भाष्यमनुभाष्याक्षिपति—तत्त्ववादिनमतत्त्ववादिनं चेति। समाधत्ते—न, परापदिष्टेति। सम्यक्साधने जात्युत्तरे दत्ते तस्य जातित्वमनुद्भावयंस्तत्त्ववाद्यपि निगृह्यत इत्यर्थः ॥१॥

(१) 'इति निग्रह'—इति टि०। (२) 'च यो दू'—इति ख०। क-वार्त्तिके '(च) यो'—इति मुद्रितम्।

(क) अस्य अवतरणिकातिरिक्तं भाष्यं नोपलभ्यते, वार्त्तिक-तात्पर्ययोः अपि सुतरां तथैव।

### न्यायभाष्यम्

तानीमानि द्वाविंशतिधा विभज्य, लक्ष्यन्ते—

**प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ २ ॥**

साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थिते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्यनुजानन् प्रतिज्ञां जहातीति प्रतिज्ञाहानिः। निदर्शनम्—'ऐन्द्रियकत्वादनित्यः शब्दो घटवदि'ति कृते अपर आह—दृष्टमैन्द्रियकत्वं सामान्ये नित्ये, कस्मान्न तथा शब्द इति

### न्यायवार्त्तिकम्

लक्षणं (१)तु—

प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः—प्रतिदृष्टान्तस्य यो धर्मस्तं यदा स्वपक्षे दृष्टान्तेऽभ्यनुजानाति तदा निगृहीतो वेदितव्यः। यथाऽनित्यः शब्द ऐन्द्रियकत्वात् घटवदित्येकः। सामान्यमैन्द्रियकं दृष्टं नित्यं, कस्मान्न तथा शब्द इति द्वितीयः।

### न्यायवार्त्तिकतात्पर्यटीका

लक्षणं तु—

प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ( सू २ )॥ तदेतत्सूत्रं भाष्यमतेन तावद् व्याचष्टे—प्रतिदृष्टान्तस्य यो धर्मस्तं यदा स्वदृष्टान्तेऽभ्यनुजानातीति।

### वृत्तिः

अथेदानीं निग्रहस्थानविशेषलक्षणाभिधानम्, तदेव चाऽऽह्निकार्थः। अत्र च सप्त प्रकरणानि, तत्रादौ प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेषलक्षणप्रकरणम्। अन्यानि च यथास्थानं वक्ष्यन्ते।

तत्र विशेषलक्षणार्थमादौ विभजते—( प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासः हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि )।

अत्र चः त्वर्थे। तेन एतानि तु निग्रहस्थानानि, न पुनरपस्मारादिनाऽननुभाषणादिकं, न वा झटिति संवरणेन तिरोहिता च वाणीत्यर्थो लभ्यत इति प्राञ्चः(क)। नव्यास्तु—चकारोऽनुक्तसमुच्चये, तेन दृष्टान्ते साधनवैकल्यादीनां परिग्रहः ॥ १ ॥

---

(१) 'च'—इति क०-ख०। (क) "चस्त्वर्थः, तेनैतेषामेव कथावाक्यानां, कथायामपि अपस्मारोन्मादादिवशापन्नानां झटिति संवरणेन तिरोहितावसराणां पुरःस्फूर्तिकानधि[illegible]तोद्भावितानां च व्यवच्छेदः।" इत्युदयनाचार्य्याः। "न चानुक्तप्रत्यक्षाद्याभाससमुच्चयार्थश्चकार इति वाच्यम्, दृष्टान्ताद्याभाससंग्रहार्थमन्यसूत्रे चकारस्यैव दर्शितत्वेन अत्रापि तदर्थाकल्पनात्।"—इति परिशिष्टप्रकाशे वर्द्धमानः।

## न्यायभाष्यम्

प्रत्यवस्थिते इदमाह—यद्यैन्द्रियकं सामान्यं नित्यं कामं (१)घटो नित्योऽस्त्विति।

## न्यायवार्त्तिकम्

यदि सामान्यमैन्द्रियकं नित्यमिति घटोऽप्येवमस्त्विति तृतीयः। अनेन किल प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्यनुजानाति, अभ्यनुज्ञानाच्च दृष्टान्तं जहन्निगमनान्तमेव पक्षं जहातीति प्रतिज्ञाहानिरित्युच्यते।

एतत्तु न बुद्ध्यामहे कथमत्र प्रतिज्ञा हीयते इति। हेतोरनैकान्तिकत्वं सामान्यदृष्टान्तेन परेण चोद्यते, तस्यानैकान्तिकदोषोद्धारमनुक्त्वा स्वदृष्टान्ते नित्यतां प्रतिपद्यते, नित्यताप्रतिपत्तेश्चासिद्धता दृष्टान्तदोषो भवति। सोऽयं दृष्टान्तदोषेण साधनदोषेण वा निग्रहो न प्रतिज्ञाहानिः। दृष्टान्तं च जहत् प्रतिज्ञामपि जहातीत्युपचारेण निग्रहस्थानम्। न च प्रधानासम्भवे उपचारो लभ्यते इति प्रतिज्ञाहानेर्मुख्यो विषयो वक्तव्यः।

कथं तर्हीदं सूत्रं प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिरिति? दृष्टश्चासावन्ते व्यवस्थित इति दृष्टान्तः, स्वश्चासौ दृष्टान्तश्चेति स्वदृष्टान्तशब्देन (२)पक्ष एवाभिधीयते,

## न्यायवार्त्तिकतात्पर्यटीका

तदेतद्भाष्यव्याख्यानमुपन्यस्य वार्त्तिककारो दूषयति—एतत्तु न बुध्यामहे कथमत्र प्रतिज्ञा हीयत इति। अनित्यः शब्द ऐन्द्रियकत्वाद् घटवदिति साधने प्रयुक्ते प्रतिवादिना चानैकान्तिकत्वे सामान्येनोद्भाविते तृतीयस्थानपतितो वाद्याह—अस्तु तर्हि सामान्यवद् घटादिर्नित्य इति। तथा सत्यैन्द्रियकत्वमनैकान्तिकं न भवति, नित्यमात्रगामित्वाद् घटादीनामपि नित्यताऽभ्युपगमादित्याशयेन यद्यपि, तथाऽपि साक्षादनैकान्तिकदोषोद्धारमक्षरारूढमनुक्त्वा स्वदृष्टान्ते नित्यतां प्रतिपद्यते, नित्यताप्रतिपत्तेश्चासिद्धता(३)दृष्टान्ते दोषो भवति—साध्यविकलतेत्यर्थः। सोऽयं दृष्टान्तदोषेण हेतुदोषेण वा विरुद्धत्वेन घटादीनामपि नित्यत्वाभ्युपगमेनैन्द्रियकत्वस्य हेतोः साध्यानित्यत्वविरुद्धेन नित्यत्वेन व्याप्तत्वाद् निग्रहो वादिनो न प्रतिज्ञाहानिः। न खल्वनेन 'अस्तु शब्दो नित्य' इति प्रतिज्ञा परित्यक्ता, किं 'त्वस्तु घटोऽपि नित्य' इत्युक्तम्। यदि दृष्टान्तपरित्यागेन प्रतिज्ञातार्थस्याऽसिद्धेः प्रतिज्ञाहानिरित्युच्यते, ततः सर्व एव दोषः प्रतिज्ञा(४)हानिः, सर्वस्मादेव दोषात्प्रतिज्ञाहानेरुपपत्तेः। तस्मात्कथंचिद् दृष्टान्तपरित्यागेन प्रतिज्ञाहानिरुपचरितव्या, न चासौ प्रधानं प्रतिज्ञाहानिं विना भवितुमर्हतीत्याह—दृष्टान्तं च जहदिति।

(क)तदेवं भाष्यकारीयं व्याख्यानं दूषयित्वा स्वमतेन व्याचिख्यासुः पृच्छति—कथं तर्हीति। दृष्टश्चासावन्ते निगमने व्यवस्थित इति दृष्टान्तः। दृष्टान्तप्रतिदृष्टान्तौ पक्षप्रतिपक्षावुच्येते।

(१) 'घटोऽपि'—इति टि०। (२) 'स्वपक्ष'—इति ख०। (३) 'दृष्टान्तदोषः'—इति वार्त्तिके। (४) —'हानिं विना सर्वथा'—इति क०। (क) अत्र भाष्यवार्त्तिकयोस्तात्पर्य्याविष्करणमुखेन सामञ्जस्यं सम्पादितमाचार्य्यैः—"उपलक्षकलक्षणपदव्याख्यानपरं भाष्यम्, उपलक्षकलक्ष्यपदव्याख्यानपरं च वार्त्तिकम्। मुख्यार्थद्वारमपहाय उपलक्षकतायोगात्। किं पुनरत्रोपलक्ष्यते? प्रतिज्ञापदेन निर्वाह्यनिर्देशः। विवादे हि यद् यथा निर्दिश्यते, तत् तथा निर्वाह्यते, तेन यो यथा साध्यत्वादिना निर्दिष्टस्तस्य तथा निर्वाहमपश्यतस्तत्परित्यागः प्रतिज्ञाहानिरिति सूत्रार्थः"—इत्यादि। ( न्यायपरिशिष्टम् ८१पृ० द्र० )।

## न्यायभाष्यम्

स खल्वयं साधकस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन्निगमनान्तमेव पक्षं जहाति, पक्षं
जहत्प्रतिज्ञां जहातीत्युच्यते, प्रतिज्ञाश्रयत्वात्पक्षस्येति ॥ २ ॥

## न्यायवार्त्तिकम्

प्रतिदृष्टान्तशब्देन च प्रतिपक्षः—प्रतिपक्षश्चासौ दृष्टान्तश्चेति। एतदुक्तं भवति—परपक्षस्य यो
धर्मस्तं स्वपक्ष एवानुजानातीति ; यथाऽनित्यः शब्द ऐन्द्रियकत्वात् इति, द्वितीयपक्षवादिनि
सामान्येन प्रत्यवस्थिते इदमाह—यदि सामान्यमैन्द्रियकं नित्यं दृष्टमिति शब्दोऽप्येवं भवत्विति,
एषा प्रतिज्ञाहानिः। प्रागनेन प्रतिज्ञात'मनित्यः शब्द' इति, सामान्येन अनैकान्तिकत्वेन
प्रत्यवस्थित इदमाह(१)'नित्य' इति(१*), प्राक् प्रमाणावधारितार्थपरित्यागाद्विप्रतिपत्तितो निग्रह-
स्थानमिति। प्रसङ्गविधानादिति चेत् ? अथ मन्यसे नासौ पश्चादपि शब्दस्य नित्यतां प्रतिपद्यते,
किं तु प्रसङ्गं करोति—यदि सामान्यमैन्द्रियकं नित्यं दृष्टं शब्दोऽप्येवं भवत्विति प्रसङ्गं विधत्ते ?
(२)तच्च न, अतएव तत्प्राप्तेः। यत एवासौ हेतुदोषोद्धारे कर्तव्ये प्रसञ्जयत्यत एव निगृह्यत इति।

## न्यायवार्त्तिकतात्पर्यटीका

एतदुक्तं भवति—प्रतिदृष्टान्तस्य प्रतिपक्षस्य सामान्यस्य यो धर्मो नित्यत्वं तं स्वपक्षे शब्देऽभ्य-
नुजानाति। उदाहरणमाह—यथाऽनित्यः शब्द ऐन्द्रियकत्वादिति, द्वितीयपक्षवादिनि
सामान्येन प्रत्यवस्थित इदमाह तृतीयपक्षे स्थितो वादी—यदि सामान्यमैन्द्रियकं
नित्यं(क) शब्दोऽप्येवं भवत्विति, (३)एषा प्रतिज्ञाहानिः। अत्र च अनैकान्तिकत्वेन
प्रत्यवस्थित इत्युपलक्षणम्। येन केन चित्प्रकारेण स्वप्रतिज्ञातार्थानिर्वाहं पश्यन् प्रतिज्ञार्थं
जहत्प्रतिज्ञाहानिमाप्नोतीति परमार्थः। यदप्युच्यते—स्वयमेव घट[?शब्द]मनित्यमैन्द्रियकमुदाहृत्य
घटस्यैन्द्रियकत्वं पश्यन् कथमनुन्मत्तः सन् सामान्यस्य नित्यस्यैन्द्रियकत्वदर्शनमात्राच्छब्दे
नित्यत्वमभ्युपगच्छेत् ? किं तूभयत्र दर्शनात्संशयितः स्यात्(क)। तत्र सर्वं नित्यमिति सांख्यीय-
राद्धान्तावष्टम्भेनापि स्वपक्षनिर्वाहं पश्यतोऽनैकान्तिकत्वोद्धाराय प्रेक्षावतोऽपि प्रवृत्तिसंभवात्।
न चात्यन्तिकं प्रेक्षावत्त्वमिह ग्राह्यम्, तादृशस्य निग्रहाधिकरणत्वानुपपत्तेः। तस्माद्यथा जडं
प्रति विचारो नास्त्येवं प्रामाणिकमपि प्रति निग्रहावतारो नास्तीति मध्यमो जनो निग्राह्यः,
तस्य च संभवन्त्येवं प्रमादा इति। शङ्कते—प्रसङ्गविधानादिति चेत्। निराकरोति—
तच्च न, अत एव तत्प्राप्तेः। हेतुदोषमुद्दिधीर्षुः प्रसञ्जयन्नभ्युपगच्छत्येव, न हि सांख्यीयं
राद्धान्तमनभ्युपगच्छन्नैकान्तिकत्वमुद्धर्तुमर्हतीति भावः।

(१) 'नित्यः शब्द इति'—क०·ख०धृतपाठान्तरम्। (२) 'यच्च'—इति ख०। (क) 'दृष्टमिति'—इति वार्त्तिक-
भागो न गृहीतः। (३) 'एषा'—इति ख० पु० नास्ति। (क) अनुरूपः सन्दर्भो वादन्याये (७७पृ०) द्रष्टव्यः।

## न्यायवार्त्तिकम्

हेतुदोषेण चरितार्थत्वान्न प्रतिज्ञाहानिर्निग्रहस्थानमित्यन्ये—अन्ये तु वर्णयन्ति नैवेदं निग्रहस्थानं युक्तं हेतुदोषेण चरितार्थत्वात्। यस्मा'दैन्द्रियकत्वादि'त्यस्य हेतोरनैकान्तिकत्वं दोषस्तेनायं निगृहीत इति। न, अनैकान्तिकत्वदोषपरिहारेण विप्रतिपत्तेस्तदुपपत्तेः—तस्यैवानैकान्तिकत्वस्य परिहारं कुर्वाणोऽयं निगृह्यत इत्यतोऽनैकान्तिकत्वं न निग्रहस्थानमिति ॥ २ ॥

## न्यायवार्त्तिकतात्पर्यटीका

तदनेन परमतं निराकृतप्रायमपि साक्षान्निराकर्त्तुमुपन्यस्यति—हेतुदोषेण अनैकान्तिकत्वलक्षणेन चरितार्थत्वान्न प्रतिज्ञाहानिर्निग्रहस्थानमित्यन्ये।

यदाह कीर्तिः—"तस्मादैन्द्रियकत्वस्य नित्यानित्यपक्षवृत्तेर्व्यभिचारादसाधनाङ्गस्योपादानान्निग्रहो, न प्रतिपक्षधर्मस्याभ्यनुज्ञानादि"ति(क)। निराकरोति—न, अनैकान्तिकत्वदोषपरिहारेण विप्रतिपत्तेस्तदुपपत्तेः। यदा हि सांख्यपक्षावलम्बनेन शब्दनित्यत्वमभ्युपैति तदा प्रतिज्ञाहानिः, न विरुद्धो हेतुर्नाप्यनैकान्तिको विपक्षाभावात्; केवलं प्रतिज्ञातार्थहानमेवास्य पराजयस्थानम्। 'विप्रतिपत्तेः' स्वसाध्यविरुद्धप्रतिपत्तेरिति सर्वमवदातम् ॥ २ ॥

## वृत्तिः

तत्र क्रमेण प्रतिज्ञाहान्यादीनां लक्षणेषु वक्तव्येषु प्रथमोद्दिष्टां प्रतिज्ञाहानिं लक्षयति—( प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः )।

प्रतिकूलो दृष्टान्तो यत्र स प्रतिदृष्टान्तः परपक्षः, स्वः स्वीयो दृष्टान्तो यत्र स स्वदृष्टान्तः स्वपक्षः, तथा च स्वपक्षे परपक्षधर्माभ्यनुज्ञा प्रतिज्ञाहानिः। स्वयं विशिष्याभिहितपरित्याग इति फलितार्थः। सिद्धान्तस्तु स्वयं विशिष्य नाभिधीयत इति नापसिद्धान्तसाङ्कर्य्यम्। सेयं(ख)पक्षहेतुदृष्टान्तसाध्यतदन्यहानिभेदात् पञ्चधा भवति। यथा 'शब्दोऽनित्यः कृतकत्वा'दित्युक्ते, प्रत्यभिज्ञया बाधितविषयोऽयमित्युत्तरिते, 'अस्तु तर्हि घट एव पक्ष' इति। एवं तत्रैव 'ऐन्द्रियकत्वादि'तिहेतोरनैकान्तिकत्वमिति प्रत्युक्ते 'अस्तु कृतकत्वादिति हेतु'रिति। एवं 'पर्वतो वह्निमान् धूमादयोगोलकवदि'त्युक्ते, दृष्टान्तः साधनविकल इति प्रत्युक्ते, 'अस्तु तर्हि महानसवदि'ति। एवम् अत्रैव सिद्धसाधनेन प्रत्युक्ते, 'अस्तु तर्हि इन्धनवानि'ति। अन्यहानिस्तु विशेषणहान्यादिः, यथा तत्रैव 'नीलधूमादि'त्युक्तेऽसमर्थविशेषणत्वेन प्रत्युक्ते, 'अस्तु तर्हि धूमादिति हेतु'रित्यादि ॥ २ ॥

(क) धर्मकीर्त्ते'र्वादन्याये' न्यायमतखण्डनं (७७पृ०) द्रष्टव्यम्। वार्त्तिककृता तु "अन्ये" इत्यनेन धर्मकीर्त्तिर्न सूचितः, किन्तु तत्सम्प्रदायप्रवर्त्तकाः प्राचीनाः; अर्वाचीनेन धर्मकीर्त्तिना स्वग्रन्थे वार्त्तिकसन्दर्भोद्धारात्। (ख) "स्वीकृत्यास्वीकारः प्रतिज्ञाहानिः। तौ च स्वीकारास्वीकारौ पक्ष-साध्य-हेतु-दृष्टान्ततद्विशेषणानां यथासम्भवमिह विवक्षितौ।"—इति परिशिष्टप्रकाशे वर्धमानः।

### न्यायभाष्यम्

## प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥३॥

प्रतिज्ञातार्थोऽनित्यः शब्द ऐन्द्रियकत्वाद्घटवदि'त्युक्ते योऽस्य प्रतिषेधः प्रति-दृष्टान्तेन (१)हेतुव्यभिचारः—सामान्यमैन्द्रियकं नित्यमिति, तस्मिंश्च प्रतिज्ञातार्थप्रतिषेधे, "धर्मविकल्पादि"ति दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्ययोगे धर्मभेदात् सामान्यमैन्द्रियकं सर्वगतमैन्द्रियकस्त्वसर्वगतो घट इति धर्मविकल्पात्, "तदर्थनिर्देश" इति साध्य-सिद्ध्यर्थम्। कथम्? यथा घटोऽसर्वगत एवं शब्दोऽप्यसर्वगतो घटवदेवानित्य इति।

### न्यायवार्त्तिकम्

प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम्। उदाहरणं पूर्ववत्। सर्वगतासर्वगतविकल्पेन प्रतिज्ञान्तरं करोति—'असर्वगतोऽनित्यः शब्द' इति।

### न्यायवार्त्तिकतात्पर्यटीका

प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ( सू ३ ) ॥ एतद्व्याचष्टे प्रतिज्ञातो मीमांसकं प्रति वैशेषिकेण अनित्यः शब्द इति, तस्य साधनमैन्द्रियकत्वाद् घटवदिति, एवमुक्तस्य प्रतिषेधो मीमांसकेन क्रियते प्रतिदृष्टान्तेन (२)हेतुव्यभिचारः। तमाह—सामान्यमैन्द्रियकं नित्यमिति। तस्मिन् प्रतिषेधे मीमांसकेन कृते धर्मविकल्पात्तथा निर्देश इति यावन्नोच्यते तावदर्थोक्त एव 'धर्मविकल्पा'दित्यनूद्य व्याचष्टे—दृष्टान्तप्रतिदृष्टान्तयो-र्घटसामान्ययोः साधर्म्यमैन्द्रियकत्वं तद्योगे तद्धर्मभेदात् सामान्यमैन्द्रियकं सर्वगतमैन्द्रियकस्त्व-सर्वगतो घट इति धर्मविकल्पात्तदर्थं प्रतिज्ञातार्थसिद्ध्यर्थं शब्दस्यासर्वगतत्वं मीमांसकानां प्रतिपादयितुं निर्देशः, तस्य हि शब्दस्यासर्वगतत्वमसिद्धम्। प्रश्नपूर्वकं निर्देशस्वरूपमाह—कथम्? यथा घटोऽसर्वगतोऽनित्य इति, एवं शब्दोऽप्यसर्वगतोऽनित्य इति। इदं हि प्रतिज्ञा-वाक्यम्, 'अनित्यः शब्द' इतिव'दसर्वगतः शब्द' इति मीमांसकं विप्रतिपन्नं प्रति निर्देशात्, न तु कृतकत्वादितिवदुदाहरणसाधर्म्यादस्य(३)हेतुलक्षणमस्ति; 'साध्यनिर्देशः प्रतिज्ञे'ति तु प्रतिज्ञा-लक्षणयोगात्प्रतिज्ञान्तरमेव। यद्यप्यस्य मनसि वर्त्तते असर्वगतत्वं साधयित्वा मया असर्वगतत्वे सतीति ऐन्द्रियकत्वं हेतुर्विशेषणीय इति, तथाप्येतदनेन न कृतं, किं त्वसर्वगतः शब्दो घटवदित्युक्त्वैव विरतः; परार्थानुमाने च वचनगता गुणदोषा विचार्यन्ते, न तु वचनानपेक्षं वस्तु।

### वृत्तिः

प्रतिज्ञान्तरं लक्षयति—(प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम्)। प्रतिज्ञातस्यार्थस्य प्रतिषेधे कृते तद्दूषणोद्दिधीर्षया धर्मस्य धर्मान्तरस्य विशिष्टः कल्पो विकल्पः, तस्माद्विशेषणान्तरविशिष्टतया प्रतिज्ञातार्थस्य कथनमिति फलितार्थः(क)। 'प्रतिषेध'

(१) 'हेतु'पदं टि-पु० नास्ति। (२) 'हेतुर्व्यभिचारः'—इति क०। (३) 'हेतुलक्षण'—इति क०। (क) प्रतिज्ञातार्थे दूषिते तत्प्रतिचिकीर्षया विशेषणान्तरप्रक्षेपेण पुनस्तद्वचनं प्रतिज्ञान्तरमिति सूत्रार्थ, इत्याचार्याः।

## न्यायभाष्यम्

तत्रानित्यः शब्द इति पूर्वा प्रतिज्ञा,(१)असर्वगत इति द्वितीया प्रतिज्ञा प्रतिज्ञान्तरम्। तत्कथं निग्रहस्थानमिति ? न प्रतिज्ञायाः साधनं प्रतिज्ञान्तरम्, किं तु हेतुदृष्टान्तौ साधनं प्रतिज्ञायाः, तदेतदसाधनोपादानमनर्थकमिति। आनर्थक्यान्निग्रहस्थानमिति ॥३॥

## न्यायवार्त्तिकम्

तत्रानित्यः शब्द इति पूर्वा प्रतिज्ञा सामान्येनैन्द्रियकेण प्रतिहता, 'असर्वगतोऽनित्यः शब्द' इति प्रतिज्ञान्तरम्। तत् कथं निग्रहस्थानम् ? साधनसामर्थ्यापरिज्ञानात्—अपरिज्ञाय साधनसामर्थ्यं कुर्वतोऽसर्वगतोऽनित्यः शब्द इति प्रतिज्ञा। न च प्रतिज्ञा प्रतिज्ञान्तरं साधयति, साधनसामर्थ्यापरिज्ञानात्। तदेतत्प्रतिज्ञान्तरम्। तदिदमप्रतिपत्तितो विप्रतिपत्तितो वा निग्रहस्थानमिति ॥ ३ ॥

## न्यायवार्त्तिकतात्पर्यटीका

तदिदमाह—असर्वगतः शब्द इति द्वितीया प्रतिज्ञा हेतुरहिता। अस्य प्रश्नपूर्वकं निग्रहस्थानत्वमाह—तत्कथमिति। अनर्थकं निष्प्रयोजनमिष्टार्थसिद्धेरभावादिति।

वार्त्तिकं—तत्रानित्यः शब्द इति (क)प्रतिज्ञा प्रथमा। अस्यां सामान्येनैन्द्रियकेण हेतोरनैकान्तिकत्वात्प्रतिहतो वादी प्रतिवादिना 'असर्वगतः शब्दोऽनित्य' इति प्रतिज्ञान्तरं पूर्वप्रतिज्ञासिद्ध्यर्थं करोतीत्यनुषज्यते। पृच्छति—कथमिति। उत्तरम्—साधनसामर्थ्यापरिज्ञानात्। 'अनित्यः शब्द ऐन्द्रियकत्वाद् घटवदि'त्येतावदुक्त्वा निराकाङ्क्षो वादी न त्वसर्वगतत्वे सतीति साधनं विशेषितवान्, (२)न चाविशिष्टं साधनमत्रार्थेऽसमर्थं विशिष्टं तु समर्थं तस्य सामर्थ्यमपरिज्ञायाविशिष्टे तदारोप्याविशिष्टसाधनं प्रयुक्तवान्। तत्र निराकाङ्क्षो वादी सव्यभिचारहेतुप्रयोगादेव पराजीयते, न तु प्रतिज्ञान्तरप्रयोगात्। यदि तु वादिन्यपर्यवसितवाद एव मध्ये प्रतिवादिना हेतोरनैकान्तिकत्वे उद्भाविते तमेव हेतुमसर्वगतत्वे सतीति विशेष्टुं मीमांसकं प्रति शब्दस्यासर्वगतत्वं प्रतिजानीते, 'असर्वगतः शब्द' इति प्रतिज्ञाय च न हेतुं ब्रवीति, तदानैकान्तिकत्वोद्धाराय प्रतिज्ञान्तरकरणान्नानैकान्तिकत्वेन पराजीयते, अपि तु प्रतिज्ञान्तरादेव, न हि प्रतिज्ञा प्रतिज्ञान्तरं साधयितुमर्हतीति। सोऽयं प्रतिज्ञामात्रस्यासाधकत्वाप्रतिपत्त्याऽसाधकस्यैव वा साधकत्वप्रतिपत्त्या पराजीयते। तदेतदाह—न च प्रतिज्ञा प्रतिज्ञान्तरं साधयति। तेन प्रतिज्ञा यत्रार्थे समर्था तदपरिज्ञानात्पञ्चावयवसाध्ये च सामर्थ्यारोपणा'दपरिज्ञानादि'ति श्लिष्टनिर्देशः; प्रसज्यप्रतिषेधपर्युदासौ विवक्षितौ; तेनाज्ञानाद्विपरीतज्ञानाच्च प्रतिज्ञान्तरं निग्रहस्थानमिति।

(ख)यत्पुनरुच्यते परैः, "अत्यन्तासंबद्धमेतद्—यत्प्रतिज्ञा प्रतिज्ञासाधनायेति, यो हि प्राक् प्रतिज्ञामुक्त्वा हेतूदाहरणादिकं वक्तुं जानाति स कथंचिदनुक्रमं साधनस्य

(१) 'असर्वगतशब्द इति'—इति टि०। (२) 'नवा'—इति क०। (क) 'पूर्वा प्रतिज्ञे'ति वार्त्तिकसन्दर्भोऽर्थतोऽत्र गृहीतः। (ख) धर्मकीर्त्तेर्वचनं दूषयितुमुपन्यस्यति—'यत् पुन'रिति। वादन्याये "अत्यन्तासम्बद्धश्चेदं प्रतिज्ञा प्रतिज्ञासाधनायेति"—इत्यादिसन्दर्भो द्रष्टव्यः ( ७९पृ० )।

## न्यायभाष्यम्

# प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४ ॥

गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञा, 'रूपादितोऽर्थान्तरस्यानुपलब्धे'रिति हेतुः।

## न्यायवार्त्तिकम्

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः। यत्र प्रतिज्ञा हेतुना विरुध्यते हेतुश्च प्रतिज्ञया, स

## न्यायवार्त्तिकतात्पर्यटीका

जानात्येव, जानन् कथमविकलान्तःकरणः प्रतिज्ञामेव प्रतिज्ञासाधनायोपाददीते''ति। तत्र ब्रूमः—नायं प्रतिज्ञया प्रतिज्ञा साधनीयेति बुद्ध्या प्रवृत्तः, किं त्वसर्वगतत्वं शब्दस्य मीमांसकं प्रति साधयित्वा तेनैन्द्रियकत्वं विशिष्यानैकान्तिकत्वमुद्धरणीयमिति मनोरथेन प्रवृत्तः प्रतिज्ञां कृतवान्—असर्वगतः शब्द इति। अथास्य प्रतिवाद्यवष्टम्भात्परिषद्दर्शनाद्वा स्तम्भितत्वे (क)साधनाप्रतिभया तूष्णींभवतः प्रेक्षावतोऽपि प्रतिज्ञान्तरं भवति निग्रहस्थानम्। अयं च विकलान्तःकरणस्य निग्रहो भवद्भिरप्युक्त एव 'तदभ्युपगम्याप्रतिभया तूष्णींभावादि'ति(ख) वदद्भिः। सोऽयमीदृशोऽसत्प्रलापो भवद्भिः शास्त्रे निबन्धनीयो न त्वस्माभिरिति व्यक्तमियं राजकुलस्थितिरिति सर्वं चतुरस्रम् ॥ ३ ॥

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ( सू ४ ) ॥ अत्र 'प्रतिज्ञाहेत्वो'रिति प्रतियोगिद्वयमात्रोपलक्षणपरम्। तेन दृष्टान्तादयोऽपि प्रतियोगिन उन्नेयाः। एतदुक्तं भवति—येषां वाक्यगतानां पदार्थानां मिथो व्याघातः प्रतीयते, प्रमाणान्तरं च विरोधकं, स विरोधो नाम निग्रहस्थानम् ; लक्ष्यस्थितस्य प्रतिज्ञाग्रहणस्याप्युपलक्षणार्थत्वात्। न चैवं (ग)भाण्डालेख्यन्यायः, एकदेशेनाव्यापकेन समुदायसंग्रहे स हि भवति, न तु व्यापकेन संग्रहे, * व्यापकं चानवयवेन इदं प्रतियोगिमिथुनयोर्विरोधः, अतो यथाश्रुति तावत्सूत्रं व्याचष्टे वार्त्तिककारः—यत्र प्रतिज्ञा

## वृत्तिः

इत्यनेन झटिति संवरणे विलम्बेनापि स्वयं दूषणं विभाव्य विशेषणे न दोष इत्युक्तम्। प्रतिज्ञातार्थस्येत्युपलक्षणं, हेत्वतिरिक्तार्थस्येति तत्त्वम्। तेन उदाहरणान्तरमुपनयान्तरं निगमनान्तरं च प्रतिज्ञान्तरत्वेन सङ्गृहीतं भवति। इदं च पक्षसाध्यविशेषणभेदात् प्रत्येकं द्विविधं, यथा शब्दो नित्य इत्युक्ते ध्वनौ बाधेन परेण प्रत्युक्ते वर्णात्मकः शब्दः पक्ष इति प्रतिज्ञान्तरम्। न चेदमर्थान्तरं प्रकृतोपयोगात्, न चेयं प्रतिज्ञाहानिः, पूर्वोक्तस्यापरित्यागात्। एवं पर्वतो वह्निमान् सुरभिमलिनधूमवत्त्वादित्युक्ते असमर्थविशेषणत्वेन च परेण प्रत्युक्ते 'कृष्णागुरुप्रभववह्निमानि'त्यत्र। एवं तादृशवह्नौ साध्ये 'यः सुरभिमलिनधूमवान् स वह्निमानि'त्युदाहरणे न्यूनत्वेन प्रत्युक्ते 'स तादृशवह्निमानि'त्यत्र। एवमन्यदप्यूह्यम् ॥३॥

---

(क) ''सभाक्षोभेण स्तम्भितत्वादवचने [ ·साधनावचने इत्यर्थः ] 'न्यूनं' स्यादिति चेन्न ; पूर्वोपक्रान्तस्य हेत्वादेर्विद्यमानत्वेन न्यूनत्वानवकाशात्''—इति न्यायपरिशिष्टे (८६पृ०) उदयनः। ननु तथापि अनैकान्तिकदोषस्यैव पूर्वमुक्तत्वेन तेनैव निगृहीते वादिनि कथं पुनः प्रतिज्ञान्तरमुद्भाव्यत इति चेन्न, तदनुद्भावने पूर्वदोषो वादिना परिहृत इति बुद्ध्या विरतः प्रतिवादीति सभ्यानां बुद्धिः स्यात्, तथाचाप्रतिभया प्रतिवादी निगृह्येत। पूर्वदोष एव पुनरुद्भाव्यतामिति चेत्,—तदपि न शक्यं प्रतिज्ञान्तरमनुद्भाव्येति व्यक्तं तत्रैव। (ख) सन्दर्भोऽयमन्विष्यापि वादन्याये नोपलब्धोऽस्माभिः, वादन्यायस्येति तु प्रतिभाति। ग्रन्थान्तरीयो वा वादन्यायसंवादी सन्दर्भः पूर्वोऽपि वा कथनांश इति सुधीभिर्निरूपणीयम्।

* अत्रायं पाठो न संगच्छते। ''-ऽव्यापकेनानवयवेन इह प्रतियोगि......'' इत्येवं पाठो वा, पतितो

(ग) ''यदप्युक्तं—एतेन प्रतिज्ञया दृष्टान्तविरोधादयोऽपि वक्तव्याः भाण्डालेख्यन्यायेने''ति

## न्यायभाष्यम्

सोऽयं प्रतिज्ञाहेत्वोर्विरोधः। कथम्? यदि गुणव्यतिरिक्तं द्रव्यं, रूपादिभ्योऽर्थान्तरस्यानुपलब्धिर्नोपपद्यते। अथ रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः, गुणव्यतिरिक्तं द्रव्यमिति

## न्यायवार्त्तिकम्

प्रतिज्ञाविरोधो नाम निग्रहस्थानम्—यथा गुणव्यतिरिक्तं द्रव्यं भेदेनाग्रहणादिति। एतेनैव प्रतिज्ञाविरोधोऽप्युक्तः—यत्र प्रतिज्ञा स्ववचनेन विरुध्यते, यथा—श्रमणा गर्भिणी*। हेतुविरोधोऽपि—यत्र प्रतिज्ञा हेतुना विरुध्यते, यथा—सर्वं पृथक् समूहे भावशब्दप्रयोगादिति।

## न्यायवार्त्तिकतात्पर्यटीका

हेतुना विरुध्यत इति। द्वयोर्विरोधे यस्य प्रमाणान्तरानुग्रहस्तेन तद्बाध्यत इति तेन तद्विरुध्यत इत्युच्यते। यत्र प्रतिज्ञया हेतुर्विरुध्यते तदुदाहरति—यथा गुणव्यतिरिक्तं द्रव्यं भेदेनाग्रहणादिति। अत्र हि भेदेनाग्रहणादित्यनेन ग्रहणप्रतिषेधेन ग्राह्याभाव उपलक्ष्यते। तेनैवं हेत्वर्थो भवति—गुणव्यतिरिक्तं द्रव्यमव्यतिरेकादिति। सोऽयं प्रतिज्ञाहेतुपदयोर्व्याप्तिस्मरणानपेक्ष एव परस्परव्याघातोऽस्तिनास्तिपदयोरिव(क)। न चैवंविधः शब्दे नित्यत्वकृतकत्वयोर्येन कृतकत्ववद्विरुद्धोऽयं हेत्वाभासः स्यात्। तत्र हि कृतकत्वस्य नित्यत्वेन व्याप्तिस्मरणापेक्ष एव विरोधः प्रतीयते, न त्वयं तथा, अस्तिनास्तिवत्स्वभावविरोधात्। यद्यप्ययमसिद्धोऽपि हेतुस्तथाऽप्यस्यासिद्धिर्बाधकं प्रमाणान्तरमनुसृत्य प्रतिपत्तव्या, प्रतिज्ञाविरोधस्तूच्चारणमात्रादेव प्रथमत एव गम्यत इति। तेनैव दूषितेनासिद्धिः पश्चात्तनी न दूषणत्वाय कल्पते, भस्मीकृते दहनवत्। प्रतिज्ञाहेतुविरोधमात्रेण च निग्रहसिद्धेः सद्भावमात्रेण प्रतिज्ञाया बलवत्तास्मरणम्, प्रतिज्ञायाश्चात्र बलवत्त्वे प्रमाणान्तरानुग्रहात्। तथा हि दर्शनस्पर्शनाभ्यामेकार्थप्रतिसंधानाद्रूपादिव्यतिरिक्तं द्रव्यं सिध्यतीति तदनुगृहीता प्रतिज्ञैव हेत्वर्थं बाधत इति। एतेनैवेति, लक्षणेन। श्रमणा गर्भिणीति, श्रमणा ब्रह्मचारिणी नान्तर्वत्नी भवितुमर्हति, जितेन्द्रियस्योपस्थसंयमो हि ब्रह्मचर्यम्। (ख)न चासाधनाङ्गस्य प्रतिज्ञाया वचनादेव निगृहीत इति कृतं विरोधोद्भावनेन, निष्पादितक्रिये कर्मणि अविशेषाभिधायिनो दूषणस्य दूषणन्यायातिपातादिति सांप्रतम्; प्रतिज्ञायाः साधनाङ्गत्वस्य प्रथम एवाध्याये दर्शितत्वात्। हेतुविरोधोऽपि यत्र हेतुना प्रमाणान्तरेणानुगृहीतेन प्रतिज्ञा बाध्यते, यथा सर्वं पृथगिति प्रतिज्ञा, न किंचिदेकमित्यर्थः। हेतुः—'समूहे भावशब्दप्रयोगा'दिति, एकसमुच्चये घटादिप्रयोगादित्यर्थः। नास्त्येकमेकसमुच्चयश्चेति वचने मिथो विरुध्येते, विनैव व्याप्त्यनुस्मरणमिति। न च सर्वनास्तित्ववादिनो नैकसमुच्चयोऽस्तीति वक्तव्यम्, असति हेतौ साध्यसिद्धेरयोगात्। न च कल्पितस्य हेतोः साधनाङ्गतेति तत्र तत्र

वादन्याये (९०पृ०) धर्मकीर्त्तिः। तत्र च भाण्डालेख्यन्याय इत्थं व्याख्यातो बौद्धाचार्यशान्तरक्षितेन—"यथा हि भण्डाः प्राकृतान् विस्मापयन्तश्चित्रलक्षणोपेतकपिशालभञ्जिकादिप्रतिच्छन्दकमालिख्य विचित्रशिल्पकलाकौशलशालिनोऽतिदिशन्ति 'एवंप्रकाराण्यपि अस्मत्कौशलनिर्मितान्येकतालमात्रेण हस्त्यादिरूपकस्थानानि प्रतिपत्तव्यानी'ति; तथाजातीयकमेतदुद्द्योतकरस्ये"ति। इह तु आदर्शद्वयानुसारेण 'भाण्डालेख्यन्याय'इति मुद्रितम्।

(क) 'पदयोरेव'—इति क-ख-पुस्तकयोः प्रमादान्मुद्रितम्। (ख) 'न वा सा—'इति क-पुस्तके प्रमादः। "तदेतमेव निग्रहाधिकरणमसाधनाङ्गभूतायाः प्रतिज्ञायाः साधनवाक्ये प्रयोगो, न विरोधः" इति धर्मकीर्त्तिवचनमेतेन निराकृतम् (वादन्याय—८२पृ० द्र०)। * धर्मकीर्त्तिसमुद्धृतसन्दर्भदर्शनात् तदीयखण्डनदर्शनाच्च—"श्रमणा गर्भिणी"त्यस्यानन्तरं "नास्त्यात्मेति वे"त्युदाहरणान्तरमासीद् वार्त्तिककृतामिति निःसंशयं शक्यम्प्रतिपत्तुम्। उदयनाचार्येण च न्यायपरिशिष्टे—"साध्यधर्मिनिषेधाद् वा, यथा नास्त्यात्मेती"त्युदाहृतम्। परन्त्वस्मदवलम्बितयोरादर्शयोरदर्शनात् टीकाकृतामव्याख्यानाच्च न शक्यते मुद्रापयितुम्।

## न्यायभाष्यम्

नोपपद्यते । गुणव्यतिरिक्तं च द्रव्यं रूपादिभ्यश्चार्थान्तरस्यानुपलब्धिरिति विरुध्यते—व्याहन्यते न सम्भवतीति ॥ ४ ॥

## न्यायवार्त्तिकम्

एतेन प्रतिज्ञया दृष्टान्तविरोधोऽपि वक्तव्यः—हेतोश्च दृष्टान्तादिभिर्विरोधः, (१)प्रमाणविरोधश्च प्रतिज्ञाहेत्वोर्वक्तव्यः । परपक्षसिद्धेन गोत्वादिनाऽनैकान्तिकदेशनाद्विरोधः—यः *परपक्षसिद्धेन गोत्वादिना व्यभिचारयति तद्विरुद्धमुत्तरं वेदितव्यम् । स्वपक्षानपेक्षं च तथा—यश्च[ ? श्च ] स्वपक्षानपेक्षं हेतुं प्रयुङ्क्ते—अनित्यः शब्द ऐन्द्रियकत्वादिति, स प्रसिद्धस्य गोत्वादेर्नित्यत्व-विरोधाद्विरुद्धः । उभयपक्षसम्प्रतिपन्नस्त्वनैकान्तिकः—यदुभयपक्षसम्प्रतिपन्नं वस्तु, तथात्वेन

## न्यायवार्त्तिकतात्पर्यटीका

निवेदितम् । अत्र चैकसमुच्चयस्य प्रमाणानुग्रहान्नैकं किंचिदिति प्रतिज्ञा हेतुना बाध्यते । एतेन लक्षणेन प्रतिज्ञया दृष्टान्तविरोधोऽपि वक्तव्यः—यथा अनित्यः शब्दः प्रमेयत्वात् । यत्प्रमेयं तन्नित्यं यथाऽऽकाशमिति साधर्म्यदृष्टान्तः । यद्यप्यत्र वस्तुतो हेतुरनैकान्तिकस्तथाऽपि दृष्टान्तस्य प्रतिज्ञाविरोधेनैव निगृह्यते, विरोधस्य वाक्ये प्रथममवगतेः ;—अनित्यं घटाद्युज्जीयानैकान्तिकत्व-(२)प्रतिपत्तेस्तज्जघन्यत्वादिति(क) । हेतोश्च दृष्टान्तादिभिर्विरोध एतेन वक्तव्य इत्यनु-षज्यते । यथा—नित्यः शब्द ऐन्द्रियकत्वादनैन्द्रियकद्व्यणुकवदिति । अत्राप्यैन्द्रियकत्वानैन्द्रिय-कत्वयोः शब्दतो विरोधः प्रतीयते, साधनवैकल्यं तु वस्तुस्वभावालोचनयेति विशेषः । एवमुपनयेन विरोधोऽनैन्द्रियकश्च शब्द इति । अत्रापि वस्तुस्वभावालोचनयाऽनैन्द्रियकत्वासिद्धिः प्रतीयते, शब्दतस्तु विरोध इति । प्रमाणविरोधश्च प्रतिज्ञाहेत्वोर्वक्तव्यः । यद्यपि बाधितविषयं हेत्वाभासान्तर्गतं तथापीहाप्यस्तीति विरोधहेत्वाभासयोरत्र निग्रहस्थानयोः समावेशोऽस्तु ; न क्वचिद्विषये समावेशादानर्थक्यम्, विषयान्तरे समावेशाभावादर्थवत्त्वात् । दर्शितं चानन्तरमेव भिन्नविषयत्वमिति । तदेवं साधनवादिनो विरोधं निग्रहस्थानमभिधायोत्तरवादिनोऽपि निग्रह-स्थानमनेनैव संगृहीतमित्याह—परपक्षसिद्धेन गोत्वादिनेति । यदा हि बौद्धेन प्राभाकरं प्रति साध्यते अनित्यः शब्दः श्रावणत्वादिति—यद्यनित्यत्वं न भवेच्छ्रावणत्वं न स्यादिति ; प्राभाकरोऽनैकान्तिकत्वमुद्भावयति श्रावणं शब्दत्वं नित्यं चेति ; तदाऽस्यानैकान्तिकत्वोद्भावनं स्वकीयं शब्दत्वनिराकरणविरुद्धमिति । परपक्षसिद्धं गोत्वाद्यपीदृश एव विषये विरुद्धं द्रष्टव्यम् । सिद्धान्तविरुद्धं च साधनं विरुद्धमित्याह—स्वपक्षानपेक्षं च । ननु यद्यनैकान्तिकोद्भावनमपि विरुद्धं कस्तर्ह्यनैकान्तिकत्वापादनस्य विषय इत्यत आह—उभयपक्षसंप्रतिपन्नस्त्विति ।

---

(१) 'प्रमाणावि'—इति ख० । (२) 'नित्यप्रतिपत्ते'रिति क० । (क) "यद्यपि च विरोधे सांप्रत्यायकत्वे-ऽवश्यं हेत्वाभासानुप्रवेशः, तथापि तस्य जघन्यप्रतीतित्वात् तमुपेक्ष्य विरोध एवोद्भाव्यः, ...विरोधे यद्यप्यनैकान्ति-कोपेक्षानर्हत्वात् ।" इति न्यायपरिशिष्टे उदयनः । "संप्रत्ययो झटिति प्रत्ययः ।...विरोधे यद्यप्यनैकान्ति-कादयस्तथापि तत्प्रतीत्युद्भावनयोरेतत्प्रतीत्युद्भावनोपजीवकत्वेन जघन्यत्वादस्य च प्राथमिकत्वादयमेव प्रथमोद्भाव्य इति भाव"—इति वर्द्धमानः ( ९०पृ० ) । वृत्तिकृतस्तु असंकीर्णस्थलमपि दर्शितवन्तः ( परपत्रे द्रष्टव्यम् ) ।

* 'परपक्ष'शब्दोऽत्र उत्तरवादिपक्षपरः, न तु विरोधिपक्षपरः, तेन उत्तरवादिमात्रसिद्धेनेत्यर्थः । विरोधिपक्षपरत्वे व्यभिचारोद्भावकस्य परपक्षो वादिपक्ष एव स्यात् ; तथात्वे 'परपक्षासिद्धेने'ति पाठो युज्येत । धर्मकीर्त्तिस्तु "परपक्षं स्वसिद्धेने'ति पाठमुद्धृतवान् । उत्तरत्र 'स्वपक्षानपेक्ष'पददर्शनात् इह 'पर'शब्दस्य स्वेतरपरतया 'परपक्षासिद्धेने'ति पाठ एव समीचीनो मन्यते ।

न्यायभाष्यम्

## पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः ॥ ५ ॥

अनित्यः शब्द ऐन्द्रियकत्वाद् (१)इत्युक्ते परो ब्रूयात्सामान्यमैन्द्रियकं न चानित्यम्,

न्यायवार्त्तिकम्

तेनानैकान्तिकदेशनेति। दृष्टान्ताभासाश्च कस्मान्निग्रहस्थानेषु नोक्ताः? हेत्वाभासपूर्वकत्वाद् दृष्टान्ताभासानां तदभिधानेनैवोक्ता वेदितव्या इति ॥ ४ ॥

पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः। यः प्रतिज्ञातमर्थं प्रतिषेधे कृते परित्यजति स प्रतिज्ञासंन्यासो वेदितव्यः। उदाहरणं पूर्ववत्। सामान्येनानैकान्तिकत्वे

न्यायवार्त्तिकतात्पर्यटीका

देशयति—दृष्टान्ताभासा इति। अवयवान्तरं हि प्रतिज्ञाहेत्वादिभ्य उदाहरणं, तेन हेत्वाभासोक्त्या तस्य संग्रहः। पारम्पर्येण तूदाहरणाभासस्य हेतुदूषकत्वेन सर्वमेव हेतुदूषकमिति भावः। परिहरति—हेत्वाभासपूर्वकत्वादिति। हेत्वाभासा इत्यत्र हेतुशब्दः स्वार्थमपरित्यज्य दृष्टान्त-मुपलक्षयति। उपलक्षणे हेतुरुक्तः। हेत्वाभासपूर्वकत्वाद्धेत्वाभासप्रधानकत्वाद् दृष्टान्ताभासेनापि हेतुरेव दूष्यते यतः। न चैतावता प्रतिज्ञादिदोषोपलक्षणप्रसङ्गः। न हि यत्र यत्र निमित्तमस्ति तत्सर्वमुपलक्षणीयं, किं तु यदुपलक्ष्यते तत्रावश्यं निमित्तं वक्तव्यम्। न च सूत्रकारस्य सर्वत्र लाघवादरो दृढ इत्युक्तम्। तस्मात्सर्वं रमणीयम् ॥ ४ ॥

पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः (सू ५)॥ ऐन्द्रियकत्वस्य हेतो-रनैकान्तिकत्वोद्भावनेन शब्दानित्यत्वपक्षे प्रतिक्षिप्ते वादी प्रतिवादिनं ब्रूयादनैकान्तिकत्वमुद्दिधीर्षुः —कः पुनराहानित्यः शब्द इति। यद्यहमनित्यः शब्द इति प्रतिज्ञातमपह्नोतुं शक्नोमि तदा न

वृत्तिः

प्रतिज्ञाविरोधं लक्षयति—( प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः )।

अत्र च प्रतिज्ञाहेतुपदे कथाकालीनवाक्यपरे। तथा च कथायां स्ववचनार्थविरोधः प्रतिज्ञाविरोधः। यद्यपि काञ्चनमयः पर्वतो वह्निमान्, पर्वतः काञ्चनमयवह्निमान्, ह्रदो वह्निमान् ह्रदत्वात्, पर्वतो वह्निमान् काञ्चनमयधूमादित्यादौ हेत्वाभासान्तरसाङ्कर्य्यं, तथाऽप्युपधेयसंकरेऽप्युपाधेरसांकर्यान्न दोषः। न चासङ्कीर्णस्थलाभावः, पर्वतो वह्निमान् धूमात् यो यो धूमवान् स निरग्निरित्युदाहरणे निरग्निश्चायमित्युपनये(क) च तत्सत्वात्। एवं निगमनेऽपि बोध्यम् ॥ ४ ॥

(क) चस्योपनयत्वं तु तदभिप्रायेण प्रयोगात्, वस्तुतस्तु निगमनत्वमेवास्य युज्यते। "एवंविधानां च परमतप्रतिषेधाभिप्रायदुरवक्षेपाद्वा, दृष्टान्ताभासतरलतया वा प्रमादाद्वा सभाक्षोभाद्वा उक्तिसम्भवः।" [ उदयनः ]. (१) 'घटवदित्युक्ते'—इति टि०।

## न्यायभाष्यम्

एवं शब्दोऽप्यैन्द्रियको न चानित्य इति। एवं प्रतिषिद्धे पक्षे (१)यदि ब्रूयात्—'कः पुनराह अनित्यः शब्द' इति, सोऽयं प्रतिज्ञातार्थनिह्नवः प्रतिज्ञासन्न्यास इति ॥ ५ ॥

# अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥ ६ ॥

निदर्शनम्—एकप्रकृतीदं व्यक्तमिति प्रतिज्ञा। कस्माद्धेतोः? एकप्रकृतीनां विकाराणां परिमाणात्। मृत्पूर्वकाणां शरावादीनां दृष्टं परिमाणं, यावान्प्रकृतेर्व्यूहो भवति तावान्विकार इति। दृष्टं च प्रतिविकारं परिमाणम्। अस्ति चेदं परिमाणम् प्रतिव्यक्तं तदेकप्रकृतीनां विकाराणां परिमाणात् पश्यामो (२)व्यक्तमिदमेकप्रकृतीति।

## न्यायवार्त्तिकम्

हेतोः कृते ब्रूयात्—कश्चैवमाहानित्यः शब्द इति? एतत्साधनसामर्थ्यापरिच्छेदात्(३) विप्रतिपत्तितो निग्रहस्थानमिति ॥ ५ ॥

अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्। उदाहरणं भाष्ये।

## न्यायवार्त्तिकतात्पर्यटीका

सामान्येन नित्येन मे हेतुरनैकान्तिको भवतीति बुद्ध्याऽपह्नुते, सोऽयमेवंवादी न शक्योऽनैकान्ति-
कत्वेन जेतुम्, अपह्नवस्यापह्नवत्वावेदनेऽनैकान्तिकत्वोद्धारात्। तस्मादनैकान्तिकस्यानैकान्ति-
कत्वंस्थापनायापह्नवस्यापह्नवत्वमुद्भावनीयम्। तत्र किमपह्नवत्वमुद्भाव्यानैकान्तिकत्वं व्यवस्थाप्य
निगृह्यताम्, उतापह्नवादेवेति संशये अपह्नवत्वोद्भावनेनैव पूर्वापरपराहतेर्निगृह्यते, नानैकान्तिक-
त्वेन, तत्पूर्वकत्वादनैकान्तिकत्वस्थापनस्य। तस्माद् यदुक्तं कीर्त्तिना—(क)"किमिदानीं
हेत्वाभासादुत्तरप्रतिज्ञासंन्यासापेक्षया तस्य प्रतिवादिनो हेत्वाभास एवाद्यं निग्रहस्थान"मिति,
तदपास्तम् ; प्रतिज्ञासंन्यासस्यैव पूर्वभावित्वात्। यदपि तेनोक्तं (ख)"पक्षप्रतिषेधे तूष्णींभव-
तस्तूष्णींभावो नाम निग्रहस्थानं प्रलपतश्च प्रलपितं नामेत्याद्यपि वाच्यं स्यादि"ति, तदप्यसांप्रतम्।
न हि तूष्णींभावेन प्रलपितादिभिर्वा शक्यमनैकान्तिकत्वमुद्धर्तुं, यथा प्रतिज्ञार्थापह्नवेन। न चैते
हेत्वाभासोद्भावनस्य पुरस्तात्तनाः। तस्मादेतदप्यनिरूपिताभिधानाद् यत्किञ्चिदिति ॥ ५ ॥

अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ( सू ६ )॥ व्याख्यातुं
निदर्शनमाह—निदर्शनमेकप्रकृतीदं व्यक्तं भूतभौतिकेन्द्रियम् एकप्रकृतीनां विकाराणां परि-
माणात्। तद् यथा एकमृत्पूर्वा घटशरावोदञ्चनादयः परिमिता दृष्टाः, यावान् प्रकृतेर्व्यूहः
संस्थानं तावान्विकार इति। न चैतदुदाहरणं साधनविकलमित्याह दृष्टं चेति। अस्य परिमितत्वस्य
उपनयमाह—अस्ति चेदमिति। निगमनमाह—तदेकप्रकृतीनामिति।

(१) 'यदि'—इति टि० पु० नास्ति। (२) 'व्यक्तिमदनेकप्रकृतीति'—इति ग०। (३) 'परिज्ञानात्'—
इति क्वचित्। (क-ख) मुद्रितवादन्यायग्रन्थे ( ९६-९७पृ० ) स्वल्पभेदेनेदं सन्दर्भद्वयं दृश्यते। 'प्रलपतश्च
प्रलपितं नामे'त्यत्र 'प्रपलायमानस्य प्रपलायितं नामे'ति विशेषो द्रष्टव्यः।

## न्यायभाष्यम्

(१)अस्य व्यभिचारेण(१*) प्रत्यवस्थानम्—नानाप्रकृतीनामेकप्रकृतीनां च विकाराणां दृष्टं परिमाणमिति। एवं प्रत्यवस्थिते आह—एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनात्। सुखदुःखमोहसमन्वितं हीदं व्यक्तं(२)परिमितं गृह्यते,—(३)तत्र प्रकृत्यन्तररूपसमन्वयाभावे सत्येकप्रकृतित्वमिति। तदिदमविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं ब्रुवतो हेत्वन्तरं भवति। सति च हेत्वन्तरभावे पूर्वस्य हेतोरसाधकत्वान्निग्रहस्थानम्। हेत्वन्तरवचने सति यदि हेत्वर्थनिदर्शनो

## न्यायवार्त्तिकतात्पर्यटीका

हेतोर्व्यभिचारेण प्रत्यवस्थानं प्रतिवादिनः। नानाप्रकृतीनां घटरुचकादीनामेकप्रकृतीनां च घटशरावादीनां दृष्टं परिमाणमिति। एवं प्रत्यवस्थिते प्रतिवादिनि वादी पश्चात्परिमितत्वं हेतुं विशिनष्टि—एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनादिति ; प्रकृतिः स्वभावः, एकस्वभावसमन्वये सतीत्यर्थः। एकप्रकृतिसमन्वयं स्फुटयति—सुखदुःखमोहसमन्वितं हीदं सर्वं व्यक्तं परिमितं गृह्यते। तथा हि—मैत्रदारेषु नर्मदायां मैत्रस्य सुखबुद्धिर्भवति, तत्सपत्नीनां च दुःखबुद्धिः, चैत्रस्य तामविन्दतो रणरणकवतो मोहो विषादः। नर्मदया भावान्तराणि व्याख्यातानि। तदेवं यत्रैकस्वभावसमन्वये सति परिमाणं तत्रैकप्रकृतित्वमेव, तद् यथा एकमृत्पिण्डस्वभावेषु घटशरावोदञ्चनादिषु। घटरुचकादयस्तु नैकस्वभावाः, मार्दसौवर्णादीनां स्वभावानां भेदात्। निर्दिश्यात्र सूत्रं योजयति—तदिदमविशेषोक्ते हेतौ प्रतिषिद्ध इति। अस्य निग्रहस्थानत्वमाह—सति च हेत्वन्तरभाव इति। अपि च यदि हेत्वन्तरवचने विश्वमेकप्रकृति साध्यते तदा निदर्शनं नास्ति, सर्वस्य पक्षे निक्षेपात् ; अथ निदर्शनसिद्ध्यर्थं किंचित्पक्षाद्व्यतिरिच्यते, ततस्तेनैवानैकान्तिकत्वम् ; अन्वितानां परिमितानां भिन्नप्रकृतिकत्वादित्याह—हेत्वन्तरवचने सति (४)यदि हेत्वर्थनिदर्शन इति।

## वृत्तिः

प्रतिज्ञासन्न्यासं लक्षयति—( पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः )। पक्षस्य स्वाभिहितस्य परेण प्रतिषेधे कृते सति तत्परिजिहीर्षया प्रतिज्ञातार्थस्यापनयनमपलाप इत्यर्थः(क)। यथा 'शब्दोऽनित्य ऐन्द्रियकत्वा'दित्युक्ते सामान्ये व्यभिचारेण परेण प्रत्युक्ते, 'क एवमाह शब्दोऽनित्य' इति ॥ ५ ॥

(१) 'अव्यभिचारेण'—इति टि०। (२) 'परमिदम्'—इति ग०। (३) 'तस्य'—इति ट्रि०। (४) 'यदी'ति नास्ति क०। (क) "सोऽयं चतुःप्रकारः—'क एवमाहे'ति वा, 'परपक्षोऽयं मयोक्त' इति वा, स्वोक्त एव 'त्वयेदमुक्त'मिति वा, परोक्तमेव 'मयेदमुक्त'मिति वा। ...अनुवादप्रोज्ज्वलं दूषणोपाल्ह्नुतापलपेदिति रहस्यम्।"—न्यायपरिशिष्टम्।

दृष्टान्त उपादीयते, नेदं व्यक्तमेकप्रकृति भवति, प्रकृत्यन्तरोपादानात्। अथ नोपादीयते, दृष्टान्ते हेत्वर्थस्यानिदर्शितस्य (१)साधकभावानुपपत्तेरानर्थक्याद्धेतोरनिवृत्तं निग्रहस्थानमिति ॥ ६ ॥

## न्यायवार्त्तिकम्

साधनान्तरोपादाने पूर्वस्यासामर्थ्यख्यापनान्निग्रहस्थानमिति, सामर्थ्ये वा हेत्वन्तरं व्यर्थमिति ॥ ६ ॥

इति प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेषलक्षणप्रकरणम्।

## न्यायवार्त्तिकतात्पर्यटीका

हेतुः साधनम्, अर्थः साध्यः, तौ हेत्वर्थौ; निदर्शयति व्याप्यव्यापकभावेनेति निदर्शनः, हेत्वर्थयोर्निदर्शनो हेत्वर्थनिदर्शनो दृष्टान्तः। स यद्युपादीयते, ततो नेदं व्यक्तमेकंप्रकृति भवति, दृष्टान्तस्य प्रकृत्यन्तरोपादानात्।

वार्त्तिकं—साधनान्तरोपादाने पूर्वस्येति। दत्तोत्तरावसर एव वादिनि यदि प्रतिवादी हेत्वर्थं व्यभिचारयति, वादी च तृतीयपदके स्थितो हेतुं विशेषयति, तदा साधनान्तरोपादानान्निगृह्यतामुतानैकान्तिकसाधनोपादानात्? न तावदनैकान्तिकसाधनादस्य निग्रहो हेतुविशेषणेन समाहितत्वादिति। तस्माद्धेत्वन्तरवचनादेव निगृह्यते, पूर्वस्य वस्तुतोऽसमर्थस्यासामर्थ्यख्यापनात्, सामर्थ्ये वा हेत्वन्तरानर्थक्यमिति सूक्तम् ॥ ६ ॥

## वृत्तिः

हेत्वन्तरं लक्षयति—( अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् )। अत्र च 'हेता'वित्यनेन न हेत्ववयवांशो विवक्षितः, अपि तु साधकांशः, स च हेत्ववयवस्थ उदाहरणादिस्थो वा। 'अविशेषोक्ते' इति पूर्वोक्त इत्यर्थः। 'विशेषमिच्छत' इति साभिप्रायं, तेन परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ विशेषणान्तरप्रक्षेपोऽन्यहेतुकरणं वा द्वयमपि हेत्वन्तरम्। तथा च परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्टवचनं हेत्वन्तरम्।

हेतौ विशेषणदान एव हेत्वन्तरमिति प्राञ्चः(क)। पूर्वोक्तत्वं हेत्ववयवे, उदाहरणादौ वा, यथा—'शब्दोऽनित्यः बाह्येन्द्रियप्रत्यक्षत्वादि'त्युक्ते सामान्येऽनैकान्तिकत्वेन च प्रत्युक्ते 'सामान्यवत्त्वे सती'ति विशेषणम्। एवं विशिष्टहेतुमुक्त्वा यद् 'बाह्येन्द्रियप्रत्यक्षं तदनित्य'मित्युदाहरणे न्यूनत्वेन प्रत्युक्ते विशिष्टहेतौ। एवमुपनयविशेषणेऽपि ॥ ६ ॥

समाप्तं प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेषलक्षणप्रकरणम्।

---

(१) 'साधकभावादनुप्र'—इति टि०। (क) "प्रथममविशिष्टं साधनभागमभिधाय [ परकृतप्रतिषेधोद्दिधीर्षया ] पुनर्विशेषणवत्तद्वचनं हेत्वन्तरमित्यर्थः" इत्याचार्याः ( न्यायपरिशिष्टे )।

## न्यायभाष्यम्

# प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् ॥ ७ ॥

यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां ब्रूयात्—नित्यः शब्दोऽस्पर्शत्वादिति हेतुः। हेतुर्नाम हिनोते (१)र्धातोस्तुनि प्रत्यये कृदन्तं पदम्। पदं च नामाख्यातोपसर्गनिपाताः। अभिधेयस्य क्रियान्तरयोगाद्विशिष्यमाणरूपः शब्दो 'नाम'। क्रियाकारकसमुदायः (२)कारकसङ्ख्याविशिष्टक्रियाकालयोगाभिधाय्याख्यातम्, धात्वर्थमात्रं च कालाभिधानविशिष्टम्। (३)प्रयोगेष्वर्थादभिद्यमान-

## न्यायवार्त्तिकम्

प्रकृतादर्थाद्प्रतिसम्बद्धार्थमर्थान्तरम्। उदाहरणं भाष्ये।

## न्यायवार्त्तिकतात्पर्यटीका

प्रकृतादर्थाद्प्रतिसंबद्धार्थमर्थान्तरम् ( सू ७ )॥ व्याचष्टे,—यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे सति (४)वादे, जल्पे, वितण्डायामित्यर्थः। हेतुतः साध्यसिद्धौ प्रकृतायां वादी साधनं ब्रूयाद् नित्यः शब्दोऽस्पर्शत्वादिति। अत्रान्तरे सुखादिभिर्व्यभिचारेण हेतोरसामर्थ्यं पश्यन् तत्प्रच्छादनार्थं प्रसक्तानुप्रसक्त्या तं तमर्थमुपन्यस्यन्नर्थान्तरेण निगृह्यते। अभिधेयस्य क्रियान्तरयोगात् क्रियाविशेषस्य योगाद्विशिष्यमाणरूपो भिद्यमानरूपः शब्दो नामेति, यथा—वृक्षस्तिष्ठति, वृक्षं छिनत्ति, वृक्षेण चन्द्रमसं पश्यति, वृक्षायोदकमासिञ्चतीत्यादि। तदेवमभिधेयस्य क्रियाविशेषयोगाद्विशिष्यमाणरूपः शब्दो नामेति। आख्यातस्वरूपमाह—क्रियाकारकसमुदाय इति। विषयेण विषयिणमुपलक्षयति। पचति पच्यत इत्येवमादयः शब्दाः क्रियां कारकं कर्तारं कर्म वाभिवदन्ति। तदेतल्लक्षणमसिद्धमतिव्यापकं च। न हि कर्ता कर्म वा आख्यातेनाभिधीयते, क्रियाक्षेपेणैव तयोः प्रतिलम्भात्; अनन्यलभ्यस्य च शब्दार्थत्वात्। कर्तृकर्मणोश्च कारकान्तरेभ्यो भावनायामभ्यर्हिततमत्वेन तत्संख्याभिधाननियमादसिद्धं कारकाभिधानम्; अतिव्यापकं च, पाचकः पाक्य इत्यादेर्नाम्नोऽपि क्रियाकारकसमुदायाभिधायित्वात्। तदस्मिन् लक्षणेऽपरितुष्यन् लक्षणान्तरद्वयेनाख्यातपदान्युपसंगृह्णाति—कारकसंख्याविशिष्टक्रियाकालयोगाभिधाय्याख्यातम्। 'पचति' 'पच्यत' इत्यादौ कर्तुः कर्मणो वा संख्यया कालेन वर्तमानादिना विशिष्टा क्रिया प्रतीयते। कालश्च क्वचिदस्तीत्येतावतोक्तो न तु विवक्षितो लक्षणे, 'पचेत' 'यजेते'त्येवमादौ तद्योगाप्रतीतेः। अनेन लक्षणेन 'स्थीयते सुप्यते' इत्यादीनामाख्यातानामसंग्रहः, कारकतत्संख्ययोरप्रतीतेः। तत्संग्रहाय द्वितीयं लक्षणमाह—धात्वर्थमात्रं च कालाभिधानविशिष्टम्। अभिधीयत इत्यभिधानम्। प्रयोगेष्विति। नाम्नो वाऽऽख्यातस्य वा तदर्थाद-

(१) 'धातोः'—इति क-पु० नास्ति। (२) 'कारकसंख्याविशिष्टः' ।—इति फ०। 'कारकः संख्याविशिष्टक्रियाकाल'—इति ग०। टीकासम्मतपाठो गृहीतः। फ-पुस्तके सयुक्तिकमन्यथा व्याख्यातोऽयमंश इति द्रष्टव्यम्। (३) 'योगेष्वर्था'—इति ज०। (४) 'वादिजल्पे'—इति क०।

### न्यायभाष्यम्

रूपा निपाताः। उपसृज्यमानाः क्रियावद्योतका उपसर्गा इत्येवमादि। तदर्थान्तरं वेदितव्यमिति ॥ ७ ॥

## वर्णक्रमनिर्देशवन्निरर्थकम् ॥ ८ ॥

यथाऽनित्यः शब्दः—(१)कचटतपाः, जबगडदशत्वात्, झभञ्घढधषवदिति।—

### न्यायवार्त्तिकम्

अभ्युपगतार्थासङ्गतत्वान्निग्रहस्थानं, यदभ्युपगतं तत्सम्बद्धमन्यदसम्बद्धमुच्यत इति ॥ ७ ॥

वर्णक्रमनिर्देशवन्निरर्थकम्। उदाहरणं भाष्ये।

### न्यायवार्त्तिकतात्पर्यटीका

भिद्यमानरूपा निपाताः। यथा समुच्चयविकल्पादिनामपदैः समुच्चयादयः समुच्चेतव्याद्नामार्था-
दाख्यातार्थाद्वा भेदेनोच्यन्ते, तत्र षष्ठीप्रयोगात्,—तेषां समुच्चयो विकल्पो वेति; नैवं
चादयः स्वार्थान् नामार्थादाख्यातार्थाद्वा भेदेनाभिदधति। रूप्यन्ते प्रतिपाद्यन्ते रूपाणि;
'अर्थात्' नामार्थादाख्यातार्थाद्वाऽभिद्यमानं 'रूपं' प्रतिपाद्यमानं येषां निपातानां ते तथोक्ताः।
उपसृज्यमानाः समीपे प्राक् प्रयुज्यमानाः। क्रियावद्योतका उपसर्गाः, अवद्योतनं
चोपलक्षणम्। अधिकार्था विपरीतार्थाश्चोपसर्गा गृह्यन्ते। यथाऽभ्यागच्छति प्रतिष्ठत इत्यादिषु।
तदस्य निग्रहस्थानत्वं वार्त्तिककार उपपादयति—अभ्युपगतेति। यथा च साधनवादिनोऽर्थान्तरं
निग्रहस्थानमेवमुत्तरवादिनोऽपि द्रष्टव्यम् ॥ ७ ॥

वर्णक्रमनिर्देशवन्निरर्थकम् (सू ८)॥ वर्णक्रमनिर्देशवदिति वतिः(क)। अत्र यदा द्राविड़ः
स्वभाषया तद्भाषानभिज्ञमार्यं प्रति शब्दनित्यत्वं प्रतिपादयति तदा तन्निरर्थकं निग्रहस्थानम्। स
खल्वार्यभाषां जानन्नसामर्थ्यप्रच्छादनाय तद्भाषानभिज्ञतया वा स्वभाषया साधनं प्रयुक्तवान्;
सोऽयं पूर्वस्मिन्कल्पे विप्रतिपत्त्या निगृह्यते उत्तरस्मिंस्त्वप्रतिपत्त्या। वस्तुतः साधनसामर्थ्येऽपि
मूकवदार्यप्रतिपादकशब्दाप्रतीतेस्तत्प्रतिपादनारम्भवैयर्थ्यात्। अत्रैव दृष्टान्तमात्रतया वतिना
अत्र वर्णक्रमो दर्शितो न पुनरेतदुदाहरणं निग्रहस्थानस्य, येन कपोलवादित्रादावपि प्रसङ्गः(ख)।
यथा हि द्राविड़स्यार्थभेदविवक्षोत्थापितं वचनं, नैवं वर्णक्रमनिर्देशः कपोलवादित्रं वा।

### वृत्तिः

अर्थान्तरं लक्षयति—( प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् )। प्रकृतात् प्रकृतोप-
युक्तात्, ल्यब्लोपे पञ्चमी। तेन प्रकृतोपयुक्तमर्थमुपेक्ष्यासम्बद्धार्थाभिधानम् अर्थान्तरम्,
प्रकृतानाकाङ्क्षिताभिधानमिति फलितार्थः। यथा—'शब्दोऽनित्यः कृतकत्वा'दित्युक्त्वा
'शब्दो गुणः, स चाऽऽकाशस्ये'त्यादि ॥ ७ ॥

(१) 'कचटतपानां'—इति फ०। 'कचदवपानां'—इति टि०। (क) 'वति'रिति। तुल्यार्थोऽत्र वति-
प्रत्ययः, न तु मतुबिति भावः। यदि मतुप् स्यात्, तदा एकाक्षरनिरर्थकाव्याप्तिर्घटादिपदातिव्याप्तिश्च स्यात्,
तस्मादुक्तनिर्देशवत्त्वादित्येवं वर्धमानेनोक्तम्। (ख) "अपिचान्यदिदमुच्यते—'वर्णक्रमनिर्देशो निग्रहस्थान'मिति।
कपोलवादितं कचघट्टितकमित्येवमादीनामपि वाच्यत्वात्"—इति वादन्याये धर्मकीर्त्तिः (१००पृ०)।

## न्यायभाष्यम्

एवम्प्रकारं निरर्थकम्। अभिधानाभिधेयभावानुपपत्तौ अर्थगतेरभावाद् वर्णा (१)एव क्रमेण निर्दिश्यन्त इति ॥ ८ ॥

# परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥ ९ ॥

यद्वाक्यं परिषदा प्रतिवादिना च त्रिरभिहितमपि न विज्ञायते श्लिष्टशब्दम-

## न्यायवार्त्तिकम्

साधनानुपादानादज्ञानम्; एवं ब्रुवन्न साधनं साध्यं जानीत इति न साध्यं न साधनं चोपादत्त इति निगृह्यते ॥ ८ ॥

परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम्। उदाहरणं भाष्ये।

## न्यायवार्त्तिकतात्पर्यटीका

अप्रतिपादकत्वसामान्याद्वर्णक्रमनिर्देशवदिति दृष्टान्तः। अत एवाह भाष्यकारः—एवंप्रकारमिति, न पुनरिदमेवेत्यर्थः।

वार्त्तिकम्—उदाहरणं भाष्य इति। एवंप्रकारोदाहरणमित्यर्थः। साधनानुपादानादिति। परप्रतिपादकं पञ्चावयवं वाक्यं साधनं, तत्तेन नोपात्तं, तस्य स्वसमयेन प्रतिपादकत्वेऽप्यार्यान् प्रत्यप्रतिपादकत्वादित्यर्थः ॥ ८ ॥

परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् (सू ९) ॥ यद्वाक्यं परिषदा प्रतिवादिना च न विज्ञायते समानसंकेतेन वादिना त्रिरभिहितम्। यावद्भिर्वारैः परिषत्प्रतिवादिनोरर्थप्रत्ययो भवति, स च प्रायेण त्रिभिरिति त्रिरभिहितमित्युक्तम्। ननु समानसंकेतेन वादिना त्रिरभिहितमविज्ञातार्थं चेति न संभवति। संभवे वा परिषत्प्रतिवादिनौ जडौ। न च जडानवबोधे प्रतिपादकस्य कश्चिदपराधः। न हि बधिरो गीतं न श्रृणोतीति गायनस्य कश्चिदपराध इत्यत आह—श्लिष्टशब्दम्, असति प्रकरणादौ नियामके, यथा—श्वेतो धावतीति(क)।

## वृत्तिः

निरर्थकं लक्षयति—( वर्णक्रमनिर्देशवन्निरर्थकम् )। वर्णानां क्रमेण निर्देशो 'जबगडदशि'त्यादिप्रयोगः, तत्तुल्यो निर्देशो निरर्थकं निग्रहस्थानम्। अवाचकपदप्रयोग इति फलितार्थः(ख)। वाचकत्वं शक्त्या निरूढलक्षणया शास्त्रपरिभाषया वा बोध्यम्। समयबन्धव्यतिरेकेणेति विशेषणीयम्। तेन यत्रापभ्रंशेन विचारः कर्त्तव्य इति समयबन्धः, तत्रापभ्रंशे न दोषः। झटिति संवरणे तु न दोषः इत्युक्तप्रायम्। अस्य च सम्भवः प्रमादादित इत्यवधेयम् ॥ ८ ॥

---

(१) 'एवं'—इति भा-टि०। (क) प्रकरणाद्यभावे श्वेतो धावतीत्युक्ते किं श्वा इतो धावतीत्यर्थः, श्वेतो वा, इति सन्देहादर्थाविज्ञानमिति भावः। (ख) "एतेन अवाचकप्रयोगमुपमिनोति, तेन अवाचकप्रयोगो निरर्थकमित्यर्थः।"—इति न्यायपरिशिष्टे उदयनः ( ९६पृ० )।

## न्यायभाष्यम्

प्रतीतप्रयोगमतिद्रुतोच्चरितमित्येवमादिना कारणेन, (१)तदविज्ञातमविज्ञातार्थम्(१*) असामर्थ्यसंवरणाय प्रयुक्तमिति निग्रहस्थानमिति ॥ ९ ॥

### पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् ॥ १० ॥

यत्रानेकस्य पदस्य वाक्यस्य वा पौर्वापर्येणान्वययोगो नास्तीत्यसम्बद्धार्थत्वं गृह्यते, (२)तत् समुदायार्थस्यापायादपार्थकम् । (क)यथा—दश दाडिमानि, षडपूपाः ;

## न्यायवार्त्तिकम्

असामर्थ्यख्यापनान्निग्रहस्थानम् । असामर्थ्यं वाज्ञानमिति ॥ ९ ॥

पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् । यथा (३)दशदाडिमादिवाक्यम्(३*) ।

## न्यायवार्त्तिकतात्पर्यटीका

अप्रतीतप्रयोगं 'जर्भरीतुर्फरीतु' इति । अतिद्रुतोच्चारितमित्येवमादिना कारणेन. तदविज्ञातार्थम् । अस्य निग्रहस्थानत्वमाह—असामर्थ्येति । वार्त्तिकं भाष्यव्याख्यया गतार्थम् ॥ ९ ॥

पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम् ( सू १० ) ॥ यत्रानेकस्य पदस्याश्लिष्टस्य प्रतीतयोगस्याद्रुतोच्चारितस्य वाक्यस्य (४)वानेकस्य पौर्वापर्येणा[ न्वय ]योगः संबन्धो नास्तीति तस्मादसंबद्धार्थता गृह्यते, तदपार्थकं (ख)निष्प्रयोजनं निग्रहस्थानम् । कस्मात ? समुदायार्थस्य वाक्यार्थस्य [महावाक्यार्थस्य] वाऽपायात । वाक्यमहावाक्यार्थप्रत्यायनप्रयोजनो हि पदानां वाक्यानां वा प्रयोगः, असति तस्मिन्नपार्थकमित्यर्थः । वाक्यस्य पौर्वापर्यासंबन्धे उदाहरणमाह—यथा दश दाड़िमानि षड़पूपा इति । पदानां पौर्वापर्यासंबन्धे उदाहरणमाह—

## वृत्तिः

अविज्ञातार्थं लक्षयति—( परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ) । त्रिरभिहितं वादिनेति शेषः । त्रिरभिधानं च (५)अनवधानादितोऽबोधनिरासाय । तथा च अवहिताविकलव्युत्पन्नपरिषत्प्रतिवाद्यन्यतरेण विज्ञाने तु नाऽविज्ञातार्थमिति भावः । वाचकेत्यनेन निरर्थकापार्थकव्युदासः । अत्र च पराज्ञानापादनेन मम जयो भविष्यतीति भ्रमादुक्तिसम्भवः । न च यथाकथञ्चित् परो जेतव्य इत्यज्ञानापादनं न्याय्यमेवेति वाच्यम्, तथा सति भङ्गकाले परमदुर्बोधयत्किञ्चिदभिधानेनैव सर्वत्र जयसम्भवात् ।

---

(१) 'तदविज्ञातार्थम्'—इति क० । (२) 'तत्समुदायः'—इति ज० । (३) 'दश दाडिमा इति वाक्यम्'—इति क-ख-धृतपाठान्तरम् । (४) 'वा'—इति क० ख० । (५) 'अनवधानादिना'—इति भ० ।

(१*) "इतरथा ह्यसंप्रत्ययो यथा लोके" इतिवार्त्तिक-

(क) महाभाष्येऽपि वृद्धिरादैच्सूत्रे संज्ञासूत्रत्वसाधनाधिकरणे "इतरथा ह्यसंप्रत्ययो यथा लोके" इतिवार्त्तिकव्याख्यानप्रसङ्गेन "दश दाड़िमानी"त्यादि वाक्यमुदाहृतम् । परं तत्र पाठभेदः सुमहान्—"लोके ह्यर्थवन्ति चानर्थकानि च वाक्यानि दृश्यन्ते ।......अनर्थकानि—दश दाड़िमानि षड़पूपाः कुण्डमजाजिनं पललपिण्डः अधरोरुकमेतत् कुमार्याः स्फैयकृतस्य पिता प्रतिशीनः"—इति (१४०पृ०) । (ख) 'निग्रहस्थानं निष्प्रयोजन'मिति पाठः पदयोः पौर्वापर्यं विघटय्य संशोधितः । पूर्वोत्तरपंक्त्योः[ ]वेष्टनमध्यगतमंशद्वयं पतितमिति मत्वा पूरितम् ।

## न्यायभाष्यम्

कुण्डम्, अजाजिनम्, पललपिण्डः, (१)अथ रौरुकमेतत्, कुमार्याः पाय्यं तस्याः पिता (२)अप्रतिशीन इति ॥ १० ॥

## न्यायवार्त्तिकम्

निरर्थकापार्थकयोरभेद इति चेत् ? अथ मन्यसे निरर्थकादपार्थकं न भिद्यते, तत्राप्यर्थो न गम्यत इहापीति ? भिद्यत इति ब्रूमः । कथं ? तत्र हि वर्णमात्रमिह तु पदान्यसम्बद्धानि । तत् कथं निग्रहस्थानम् ? वाक्याहते न विशेषावगतिरिति साधनसामर्थ्यापरिज्ञानान्निग्रहस्थानम् ॥१०॥

इति प्रकृतोपयोगिवाक्यार्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कप्रकरणम् ।

## न्यायवार्त्तिकतात्पर्यटीका

कुण्डमजाजिनम् इति । . रौरुकं रुरुसंबन्धि । पाय्यं पाययितव्यम् । अप्रतिशीनो वृद्धः । वार्त्तिककारः शङ्कते—निरर्थकापार्थकयोरिति । परप्रत्यायनप्रयोजनं हि वचनोच्चारणं, तत्र निरर्थकेनेवापार्थकेनापि न परः प्रतिपाद्यत इति उभयोरभेदः । न च वर्णक्रममात्रमेकत्रान्यत्र च पदानीत्येतावता भेदेनोपादानं युक्तम् । एकत्र वाक्योपादानमन्यत्र पदोपादानमित्यपार्थकयोरप्य-वान्तरभेदेन भेदोपादानप्रसङ्गादिति शङ्कार्थः । निराकरोति—भिद्यत इति । पृच्छति—कथम् ? उत्तरम्—तत्र अनर्थके वर्णमात्रम् अभिधेयशून्यम्, इह तु अपार्थके पदानि पद्यते गम्यतेऽभिधेयमेभिरिति पदानि वाक्यानि चाभिधेयवन्ति असंबद्धानि । निरभिधेय-निष्प्रयोजनयोर्निरर्थकापार्थकयोर्महान्विशेषः । न त्वीदृशो वाक्यपदयोर्निष्प्रयोजनयोर्विशेषो येनावान्तरभेदमाद्रियामहे । परप्रत्यायनप्रयोजनाभावमात्रविवक्षया त्वविशेषे सर्वनिग्रहस्थाना-विशेषः, सर्वत्र परप्रत्यायनाभावात्, भावे वा निग्रहस्थानानुपपत्तेः ॥ १० ॥

## वृत्तिः

एतस्य त्रेधा सम्भवः, असाधारणतन्त्रमात्रप्रसिद्धम्, यथा पञ्चस्कन्धादयो बौद्धानाम् । तत्र रूपादयः पञ्चेन्द्रियाणि च रूपस्कन्धः, सविकल्पकं संज्ञास्कन्धः, रागद्वेषाभिनिवेशाः संस्कारस्कन्धः, सुखदुःखे वेदनास्कन्धः, निर्विकल्पकं ज्ञानस्कन्धः । द्वितीयमतिप्रसक्तयोग-मनपेक्षितरूढिकं, यथा—'कश्यपतनयाधृतिहेतुरयं (क)त्रिनयनतनययानसमाननामधेयवान् तत्केतुमत्त्वा'दित्यादि । तृतीयं श्लिष्टं, यथा—श्वेतो धावतीत्यादि । एवम् अतिद्रुतो-च्चरितादिकमपीति भाष्यम् । अत्र नाऽऽद्यस्य सम्भवः, उभयतन्त्राभिज्ञयोरेव विचार-सम्भवादिति चेत् ? सत्यम्; तथाऽपि यत्र नैयायिकमीमांसकयोर्विचारे अन्यतरो बौद्धतन्त्रादि-परिभाषया वदति, तत्र निग्रह इत्याशयः । तत्रापि चेद् यया कयाचित्परिभाषयोच्यतामिति परः प्रौढ्या वदति, न तत्राऽऽद्यस्योपादानमिति ; उत्तरयोस्तु न सर्वथैवेति ॥ ९ ॥

---

(१) 'अथ रौरुक'—इति ग० । 'अथ कौतुक'—इति टि० । (२) 'अप्रतिशील:'—इति भा० ।

(क) अत्र 'त्रिनयनसमाननामधेयवानि'ति सर्वपुस्तकेषु प्रचलितपाठः संशोधितः । "कश्यपतनया पृथिवी, तद्धृति-हेतुः पर्वतः, त्रिनयनतनयः कार्त्तिकेयः, तस्य यानं शिखी मयूरस्तत्समाननामधेयवान् वह्निमानित्यर्थः"—इति परिशिष्टप्रकाशे वर्द्धमानः । वह्नेर्धूमकेतुतया तत्केतुशब्देन धूमः प्रतीयते । वादिविनोदेऽपीदमुदाहरणं दर्शितं ।

न्यायभाष्यम्

## अवयवविपर्यासवचनमप्राप्तकालम् ॥ ११ ॥

प्रतिज्ञादीनामवयवानां यथालक्षणमर्थवशात् क्रमः, तत्रावयवविपर्यासेन वचनमप्राप्तकाल(१)मसम्बद्धार्थं निग्रहस्थानमिति ॥ ११ ॥

न्यायवार्त्तिकम्

अवयवविपर्यासवचनमप्राप्तकालम्। अवयवानां विपर्यासेनाभिधानं निग्रहस्थानम्। (क)नैवमपि सिद्धेरित्येके—एके तु ब्रुवते नैतन्निग्रहस्थानमेवमपि सिद्धेरिति; समयानभ्युपगमाच्च—

न्यायवार्त्तिकतात्पर्यटीका

अवयवविपर्यासवचनमप्राप्तकालम् (सू ११)॥ व्याचष्टे—प्रतिज्ञादीनामवयवानां यथालक्षणमर्थवशात् क्रमः लक्षणानतिक्रमेण क्रमः। उक्तमेतदस्माभिः प्रथमाध्याये—यदपेक्षिताभिधायिनो वचनात्परे प्रतिपद्यन्ते, नान्यस्य। तत्र प्रथमं साध्यनिर्देशोऽपेक्षितः परैर्न तु साधननिर्देशः; तत्र यद्ययं प्रथमं साधनमेव प्रयुञ्जीत कथमपेक्षितं ब्रूयात्? अनपेक्षिताभिधायी च कथं प्रतिपादको नाम? तदेवं सर्वाण्येव हेतुवचनादीनि (२)क्रमवन्ति, नाक्रमाणि प्रतिपादयितुमर्हन्तीति; विपरीतक्रमेभ्योऽप्यर्थक्रमानुसरणादेवार्थप्रतिपत्तेः। सोऽयं प्रतिज्ञादीनामर्थ एतादृशो यं एषां क्रममन्तरेण न शक्यो ज्ञातुमिति(ख)। अवयवविपर्यासे त्वाकाङ्क्षाभावात् तत्पूर्वकत्वाच्च पदार्थसंबन्धस्यासंबन्धं निग्रहस्थानमित्यर्थः।

वार्त्तिकं—नैवमपि सिद्धेरित्येके। यथाऽऽहुरत्रापि न कश्चित् क्रमनियम इष्टार्थसिद्धेरुभयत्राविशेषात्। यद्युच्येत अर्थशब्दवदयमस्माकं समयो यदनेन क्रमविशेषेणार्थः प्रत्येतव्यो नान्येनेति, अतस्तथैव प्रतीयते न क्रमान्तरेणेत्यत आह—समयानभ्युपगमाच्च। पदेष्वेव

वृत्तिः

अपार्थकं लक्षयति—(पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम्)। पौर्वापर्यं कार्यकारणभावस्तस्यायोगात् असम्भवात्, शाब्दबोधजनकाकाङ्क्षाज्ञानाद्यभावादिति फलितार्थः। अप्रतिसम्बद्धः असंबद्धः, अर्थः प्रयोजनं शाब्दबोधरूपं यत्र। यद्यपि दश दाडिमानि, षडपूपाः, कुण्डम्, अजाजिनम्(३)पललपिण्डम् इत्यादाववान्तरवाक्यादर्थबोधसत्त्वादव्याप्तिरतिव्याप्तिश्च निरर्थके, तथाऽप्यभिमतवाक्यार्थबोधानुकूलाकाङ्क्षादिशून्यबोधजनकपदत्वं तत्। अविज्ञातार्थे तु स्वस्य बोधो भवत्येवेति नातिव्याप्तिः। उदाहरणं तु अयोग्यानासन्नानाकाङ्क्षवाक्यम् ॥ १० ॥

समासमभिमतवाक्यार्थाप्रतिपादकनिग्रहस्थानचतुष्टयप्रकरणम्।

---

(१) —'मसम्बद्धं'—इति टि०। —'मसम्बन्धार्थंकालं'—इति जं०। (२) 'अपि' इत्यधिकं ख०। (३) इदं—ख-पु० नास्ति। (क) इतः प्रभृति 'कस्यायं समय इति' इत्येतत्पर्यन्तमैकीयमतव्याख्यानं 'एवमपि सिद्धेः' 'समयानभ्युपगमाच्च' 'प्रयोगाच्चे'ति तदीयहेतुत्रयोपन्यासपुरःसरं विधाय तदनन्तरं तत् हेतुत्रयमनुभाष्य तन्मतदूषणं वार्त्तिककृत एतत्सूत्रसमाप्तिपर्यन्तम्। अधिक्षेपश्चायं दिङ्नागस्येति सम्भाव्यते। (ख) "अनुमानवाक्ये त्वार्थः क्रमो बलादापतति, स्वप्रतिपत्त्यनुसारेण परप्रतिपत्तेरुत्पादनात्, स्वप्रतिपत्तौ च धर्मिदर्शन-तद्गतहेतुधर्मावधारण-प्रतिबन्धस्मरण-परामर्शज्ञान-साध्यनिश्चयानां क्रमेण दर्शनात्"—न्यायमञ्जरी।

## न्यायवार्त्तिकम्

न च वयमेवं समयं प्रतीच्छाम इति; प्रयोगाच्च—प्रयुक्तश्चावयवव्यत्ययः सर्वशास्त्रेष्विति कस्यायं समय इति। (१)यत्ताव'न्नैवमपि सिद्धे'रिति, प्रयोगापेतशब्दवदेतत्स्यात्—यथा गौरित्यस्य(२)पदस्यार्थे (क)गावीति प्रयुज्यमानं पदं ककुदादिमन्तमर्थं प्रतिपादयतीति।

## न्यायवार्त्तिकतात्पर्यटीका

समयपूर्वकः प्रत्ययो न वाक्येषु, अभिनवकविरचिततत्समयानपेक्षादेव वाक्यादर्थप्रतीतेः। स्यादेतद्—वाक्येष्वपि क्रमनियमो दृष्टः, यथा पाचयांबभूवेति न पुनर्बभूव पाचयामिति, अत आह—प्रयोगाच्चेति। तत्र लौकिकः प्रयोगो नियत इह त्ववयवव्यत्ययस्यापि दृष्टः प्रयोग इत्यर्थः। तदेतद्दूषयति—यत्तावन्नैवमपि सिद्धेरिति। तत्रोत्तरं—(३)प्रयोगापेतशब्दवदेतत् स्यात्। एतदेव विवृणोति—यथा (४)गौरित्यस्यैव पदस्यार्थे गावीति प्रयुज्यमानं पदं ककुदादिमन्तमर्थं प्रत्याययति। यद्यपि शब्दानामर्थप्रत्यायनं न स्वाभाविकं तथाऽपि परमेश्वरसंकेतपूर्वकमद्य यावदनुवर्त्तते, अतएव साधवोऽर्थभेदे शब्दभेदा येषां पारमेश्वरसंकेतः, तदसंकेतात्तु प्रवर्त्तमाना अप्यर्थेऽसाधवः शब्दा अपभ्रंशा भवन्ति। तदपेक्षाश्च 'साधुभिर्भाषितव्य'-मित्यादयो विधयो धर्मेषु, निन्दार्थवादाश्च—'मन्त्रो हीनः स्वरतो वर्णत' इत्यादयः। वेदानां च प्रामाण्यं प्रतिपादितं द्वितीयेऽध्याये। न चायमर्थो ये ये साधवस्ते सर्वे धर्महेतव इति, किं तु धर्मानुष्ठाने तदनुरूपभाषणे प्राप्ते साधुभिरेवेति नियम्यते। तदेवं व्यवस्थिते अविशेषेण 'गो'-'गाव्या'दिशब्दा आर्येण प्रयुज्यमाना दृश्यन्ते, तत्रैते किमविशेषेणैव साधव उत कश्चिदेकः साधुः, तत्पूर्विकेतरेभ्यः प्रतीतिः। तत्रैकशब्दस्य साधुत्वकल्पनायामितरस्मात् तन्मूलतयार्थप्रतिपत्त्युपपत्तौ न सर्वत्र साधुत्वकल्पना युक्ता। यथाऽऽह स्मात्रभवान् जैमिनिः—'अन्यायश्चानेकशब्दत्व'मिति ( १।३।२६ )। तत्रापि कतमस्यासाधुत्वमेकस्यैतेष्विति जिज्ञासायां 'तत्र तत्त्वमभियोगविशेषात्स्या'दिति ( १।३।२७ )। योऽभियुक्ततमैरिन्द्रपाणिनि-प्रभृतिभिः साधुत्वेनाविगानतः स्मर्यते स साधुरितरोऽसाधुरिति निश्चीयते। तेन, यद्यपि लौकिका गाव्यादिशब्देभ्य एव गवाद्यर्थमधिगच्छन्तीति दृष्टार्थमात्रव्यवहारिणः प्रतिपत्तिस्तथाऽपि परीक्षकाणां विचारयतामेवं विचारक्रमो यद्द् वृद्धतमेन गोशब्दे प्रयोक्तव्ये प्रमादाद्गावीशब्दः प्रयुक्तः, ततश्च वृद्धतरेण (ख)गोशब्दमुन्नीय गोत्वं प्रतीतम्। यथाऽऽहुः—

> अम्बाम्बेति यदा बालः शिक्षमाणः प्रभाषते।
> अव्यक्तं तद्विदां तेन व्यक्ते भवति निर्णयः॥
> एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते।
> तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते॥ [ वाक्यपदीये १।१९३ ]

(१) 'तत्तावत्तैवमपि'—इति ख०। (२) 'शब्दस्यार्थे'—इति क-ख-धृतपाठान्तरम्। (३) 'प्रयोगोपेत-शब्दवत्'—इति क-ख०। (४) 'गौरित्यस्मिन्नर्थे एव पदस्यार्थे'—इति क०। (क) 'गावी'ति गोशब्दस्यापभ्रंशः-। तदुक्तं महाभाष्ये—"एकैकस्य शब्दस्य बहवोऽपभ्रंशाः, तद् यथा—'गो'शब्दस्य गावी-गोणी-गोता-गोपोतलिकेत्य-वमादयोऽपभ्रंशाः"—इति ( १।१।१ )। (ख) उक्तं च कुमारिलेन श्लोकवार्त्तिके शब्दनित्यताधिकरणे—

"गोशब्देऽवस्थितेऽस्माकं तदशक्तिजकारिता।
गाव्यादेरपि गोबुद्धिर्मूलशब्दानुसारिणी" ॥ २७६ ॥ इति।

## न्यायवार्त्तिकम्

न च शब्दान्वाख्यानं व्यर्थम्। अनेन शब्देन गोशब्दमेवासौ प्रतिपद्यते, गोशब्दात् ककुदादिमन्तमर्थम्(क)। तथा प्रतिज्ञाद्यवयव(१)विपर्यासेनानुपूर्वी प्रतिपद्यते, आनुपूर्व्या चार्थमिति। एतत् कथम्? पूर्वं तावत् कर्मोपादीयते ततः करणम्, मृत्पिण्डाद्युदाहरणम् अनेकधा लोक इति। यत्पुनरेतत् 'समयानभ्युपगमात्' इति? नायं समयोऽपि त्वर्थस्यानुपूर्वी,

## न्यायवार्त्तिकतात्पर्यटीका

पार्श्वस्थश्चातोऽनेन मूलशब्दमुन्नीयार्थः प्रतीत इत्यगृहीत्वैव, गावीशब्दादेवायममुमर्थं प्रतीतवानिति तमेव गोत्वस्य वाचकमवगम्यान्येषां वृद्धो बभूव। ततः प्रभृत्यननुस्मृतमूलशब्दानामयं वाचकत्वभ्रमोऽपभ्रंशे वर्तते, न वृद्धतरस्योभयवेदिनो मूलशब्दानुसारिणी पदार्थप्रतिपत्ति-रिदानींतनानां त्वपभ्रंशादेव। अत एवान्वाख्यानमपि प्रयोजनवत्, असत्यस्मिन् वाचकापभ्रंशविभागे ज्ञानाभावात् 'साधुभिर्भाषितव्य'मिति नियमविधे'र्न म्लेच्छितवै' 'नापभाषितवै' इति निषेधस्य च विषयसंशयेन दुरधिगमत्वेन धर्मानुष्ठानस्याशक्यत्वप्रसङ्गात्। यत्रार्थे यस्य शब्दस्य भगवतेश्वरेण संकेतः कृतः स तत्र साधुरसाधुरन्यत्र, यथा य एवास्वशब्दो दरिद्रे साधुः स एवासाधुर्वाजिनि प्रयुज्यमानः; यथा नकुलदंष्ट्राग्रस्पृष्टा या काचिदोषधिरसौ सर्पविषं हन्ति, एवमीश्वरेण कृतसंकेतः शब्दः साधुर्धर्म उपयुज्यते नान्य इति। यववराहादिशब्दानामार्यम्लेच्छयोरर्थविवादे वैदिकाद्वाक्यशेषादार्यसंमतोऽर्थो ग्रहीतव्यो न म्लेच्छसंमतः, तत्र वैदिकवाक्यशेषविरोधात्। येषां तु शब्दानामार्येषु(२)न दृष्टचरः प्रयोगः, केवलैर्म्लेच्छैरेवार्थभेदे प्रयुज्यन्ते, यथा पिक-नेम-तामरसादयः, वेदे तु प्रयुक्तास्तेषां म्लेच्छव्यवहारादेवार्थोऽवधारणीयः, तत्र तेषामभियोगादिति आर्यव्यवहारापरिपन्थित्वाच्चेति। तदेवं व्यवस्थिते न्यायमीमांसापरिशीलनविकलानां बाह्यतराः प्रलापा उपेक्षणीयाः। तस्मात्सूक्तं—प्रयोगापेतशब्दवदिति। न च शब्दान्वाख्यानं व्यर्थमिति चेति। प्रतिज्ञादीनां क्रमनियमकारणं प्रश्नपूर्वकं दर्शयति—तदेतत्कथं? पूर्वं तावदिति। द्वितीयं देश्यमनुभाष्य परिहरति—यत्पुनरेतत्समयानभ्युपगमादिति।

## वृत्तिः

अप्राप्तकालं लक्षयति—( अवयवविपर्यासवचनमप्राप्तकालम् )। अवयवस्य कथैकदेशस्य, विपर्यासो वैपरीत्यम्। तथा च समयबन्धविषयीभूतकथाक्रमविपरीतक्रमेणाभिधानं पर्यवसन्नम्(ख)। तत्राऽयं क्रमः—वादिना साधनमुक्त्वा सामान्यतो हेत्वाभासा उद्धरणीया

(१) 'विपर्ययेणा'—इति क-ख-धृतपाठान्तरम्। (२) 'मर्थेषु'—क०। (क) भवोक्तं बौद्धाचार्यधर्मकीर्त्तिना—"यः खलूभयं वेत्ति शब्दमपशब्दं च स एवं प्रतिपद्यते। यस्तु 'नक्क'शब्दं 'शुक्क'शब्दमेव वा वेत्ति, न 'नासा'शब्दं, स कथमपशब्दाच्छब्दं प्रतिपद्येत ततोऽर्थं प्रतिपद्येत। दृष्टा चानुभयवेदिनोऽपि प्रतीतिरिति न परम्परयापि प्रतीतिरर्थेऽसमर्थस्य शब्देऽपि प्रतीतिजननासामर्थ्याच्च। अपशब्दश्चेच्छब्दे प्रतीतिं जनयेदर्थं एव किं न जनयति?...शब्दादर्थमप्रतिपद्यमाना अपशब्दैरेव ज्ञानं व्युत्पद्यमाना लोके दृश्यन्ते इति व्यर्थं शब्दानुशासनम्" इत्यादि। सर्वमेतद् दूषितं वाचस्पतिना "ततः प्रभृत्यननुस्मृतमूलशब्दाना"मित्यादिना (टीका पं २) "तदेवं व्यवस्थिते न्यायमीमांसापरिशीलनविकलानां बाह्यतराः प्रलापा उपेक्षणीयाः". इत्यन्तेन। (ख) "यद्यपि व्युत्क्रमेणाप्यर्थप्रतीतिस्तथापि शास्त्रप्रकारादृतक्रमविशिष्टस्यैवार्थप्रत्यायकत्वेनाभ्युपगतत्वात् तदुल्लङ्घने निग्रहस्थानं अप्राप्तकाल"मिति वर्द्धमानः। तेन स्वसिद्धान्ताभ्युपगतकथाभिधानक्रमव्युत्क्रमेण कथाभिधानेऽप्राप्तकाल"मिति वर्द्धमानः।

## न्यायवार्त्तिकम्

सोऽयमर्थस्यानुपूर्वीमन्वाचक्षाणो नाभ्याख्येय इति। यत्पुनरेतत्—'प्रयोगादि'ति ? न, निग्रहस्थानविषयापरिज्ञानात्—शास्त्रे वाक्यान्यर्थसंग्रहार्थमुपादीयन्ते, संगृहीतं त्वर्थं वाक्येन प्रतिपादयिता प्रयोगकाले प्रतिज्ञादिकयाऽऽनुपूर्व्या प्रतिपादयतीति ॥ ११ ॥

## न्यायवार्त्तिकतात्पर्यटीका

सोऽयमर्थस्यानुपूर्वीं प्रतीतिबलप्रवृत्तामन्वाचक्षाणो नाभ्याख्येय इति, नोपालभ्यः। शास्त्रे वाक्यान्यर्थसंग्रहार्थमुपादीयन्त इति। न हि शास्त्रे (क)'कृत्स्नासदिवादरभूतदिवे'त्यर्थसंग्रहो यथा कथंचित् क्रियत इति वादेऽपि तथा क्रियतामिति युक्तं, वादादिषु पक्षप्रतिपक्षवद्भ्यामपि परीक्ष्यमाणत्वात्, परीक्षितस्य च शास्त्रितत्वात् ॥ ११ ॥

## वृत्तिः

इत्येकः पादः, प्रतिवादिनश्च तत्रोपालम्भो द्वितीयः पादः, प्रतिवादिनः स्वपक्षसाधनं तत्र हेत्वाभासोद्धरणं चेति तृतीयः पादः, जयपराजयव्यवस्था चतुर्थः पादः। एवं प्रतिज्ञा-हेत्वादीनां क्रमः। तत्र सभाक्षोभव्यामोहादिना व्यत्यस्ताभिधानमप्राप्तकालमिति ॥ ११ ॥

---

(क) "कृत्स्नासदिवादरभूतदिवे'त्यर्थसंग्रहो यथाकथंचित् क्रियत"इति दृश्यते ; परन्तु क्वेदं वाक्यं कश्च तस्यार्थ इति नावधृतम्। उदयनाचार्यकृततात्पर्यपरिशुद्धावपि तस्य नार्थो विवृतो न च ग्रन्थस्थलं प्रदर्शितम्। पाठभेदाश्चात्र नानाविधा दृश्यन्ते। कलिकातापुस्तके 'कृत्टरासदिवादरभादि'ति पाठः। विशुद्धानन्दसरस्वतीस्वामिवरपुस्तके 'कृत्टनासदिवादरभूतदिवे'ति। काशीसंस्कृतपाठशालापुस्तके 'कृत्स्ना-सदिवादरभूतदिवे'ति। एवं स्थिते महामहोपाध्यायसुधाकरपण्डिताः—"ज्यौतिषशास्त्रे चतुर्दशी रविवासरे विरुद्धेत्युक्तं, तदनुसारेण 'कृत्या सदिवाकरभूतदिवे'ति पाठः। कृत्या घातिकेत्यर्थः। 'सूर्ये विशाखा भरणी ज्येष्ठा मैत्री मघा तथा। चतुर्दशी द्वादशी च विरुद्धा सप्तमी तथे'ति शीघ्रबोधे दर्शनादि"त्याहुः।

महामहोपाध्यायशिवकुमारमिश्राः 'कृत्स्नासदिवादरभूतदिवे'ति पाठमभिप्रयन्ति। व्याचक्षते च—"विज्ञानमात्रसत्त्वस्थापनाप्रस्तावे कथं विज्ञानमात्रस्य सत्त्वं बाह्यार्थस्य चासत्त्वं भवतोपपाद्यत इत्यनुयुक्तो विज्ञानमात्रसत्त्ववादी संक्षेपतो दृष्टान्तद्वयेन सिद्धान्तद्वयोपपादनप्रकारं स्वकीयं दर्शयति—कृत्स्नेत्यादिना। अत्र कृत्स्नासत् इव आदरभूतत् इवेति च्छेदः। अयमर्थः—अहम् बाह्यार्थाऽसत्त्वोपपादने कृत्स्नासत् इव अस्मि, कृत्स्नम् असत् यस्य स कृत्स्नासत् शून्यवादी, स इवेत्यर्थः। यथा शून्यवादिना सर्वासत्त्वमुपपाद्यते प्रातीतिकत्वमुपपादयता, तथैवाऽहं बाह्यासत्त्वमुपपादयामीति यावत्। विज्ञानसत्त्वोपपादने तु 'आदरभूतत्' इव भवामि, आदरभूः स्वीकारविषयः, तत् कृत्स्नम् यस्य स आदरभूतत्, सर्वसत्त्ववादी नैयायिक इत्यर्थः। यथा नैयायिकेन बाह्यान्तरोभयसत्त्वमुपपाद्यतेऽनुभवबलमालम्ब्य, तथैव मया विज्ञानसत्त्वमुपपाद्यत इत्याशयः" इति।

विशुद्धानन्दसरस्वतीस्वामिनस्तु किमपि व्याख्यानमारचयन्तः'कर्तरि नासदिवादरोऽभूत्तदिवे'ति पाठं युक्तमाहुः। अनिरीक्ष्यैतद्वाक्यपूर्वोत्तरग्रन्थसंदर्भं न निर्धारयाम्यस्य वाक्यस्य पाठं तात्पर्यं चेति क-पुस्तकसम्पादकाः।

उदयनकृते न्यायपरिशिष्टे "एवञ्च व्यतिक्रमेणाप्यर्थप्रतीतिः 'कृत्टरासदिवा'दिवद् द्रष्टव्ये"ति पाठो दृश्यते। 'कृत्स्नासदिवादिवदि'त्यस्यैवायं लिपिकरप्रमादकृतोऽन्यथाभाव इति वा, ग्रन्थद्वयेऽप्येकत्रैव लिपिप्रमाद-शङ्काया अनौचित्यात् उदयनसम्मत एवैष पाठ इति वा, उदयनाचार्यात् पूर्वत एव तात्पर्यपंक्तौ कृतपदोऽयं प्रमाद इति वा तत्त्वतोऽत्र विनिर्णयन्तु विपश्चिमज्ञाना विद्वांसः। वर्द्धमानोपाध्यायैस्तु तत्रोपजोषमास्थितम्।

परन्तु तार्किकरक्षायां वरदराजेन "अर्थप्रतीतिसम्भावनामात्रेण प्रयोगाङ्गीकारे 'कृतवासदिवादरभूतदिवे'-त्यादीनामपि प्रयोगप्रसङ्गात्।" इत्युक्तम्। तत्र च ज्ञानपूर्णेन लघुदीपिकाटीकायां ( खृष्टीयैकादशशताब्द्यां ? ) "कृतवासेत्यादेरर्थो मया यथावन्न तत्त्वतो ज्ञायत" इत्युक्तम्। एवं स्थिते अलमस्माकमत्यतिसाहसेनेति विरमामः। तथापि सुधाकरपण्डितानां मतमेवात्र न्यायः प्रतिभातीति विवक्षतीव हृदयम् ; किन्तु कस्तत्रोदयनोक्तो व्यतिक्रमः ?

### न्यायभाष्यम्

## हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ १२ ॥

प्रतिज्ञादीनामवयवानामन्यतमेनाप्यवयवेन हीनं न्यूनं निग्रहस्थानम्, साधनाभावे साध्यासिद्धिरिति ॥ १२ ॥

### न्यायवार्त्तिकम्

हीनमन्यतमेनाप्यवयवेन न्यूनम्। यस्मिन् वाक्ये प्रतिज्ञादीनामन्यतमोऽवयवो न भवति तद्वाक्यं न्यूनं वेदितव्यम्। तत् कथं निग्रहस्थानम्? न साधनाभावे साध्यसिद्धिरिति।

एके तु प्रतिज्ञान्यूनं नास्तीत्याचक्षते। एतत् तु न युक्तम्। (१)प्रतिज्ञामन्तरेण(२)प्रयोगो विकल्पतः पर्यनुयोज्यः। यः प्रतिज्ञान्यूनवाक्यं ब्रूते किमयं निगृह्यते अथ नेति? यदि निगृह्यते? कतमत् निग्रहस्थानमिति? न हि हेत्वाभासादयोऽत्र सन्तीति। न च हेत्वादि-दोषाः सन्तीति, निग्रहं चाभ्युपैति, तस्मात् प्रतिज्ञान्यूनमेवेति। अथ न निग्रहः? न्यूनं वाक्यमर्थं साधयतीति साधनाभावे सिद्धिरभ्युपगता भवति। यत्तु ब्रवीषि 'सिद्धान्तपरिग्रह एव प्रतिज्ञा'(क), एतदपि न बुद्ध्यामहे; कर्मण उपादानं प्रतिज्ञा, सामान्यविशेषवतोऽवधारितस्य वस्तुनः परिग्रहः सिद्धान्त इति ॥ १२ ॥

### न्यायवार्त्तिकतात्पर्यटीका

हीनमन्यतमेनाप्यवयवेन न्यूनम् ( सू १२ )॥ प्रतिज्ञादीनां पञ्चावयवानां मिलितानां साधनत्वमुपपादितम्। न्यूनत्वे साधनत्वं नास्ति, तदभावे न साध्यसिद्धिः। न हि सामग्री-निष्पाद्यं कार्यं सामग्र्येकदेशाद्भवतीत्यर्थः। परेषां मतमुपन्यस्यति—एके त्विति। एके तु प्रतिज्ञान्यूनं नाम निग्रहस्थानं नास्तीति ब्रुवते। दूषयति—एतत्तु न युक्तमिति। किं प्रतिज्ञा-न्यूनं निग्रहस्थानान्तरं न भवति, अथ निग्रहस्थानमेव न भवति। एतदेवाह किमसौ निगृह्यते न वेति। प्रथमकल्पे दोषमाह—यदीति। द्वितीयकल्पे दोषमाह—अथ न निग्रह इति। प्रतिज्ञायाः साधनाङ्गत्वमुक्तमित्यर्थः। यच्च ब्रवीषि दिङ्नाग! सिद्धान्तपरिग्रह एवेति। एतत्तु दूषयति—एतदपीति। सिद्धसाध्यार्थयोः सिद्धान्तप्रतिज्ञयोर्महान् भेद इत्यर्थः ॥ १२ ॥

### वृत्तिः

न्यूनं लक्षयति—( हीनमन्यतमेनाऽप्यवयवेन न्यूनम् )। अवयवेन स्वशास्त्रसिद्धेन, तेन सौगतस्य द्व्यवयवाभिधानेऽपि न न्यूनत्वम्। नन्ववयवहीनत्वं अवयवत्वावच्छिन्ना-भावः, तथा चाकथनमेव स्यादत आह—अन्यतमेनापीति। तथा च यत्किञ्चिदवयव-शून्यावयवाभिधानं फलितम्। न चायमपसिद्धान्तः, सिद्धान्तविरुद्धानभ्युपगमात्, अपि तु सभाक्षोभादिनाऽनभिधानात् ॥ १२ ॥

---

(१) 'प्रतिज्ञामात्रेण'—इति क०। (२) 'प्रयोगे'—इति ख०। (क) —दिङ्नागस्येयमुक्तिरिति व्यक्तं तात्पर्ये।

न्यायभाष्यम्

## हेतूदाहरणाधिकमधिकम् ॥ १३ ॥

एकेन कृतत्वाद् अन्यतरस्यानर्थक्यमिति, तदेतन्नियमाभ्युपगमे वेदितव्यमिति ॥१३॥

न्यायवार्त्तिकम्

हेतूदाहरणाधिकमधिकम्। यस्मिन् वाक्ये हेतू द्वौ दृष्टान्तौ द्वौ तद्वाक्यमधिकं निग्रहस्थानमाधिक्यात्।

तच्च न, दार्ढ्यादित्येके—एके तु ब्रुवते नेदं निग्रहस्थानं दार्ढ्यात्। दार्ढ्यं हि ज्ञाप्यस्य भूयोभिर्ज्ञापकैर्दृष्टं यथा धूमालोकाभ्यामग्नेरिति। न, दार्ढ्यार्थानभिधानात्—भूयोभिर्ज्ञापकैर्दार्ढ्यं भवतीति न दार्ढ्यार्थोऽभिधीयते, किं ब्रवीषि दार्ढ्यादिति? सुतरां प्रतिपत्तिर्दार्ढ्यमिति? तदपि तादृगेव, किमुक्तं भवति सुतरामिति? अथ ब्रवीषि द्वे अपि ज्ञापके? सत्यं द्वे अपि ज्ञापके। एकेनैवाऽभिधानात् व्यर्थमभिधानं द्वितीयस्य, प्रकाशिते दीपान्तरोपादानवदिति। अनवस्था वा, प्रकाशितेऽपि साधनान्तरोपादानादिति ॥ १३ ॥

इति स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानप्रकरणम्।

न्यायवार्त्तिकतात्पर्यटीका

हेतूदाहरणाधिकमधिकम् ( सू १३ ) ॥ तदेतन्नियमाभ्युपगम इति भाष्यम्। यत्र कथमेतत्साध्यं सिध्यतीति जिज्ञासा, तत्रैकेनैव साधनेन साध्यसिद्धेः साधनान्तराभिधानमनर्थकमिति, निष्पादितक्रिये कर्मणि अविशेषाभिधायिनः साधनस्य साधनन्यायातिपातात्। यत्र तु प्रतिवादिनः परिषदो वा जिज्ञासा भवति—कति साधनानि संभवन्त्यस्मिन्साध्य इति, तत्र यावन्ति साधनानि तावन्ति सर्वाण्येव वाच्यानि, अन्यतराभिधाने निग्रहप्रसङ्गादिति।

नाधिकं निग्रहस्थानमिति य आहुस्तन्मतमुपन्यस्यति—तच्च न, दार्ढ्यादिति। दूषयति—न, दार्ढ्यार्थेति। यदि निश्चयो दार्ढ्यं तदेकस्मादेव प्रमाणाद्भवति, अनिश्चायकस्याप्रमाणत्वात्। अथ स्फुटत्वं, तदपि चेन्निश्चयः स दत्तोत्तरः। अथ सामान्यविशेषतद्वतां ग्रहणं, न तदनुमानसहस्रैरपि, तेषां सामान्यवद्द्रव्यमात्रविषयत्वात्। शङ्कते—अथ ब्रवीषि द्वे अपि ज्ञापके इति। नास्माकमनधिगतार्थगन्तृत्वं प्रमाणत्वं, येनैकेनाधिगते प्रमाणान्तरमप्रमाणं स्यात्। अपि तु गन्तृमात्रं प्रमाणं, तच्च द्वितीयस्याप्यविशिष्टमिति शङ्कार्थः। निराकरोति—सत्यं द्वे अपि ज्ञापके इति। पुरुषोऽत्रापराध्यते यो ज्ञातमर्थमजिज्ञासितं ज्ञापयति, न तु प्रमाणम्; तद्धि सामर्थ्येन मेये प्रवर्त्तत एव। यदि जिज्ञासायां सत्यां प्रवर्त्तते प्रतिपादयति ज्ञेयं नास्य कश्चिदपराध इति। न हि धान्येष्वलूनेषु दात्रमवश्नं भवति। तस्मादनपेक्षितकरणादनवस्थाप्रसङ्गाच्च पुरुषस्य निग्रह इति स्थितम् (क) ॥ १३ ॥

(क) नैतन्निग्रहस्थानमप्रतिपत्तिविप्रतिपत्त्योरसूचकत्वादिति चेन्न; परिषत्प्रतिवादिजिज्ञासामनुरुध्य कथाप्रवृत्तेस्तां कथाभूतां जिज्ञासामबुद्ध्वा अन्यथा वा बुद्ध्वा प्रवर्त्तमानस्य अप्रतिपत्तिविप्रतिपत्त्योरुन्नीयमानत्वात्।

### न्यायभाष्यम्

## शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ १४ ॥

(१)अन्यत्रानुवादात्(१*) शब्दपुनरुक्तमर्थपुनरुक्तं वा, नित्यः शब्दो नित्यः शब्द इति शब्दपुनरुक्तम्। अर्थपुनरुक्तम्—अनित्यः शब्दो निरोधधर्मको ध्वनिरिति। अनुवादे त्वपुनरुक्तं शब्दाभ्यासादर्थविशेषोपपत्तेः। यथा हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनमिति ॥ १४ ॥

## अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् ॥ १५ ॥

पुनरुक्तमिति प्रकृतम्। निदर्शनम्—उत्पत्तिधर्मकत्वादनित्यमित्युक्त्वा अर्थादा-

### न्यायवार्त्तिकम्

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्। शब्दपुनरुक्तं अनित्यः शब्दोऽनित्यः शब्द इति। अर्थपुनरुक्तं अनित्यः शब्दो निरोधधर्मको ध्वान इति। अनुवादे त्वपुनरुक्तमर्थविशेषोपपत्तेः।

(क)नाबाधनादित्येके—एके तु ब्रुवते नेदं निग्रहस्थानमबाधनात्। न हि परीक्षाविधेः पुनर्ब्रुवता किञ्चिद् बाध्यते ; परप्रतिपादनार्थं च वाक्यप्रयोगः, पुनरभिधानेन सुतरामर्थं प्रतिपद्यत

### न्यायवार्त्तिकतात्पर्यटीका

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ( सू १४ ) ॥ तदनेन सूत्रद्वयेन पुनरुक्त-
अर्थादापन्नस्यं स्वशब्देन पुनर्वचनं पुनरुक्तम् ( सू १५ ) ॥ मेकमेव निग्रहस्थानं कथंचिदवान्तरभेदविवक्षया त्रिविधमुक्तं प्रपञ्चार्थम्। तदेव पुनरुक्तं क्वचिच्छब्दाभ्यासात्, क्वचित्पर्यायान्तरात्, क्वचिदर्थादिति। आक्षिपति—नाबाधनादिति।

### वृत्तिः

अधिकं लक्षयति—( हेतूदाहरणाधिकमधिकम् )। हेतूदाहरणेत्युपलक्षणम्। दूषणाद्याधिक्यमपि बोध्यम्। तथा च कृतकर्त्तव्यापुनरुक्ताभिधानमिति फलितम्(ख)। प्रतिज्ञाधिक्यं च पुनरुक्तम्। अनुवादस्तु न कृतकर्त्तव्यः साभिप्रायत्वात्। धूमादालोकात् महानसवच्चत्वरवदित्यादिकं तु विना समयबन्धं दार्ढ्यादिभ्रमादुक्तमधिकम्। यथा महानसं महानसवदिति तु नाधिकं, किं तु पुनरुक्तम् ॥ १३ ॥

समाप्तं स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानत्रिकप्रकरणम्।

पुनरुक्तं लक्षयति—( शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् )। पुनर्वचनं पुनरुक्तम्। तस्य विभागार्थं शब्दार्थयोरिति। तेन शब्दपुनरुक्तमर्थपुनरुक्तं च लभ्यते। अनुवादेऽतिव्याप्तिवारणायान्यत्रानुवादादिति, अनुवादादन्यत्वे सतीत्यर्थः।

(१) इदं टि-पु० नास्ति। (क) इदं वार्त्तिकपुस्तकयोः सूत्ररूपेण मुद्रितम्। न्यायसूचीनिबन्ध-विरोधादस्माभिर्न तथा रक्ष्यते। (ख) अन्वितमुपयुक्तमपुनरुक्तं कृतकर्त्तव्यमभिधीयमानमधिकमिह ग्राह्यम्। तेनापार्थकादिव्यवच्छेदः, अधिकानुवाददूषणाधिकयोश्च संग्रहः इति न्यायपरिशिष्टे उदयनः ( १०५पृ० )। "अन्वितत्वेनापार्थकादुपयुक्तत्वेनार्थान्तरादस्य भेदः"—इति वादिविनोदे शङ्करमिश्रः।

## न्यायभाष्यम्

पन्नस्य योऽभिधायकः शब्दस्तेन स्वशब्देन ब्रूयाद् अनुत्पत्तिधर्मकं(१)नित्यमिति, तच्च पुनरुक्तं वेदितव्यम्। अर्थसम्प्रत्ययार्थे शब्दप्रयोगे प्रतीतः सोऽर्थोऽर्थापत्त्येति ॥ १५

## न्यायवार्त्तिकम्

इति न निग्रहस्थानं, प्रतिपादकत्वात्। सत्यं प्रतिपादयति ; प्रतिपादितार्थप्रतिपादकत्वात्तु वैयर्थ्यं स्यात्, वैयर्थ्यान्निग्रहस्थानं साधनविषयापरिज्ञानात्। न चायं शिष्यो न गुरुस्तस्मान्नायं पुनः प्रतिपाद्यत इति ॥ १४ ॥

**अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम्। पूर्ववन्निग्रहस्थानमिति ॥ १९ ॥**

इति पुनरुक्तनिग्रहस्थानप्रकरणम्।

## न्यायवार्त्तिकतात्पर्यटीका

समाधत्ते—सत्यमिति। जल्पवितण्डयोर्वक्तुर्नैपुण्यं चिन्त्यते। पुनरुक्तप्रयोगे त्वनिपुणः स्याद् अनपेक्षिताभिधानात्साधनस्य विषयः साध्योऽर्थो न सिद्धः, तस्यापरिज्ञानान्निगृह्यते। वैयर्थ्यं चानर्थक्यं विरुद्धप्रयोजनत्वं वाभिमतम्। तथा हि पुनरुक्तप्रयोगे तत्प्रयोजनानुसरणसमाकुलचित्तः प्रथमाभिधानादापाततः प्रतीतमप्यर्थमप्रतीतमिव मन्यमानो न निश्चेतुमर्हतीति। ततश्च प्रतिपादनाय प्रवृत्तो न प्रतिपादयितेति विरुद्धप्रयोजनवत्त्ववैयर्थ्यं स्यादित्युपपन्नं निग्रहस्थानमिति ॥ १९ ॥

## वृत्तिः

निष्प्रयोजनं पुनरभिधानं हि पुनरुक्तम्। अनुवादस्तु व्याख्यारुपः सप्रयोजनक एवेति भावः। तथा च समानार्थकसमानानुपूर्वीकशब्दप्रयोगः शब्दपुनरुक्तम्(क)। समानार्थकभिन्नानुपूर्वीकशब्दस्य निष्प्रयोजनं पुनरभिधानमर्थपुनरुक्तम्। आद्यं यथा—'घटो घट' इति, द्वितीयं यथा—'घटः कलश' इति। एतस्य प्रमादादिना सम्भवः ॥१४॥

पुनरुक्तप्रभेदान्तरमाह—( अर्थादापन्नस्य स्वशब्देन पुनरभिधानम् )। पुनरुक्तमित्यनुवर्तते। यस्मिन्नुक्ते यस्यार्थस्यौत्सर्गिकी प्रतिपत्तिर्भवति तस्य तेन रूपेण पुनरभिधानं पुनरुक्तम्। इदमेव च अर्थपुनरुक्तमिति गीयते। यथा वह्निरुष्ण इति पूर्वपदाक्षिप्तोक्तिरियम्, उष्णो वह्निरिति उत्तरपदाक्षिप्तोक्तिः, एवं वहिरस्ति गेहे नास्तीति विध्याक्षिप्तोक्तिः, जीवन् गेहे नास्ति बहिरस्तीति निषेधाक्षिप्तोक्तिः, पुनरुक्त(२)वैचित्र्यं चेदं भाष्यादिसम्मतम्।

अन्ये तु शब्दपुनरुक्तं द्विविधं, तस्यैव शब्दस्य पुनरभिधानं, पर्यायेणाऽभिधानम्। अन्यत्पुनरर्थपुनरुक्तमित्याहुः ॥ १५ ॥

इति पुनरुक्तप्रकरणम्।

(१) 'अनित्यम्'—इति टि०। (२) —'द्वैविध्य'मिति—भ०। (क) नार्थपुनरुक्तादन्यच्छब्दपुनरुक्तं, शब्दसाम्येऽप्यर्थभेददर्शनात्, पृथङ्निर्देशस्तु शक्त्यतिशयविख्यापयिषया 'शक्तच्छन्दः प्रयोक्तव्य' इति प्रतिज्ञास्वरूपमिप्रायेण ; अर्थपुनरुक्तमपि कृतनियमस्यैव दोषः, अतएव वादे नेदं निग्रहस्थानम् ;—इति न्यायमञ्जरीकृतः।

### न्यायभाष्यम्

## विज्ञातस्य परिषदा, त्रिरभिहितस्याप्यप्रत्युच्चारण-
## मननुभाषणम् ॥ १६ ॥

(१)विज्ञातस्य वाक्यार्थस्य(१*) परिषदा, (२)प्रतिवादिना त्रिरभिहितस्य यदप्रत्यु-
च्चारणं तदननुभाषणं नाम निग्रहस्थानमिति। अप्रत्युच्चारयन् (३)किमाश्रयं
परपक्षप्रतिषेधं ब्रूयात् ॥ १६ ॥

### न्यायवार्त्तिकम्

विज्ञातस्य परिषदा, त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम्। शेषं भाष्ये।
उत्तरेणावस्थानात् नेदं निग्रहस्थानमिति केचित्। उत्तरेणावस्थानात्—उत्तरेण गुणदोषवता
(४)मूढत्वामूढत्वं गम्यत इति किं पुनरुच्चरितेनास्ति? अस्ति हि उत्तरे कश्चित्समर्थो दृश्यते
न प्रत्युच्चारणे, नासौ तावता निग्रहस्थानमर्हति। यश्चारभ्य स्वपक्षं न निर्वाहयेत् तस्य स्यात्
खलीकारमात्रमिति। नोत्तरविषयापरिज्ञानात्—यद्ययं न प्रत्युच्चारयति? निर्विषयमुत्तरं प्रसज्यते।
अथोत्तरं ब्रवीति? कथं नोच्चारयति? तदिदं व्याहतमुच्यते—नोच्चारयत्युत्तरं च ब्रवीतीति।

### न्यायवार्त्तिकतात्पर्यटीका

विज्ञातस्य परिषदा, त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ( सू १६ )॥
विज्ञातस्य परिषदा, त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् (सू १६)॥
विज्ञातस्य परिषदा, निग्रहस्थानत्वेऽस्योपपत्तिमाह—अप्रत्युच्चारयन्
व्याचष्टे—विज्ञातस्य वाक्यार्थस्येति।
किमाश्रयं प्रतिषेधं ब्रूयादिति। उत्तरेण उत्तरगुणदोषनिरूपणेन, प्रति-
वार्त्तिकं—नेदं निग्रहस्थानमिति केचित्। तस्मात्किं
वादिनो मूढत्वामूढत्वावस्थापनात्। एतद्विभजते—उत्तरेण गुणदोषवतेतीति। तत्रास्ति
पुनरुच्चारितेनोच्चारणेनास्ति प्रयोजनमिति शेषः। 'अस्ति हि कश्चिदि'ति क्वचित्पाठः। समर्थो न
हीति निपातद्वयं वाक्यावतारे द्रष्टव्यम्। पुंसां विचित्रस्वभावत्वात् कश्चिदुत्तरे
प्रत्युच्चारणे, नासौ सदुत्तरमभिदधानः तावताऽननुभाषणमात्रेण निग्रहमर्हति। ननु यद्यननुभाषणं
न निग्रहस्थानं तदाऽनुभाषितुमुपक्रम्य सर्वमननुभाषमाणो न निगृह्येतेत्यत आह—यस्त्वारभ्य
न निर्वाहयेत् सदुत्तरं तु ब्रूयात् तस्य स्यात् खलीकारमात्रम्— असामर्थ्यकृतं, न तु तत्त्व-
वादित्वविहतिरित्यर्थः। तमेतं भदन्ताक्षेपं समाधत्ते—नोत्तरविषयापरिज्ञानादिति। दूष्यविषयं
हि दूषणम्, असति दूष्याभिधाने न शक्यं वक्तुम्। न खलु प्रतिज्ञाहेतूदाहरणोपनयनिगमन-
दोषास्तत्स्वरूपमनभिधाय शक्या दोषत्वेनावस्थापयितुमित्यनुच्चारयन्न दोषमभिधातुमर्हतीति।
तदिदमुक्तं—तदिदं व्याहतमुच्यते नोच्चारयति उत्तरं च ब्रवीतीति। स्यादेतद्—न
प्रतिवादिना सर्वं दूषणीयम्, अन्यतमावयवदूषणेनैव साधनस्य दूषितत्वेन दोषान्तराभिधान-

(१) 'विज्ञातार्थस्य वाक्यस्य'—इति टि०। (२) 'वादिना'—इति फ०। 'प्रतिवादिना', इत्यस्य 'अप्रत्युच्चारण'मित्यत्रान्वयसम्भवाद् बहुपुस्तकसंवादी पाठो नोपेक्षितः। (३) नियमाश्रयं'—इति टि०।
(४) 'अमूढत्वं गम्यते'—इति क-ख-धृतपाठान्तरम्।

## न्यायवार्त्तिकम्

अप्रतिज्ञानाच्च—नेदं प्रतिज्ञायते पूर्वमुच्चारयितव्यं पश्चादुत्तरमभिधेयमपि तु यथाकथञ्चिदुत्तरं वक्तव्यम्। उत्तरं चाश्रयाभावे न युक्त(१)मिति युक्तमप्रत्युच्चारणं निग्रहस्थानमिति ॥ १६ ॥

## न्यायवार्त्तिकतात्पर्यटीका

वैयर्थ्यात्। न खलु मृतो मृत्युना रक्षितो मारयितुं शक्यः, एवं दूषितमपि दूषयितुम्। तस्मात्सत्यपि दूष्यबाहुल्येऽन्यतमं दूष्यम्। तथा च सर्वानुभाषणे सर्वस्यादूष्यत्वाद् यद्दूषणीयं तत्पुनरनुवाद्यमिति सर्वानुवादे द्विरनुवादोऽदूष्यानुवादश्चेति दूषकनिग्रहस्थानद्वयम्। तस्मादननुभाषणमेव निग्रहस्थानमिति विपरीतमापतितमित्यत आह—अप्रतिज्ञानाच्चेति। एतद्विभजते—न चेदं प्रतिज्ञायते—(२)पूर्वमेकग्रन्थेन सर्वमुच्चारयितव्यं, पश्चादुत्तरं यद्दूष्यं तदनुवादेनाभिधेयं; येन दूष्यानुवादो द्विरनुवादश्च दोषौ स्याताम्; अपि तु यथाकथंचिदुत्तरं वक्तव्यम्। उत्तरवादपरस्योत्तरमाश्रयाभावे न युक्तमिति तदाश्रयमात्रमनुवदितव्यं तदन्तरेणाशक्याभिधानत्वादुत्तरस्येति। तस्माद् युक्तं तन्मात्रस्याप्रत्युच्चारणमननुभाषणं न सर्वस्याप्रत्युच्चारणमननुभाषणमित्यर्थः। नन्वप्रतिभाया निग्रहस्थानत्वविधानेनाननुभाषणस्यापि विदितं, तस्य तद्विशेषत्वात्। न खलु नानुभाषत इत्येतावतैव निगृह्यते अपि त्वननुभाषमाणो दूष्यं न बुध्यते, अबुध्यमानश्च तत्रोत्तरं न प्रतिपद्यते, ततोऽप्रतिभया निगृह्यते। तदेवमननुभाषणमप्रतिभाविशेष इति अप्रतिभाया विहितं निग्रहस्थानत्वं तद्विशेषेऽपि विहितं भवति। यथा गवि सास्नादिमत्त्वं विहितं शाबलेयेऽपि विहितं भवति, न पुनस्तत्र सास्नादिमत्त्वविधानाय पृथग् यत्नान्तरमारभन्ते। अत्र ब्रूमः—न तावदुत्तराप्रतिपत्तिसामान्यविशेषोऽननुभाषणं पुंसां सामर्थ्यवैचित्र्यात्। कश्चिद्द दूष्यं दूषणं च विदन्नपि नानुभाषितुं पारयति, बहुवचनकुण्ठत्वात्। तस्मादसत्यामप्रतिभायामननुभाषणसंभवान्नाप्रतिभाया विशेषोऽननुभाषणमिति। कश्चिद्द दूषणविषयं वेदानुभाषते च, उत्तरप्रतिपत्तिविकलस्तु स्यात्सोऽयमप्रतिभया निगृह्यते, नाननुभाषणेन, तत्र सामर्थ्यात्। कश्चित्पुनर्दूष्यमेव न जानाति, सोऽज्ञानेन निगृह्यते, न चाज्ञानेऽननुभाषणमवश्यंभावि, धारणावतोऽर्थानिरूपणे वाद्युदीरिताक्षरस्वरूपमात्रपाठसंभवेनाननुभाषणोपपत्तेः। अप्रतिभा त्ववश्यं भवेत्। न ह्यस्ति संभवो दूष्यं न वेदास्य दूषणं तु वेदेति। तथाऽपि स्वरूपतस्तावद्भेदः। न हि यदेव दूषणविषयमज्ञानमप्रतिभा तदेव दूष्यविषयमज्ञानम्। तस्मात्सत्यप्यननुभाषणाप्रतिभाज्ञानानामुत्तरानभिधानफलत्वे तुल्ये अवान्तरभेदविवक्षया भेदेनोपन्यासः। त्रिरभिहितस्येति। त्रिरभिधानमेवमप्यप्रतिपद्यमानस्यातिजडतया न वादेऽधिकार इत्यभिसंधिमत इति ॥ १६ ॥

(१) उत्तरं चाश्रयाभावेन युक्तम्—इति क-ख-धृतपाठान्तरम्।
(२) पूर्वमेवाश्रयं न'—इति क०।

## न्यायभाष्यम्

## अविज्ञातं चाज्ञानम् ॥ १७ ॥

(१)विज्ञातार्थस्य परिषदा, (२)प्रतिवादिना त्रिरभिहितस्य (३)यदविज्ञातं तदज्ञानं (४)नाम (५)निग्रहस्थानमिति। (६)अयं खल्वविज्ञाय कस्य प्रतिषेधं ब्रूयादिति ॥१७॥

## उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १८ ॥

(७)परपक्षप्रतिषेध उत्तरम्, तद् (८)यदा न प्रतिपद्यते तदा निगृहीतो भवति ॥१८॥

## न्यायवार्त्तिकम्

अविज्ञातं चाज्ञानम्। स्फुटं भाष्ये। अप्रतिपत्तितो निग्रहस्थानम् ॥ १७ ॥

उत्तरस्याप्रतिपत्तिरप्रतिभा। (क)श्लोकपाठादिभिरवज्ञां दर्शयन्नोत्तरं प्रतिपद्यत इति, तदप्रतिभा नाम निग्रहस्थानं (९)मूढत्वादिति ॥ १८ ॥

## न्यायवार्त्तिकतात्पर्यटीका

अविज्ञातं चाज्ञानम् ( सू १७ ) ॥ तद्व्याचष्टे—विज्ञातार्थस्य परिषदेति। निग्रहस्थान-सामान्यलक्षणमत्र योजयति वार्त्तिककारः—अप्रतिपत्तितो निग्रहस्थानमिति ॥ १७ ॥

उत्तरस्याप्रतिपत्तिरप्रतिभा ( सू १८ ) ॥ तद्व्याचष्टे—परपक्षेति। वार्त्तिकं—श्लोक-पाठादिभिरवज्ञां दर्शयन्निति। अर्थान्तरे हि निग्रहस्थाने प्रसक्तानुप्रसक्तं तत्सिद्ध्यर्थंताव्या-जेनावतारयता न प्रकृतावज्ञानं क्रियते, इह त्ववज्ञानम्, एतावता भेदेनोपन्यास इति। इयं चाप्रतिभा सम्यक्साधनोपन्यासे द्रष्टव्या। साधनाभासोपन्यासे तु पर्यनुयोज्योपेक्षणम् ॥ १८ ॥

## वृत्तिः

अननुभाषणं लक्षयति—( विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननु-भाषणम् )। परिषदा विज्ञातस्य विशिष्य बुद्धार्थस्य वादिना त्रिरभिहितस्य। तथा च प्रथमवचनेऽननुभाषणे वादिना वारत्रयं वाच्यमिति दर्शितम्। तथा च त्रिरभिधानेऽपि यत्राऽनुभाषणविरोधी व्यापारः तत्राऽननुभाषणं निग्रहस्थानमित्यर्थः।

अज्ञानसाङ्कर्य्यनिरासाय अज्ञानमनाविष्कुर्वतेति, विक्षेपसाङ्कर्यनिरासाय कथाम-विच्छिन्दतेति च विशेषणीयम् इत्याचार्याः(ख)। न चाऽप्रतिभासाङ्कर्यम्, उत्तरप्रतिपत्तावपि

---

(१) 'विज्ञातस्य' फ०। (२) 'वादिना'—इति फ०। अत्रापि पूर्ववद्गतिसम्भवात् बहुपुस्तकसम्मत-पाठो नोपेक्षितः। अथवा एवमाशयः—वादप्रवृत्तौ द्वावेव वादिनौ; प्रतिवादित्वं च प्रतिपक्षापेक्षया द्वयोरेव। एवं चात्र अभिधाता अविज्ञातुः प्रतिवाद्येव। (३) 'यदविज्ञानं' ल-ग-ज-झा०। (४) 'नामे'ति नास्ति ल-ग-ज-झा०। (५) 'न निग्रह'—इति टि०। (६) 'अर्थं'—इति टि०। (७) प्रतिषेधे—इति ग०। (८) 'येन'—इति टि०। (९) 'रुढ़त्वात्'—इति पाठसूचना क्वचित्। (क) श्लोकपाठादिभिरिति। क्वायं वटुः कतिपयाक्षरलेशखिन्न-जिह्वान्वितः कथमनेन सहाभिदध्मः ॥ "हृत्पुण्डरीकविकसत्सकलानवद्यविद्यावदातवदनः क्व जनोऽस्मदादिः। क्व सिंहः। दानार्द्रगन्धगजकुम्भकपाटभेदिभीमस्फुरन्नखशिखाशिखरः क्व सिंहः। ग्रामीणः समीरणविधूतपुराणपर्णपातोद्भवद्भयविलोलदृशः कुरङ्गाः ॥"—इत्येवं विकत्थमान इत्यर्थः। आदिपद-ग्राह्याः केशविन्यासादयः; केशविन्यासाकाश-सूचन-राजवार्त्तावतारणादावप्यप्रतिभया नियाह्य इत्येवमाचार्यो-पदेशात्। "स्वीयसन्देहाविष्करणमप्रतिभेति मणिकण्ठः"—इति वादिविनोदे शङ्करमिश्राः। (ख) उदयनकृतं न्यायपरिशिष्टं ( ११० पृ० ) द्रष्टव्यम्।

### न्यायभाष्यम्

## कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः ॥ १६ ॥

यत्र कर्तव्यं व्यासज्य कथां(१)व्यवच्छिनत्ति—इदं मे करणीयं (२)विद्यते, तस्मिन् (३)अवसिते पश्चात्(४)कथयामीति, विक्षेपो नाम निग्रहस्थानम्। एकनिग्रहावसानायां कथायां स्वयमेव कथान्तरं प्रतिपद्यत इति ॥ १६ ॥

### न्यायवार्त्तिकम्

कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः। यत्र कर्तव्यं कार्यं व्यासज्य कथां विच्छिनत्ति स विक्षेपो विज्ञेयः। यथा रसालया मया भुक्तं प्रतिश्यायकणो मे कण्ठं क्षिणोतीत्येवमादि। तत् कथं निग्रहस्थानम्? अज्ञाननिगूहनार्थं तु प्रत्युक्तमज्ञानमेव परिहारेणाविष्करोति ॥ १९ ॥

इति उत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम्।

### न्यायवार्त्तिकतात्पर्यटीका

कार्य(५)व्यासङ्गात्कथाविच्छेदो विक्षेपः (सू १६) ॥ साधनस्य दूषणस्य चोपन्यासमभ्युपगम्य तदवस्थः प्रतीयमान एव प्रतिवादिनो दार्ढ्यं सभ्यानां वा कठोरत्वमवगम्याकस्मात्कार्यं व्यासज्याभ्युपगतां कथां व्यवच्छिनत्ति, तत्र विक्षेपो नाम निग्रहस्थानम्। तदनेनाप्रतिभया तूष्णींभावोऽपि संगृहीतो वेदितव्यः। कार्यव्यासङ्गस्याभ्युपगतकथाविच्छेदमात्रोपलक्षणत्वात्। न चेदमर्थान्तरं तत्र प्रकृतमेव साधयामीति व्याजेन प्रसक्तानुप्रसक्तावतारेण कथाविच्छेदाभावात्, इह तु कथाविच्छेदात्। न चास्य हेत्वाभासेष्वन्तर्भावः(क)। न हि विक्षेपस्यान्यतमलिङ्गधर्मानुविधानं नापि प्रकृतसाध्यसिद्धये प्रयोगो येन हेत्वाभासः स्यात्। न च वादिनो विक्षेपो हेत्वाभासः, अनन्तरं कथामभ्युपेत्यैव हेतुमनभिधायापसरणात्। यदि चायं सम्यञ्चं हेतुमभिधाय तत्समर्थनासमर्थोऽपसरेत किमेतावता न निगृह्येत, हेत्वाभासेन वा निगृह्येत, किं तु व्यासङ्गादेव। अनर्थकापार्थकाभ्यां तु भेदोऽस्य स्फुट एव। न ह्यत्रासमानसंकेतः प्रतिपादको येनानर्थकः स्यात्। नापीह पदानि वाक्यानि वा पौर्वापर्येणासंबन्धानि, येनापार्थकः स्यात्। न चावज्ञानं, येनाप्रतिभा भवेत्। तस्माद्विक्षेपः पृथङ् निग्रहस्थानमिति सिद्धम् ॥ १९ ॥

### वृत्तिः

सभाक्षोभादिनाऽननुभाषणसम्भवात्। तदिदं चतुर्धा—एकदेशानुवादाद्विपरीतानुवादात्, केवलदूषणोक्त्या, स्तम्भेन चेति। सर्वनामपदेनाऽनुवादात् पञ्चमम्—इत्याचार्य्याः। क्वचिदज्ञानाप्रतिभाननुभाषणसाङ्कर्यें यश्चिश्चेतुं शक्यते तदेवोद्भाव्यम् ॥ १६ ॥

अज्ञानं लक्षयति—(अविज्ञातं चाज्ञानम्)। भावे क्तः। चकारश्च 'परिषदा विज्ञातस्य' इत्याद्यनुकर्षणार्थः। तथा च परिषदा विज्ञातस्य वादिना त्रिरभिहितस्याऽप्यविज्ञातमित्यर्थः। इदं च 'किं वदसि बुध्यत एव ने'त्याद्याविष्करणेन ज्ञातुं शक्यत इति ॥१७॥

(१) 'विच्छिनत्ति'—इति टि०। (२) 'परिहीयते'—इति टि०। (३) 'अवसिचते'—इति टि०। (४) 'कथयिष्यामीति'—इति ज०। (५) आदर्शद्वयमुद्रितोऽपि "प्रसङ्गा"दितिपाठः टीकाकृद्व्याख्यानदर्शनात् संशोध्य भाष्यवार्त्तिकसंवादी विहितः। (क) "यत्तु हेत्वाभासेष्वन्तर्भावमस्य कीर्त्तिरकीर्त्तयत्तदतीव सुभाषितम्; क्व हेत्वाभासः! क्व कार्यव्यासङ्गः!! सम्प्रधारणैव रमणीयेयम्।"—इति न्यायमञ्जर्यां जयन्तभट्टः। कीर्त्तिसिन्दर्भश्च वादन्याये द्रष्टव्यः।

### न्यायभाष्यम्

## (१)स्वपक्षे दोषाभ्युपगमात्(२)परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥२०॥

यः परेण चोदितं दोषं स्वपक्षेऽभ्युपगम्यानुद्धृत्य वदति—भवत्पक्षेऽपि(३)समानो

### न्यायवार्त्तिकम्

स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा। यः परेण चोदितं दोषमनुद्धृत्य भवतोऽप्ययं दोष इति ब्रवीति सा मतानुज्ञा परमतं(४)स्वमतेऽनुजानाति। उदाहरणं—भवांश्चौरः पुरुषत्वादिति, स तं प्रतिब्रूयात् भवानपीति, सोऽभ्युपगम्य दोषं परपक्षेऽभ्यनुजानातीति

### न्यायवार्त्तिकतात्पर्यटीका

स्वपक्षदोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा (सू २०)॥ व्याचष्टे—यः परेण देशितं दोषं स्वपक्षेऽभ्युपगम्य। कथं ज्ञायते अभ्युपगम्यत इत्यत आह—अनुद्धृत्येति। अनभ्युपमेऽसावुद्धरेदिति भावः।

### वृत्तिः

अप्रतिभां लक्षयति—( उत्तरस्याप्रतिपत्तिरप्रतिभा )। उत्तरार्हेण परोक्तं बुद्ध्वाऽपि यत्रोत्तरसमये उत्तरं न प्रतिपद्यते तत्राऽप्रतिभा निग्रहस्थानम्। न चाऽत्राऽननुभाषणस्यावश्यकत्वात् तदेव दूषणमस्त्विति वाच्यम्; परोक्तानुवादे हि तत्, यत्र परोक्तमनूद्याऽपि नोत्तरं प्रतिपद्यते तत्राऽसाङ्कर्यात्। खसूचन-श्लोकपाठाद्युन्नेया चेयम् ॥ १८ ॥

विक्षेपं लक्षयति—( कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः )। कार्यव्यासङ्गात् कार्यव्यासङ्गमुद्भाव्येत्यर्थः, ल्यब्लोपे पञ्चमी। कार्यव्यासङ्गश्चासम्भवत्कालान्तरकत्वेनाऽऽरोपितः, तेन तादृशकथाविच्छेदो विक्षेपः। तेन राजपुरुषादिभिराकारणे गृहजनादिभिर्वाऽऽवश्यककार्यार्थमाकारणे, स्वगृहदाहादिकं पश्यतो गमने, (५)वास्तवशिरोरोगादिना प्रतिबन्धे वा न विक्षेपः। ननु कार्यव्यासङ्गोद्भावनं कुतः? सभाक्षोभादिना चेत्, अननुभाषणमेव, उत्तराप्रतिपत्त्या चेदप्रतिभैवेति चेन्न; उत्तरावसराभावात्।

वस्तुतस्तु उत्तरस्फूर्तावपि तद्दूषणसम्भावनया विक्षेपसम्भवात्, यथा क्षितिः सकर्तृका कार्यत्वादित्युक्ते अत्राङ्कुरे व्यभिचारस्तावन्मयोद्भाव्यस्तत्र चेदयं पक्षसमत्वं ब्रूयात्तदा मे किमुत्तरमतोऽत्र महार्णवलिखितं मया च विचारितं किञ्चित् कार्यमुद्भाव्य गृहे गत्वा दृश्यते इत्येवं विक्षेपसम्भवात् ॥ १९ ॥

इति उत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम्।

---

(१) 'स्वपच'—इति ख० ग० ज० झा० टीकादर्शमुद्रितोऽप्ययं पाठः। भाष्य-स्वरसात् वृत्ति-वार्त्तिक-संवादी फ-पुस्तकपाठो गृहीतः। (२) 'परपक्षदोषप्रसङ्गः'—इति ज०। (३) 'अयं समानः'—इति टि०। (४) 'स्वमतत्वेनानु'—इति क-ख-धृतपाठान्तरम्। (५) 'वा शिरोरोगा'—इति भ०।

## न्यायभाष्यम्

दोष इति, स स्वपक्षे दोषाभ्युपगमात्परपक्षे (१)दोषं (२)प्रसञ्जयन् परमतमनुजानातीति मतानुज्ञां नाम निग्रहस्थानमापद्यत इति ॥ २० ॥

## न्यायवार्त्तिकम्

निगृहीतो वेदितव्यः। (३)अनभ्युपगच्छता न पुरुषत्वं चौर्यहेतुरिति वक्तव्यम्, किन्तु परस्वेनानतिसृष्टेन सम्बन्धः, तदुत्तरापरिज्ञानान्निगृह्यत इति।

प्रसङ्गविधानान्न निग्रहस्थानमित्यन्ये—अपरे तु ब्रुवते नैतन्निग्रहस्थानं प्रसङ्गविधानात्—नैवायं पश्चादपि तं दोषं प्रतिपद्यते, अपि तु प्रसङ्गं करोति,—यदि पुरुषत्वाच्चौरो भवति भवानपि पुरुषस्तस्माच्चौर इति। एतत्तु नात एव,—यत एवायमुत्तरे वक्तव्ये प्रसङ्गं करोति, तत एवोत्तरापरिज्ञानान्निगृह्यत इति ॥ २० ॥

## न्यायवार्त्तिकतात्पर्यटीका

वार्त्तिकं—किं तु परस्वेनानतिसृष्टेनादत्तेनेत्यर्थः। प्रसङ्गविधानान्न निग्रहस्थानमित्यन्य इति। यदि पुरुषत्वाच्चोरोऽहं ततो भवानपि चोरः स्यात्। न च भवत एवमिष्टम्। तस्मात्त्वयैवानैकान्तिकत्वान्नायं हेतुरिति प्रसङ्गविपर्ययः। तस्मान्नात्मनश्चोरत्वमनेनाभ्युपगतमिति मतानुज्ञा, नासौ निग्रहस्थानमित्यर्थः। निराकरोति—एतत्तु न। कस्मात्? अत एव। कुतः? (क)यत एवासौ उत्तरे कर्तव्ये प्रसङ्गं करोति अत एव निगृह्यते। यदि हि वादी प्रतिवादिनं ब्रूयात्—सत्यमहं चोर एवेति, तदा किमनैकान्तिकत्वं शक्नुयात्कर्तुम्? तस्मात्पुरुषत्वं न चोरत्वहेतुः, अपि तु परस्वेनादत्तेन संबन्ध इत्युत्तरे कर्तव्ये यदुत्तराभासमाह, तेन ज्ञापयति—नूनमयं सम्यगुत्तरं न जानाति, सम्यगुत्तराज्ञानान्निगृह्यते। तच्चोत्तरापरिज्ञानं मतानुज्ञाद्वारेणोन्नीयमानं मतानुज्ञेत्युच्यते ॥ २० ॥

## वृत्तिः

मतानुज्ञां लक्षयति—( स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा )। दोषाभ्युपगमाद्दोषमनुद्धृत्येत्यर्थः। यथा शब्दो नित्यः श्रावणत्वादित्युक्ते ध्वनावनैकान्तिकत्वेन हेत्वाभासोऽयमित्युक्तौ शब्दोऽनित्यः कृतकत्वादिति साधिते ध्वनेरपि पक्षसमत्वान्न दोष इत्युक्तौ ; असिद्धत्वात् तवाऽपि हेत्वाभासोऽयमित्युक्तौ। सोऽयं मतानुज्ञया निगृहीतः स्यात्, 'अप्रतिषिद्धमनुमतं भवति' इति स्वपक्षे दोषाभ्युपगमात् ॥ २० ॥

(१) 'तं दोषं'—इति टि०। (२) 'प्रसञ्जन्'—इति टि०। (३) 'अनभ्युपगतो'—इति क-ख-धृतपाठात्तरम्। (क) वार्त्तिके अक्षरवैषम्यं व्यक्तम्। एवमन्यत्रापि द्रष्टव्यम्।

## न्यायभाष्यम्

### निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ॥ २१ ॥

पर्यनुयोज्यो नाम (१)निग्रहोपपत्त्या चोदनीयः, तस्योपेक्षणं निग्रहस्थानं प्राप्तोऽसीत्यननुयोगः। (२)एतच्च कस्य(२*)पराजय इत्यनुयुक्तया परिषदा वचनीयम्, न खलु निग्रहं प्राप्तः स्वकौपीनं विवृणुयादिति ॥ २१ ॥

## न्यायवार्त्तिकम्

निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम्। यो निग्रहस्थानप्राप्तं न निगृह्णाति स निगृहीतो भवति, निग्रहस्थानप्राप्तस्यापरिज्ञानात्। नान्यवचनादित्यन्ये—अन्ये ब्रुवते, नेदं निग्रहस्थानम् अन्योत्तरस्याभिधानात्—यस्मादसौ निग्रहस्थानप्राप्तं न निगृह्णाति ब्रुवन्नन्यदुत्तर-

## न्यायवार्त्तिकतात्पर्यटीका

निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ( सू २१ ) ॥ व्याचष्टे—पर्यनुयोज्यो नामेति। निग्रहस्योपपत्तिः प्रमाणतः सिद्धिस्तयेत्यर्थः। एतत्तु न तावद्वादिनोद्भावनीयं, न ह्यसौ स्वस्वसाधनावद्यमनुन्मत्त उद्भावयति; नापि प्रतिवादिना, न ह्यनुन्मत्त आत्मानमात्मना निगृह्णाति। अपि तु पर्यनुयोज्यं जानानः कस्मादुपेक्षते। तस्मात्सभापतिना वादिप्रतिवादिभ्यामनुयुक्तया वा परिषदा तन्निग्रहस्थानमुद्भावनीयम्। अत्र च तत्त्वनिर्णयावसाने वादे द्वयोरपि निग्रहात्परिषदेव विजयते, जल्पवितण्डयोश्च तत्त्वानपेक्षं पुरुषसामर्थ्यपरीक्षणप्रवृत्तयोः प्रतिवादी निगृह्यते; साधनाभासवादिनाऽपि वादिना स्फुरता प्रतिवादी स्तम्भितो (३)यतः। सम्यक्साधनोपन्यासे विहिते प्रतिवादिन उत्तराप्रतिपत्तिरप्रतिभा, साधनाभासोपन्यासे च उत्तराप्रतिपत्तिः पर्यनुयोज्योपेक्षणमिति विशेषः।

वार्त्तिकं—नान्यवचनादित्येके। यत्र प्रतिवादी तूष्णीं भवति तत्र तूष्णींभावेनैव वादिन उत्तरानर्हतां दर्शयन्नस्य साधनाभासवादितां सूचयति। यत्रास्य दोषोद्भावनं सम्यग्दोषमनुक्त्वा करोति, तत्राप्यसौ दुष्टमुत्तरं ददत्तत्साधनदोषमेव सूचयति। उपदिशन्ति हि वृद्धाः—दुष्टे हि साधने दुष्टोत्तरं देयमिति। तस्मादवचनेऽन्यवचने वा न पर्यनुयोज्योपेक्षणं निग्रहस्थानमुभयथा-

## वृत्तिः

पर्यनुयोज्योपेक्षणं लक्षयति—( निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् )। निग्रहस्थानं प्राप्तवतोऽनिग्रहः निग्रहस्थानानुद्भावनमित्यर्थः। यत्र त्वनेकनिग्रहस्थानपाते निग्रहस्थानोद्भावनत्वावच्छिन्ना-(४)ह्येकतरोद्भावनं, तत्र न पर्यनुयोज्योपेक्षणम्, अवसरे

(१) 'निग्रहस्थानोपपत्त्या'—इति फ०। (२) 'एतच्च एकस्य' वि०। 'एतच्च निग्रहस्थानं निम्नकस्य'—इति टि०। (३) 'यतः सम्यक्साधनोपन्यासो विहितः।' इत्येवं क-ख-मुद्रितपाठः संशोधितः। (४) 'हि'—इति भ-पु० नास्ति।

न्यायभाष्यम्

## अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥२२॥

निग्रहस्थानलक्षणस्य मिथ्याऽध्यवसायादनिग्रहस्थाने निगृहीतोऽसीति परं ब्रुवन् निरनुयोज्यानुयोगान्निगृहीतो वेदितव्य इति ॥ २२ ॥

न्यायवार्त्तिकम्

मभिधत्त इति। तच्च नात एव—यत एवासौ निग्रहस्थाने वक्तव्ये अन्यदभिधत्तेऽत एव निगृह्यते, जानानो ह्यसौ किमर्थमन्यद् ब्रवीति ॥ २१ ॥

अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः। अनिग्रहस्थान एवाभिधत्ते निगृहीतोऽसीति, एतन्निग्रहस्थानापरिज्ञानान्निग्रहस्थानमिति ॥ २२ ॥

इति दोषनिरूप्यमतानुज्ञादिनिग्रहस्थानत्रिकप्रकरणम् ॥

न्यायवार्त्तिकतात्पर्यटीका

ऽप्यनुपेक्षणादित्यर्थः। दूषयति—तच्च नेति। साधनस्य हि सम्यक्त्वं दोषं जानन् तमेव ब्रूयात्। सोऽयं प्राप्तावसरोऽब्रुवन् विब्रुवन् वा नूनं न सम्यक्त्वं दोषं जानाति। निश्चितप्रमाणभावस्य पुरुषस्येङ्गितादिभिरभिप्रायः सूच्यते, न त्वनिश्चितप्रमाणभावस्य। यथाऽऽहुः—

श्रुतिस्मृत्यतिरेकेण युक्तजल्पाकभाषितम्।
तद्यथाश्रुति दुष्टं चेद् दुष्टमेवावधार्यताम् ॥

इति सुष्ठूक्तं जानानोऽप्ययं किमर्थमन्यद् ब्रवीतीति ॥ २१ ॥

अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ( सू २२ )॥ न चायमप्रतिभातो न भिद्यते। सा ह्युत्तराप्रतिपत्तिरियं त्वनुत्तरस्यैवोत्तरत्वेन विप्रतिपत्तिरिति महान् विशेषः। अनेनैव सर्वा जातयो निग्रहस्थानत्वेन संगृहीता भवन्ति। न च हेत्वाभासानामितो न भेदः, ते हि वादिनो निग्रहस्थानमयं तु प्रतिवादिन इति महान्विशेषः। अत एव भवतामपि गाथा—

असाधनाङ्गवचनमदोषोद्भावनं (१)द्वयोः।
निग्रहस्थानमन्यत्तु न युक्तमिति नेष्यते ॥ इति। (क)

अप्रतिभाया एवं प्रसज्यप्रतिषेधात्मिकाया अस्या निरनुयोज्यानुयोगस्य भेदं दर्शयति भाष्यकारः—निग्रहस्थानलक्षणस्य मिथ्याध्यवसायात्समारोपादित्यर्थः। सुगमं वार्त्तिकम् ॥ २२ ॥

वृत्तिः

भावस्यैव तत्त्वात्। ननु वादिना कथमिदमुद्भाव्यं स्वकौपीनविवरणस्यायुक्तत्वादिति चेत्? सत्यम्, मध्यस्थेनैवेदमुद्भाव्यं, वादे च स्वयमुद्भावनेऽप्यदोषः ॥ २१ ॥

(१) 'तयोः'—इति ख०। (क) गाथेयं धर्मकीर्त्तिवादन्याये आरम्भ एवं द्रष्टव्या।

## न्यायभाष्यम्

### *सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥ २३ ॥

कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययाद् अनियमात् कथां प्रसञ्जयतोऽपसिद्धान्तो वेदितव्यः। यथा न सदात्मानं जहाति, न सतो विनाशो, नासदात्मानं लभते, नासदुत्पद्यत इति सिद्धान्तमभ्युपेत्य स्वपक्षं (१)व्यवस्थापयति—एकप्रकृतीदं व्यक्तं (२)विकाराणामन्वयदर्शनात्। मृदन्वितानां शरावादीनां दृष्टमेकप्रकृतित्वम्, तथा चायं व्यक्तभेदः सुखदुःखमोहान्वितो दृश्यते। तस्मात्समन्वयदर्शनात् सुखादिभिरेकप्रकृतीदं (३)विश्वमिति। एवमुक्तवाननुयुज्यते—अथ (४)प्रकृतिर्विकार इति कथं लक्षितव्यमिति। यस्यावस्थितस्य धर्मान्तरनिवृत्तौ धर्मान्तरं प्रवर्तते, सा प्रकृतिः। (५)यद् धर्मान्तरं प्रवर्तते(६)निवर्त्तते वा(६*) स विकार इति। सोऽयं प्रतिज्ञातार्थविपर्यासादनियमात् कथां प्रसञ्जयति। प्रतिज्ञातं खल्वनेन—नासदाविर्भवति,

## न्यायवार्त्तिकम्

सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः। अस्योदाहरणं स्फुटं भाष्ये।

## न्यायवार्त्तिकतात्पर्यटीका

सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गोऽपसिद्धान्तः ( सू २३ )॥ 'अभ्युपेत्ये'त्यस्य व्याख्यानं—कस्यचिदर्थस्य तथाभावं प्रतिज्ञायेति। प्रतिज्ञातार्थविपर्ययादिति—अभ्युपेतार्थविपर्ययात्, सिद्धान्तविपर्ययादित्यर्थः। तदेत'दनियमादि'त्यस्य व्याख्यानम्। तत्र सांख्यीयं सिद्धान्तमाह—यथा न सदिति। तस्य पर्यायान्तरेण कथनं—न सत इति। 'नासदात्मान'-मित्यस्य पर्यायान्तरेण विवरणं 'नासदुत्पद्यत' इति। सोऽयं सिद्धान्तः सांख्यानां, तमभ्युपेत्य तद्विपर्ययात्कथाप्रसङ्गमाह—स्वपक्षं व्यवस्थापयति। पक्षावस्थानं दर्शयति ;—एका प्रकृतिर्व्यक्तस्योपलभ्यमानस्यार्थजातस्य युक्तेति प्रतिज्ञा। 'विकाराणा'मिति 'व्यक्त'स्यैवानुवादः, अन्वयदर्शनादिति हेतुः। मृदन्वितानामिति साधर्म्योदाहरणम्। तथाऽयं व्यक्तभेदः सुखदुःखमोहसमन्वितो गृह्यते इत्युपनयः। निगमनमाह—तस्मात्समन्वयदर्शनाद्विश्वव्यक्तस्य, कैरित्यपेक्षायामुत्तरं—सुखादिभिरिति। एकप्रकृतिः सर्वो विकार इति सेयं कथा। सिद्धान्तमभ्युपेत्यैवमुक्तवान् सांख्यो नैयायिकेन पर्यनुयुज्यते दूषणाय पृच्छ्यते—अथ प्रकृतिर्विकार इति कथं लक्षितव्यमिति। स एवं नैयायिकेन पृष्टः सांख्य उत्तरमाह—यस्यावस्थितस्य मृदादेर्धर्मान्तरनिवृत्तौ शरावविनाशे (क)यद्धर्मान्तरं मणिकादि प्रवर्तते असदेव जायते सा प्रकृतिर्मृदादि। यद्धर्मान्तरं निवर्तते प्रवर्त्तते वा, स विकार इति। एतस्मिन्नुदाहरणेऽपसिद्धान्तं योजयति—सोऽयं प्रतिज्ञातार्थस्य सिद्धान्तार्थस्य वादी विपर्ययादनियमात्कथां प्रसञ्जयति। प्रतिज्ञातः सिद्धान्तः खल्वनेन—नासदाविर्भवतीति उत्पद्यते, न संस्तिरोभवतीति

(१) 'अवस्थापयति'—इति फ०। (२) 'विकाराणां समन्वय'—इति फ०। (३) 'शरीरम्'—इति अ-ग-ल०। 'व्यक्तम्'—इति टि०। (४) 'प्रकृतिविकारः'—इति ज०। (५) 'यच्च'—इति ज-ग-ल०। (६) इदं—ज-ग-ल-पु० नास्ति। (क) अत्र यदिति प्रमादादधिकं सन्निविष्टमिति प्रतिभाति।

* मुद्रितन्यायपरिशिष्टे 'सिद्धान्तमभ्युपेत्ये'तिसूत्रपाठो दृश्यते। व्याख्यानं तु तत्रोदयनस्य—"अभ्युपगतसिद्धान्तातिक्रमेण साधनदूषणयोरभिधानमपसिद्धान्त इत्यर्थः" इति।

## न्यायभाष्यम्

न सत्तिरोभवतीति। सदसतोश्च तिरोभावाविर्भावमन्तरेण न कस्यचित् प्रवृत्तिः प्रवृत्त्युपरमश्च भवति। मृदि खल्ववस्थितायां भविष्यति शरावादिलक्षणं धर्मान्तरमिति प्रवृत्तिर्भवति, अभूदिति च प्रवृत्त्युपरमः। तदेतन्मृद्धर्माणामपि न स्यात्। एवं प्रत्यवस्थितो यदि सतश्चात्महानमसतश्चात्मलाभमभ्युपैति, (१)तदस्यापसिद्धान्तो निग्रहस्थानं भवति। अथ नाभ्युपैति, पक्षोऽस्य न सिध्यति॥ २३॥

## न्यायवार्त्तिकम्

प्रतिज्ञातार्थव्यतिरेकेणाभ्युपगतार्थपरित्यागान्निगृह्यत इति॥ २३॥

## न्यायवार्त्तिकतात्पर्यटीका

न विनश्यतीति। तथाऽपि कस्मादनेन सिद्धान्तो बाध्यते, अथ सिद्धान्तेनैव कस्मान्न बाध्यत इत्यत आह—सदसतोश्चेति। इदं हि लौकिकं प्रमाणसिद्धं सिद्धान्तस्त्वभ्युपगममात्रसिद्धोऽप्रामाणिकः, तस्मादनेन सिद्धान्तो बलवता बाध्यते। तदेतन्मृद्धर्माणामपि न स्यादिति, न केवलं प्रेक्षावतां कर्तृणामपि तु सद्धर्माणामप्युत्पादविनाशौ प्रवृत्त्युपरमौ दृश्यमानौ न स्यातामित्यर्थः। एवं प्रत्यवस्थितः सांख्यो नैयायिकेन पृष्टो यद्यसत आत्मलाभं सतश्चात्महानमभ्युपैति, ततोऽस्यापसिद्धान्तो भवति। अथ नाभ्युपैति, पक्षोऽस्य न सिद्ध्यति। विकारो ह्यनेन पक्षीकृत एकप्रकृतित्वेन, तत्र (२)विकारलक्षणाभावेन(२*) विकाराणामनिरूपणात् तदभावे न प्रतिज्ञार्थो न च हेत्वर्थः, आश्रयासिद्धत्वात्।

नन्वेवं प्रतिज्ञातार्थविरोधित्वात्सतो निरोधस्यासतश्चोत्पादस्य हेत्वाभास एव निग्रहस्थानं भवेत्, प्रतिज्ञाविरोधो वेत्याशङ्क्य वार्त्तिककार आह—प्रतिज्ञातार्थव्यतिरेकेणेति। न ह्यत्रैकप्रकृतयो विकाराः एकप्रकृतिकत्वादित्ययं हेतुः साध्यविरुद्धेन व्याप्त उद्भावितो येन विरुद्धो भवेत्। नाप्येकप्रकृतिकत्वं विकाराणां शब्दतो विरुद्धं समन्वयेन हेतुना, येन प्रतिज्ञाविरोधो भवेत्। वैभवमात्रेण च 'प्रतिज्ञाहेत्वोर्विरोध' (५।२।४ सू०) इत्यत्रोक्तं वार्त्तिककृता—(क)स्वसिद्धान्तस्य गोत्वादेर्नित्यत्वविरोधाद्विरोध इति। अपि च तत्र बलवता

## वृत्तिः

निरनुयोज्यानुयोगं लक्षयति—(अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः)। अवसरे यथार्थनिग्रहस्थानोद्भावनातिरिक्तं यन्निग्रहस्थानोद्भावनं तदित्यर्थः। एतेनानवसरे निग्रहस्थानोद्भावने एकनिग्रहस्थाने निग्रहस्थानान्तरोद्भावने च नाऽव्याप्तिः।

---

(१) 'तदास्याप'—इति फ०। 'तस्याप'—इति टि०। (२) अयमंशो नास्ति ख०। (क) ११७१ पृष्ठे "स प्रसिद्धस्य गोत्वादे"रिति वार्त्तिके यथादर्शं मुद्रितम्। परं तु धर्मकीर्त्युद्धृततत्रत्य-सन्दर्भदर्शनात् तात्पर्यधृतैतत्सन्दर्भदर्शनाच्च तत्रत्यवार्त्तिके 'प्रसिद्धस्ये'त्यत्र 'स्वसिद्धस्ये'ति प्रकृतः पाठः प्रतिभाति।

### न्यायभाष्यम्

## हेत्वाभासाश्च यथोक्ताः ॥ २४ ॥

हेत्वाभासाश्च निग्रहस्थानानि। किं पुनर्लक्षणान्तरयोगाद् (१)हेत्वाभासा निग्रहस्थानत्वमापन्नाः यथा प्रमाणानि प्रमेयत्वमित्यत आह—यथोक्ता इति। हेत्वाभासलक्षणेनैव निग्रहस्थानभाव इति।

### न्यायवार्त्तिकम्

हेत्वाभासाश्च यथोक्ताः। यथैव विभक्ता लक्षणेन, तथैव तेषां निग्रहस्थानभाव इति।

### न्यायवार्त्तिकतात्पर्यटीका

सिद्धान्तेनानैकान्तिकदेशना बाध्यते, इह तु सिद्धान्त एव बाध्यते दुर्बल इत्युदाहरणपौनरुक्त्यमपि नास्ति। तस्माद्यत्र प्रतिज्ञार्थेन विरोधः तत्र विरुद्धो हेत्वाभासः प्रतिज्ञाविरोधो वा। इह तु प्रतिज्ञार्थव्यतिरेकेणाभ्युपगमान्तरेण विरोध इति पुरुषस्य पूर्वापरविरुद्धार्थाभिधायिनोऽसामर्थ्यान्निग्रहस्थानं जल्पवितण्डयोरिति सिद्धम् ॥ २३ ॥

हेत्वाभासाश्च यथोक्ताः (सू २४) ॥ व्याचष्टे—हेत्वाभासाश्चेति। यद्यनुक्तमपि किंचिदवशिष्यते निग्रहस्थानं त'च्च'कारेण समुच्चेयम्। 'यथोक्ता' इतिसूत्रावयवनिराकरणीयामाशङ्कामाह—किं पुनर्लक्षणान्तरयोगाद्धेत्वाभासा निग्रहस्थानतामापद्यन्ते(क) यथा प्रमाणानि प्रमेयत्वं, तेषामेव प्रत्यक्षादीनामुपलब्धिसाधनत्वेन लक्ष्यमाणानां प्रमाणत्वं, प्रमाव्याप्यतया प्रमेयत्वं, लक्षणान्तरेण प्रमाणानि प्रमेयत्वमापद्यन्ते—इति शङ्कायाः संभवादत आह भगवान् सूत्रकारः—यथोक्ता इति।

### वृत्तिः

सोऽयं चतुर्धा—छलं जातिराभासोऽनवसरग्रहणं च। आभासो व्यभिचारादावसिद्धयाद्युद्भावनम्। अनवसरग्रहणं चाऽकाले एवोद्भावनं, यथा—त्यक्ष्यसि चेत् प्रतिज्ञाहानिर्विशेषयसि चेद्धेत्वन्तरम्। एवमवसरमतीत्य कथनमपि, यथा—उच्यमानग्राह्यस्यापशब्दादेः परिसमाप्तौ, एवमनुक्तग्राह्याज्ञानाद्यननुभाषणावसरेऽनुद्भाव्य बोधाविष्करणानुभाषणप्रवृत्ते वादिनि तदुद्भावनमित्यादिकमूह्यम् ॥ २२ ॥

समाप्तं दोषनिरूप्यनिग्रहस्थानत्रिकप्रकरणम्।

अपसिद्धान्तं लक्षयति—( सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः )। सिद्धान्तं—स्वशास्त्रकाराभ्युपगतमर्थं स्वीकृत्यानियमात् तन्नियमप्रच्यवात् कथाप्रसङ्ग इति। (२)तथा च कथायां स्वीकृतसिद्धान्तप्रच्यवोऽपसिद्धान्तः(२*)। तथा च साङ्ख्यमतेनाहं वदिष्यामीत्यभ्युपेत्याऽऽरब्धायां कथायाम् आविर्भावस्याऽऽविर्भावाभ्युपगमेऽनवस्थेति दूषणोद्धारायाऽऽविर्भावस्याऽसत उत्पत्तिं यद्यभ्युपैति, तदाऽपसिद्धान्तः। यस्त्वेकदेशिमतेन कथामारभते तस्य शास्त्रकाराभ्युपगमविरोधो नापसिद्धान्त इति बोधयितुमभ्युपेत्येत्युक्तम्। सौगतास्त्वपसिद्धान्तं दूषणं न मन्यन्त इत्यन्यदेतत् ॥ २३ ॥

(१) 'हेत्वाभासाश्च'—इति ग०। (२) इदं—ख-पु० नास्ति। (क) भाष्ये चचिरविसंवादो द्रष्टव्यः।

## न्यायभाष्यम्

त इमे प्रमाणादयः पदार्था उद्दिष्टा लक्षिताः परीक्षिताश्चेति ॥ २४ ॥

(१)योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम् ।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये पञ्चमोऽध्यायः ।

## न्यायवार्त्तिकम्

त इमे प्रमाणादय उद्दिष्टाः प्रथमसूत्रे, लक्षिताः प्रथमेऽध्याये, परीक्षिताः शेषेष्विति त्रिविधा तत्त्वस्य परिसमाप्तिरुक्ता वेदितव्येति ॥ २४ ॥

इति कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणम् ॥

जातीनां सप्रपञ्चानां निग्रहस्थानलक्षणम् ।
शास्त्रस्य चोपसंहारः पञ्चमे परिकीर्तितः ॥
यदक्षपादप्रतिभो भाष्यं वात्स्यायनो जगौ ।
अकारि महतस्तस्य भारद्वाजेन वार्त्तिकम् ॥

इति श्रीपरमर्षि-भारद्वाज-पाशुपताचार्यश्रीमदुद्द्योतकरकृतौ न्यायवार्त्तिके
पञ्चमोऽध्यायः समाप्तः ।

——(:*:)——

## न्यायवार्त्तिकतात्पर्यटीका

सकलशास्त्रार्थमुपसंहरति—त इमे प्रमाणादय उद्दिष्टा लक्षिताः परीक्षिताश्चेति । 'इति' शास्त्रपरिसमाप्तौ ।

वार्त्तिककारः संगृह्णाति—जातीनां सप्रपञ्चानामिति । निग्रहस्थानलक्षणमिति समासेन जातीनामपि प्रतिवादिनिग्रहस्थानेऽस्ति निवेश इति सूचयति । शास्त्रस्य चोपसंहार इति, 'त इमे प्रमाणादय उद्दिष्टा' इत्यनेन कृत इत्यर्थः ॥ २४ ॥

## वृत्तिः

क्रमप्राप्ते हेत्वाभासलक्षणे वक्तव्ये तदकथने बीजमाह—( हेत्वाभासाश्च यथोक्ताः ) । चः पुनरर्थे । हेत्वाभासाः पुनर्यथा येन रूपेण पूर्वमुक्तास्तेनैव रूपेण तेषां निग्रहस्थानत्वमिति न लक्षणान्तरमपेक्षितमिति ।

अत्र 'च'कारस्य दृष्टान्ते साधनवैकल्यादिसमुच्चायकत्वमिति केचित् । तन्न ; यथोक्ता इत्यस्याऽनन्वयापत्तेरिति ॥ २४ ॥

इति कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणम् ।

समाप्तं निग्रहस्थानविशेषलक्षणम् ।

(१) नास्त्ययं श्लोकः—ज-पुस्तके ।

## न्यायवार्त्तिकतात्पर्यटीका

यदलम्भि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्द्योतकरगवीनामतिजरतीनां समुद्धरणात् ॥ १ ॥
संसारजलधिसेतौ वृषकेतौ सकलदुःखशमहेतौ ।
तस्य फलमखिलमर्पितमेतेन प्रीयतामीशः ॥ २ ॥
तत्त्वज्ञानप्रसवसुरभिर्गूढवद्धर्थजाता
सेयं मोक्षामृतमयफला सूक्तिमञ्जुप्रवाला ।
प्रत्यक्षाप्तागममयमहान्यायमूला मनोज्ञा
टीकावीरुद्भवतु कृतिनां नन्दिनी षट्पदानाम् ॥ ३ ॥
क्रूराः कृतोऽञ्जलिरयं बलिरेष दत्तः
कायो मया प्रहरतात्र यथाभिलाषम् ।
अभ्यर्थये वितथवाङ्मयपांसुवर्षै-
र्मा माऽऽविलीकुरुत कीर्त्तिनदीः परेषाम् ॥ ४ ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्त्तिकतात्पर्यटीकायां पञ्चमोऽध्यायः समाप्तः ।

---

## वृत्तिः

एषा मुनिप्रवरगोतमसूत्रवृत्तिः
श्रीविश्वनाथकृतिना सुगमाऽल्पवर्णा ।
श्रीकृष्णचन्द्रचरणाऽम्बुजचञ्चरीक-
श्रीमच्छिरोमणिवचःप्रचयैरकारि ॥ १ ॥
(१)रसबाणतिथौ शकेन्द्रकाले
बहुले कामतिथौ शुचौ सिताहे ।
अकरोन्मुनिसूत्रवृत्तिमेतां
ननु वृन्दाविपिने(२)स विश्वनाथः ॥ २ ॥
कठिनार्थपदां कृतिं ममैतां
मृदुनि त्वच्चरणे समर्पयामि ।
अपराधमिमं प्रभो क्षमेथा
ननु नारायण देव दीनबन्धो ॥ ३ ॥

इति श्रीमन्महामहोपाध्यायश्रीमद्विद्यानिवासभट्टाचार्यात्मजश्रीविश्वनाथभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ पञ्चमोऽध्यायः समाप्तः ।

समाप्तेयं सूत्रवृत्तिः ।

---

(१) इतः श्लोकद्वयं—भ-पुस्तके नास्ति। (२) 'स एव'—इति ख० ।

चतुर्थाध्याये १ आह्निके ६७ सूत्राणि, २ आह्निके ५१ सूत्राणि, मिलित्वा ११८ सूत्राणि ।
पञ्चमाध्याये १ आह्निके ४३ सूत्राणि, २ आह्निके २४ सूत्राणि, मिलित्वा ६७ सूत्राणि ॥

पूर्वसूरिवरयोः कृतिशेषे
शेष एष मिलितो मम यत्नः ।
भेजिरे हि भृगुपादमहिम्ना
केशवोरसि रजांसि प्रतिष्ठाम् ॥

तारानाथामरेन्द्राभ्यां यदारब्धमपूरितम् ।
श्रीहेमन्तकुमारेण तत् पूरितमबुद्धिना ॥

प्रष्ठयोर्वर्त्मनि क्षुण्णे प्रवृत्तेनाल्पमेधसा ।
पूर्वसंस्कर्त्तृवरयोः करयोः कृतिरर्पिता ॥

इति भाष्य-वार्त्तिक-तात्पर्य्य-वृत्त्युपेत-न्यायदर्शनसंस्करणं सम्पूर्णम् ॥



